xporter/

khs [ ]
khs [ ]
khs [ ]
khs [ ]
khs [ ]
khs [ ]
khs [ ]
khs [ ]

ss will be
64 KBPS

et Access
nd also to

providing

Account.
lments.
ent bodies
y Internet

# GATEWAY INTERNET ACC

## Global Information Super Highw

### INTERNET - A WINDOW TO GLOBAL INFORMATION SUPER HIGHWAY

**The Internet is a worldwide network of networks. It is a conglomeration of smaller Networks and other connected machines spanning the entire globe. According to the Internet Society, it consists today to over 30,000 Networks in 96 countries.**

**Around the world, each country has atleast one backbone network that operates at very high speed and carries the bulk of the traffic. Other smaller Networks connect to that backbone.**

**The Internet, a global system of connected computers, was once available only to the government, academic, and research communities. Now the greatly publicised information superhighway is accessible to anyone with time, interest, and curiosity.**

**Information on the Internet, and opportunities to use it are growing at a phenomenal rate. The last four years have witnessed an explosion of Internet activity.**

**According to the Internet Society, there were approximately 500,000 computers or hosts, connected to the**

GIAS PROVIDE
ACCESS TO
FULL RANGE O
INTERNET SERVI
AT WORLD'S
LOWEST TARIF

**Internet in 1990. At the mid of 1 this number grew to estimated million.**

**More astounding is the numb people using the Internet, now a 50 million worldwide, and estimat grow to 200 million by the year 2**

**Many of these users are in Corpora Universities, and Govern Institutions. But the number of**



VICES

rber Space

cting from home also continue to dramatically.

RCIAL USE OF INTERNET

et, the world's largest network of uters is today increasingly being ercialised. The use of Internet is ng away from pure University rk to network connecting millions nputers, many of which belong to anies using Internet for nercial purposes.

ervice providers on the Internet lso undergoing a change from rnment Funded Agencies to e Operators such as PSI, UUNET as well as major ommunications carriers such as t, MCI, BT and others. These nercial operators have onnected their backbones to form nercial Internet Exchange (CIX).

h Sanchar Nigam Limited, India's national Telecom Carrier, has also ibuted its might to the expansion ternet backbone to India. This bone Network in India is known as L's Gateway Internet Access ces (GIAS) Network.



# * प्रशस्तिः *

स्वधर्मनिष्ठः परमात्मभक्तः स्वकीयविद्याचकितप्रधीर्यः ।
कलावपि स्मारयतीह पुण्यान्पौराणिकानार्य्यवरान्क्षितीशान् ॥ १ ॥
शिक्षाप्रचाराय सदा सुलग्नः प्रसार्य्य सर्वेष्वनिवार्यशिक्षाम् ।
मौर्ख्यान्धकारे पतितान्जनान्यःज्ञानप्रकाशे नयति प्रतापी ॥ २ ॥
स्त्रियोऽपिशिक्षाप्रवणा यथास्युः नानाकलाज्ञानसमृद्धियुक्ताः ।
कन्या सुशाला नगरेषुबह्व्यः पूर्णाःस्थिताः सन्तिनवैर्विधानैः ॥ ३ ॥
विद्युच्छटापूर्णपथैः सुशोभिता विद्यालयैर्हर्म्यचयैश्चमण्डिता ।
क्रीडालयैश्चोपवनैर्मनोहरैः बीकाणनाथस्य पुरी सुपूरिता ॥ ४ ॥
भ्रमन्सदा साहसशक्तिमूर्तिः घनेऽथकान्तारगणे गुहासु ।
रिपोरभावात्सहजं स्वशौर्य्यं मृगारिवृन्दे प्रकटीकरोति ॥ ५ ॥
सम्प्राप्य यं मानवजातिरत्नम् लोकाभिरामैःसुगुणैःसुपूर्णम् ।
इंग्लैण्डदेशाधिपतिः सुमुग्धः सन्मित्रकार्य्ये सततं नियुंक्ते ॥ ६ ॥
प्रायः प्रतप्तैः पवनैः प्रतप्ता शुष्कातिकालात्तृषिता च यासीत् ।
कल्लोलपूर्णैः सलिलप्रवाहैः कृताधरा येन मरोः सुतृप्ता ॥ ७ ॥
न केवलं भारतवर्षवर्तिनी यूरोपदेशेऽपि सदा प्रकाशिनी ।
कीर्तिः सदा यस्य करोति शुभ्रा तत्रत्यलोकानतिगौरवर्णान् ॥ ८ ॥
प्रकाश्य गंभीरतरानुदारान् प्रजाहितार्थं परमान्विचारान् ।
स्वदेशकार्य्ये सततं सुलग्नः ख्यातिं गतोनीतिविदाम्वरिष्ठः ॥ ९ ॥

यत्कीर्त्याच्छादितेयं नयसुरभिजलैः क्षालिताक्षालिताधि-
र्भाभिर्विभ्राजमाना प्रतपनघुसृणैरञ्जिताखर्वगर्वा ।
क्षान्तिप्रध्वस्ततान्तिर्जननिकरगता शान्तिसंप्राप्तकान्ति-
र्भूकान्ता कान्तमूर्तिर्विबुधगणनुतस्वर्गगर्वापहन्त्री ॥ १ ॥
यस्मिन् राजनि राजराजसदृशे वर्वर्ति शान्तिः क्षितौ ।
येन स्वैरमहोमहामरुधरा सम्यक् सुनीरा कृता-
यत्साम्याचरणात् सुपिञ्जरगतोनूनं विरोधः स्थितो-
न्यथाकारि निरन्तरं वसुमती शुभैरद्भुतैर्गुणैः ॥

जीसीएसाइ ( G. C. S. I. ) मानं नयततिविदुरात-
सार्वभौमात्प्रसन्नात् ।
जीस्याईई ( G. C. I. E. ) पदं च प्रखरमतिबलात्-
प्रासवान् धर्मनिष्ठः ।
जीसीवायो ( G. C. V. O. ) उपाधिः प्रकटयति प्रजा-
पालनोत्थांस्वकीर्तिम् ।
जीवीईकेसिबी ( G. V. E. K. C. B. ) त्यादिकमनुवदति-
प्राज्ञ ते नीतिदाढ्यम् ॥ १२ ॥

एडीसी ( A. D. C. ) पदवीं च भूषणमिवासाद्यात्र विभ्राजसे ।
एलेल्डी ( L. L. D. ) पदवी सदाप्रकटयत्येकान्ततस्तेयशः ॥
यद्वंशानुगतं च जंगलधरः सम्राट् पदं तेऽधुना ।
तत्पूर्वैर्नृपशेखरैरधिगनोत्कीर्तेः समुद्बोधकम् ॥ १३ ॥

तस्य श्रीनृपवृन्दमौलिमणिनां प्राप्तस्य चश्वद्गुणै-
र्निःशेषां गुणमंडलीं गणयितुं सम्यङ् न कोपि क्षमः ।
किंत्वेतत् परमेश्वरं प्रतिदृढं सम्प्रार्थयेऽहर्निशम् ।
नीरोगः खलु जीवताचिरमयं कीर्तिप्रतापैर्युतः ॥ १४ ॥

नित्यं राज्यहितेरतः सुखयुतः सर्वत्र सिद्धिं गतः ।
पुत्रैः पौत्रगणैः सदा परिवृतोदेव्याः सुभक्तौ नतः ॥
गङ्गासिंहनरेश्वरो नृपवरो वीराग्रणीः सुन्दरः ।
सन्मान्योजययुक्तजंगलधरःसम्राट् (बादशाहः)चिरंजीवतु
॥ १५ ॥

शुभाकांक्षी—
देवीप्रसाद–शास्त्री
( चूरूनिवासी ).

॥ धणीक्षमा ॥

❀ जय जङ्गलधर बादशाह ❀



लैफ्टीनेएट–जेनरल हिज़हाइनेस महाराजाधिराज राजराजेश्वर नरेन्द्र शिरोमणि
महाराजा श्री गङ्गासिंह जी बहादुर, जी० सी० एस० आई०, जी० सी०
आई० ई०, जी० सी० वी० ओ०, जी० बी० ई०, के० सी० बी०
ए०-डी०-सी० · एलएल० डी०, महाराजा आफ़ बीकानेर।

* श्रीहरिः *

# भूमिका

सर्वथा पाश्चात्यशिक्षाप्रभाविते‌ऽस्मिन्काले न यद्यपि विविध-प्रश्नाकुलानां भारतीयानां स्वकीये धर्मशास्त्रे पूर्णा श्रद्धा तथापि कर्ममयेऽस्मिंल्लोके कर्मणः शक्तिरद्वितीयैवेति नास्तिकैरास्तिकैश्च सर्वैरेव स्वीक्रियते। तथैव च "मनुष्यः स्वकर्मणि स्वतन्त्रः" इति समुद्घोषयद्भिरपि पण्डितम्मन्यैः जगत आदिकालान्मानवाः कस्याश्चिदज्ञाततत्वायाः महाशक्तेः कृपाप्राप्त्यै प्रार्थनादिरताः सन्त्येवेत्यपि स्वात्मनि सत्यं विचारयद्भिरवश्यमङ्गीक्रियते। केयं महाशक्तिः? किमर्थं वा पूज्येति प्रश्ना न सरला न च तेषां विचारोऽत्र विशेषतोविधीयते। स्पष्टमेतावत्तु भारतीयेतिहासे यदखिल कल्याणकारिण्या भगवत्या देव्याः प्रसादेन चमत्कृता-खिललोका नानाकार्यसिद्धयः सम्बभूवुः भवन्ति भविष्यन्ति च। अनादिकालाचास्मिन्नार्यावर्ते ब्रह्मर्षयोराजर्षयश्च यज्ञादिनिरताः जगत्कल्याणं सम्पादयामासुः। अनतिकालाचायं करालः काल-प्रभावोयदनादृतसंस्कृताध्ययनाः स्वल्पद्रव्यप्राप्तिवशाचासन्तुष्टा ब्राह्मणाः स्वकीयमिमं धर्ममार्गं परित्यजन्तः स्वल्पावशिष्टमपि शास्त्ररहस्यं न संरक्षितुं तत्पराः सन्ति।

परं सौभाग्यं किलैतदार्याणां, संस्कृतविदुषां, सनातनस्य धर्मस्य च यदद्यापि (सत्यपिधार्मिकेह्रासे) सद्गुणालंकृतोधर्मनिष्ठः प्रजावत्सलोराजराजेश्वरोलेफ्टिनेन्टजनरल, हिज़हाइनस G. C. S. I., G. C. I. E., G. C. V. O., G. B. E., K. C. B., A. D. C., L. L. D. जङ्गलधरबादशाह इत्यादिपदवीविभूषितोबीकानेराधिपतिः महाराजगंगासिंहः पालयति शास्त्राज्ञां प्रस्थापयति च पुरातन-मादर्शं स्वकीये राज्ये। महानुभावस्यास्य राज्येऽद्यापि शतसो

* श्रीभगवत्यैनमः *



आनन्दमन्थरपुरन्दरमुक्तमाल्यं,
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु(नः)वो विजयाय मञ्जु,
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

# ❀ विषयानुक्रमणिका ❀

# शुद्धाशुद्धपत्रम्

| अशुद्ध | शुद्ध | पृ० | प० | अशुद्ध | शुद्ध | पृ० | पं० | अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| तृ | ता | १ | १३ | द्य | र्द्य | ४८ | २३ | त्त | त्तु | ८६ | ६ |
| वचनं | वाक्यानि | ३ | ९ | ह्य | ह्यु | ४९ | २२ | द्धं | द्धं | ,, | १७ |
| कम | कर्म | ६ | १६ | तृणा | तृ॒णा | ५० | १८ | स्त | स्तु | ,, | १८ |
| सर्मा | समा | ,, | ,, | तावं | तात्वं | ५२ | ७ | यमि | यामि | ८८ | २० |
| वे | ये | ७ | १९ | यते | यन्ते | ,, | ९ | ते | न्ते | ९४ | १ |
| म्य | भ्य | ,, | २० | ह्ल | ह्लृ | ,, | २० | वास्ति | वस्ति | ९६ | १४ |
| त्वौ | त्वौं | ८ | २३ | ज्ये | ज्यै | ५४ | ५ | ज्ञो | ज्ञोः | ९६ | १७ |
| नः | न | ९ | १८ | काता | कता | ५९ | २३ | त्वन्तस्म | त्वस्म | ९७ | १४ |
| ध्या | द्ध्या | १० | ८ | न्हे | ह्वे | ६१ | १६ | भृ | भृं | ९९ | ४ |
| यस्त | ये | ,, | २२ | जाति | जात | ,, | १८ | णग्रावा | णावा | १०० | ४ |
| विविधिः | विधिः | ११ | १३ | द्वद्धि | द्वृद्धि | ,, | २० | यमि | यामि | १०२ | ८ |
| मुमु | सुमु | ,, | २३ | हयञ्ञे | हर्यञ्ञे | ६२ | १३ | दिती | दिति | १०३ | २२ |
| इतु | अतु | ,, | २४ | द्ध | द्धं | ,, | १५ | मुव | भुव | १०४ | १६ |
| य | यं | ,, | ,, | म्भो | भ्यो | ६४ | २ | तम् | ताम् | १०५ | १५ |
| त्रिप्रा | त्रिःप्रा | १२ | २६ | तां | न्तां | ,, | ११ | ष्ठभे | ष्ठुभे | ,, | १७ |
| रणि | राणि | १३ | १९ | दुर्वा | दूर्वा | ,, | २३ | त्राने | मित्रान | १०६ | २० |
| ज्यद्व | ज्याद्व | १५ | १६ | मुख | मुखा | ६५ | १९ | ष्ठिाः | ष्ठिाः | १०८ | ८ |
| नह | ऋह | १९ | १६ | नेकै | नैकै | ६७ | १३ | छहे | छेह | १११ | १६ |
| त्पति | त्पत्ति | २० | ७ | स्त्वं | स्तु | ६८ | ६ | मस्पू | मास्पू | ११२ | १३ |
| कार | कर | २२ | १६ | समि | सीम | ६९ | ३ | इशां | ईशं | ११८ | ७ |
| सव | सर्वं | २४ | १७ | ङ्ग | ङ्गु | ,, | १९ | त्तरं | त्तरं | ११९ | १५ |
| र्स्वं | सर्वं | २६ | ११ | य | ज | ,, | २ | णीम् | णम् | ,, | १७ |
| हयु | ह्यु | २७ | २१ | घ्न्या | घ्न्या | ७० | ६ | मा | मां | १२० | १७ |
| षदा | पदा | ३० | १३ | वध्वा | वद्ध्वा | ,, | १७ | टाय | टायै | १२१ | ४ |
| द्ध | द्धु | ३० | २० | हणा | ह्णा | ७२ | २२ | श्चे | र्ध्यं | ,, | १२ |
| तः | त | ३१ | १ | स्वत्वे | स्यत्वे | ७८ | १७ | त्व | त्वं | ,, | १५ |
| श्ला | ला | ,, | १२ | ष्ठ | ष्ठे | ,, | २४ | रुस्पो | रुणस्यो | १२२ | ११ |
| भा | र्भा | ,, | १३ | ङ्ग | ङ्गु | ८० | २१ | ज्र्जत्वा | ऊर्जत्वा | ,, | १४ |
| तार्दं | तोंद | ३२ | २ | दि | दिषु | ८२ | ८ | ताय | तायै | १२५ | ८ |
| नाच | णाचा | ३३ | १८ | ममुधु | मधु | ८३ | १३ | देया | देयः | १२९ | २० |
| त्त | त्तु | ३५ | १७ | अदि | आदि | ,, | २१ | से | स्वते | १३१ | ११ |
| ङ्ग | ङ्गु | ,, | २० | मिति | मीति | ,, | २४ | नद्ये | नद्ये | १३४ | १५ |
| दनां | दिनां | ,, | २१ | दिके | दके | ८४ | ३ | द्रू | द्रु | १३५ | ५ |
| धा | धो | ३७ | २२ | मुव | सुव | ८६ | २ | भ्व | भ्य | ,, | ६ |
| ञ | ञु | ४० | ९ | | | | | | | | |

| अशुद्ध | शुद्ध | पृ० | पं० | अशुद्ध | शुद्ध | पृ० | पं० | अद्धशु | शुद्ध | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| स्य | स्थ | १३५ | ७ | परे | पूरं | १६२ | १४ | द्र | द्रु | १८७ | २२ |
| ओम | सोम | ,, | १८ | ण | र्णं | ,, | १६ | ज्याथ | ज्याअथ | १९१ | २३ |
| र्य्यं | पं | ,, | २१ | यज्ञा | जज्ञा | १६५ | १४ | णः | णाः | १९२ | १३ |
| च्च | च्य | १३६ | १७ | मति | मिति | ,, | ,, | तः | ताः | ,, | १५ |
| न्द्रियस्ये | न्द्रस्ये | १३६ | ६ | यान्ति | यन्ति | १६६ | १५ | वं | वें | ,, | १७ |
| नस्ते | नस्तदाशा | १३७ | ७ | मव | मेव | १६७ | ८ | साप | सर्पिं | १९५ | २४ |
| र्मस्त्वं | मँस्त्वं | १४२ | ३ | त्यवे | त्येव | १७१ | १५ | त्या | द्या | १९६ | ८ |
| स्तूभ्यं | स्तुभ्यं | ,, | २२ | नी | नै | १७३ | ३ | ग्रेण | ग्रेन | १९६ | १० |
| ततप्र | तप्र | १४५ | १२ | व्वाहृ | व्याहृ | १७५ | १७ | मनं | मनिष्क्षं | १९७ | १ |
| स | श | १५० | १७ | धवुं | वुधं | १७६ | १७ | प्रीत | प्रति | १९८ | १६ |
| तक | नक | १५१ | ६ | भूषण | भास | १७८ | ११ | एड | एड्डृ | १९९ | ८ |
| नी | नि | ,, | २० | न्तम | न्तमिन्द्रम | ,, | १२ | ङभिः | ङ्भिः | २०३ | २७ |
| र्वपा | वँजपा | १५३ | ९ | कों | कौं | १८० | २३ | रैस | रैत्त | २०५ | २० |
| किन्य | विन्य | ,, | १५ | र्पभ्यः | पैंभ्यः | १८२ | १५ | रुपे | रूपे | २०७ | २३ |
| गागे | यागे | १५६ | १४ | द्रमे | द्रुमे | ,, | ३० | म्यतम | म्पतये | ,, | १९ |
| मद | मेद | १६० | ८ | तैदु | तैदुं | १८५ | २ | अर्पणा | अपर्णा | २१० | १ |
| र्वान् | वें | १६० | १ | ङ्ग | ङ्गु | १८७ | २ | | | | |

यन्त्रगत्या कुत्रकुत्र रकारोकारौभग्नौकचिन्मुद्राकरप्रमादाद्व्यत्ययेन गतवन्तौ तौविचार्य्य पठनीयौ ।

( ५९ ) पृष्ठस्थदशमपंक्तौ 'समनुष्येषु कृणुते दीर्घमायुः" इत्यपियोजनीयः। तृतीयखण्डस्य १०२ पृष्ठायां दशमपंक्तौ भवन् इत्यस्याग्रे "यथेन्द्रन्दैवोविंशोमरुतोनुवर्त्मानोभवन्" इत्यपि पठनीयः । २९ पृष्ठायां तद्धितकाम्यया इत्यस्याग्रे विमलया इत्यपि योजनीयः ।

* श्रीमहालक्ष्म्यै नमः *

# * मङ्गलाचरणम् *

गिरिजाचरणं शरण्यमन्तर्हृदि कृत्वा नखचन्द्रिकातिकान्तम् ।
इह विश्वजनीनवाक्प्रणालीं शतचण्डीविधिपद्धतिं तनोमि ॥

****************

अथ कृतनित्यक्रियः कृतप्रायश्चित्तः प्राप्तशुभस्वप्न-
कः कृतभालतिलकः सपवित्रकोयजमानोयज्ञारम्भात्प्राक्
सुमुहूर्ते प्राङ्मुखआसीनः गणपत्यादीन्स्मृत्वा कर्त्तव्ययज्ञ-
कर्मणः प्रतिज्ञासंकल्पमारभेत् । प्रथमं कृताञ्जलिर्भूत्वा
स्वनासाग्रमेवपश्यन् वक्ष्यमाणदेवान् स्मरेत् मनसा नमेच्च ।
ॐ श्रीमन्महागणाधिपतये नमः । श्रीगुरुभ्यो नमः ।
श्रीसरस्वत्यै नमः । वेदपुरुषाय नमः । वाणीहिरण्यगर्भा-
भ्यां नमः । लक्ष्मीनारायणाभ्यां नमः । उमाशङ्कराभ्यां नमः ।
शचीपुरन्दराभ्यां नमः । मातृपितृचरणकमलेभ्यो नमः ।
इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । स्थानदेवताभ्यो
नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । एत-
त्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्योदेवेभ्यो नमः । सर्वाभ्य-
श्शक्तिभ्यो नमः । सर्वेभ्योब्राह्मणेभ्यो नमः । अविघ्नमस्तु ।

सुमुखश्चैकदन्तश्च कपिलोगजकर्णकः । लम्बोदरश्च विकटोविघ्ननाशोविनायकः ॥ धूम्रकेतुर्गणाध्यक्षोभाल-चन्द्रोगजाननः । द्वादशैतानि नामानि यः पठेत् शृणुया-दपि ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नं तस्य न जायते ॥ अभीप्सितार्थ-सिद्ध्यर्थम्पूजितोयः सुरासुरैः । सर्वविघ्नच्छिदे तस्मै गणा-धिपतये नमः ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत सर्वविघ्नोपशान्तये ॥ लाभस्तेषां जयस्-तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामोहृदिसंस्थो-जनार्दनः ॥ तदेवलग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । एवं विघ्नविच्छेदनपूर्वकप्रारीप्सितकर्मसिद्ध्यर्थं गणे-शादिस्मरणं कृत्वा पूजाङ्गतया प्रथमं कर्मपात्रं स्थापयेत् । (तद्यथा) कर्मपात्रं हैमं राजतं ताम्रमयं मृण्मयं वा कलशा-कारं समानीय तं समुद्रादिपुण्यजलेन शुद्धोदकेन वा परिपूर्य्य ॥ ओं तत्वायामि ब्रह्मणाऽवन्दमानस्तदाशास्ते यजमानोहाविर्भिः । अहेडमानो वरुणेहवोध्युरुशꣳस समान ऽआयुः प्रमोषीः ॥ ओं भूर्भुवः स्वः अपाम्पते ! वरुण ! आस्मिन्कलशे आगच्छेहतिष्ठेमां सम्पादितां पूजां गृहाण यावत्पूजयामि तावत्सुस्थिरोभवेत्यावाह्य ॥ सम्पादितपूजा-द्रव्यैः कलशेवरुणम्पूजयेत् । ततोहस्ते अक्षतान् गृहीत्वा ॥ नमोनमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय सुपाश-हस्ताय झषासनाय जलाधिनाथाय नमोनमस्ते इति ॥

संप्रार्थयेत् ॥ अनया पूजया वरुणः सपरिवारः प्रीयता-मितिवदेत् । ततः मत्स्यमुद्रया कियत्कालं कलशमाच्छाद्य ॥ ॐ वरुणायनमः ॥ इत्यष्टवारं पठित्वा कलशाङ्गदेवान् पूजयेत् यथा कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।

---

* श्रीगणेशाय नमः *

गणनाथं नमस्कृत्य भारतीं च तथा गुरुम् ।
प्रमाणसंग्रहं कुर्वे पद्धत्याः शास्त्रमार्गतः ॥

क्वचिच्च वेदवचनं क्वचित्पौराणिकं तथा । क्वचित्तन्त्रप्रमाणं च संगृह्यात्र प्रदर्शितम् ॥ यदत्र मम चापल्यं क्षमध्वं तद्बुधामुहुः । शोधयन्तु निजां कीर्तिम्मत्वैतत्प्रार्थयाम्यहम् ॥ (तिलक इति) (तिलकस्य यज्ञादावावश्यकतामाह कात्यायनः) श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥ इति । भस्मधारणप्रकारस्तु ग्रन्थान्तरात् ज्ञातव्यः अत्र विस्तृति-भयान्नोद्धृत इति ॥ ( सपवित्रक इति ( मार्कण्डेयः ) चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ॥ एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥ सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं नवा इति । सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम् । नोच्छिष्टं तत्प-वित्रं तु भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥ (प्रयोगपारिजाते) स्नाने होमे जपे दाने स्वाध्याये पितृकर्मणि । करौ सदर्भौ कुर्वीत तथा सन्ध्या-भिवादने ॥ (शान्तिके कर्मणि चतुर्णां दर्भाणां पवित्रमितिविशेषः) चतुर्दर्भाश्च शान्तिके इति तत्रोक्तत्वात । मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु । मन्त्रं विना धृतंयत्तत्पवित्रं विफलं भवेत् इति (अस्य विशेषविचारस्तु तृतीयखण्डे द्रष्टव्यः ॥ ) प्राङ्मुख इति) यस्मिन् विवस्वान् विषुवत्युदेति प्राचीति तां वेदविदोवदन्ति । मध्ये पुनः पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति पूर्वम् ॥ (इति

मूले तस्य स्थितोब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वेसप्तद्वीपा वसुन्धरा । ऋग्वेदोथ यजुर्वेदः सामवेदोह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशे तु समाश्रिताः। गायत्री चैव सावित्री शान्तिस्तुष्टिकरी तथा॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेस्मिन् सन्निधिं कुरु ॥ अश्वत्थं भास्करं गङ्गां नैमिषारण्यमेव च । प्रयागं ब्रह्मतीर्थं च घटे ह्यावाहयाम्यहम् । ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थंदेहि दिवाकर ॥ ( इत्यादिमन्त्रान् पठित्वा ) मन्त्रोक्तान्देवान् कलशे आवाहयेत् । आवाहितान् देवान्कर्मपात्रे समाश्रितान् क्षणं परिभाव्य अङ्कुश-मुद्रया सर्वाणि तीर्थान्यपि सूर्यमण्डलादवतार्य धेनुमुद्रया

---

सङ्ग्रहकारः) पूज्यपूजकयोर्मध्ये पूर्वमित्यभिधीयते । नैशानं पूजकापेक्षं पूज्यापेक्षं तु तद्भवेत् । (इति तान्त्रिकाः) अथ च कर्मारम्भे आचमनप्राणायामभूताद्यपसर्पणक्रियातु सर्वसाधारणीभूता सप्रमाणिकैव शिष्टाचरणदर्शनात् तदर्थं ग्रन्थगौरवस्य प्रयोजनाभावः तथा च सर्वस्मिन्कर्मणि च मंगल लाभाय विघ्नध्वंसनाय च गणपत्यादिस्मरणं सत्संप्रदाय एव । कर्मपात्रस्थापनं तत्रावश्यकंतत् द्वितीयेखण्डे चंडिकार्चनविधौ पात्रस्थापनप्रकरणे तान्त्रिकमतेनकथयिष्यते ज्योतिषाचार्योविष्णुदत्तः। इदानीम् कर्मारम्भ समयेपि तस्यावश्यकत्वात् वैदिक विधिना पौराणिक विधिना च कर्मपात्र संस्कारः प्रदर्शितः ( तत्रहेतुमाहकश्चित् ) विनातु

तान्यमृतीकृत्य कवचेनावगुण्ठ्य । मत्स्यमुद्रया समाच्छाद्य मूलमन्त्रमष्टवारं पठित्वा । आवाहितदेवान् पूजयेत् । ( ततः ) पुष्पाणि गृहीत्वा अनया पूजया पूजिता आवाहिताः सर्वेदेवाः सपरिवाराः प्रीयन्तामिति पुष्पाञ्जलिं पात्रोपरि परिक्षिपन् नमेत् ( इति कर्मपात्रसंस्काराविधिः )

ततोहस्ताभ्याम्वैदिकविधानेन कर्मपात्रमभिमन्त्रयेत् तत्र पठनीयामन्त्राः ॥ ॐ यद्देवा देवहेडनन्देवासश्चकृमाव्वयम् । अग्निर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदिदिवा यदिनक्तमेनाꣳसिचकृमाव्वयम् । व्वायुर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदि जाग्रद्यदिस्वप्नऽएनाꣳसि चकृमाव्वयम् । सूर्य्योमातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ ३ ॥ एवं ( कलशोदकमभिमन्त्र्य ) तज्जलेन स्वशरीरमुपस्थितद्रव्याणि च प्रोक्षयेत् । ( तत्र मन्त्राः ) ॐ अपवित्रः पवित्रोवा सर्वावस्थां गतोपि वा । यः स्मरेत्पुण्डरीकाक्षं सवाह्याभ्यन्तरे

---

कर्मपात्रेण पूजाद्रव्यादिशोधनम् । न भवेत्तेन तत्पूर्वं स्थापयेद्वामके स्वके ( दक्षिणकेइत्यपिकुत्रचित्पाठः ) हैमादि निर्मितं पात्रं तीर्थादिजलसंयुतम् । विधाय तत्र संपूज्या वरुणाद्याहि देवताः ॥ (अभिमन्त्रयेदिति) कुर्य्यात्कूष्माण्डसूक्तेन कर्म्मपात्राभिमन्त्रणम् । (प्रोक्षयेदिति) ततस्तेन जलेनैव स्वात्मानं प्रोक्ष्य यत्नतः । पूजाद्रव्याणि संसिञ्चेत्ततः कर्मसमारभेत् ॥ इति (सिञ्चनं नाम पवित्रीकरणम् ) तदर्थं मंत्राः पद्धत्यामुद्धृताः ॥ नाप्रोक्षितं स्पृशेत्किञ्चित् दैवे पित्र्ये च कर्मणि इति वचनात् प्रोक्षणप्रासौ पुण्डरीका-

शुचिः ॥ ॐ पवित्रेस्थोव्वैष्णव्व्यो सवितुर्व्वः प्रसवऽउत्पु-नाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्यते पवित्र-पते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ ॐ चित्पतिर्म्मा पुनातु व्वाक्पतिर्म्मा पुनातु देवोमा सविता पुनात्वच्छि-द्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्यते पवित्रपते पवित्र-पूतस्य यत्कामः पुनेतच्छकेयम् ॥ ॐ पुनन्तुमा देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्श्वा भूतानि जातवेदः पुनीहि मा ॥ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूंरनु । यत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनातु मा ॥ पवमानः सोऽअद्यनःपवित्रेणविचर्षणिः । यः पोतासपुनातु मा ॥ ॐ उभाभ्यान्देवसवितः पवित्रेण सवेन च । माम्पुनीहि व्विश्श्वतः ॥ ९ ॥ इति । ततः गौरसर्षपाक्षतादीन् गृहीत्वा । अपसर्पन्तु ते भूताये भूताभू-मिसँस्थिताः ये भूताविघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशः सर्वेषामविरोधेन यज्ञकर्मसमारभे ॥ पूर्वे रक्षतु गोविन्दः इत्यादि ।❀ (॥ प्राच्यां रक्षतु मामैन्द्री आग्नेयामग्निदेवता । दक्षिणे रक्षवाराही नैर्ऋत्यां खड्गधारिणी ॥ प्रतीच्यां वारुणीरक्षेद्वायव्यां मृगवाहिनी । रक्षेदुदीच्यां कौमारी ईशान्यां शूलधारिणी ॥ ऊर्द्ध्वं ब्रह्माणी मे रक्षेत् अधस्ताद्वैष्णवी तथा । एवं

---

क्षोचारणेनेतिनिबन्धेलिखितं पुण्डरीकाक्षस्मरणे नेतिकचित् । शङ्ख-चक्रधरमिति मूलवाक्ये स्मरणमेव विहितं तथापि उच्चारस्य स्मर-

दशदिशोरक्षेच्चामुण्डा शववाहना ॥) तथा रक्षोहणंवल-गहनं ञ्वैष्णवीमिदमहन्तं ञ्वलगमुक्किरामियम्मेनिष्टयोयम-मात्योनिचखानेदमहन्तंञ्वलगमुक्किरामि यम्मे समानोयम-समानोनिचखानेदमहन्तंञ्वलगमुक्किरामि यम्मे सबन्धुर्य्यम-सबन्धुर्निचखानेदमहन्तंञ्वलगमुक्किरामि यम्मे सजातोयम-सजातोनिचखानोत्कृत्याङ्किरामि ॥ १ ॥ रक्षोहणोवोञ्वल-गहनः प्रोक्षामि ञ्वैष्णवान्रक्षोहणोवोञ्वलगहनोऽवनयामि ञ्वैष्णवान्रक्षोहणोवोञ्वलगहनोऽवस्तृणामि ञ्वैष्णवा-न्रक्षोहणौञ्वांवलगहनाऽउपदधामि ञ्वैष्णवी रक्षोहणौ-वांञ्वलगहनौ पर्य्यूहामि ञ्वैष्णवी ञ्वैष्णवमसि ञ्वैष्णवास्थ ॥ २ ॥ रक्षसाम्भागोसि निरस्तठं रक्षऽइदम-हठं रक्षोभितिष्ठामीदमहठं रक्षोऽवबाधऽइदमहठं रक्षोधमन्त-मोपनयामि । घृतेन द्यावापृथिवीप्रोर्णुवाथांञ्वायोञ्वेस्तो-कानामग्निराज्यस्य ञ्वेतुस्वाहा स्वाहाकृतेऽऊर्द्ध्वनभसम्मा-रुतङ्गच्छतम् ॥ ३ ॥ इतिमन्त्रैरेकैः स्तोकैर्वा प्रपठन्

णपूर्वकतयोच्चारणे स्मरणमायात्यैवेत्यविरोधः । तेनापवित्रइति आत्मानंप्रोक्षेत । कर्म्मोपयुक्त पुष्पादींश्चप्रोक्षेत । भूतापसर्प्पणं कुर्य्यात्कर्मभूमेश्च शोधनम् । दिशां संरक्षणं चैव गौरसर्षपतण्डुलैः एवं रक्षां विधायाथ स्वासनं शोधयेत्सुधीः ॥ राक्षसा विघ्नकर्तारो दिग्विदिक्षु वसन्तिहि । ( चण्डीयागे प्राच्यामित्यारम्य शववाह-नान्तोऽपिपठनीयः । ) तेषामुत्सादनं कार्यं यज्ञस्य फलसाधकैः ॥ विश्वामित्रोमुनिःपूर्वं राक्षसैर्विघ्नकारकैः ॥ संत्रस्तोहि ययौ रामं यज्ञसंसिद्धिहेतवे ॥ मंत्रास्त्रपीडितादैत्याः पातालं यान्ति तत्क्ष-

स्वाभितः क्षिपेत् । इति । ततः पृथ्वीतिमन्त्रेण आसन-प्रोक्षणम् । यथा पृथिवीतिमन्त्रस्य मेरुपृष्ठऋषिः सुतलंछन्दः कूर्मोदेवता आसनशोधनार्थे विनियोगः ॥ ॐ पृथ्वि त्वया धृतालोका देवि ! त्वं विष्णुना धृता त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् । इत्यासने जलं निक्षिप्य ( ततः ) ॥ मानस्तोके तनयेमानऽआयुषिमानोगोषुमानो-अश्वेषुरीरिषः । मानोऽवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वा हवामहे ॥ इतिरुद्राक्ष धारणं कृत्वा ॥ ॐआमा

---

णात् । अतस्तेषां विनाशार्थं सर्षपान् विकिरन्ति हि ॥ ते मन्त्र-बलसम्प्राप्ता मेरुपर्वतसन्निभाः । पतन्ति राक्षसानीके विद्रवन्ति मुहुर्मुहुः ॥ संत्रस्ताः राक्षसाः सर्वे पलायन्ते दिशोदश । (रुद्राक्षमालाधारणमाह वाचस्पतौ ईश्वरः) रुद्राक्षा यस्य गात्रेषु ललाटे च त्रिपुण्ड्रकम् । सचाण्डालोपि सम्पूज्यः सर्ववर्णोत्तमो-भवेत् ॥ अभक्तोवा विभक्तोवा नीचोनीचतरोपि वा । रुद्राक्षान् धारयेद्यस्तु मुच्यते सर्वपातकैः ॥ सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः । तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः ॥ (धारणा-भावे दोषः) अरुद्राक्षोजपः पुंसां तावन्मात्रफलप्रदः । यस्याङ्गे ह्यस्ति रुद्राक्षः एकोपिबहुपुण्यदः ॥ विभूतिर्यस्य नोभाले नाङ्गे रुद्राक्षधारणम् । नहि वाण्यां शिवोचारस्तंत्यजेदन्त्यजं यथा ॥ (शिखाबन्धनम्) मध्ये तु बह्वृचाश्चैव निबध्नीयुः शिखां ततः । मान्ध्यदिनाश्च ये विप्राः पार्श्वे दक्षिणतः क्रमात् । वामपार्श्वे तु बध्नीयुर्ये विप्राः सामगायनाः ॥ (नागदेवः) अमन्त्रोदीयते ग्रन्थि-र्जपहोमौ वृथा भवेत् । स्मृत्वौकारं च गायत्रीं निबध्नीयाच्छिखां ततः । पुनराचम्य हृदयं बाहुस्कन्धौ च संस्पृशेत् ॥ मानस्तोकेति

गन्यशसा सᳲसृजवर्चसा तम्माकुरु प्रियंजनानामधिपतिं पशूनामरिष्टिन्तनूनामित्यनेन सकृदाचामेत् ततोद्विस्तूष्णी माचामेत् ततः प्राणायामं कृत्वा शान्तिपाठं पठेत् स्वयमशक्त श्चेत् आचार्यद्वारा पाठयेत् ( तत्रपठनीयामंत्राः ) । ओं आनोभद्राः क्रतवोयन्तुविश्वतोऽदब्धासोऽअपरीतासऽउ- द्भिदः । देवानोयथासदामिद्वृधेऽअसन्नप्रायुवोरक्षितारो- दिवे दिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयन्तान्देवानाᳲ- रातिरभिनोनिवर्त्तताम् । देवानाᳲसक्ख्यमुपसेदिमाव्वय- न्देवानऽआयुः प्रातिरन्तुजीवसे ॥२॥ तान्पूर्वयानिविदाहूमहे व्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् । अर्य्यमणंव्वरुणᳲ- सोममश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभेषजन्तन्माता पृथिवी तत्पिता- द्यौः । तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विना शृणुतान्धि- ष्ण्ययायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धिय- ञ्जिन्न्वमवसे हूमहे व्वयम् । पूषानोयथाव्वेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥५॥ स्वस्तिनऽइन्द्रोव्वृद्धश्रवाः

---

मंत्रेण शिखाबन्धन्तु कारयेत् । (ग्रन्थान्तरे) स्नाने दाने जपे होमे सन्ध्यायां देवतार्चने। शिखा ग्रन्थिम्विना कर्म न कुर्याद्वै कदाचनः ॥ शौचेऽथशयने सङ्गे भोजने दन्तधावने । शिखामुक्तिं सदा कुर्य्यादित्येतन्मनुरब्रवीत् ॥ इति । (प्राणायामं कृत्वेति) प्राणा- यामस्यावश्यकत्वं (अगस्त्यसंहितायाम्) प्राणायामैर्विना यद्यत्कृ- तं कर्म निरर्थकम् । अतोयत्नेन कर्तव्यः प्राणायामः शुभार्थिना ॥

स्वस्तिनः पूषाऽविश्ववेदाः स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोऽवृहस्पतिर्दधातु । पृषदश्वामरुतः पृश्निमातरः शुभंय्यावानोऽविदथेषु जग्मयः । अग्निजिह्वामनवः सूरचक्षसोऽविश्वेनोदेवाअवसागमन्निह । भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितं यदायुः । शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् । पुत्रासोयत्र पितरोभवन्ति मानोमद्ध्यारीरिषतायुर्ग्गन्तोः । अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपितासपुत्रः विश्वेदेवाऽअदितिः पञ्चजनाऽ

---

(प्राणायामप्रकारः) प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः । सव्याहृतिकां सप्रणवां गायत्रीं शिरसासह ॥ त्रिः पठेदायतप्राणः प्राणायामः सउच्यते । कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ॥ प्राणायामः सविज्ञेयस्तर्जनीमध्यमे विना । व्यासः । अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः । कनिष्ठानामिकाभ्यान्तु वामं प्राणस्य संग्रहे । अङ्गुष्ठतर्जनीभ्यान्तु ऋग्वेदीसामगायनः । अङ्गुष्ठानामिकाभ्यान्तु ग्राह्यः सर्वैरथर्वभिः । इति । (देवीपुराणे) श्रुतिस्मृत्यादिकर्मादौ सगर्भः प्राणसंयमः । अगर्भोध्यानमात्रं तु स चामन्त्रः प्रकीर्तितः ॥ (कात्यायनः) दक्षिणे रेचयेद्वायुं वामेना पूरितोदरम् । कुंभकेन जपं कुर्य्यात्प्राणायामोभवेदिति ॥ (प्रयोगपारिजाते) पञ्चाङ्गुलीभिर्नासाग्रं पीडयेत्प्रणवेन वै । मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकाङ्गुष्ठैर्यतेश्चब्रह्मचारिणः । (नागदेवः) पूरणं दक्षया नाड्या कुंभनं हृदयस्तथा । रेचनं वामया कुर्य्यात्प्राणायामस्य लक्षणम् ॥ रेचकः पूरकश्चैव प्राणायामोऽथकुंभकः । प्रोच्यते सर्व शास्त्रेषु योगिभिर्यतमानसैः ॥ तथा-

ऽअदितिर्ज्जातमदितिर्ज्जनित्वम्। तम्पत्नीभिरनुगच्छेमदेवाः पुत्रैर्ब्भ्रातृभिरुतवाहिरण्यैः। नाकङ्गृभ्णानाः सुकृतस्य-लोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः। आयुष्यं वर्चस्यᳬं रायस्पोषमौद्भिदम्। इदᳬं हिरण्यंᳬवर्चस्वज्जैत्रायाविशतादुमाम्। यतोयतः समीहसे ततोनोऽअभयंकुरु। शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः॥ ॐ शान्तिः! शान्तिः!! शान्तिः!!! सुशान्तिर्भवतु॥ सर्वमंगलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते॥ विनायकं गुरुं भानुं ब्रह्म-विष्णुमहेश्वरान्। सरस्वतीम्प्रणम्यादौ सर्वकार्यार्थसिद्धये॥ वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ। अविघ्नं कुरुमे देव सर्वकार्येषु सर्वदा॥ इति।

---

ओमिति व्याहरन् विप्रोयथाविधिसमाहितः। प्राणायामैस्त्रिभिः पूतस्तत्त्क्षणाज्ज्वलतेग्निवत्। इति संक्षेपतः प्राणायामविविधिः विशेषविधिस्तु द्वितीयखण्डे ज्यौतिषाचार्य्यप्रणीततान्त्रिकसन्ध्याप्रकरणे द्रष्टव्यः।(शान्तिपाठमिति) अन्वर्थाचेयंसंज्ञाद्यौः शान्तिरित्यादीनां शान्तिपदघटितत्वेन छत्रिन्यायेन सर्वेषां तदभिधानस्य योग्यत्वात्। आवश्यकोऽयं कर्म्मादौ। "शान्तिकरणमाद्यन्तयोः स्वाध्यायदर्शनात" इति कात्यायनसूत्रे उक्तत्वात अस्य सूत्रस्य प्रवर्ग्यविषयत्वेऽपि एकत्र निर्णीतः शास्त्रार्थः सर्वत्र प्रत्यायकोभवतीति न्यायात् अविरोधात्सामान्यादितरेषु तथात्वमिति न्यायाच्चात्रोपस्थितिः शान्तिमन्त्राणां देशभेदेन शाखाभेदेन च नानात्वेऽपि तत्तद्देशीयास्तत्तच्छाखीयाश्च ग्राह्याः। [ एवं लक्ष्मीनारायणादिदेवेषु मुमुखश्चेत्यादिपाठेऽपि तत्तद्देशसम्प्रदायोऽनुसरणीयः ] ते च आनोभद्रा इति दशकण्डिकात्मकोऽनुवाकोद्यौःशान्तियतो-

यत इति च एतेषामेव निबन्धेषूपलम्भात् । ( मात्स्ये ) य० द्वार-सूक्तजपे अस्यैवानुवाकस्य भद्रसूक्तत्वेन ग्रहणाच्च गणानान्त्वा अम्बेअम्बिके इत्यादि तु नोपनिबद्धमनुपलम्भात् । श्रौतेकर्मणि ऋचम्वाचम् इति शान्त्याध्यायः पठनीयः ।

## ❀ आचमनविचारः ❀

क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः । भवन्ति तु क्रियास्तस्या वृथाः सर्वा न संशयः ॥ ( इति वायुपुराणे ) स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्प्पणे । आचान्तः पुनराचामेद्वा-सोविपरिधाय च ( इति याज्ञवल्क्यः ) आचम्य प्राणान्संमृशति आचामति आमागन्यशसेति ॥ (इति कात्यायनपरिशिष्टे) विधि-माह ( भरद्वाजः ) आयतं पर्वणां कृत्वा गोकर्णाकृतिवत्करम् । एतेनैव विधानेन द्विजआचमनं चरेत् । आचमने उदकं ( तन्त्र-सारे ) दध्ना सह पलैकन्तु शुद्धं वारि तथाचमेत् । स्नानं सन्ध्या क्रियाः सर्वाः कर्त्तव्याः शीतवारिणा ॥ ( आह्निककारास्तु ) प्रणवं पूर्वमुच्चार्य चतुर्विंशतिसंख्यया । स्वाहान्तं प्राशयेद्वारि नमोन्तं स्पर्शयेत्तथा । दक्षिणे नोदकं पेयं दत्तं वामेन संस्पृशेत् । तावन्न शुद्ध्यते तोयं यावद्वामेन युज्यते । इति चाप्याहुः ॥ गोकर्णाकृतिहस्तेन माषमात्रंजलं पिवेत्इति ॥ आचमनविचारे(नागदेवः)संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ॥ माषमात्रसुवर्णस्य यत्र मज्जति वै मणिः । एतदाचमनं प्रोक्तं पवित्रं कायशोधनम् ॥ ( बृहत्पाराशरः ) आमणेर्वन्धना द्धस्तौ पादौचाजानुतः शुचिः । प्रक्षाल्याचमयेद्विद्वान् अन्तर्जानुकरो-द्विजः ॥ प्रक्षाल्य पादौ हस्तौ च त्रिपिवेदम्बुवीक्षितम् । संमृष्टाङ्गु-ष्ठमूलेन विप्रमृज्यकृतीमुखम् ॥ दक्षिणे च स्थितं तोयं तर्ज्जन्या-सव्यपाणिनः । तत्तोयं संस्पृशेद्यस्तु सोमपानसमं स्मृतम् ॥ (शङ्खः) त्रिःप्राश्नीयाद्यदम्भस्तुप्रीतास्तेनास्यदेवताः । ब्रह्माविष्णुश्चरुद्रश्चभवन्ती त्यनुशुश्रुम ॥ गङ्गा च यमुना चैव प्रीयेते परिमार्जनात्। नासत्य-

दस्रौ प्रीयेते स्पृष्टे नासापुटद्वये। स्पृष्टे लोचनयुग्मे तु प्रीयेते शशि-भार्गवौ ॥ कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ । स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः ॥ मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषोभवेत् इति ( अत्रबौधायनोपि ) ॐ पूर्वाभिः सर्वाभिर्व्या-हृतिभिराचामेत् । यत्प्रथममाचामति तेन ऋग्वेदं प्रीणाति यद्द्वि-तीयं तेन यजुर्वेदम् । यत्तृतीयं तेन सामवेदम्। यत्प्रथमम् संमार्ष्टि तेनाथर्वणवेदम् । यद्द्वितीयं तेनेतिहासादीन् । यत्सव्यं पाणिं प्रोक्षति पादौ शिरोहृदयं चक्षुकर्णौ नासां नाभिं चोपस्पृशति तेनौषधिवनस्पतीप्रभृतीन् सर्वांश्च देवान् प्रीणाति ॥ ( इति ) बौधायनस्तुभिन्नशाखीयः भिन्न२ शाखीयानामादेशः स्वशाखयैक वाक्यतामुत्पादयति चेदादरणीयः नान्यथेति ॥ ( व्यासः ) शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोपिवा । अकृत्वापादयोः शौचं आचान्तोप्यशुचिर्भवेत् ॥ अपः पाणिनखैः स्पृष्ट्वा आचामेद्यस्तु वै द्विजः । सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥ नद्यादावाच-मने विशेषमाह (पैठीनसिः) जानुदघ्ने जले नद्यास्तिष्ठन्नेवाचमेद् द्विजः । जानोरूर्ध्वे जलेतिष्ठन्नाचान्तः शुचितामियात् ॥ आच-मनभेदः (विश्वामित्रकल्पे) शुद्धं स्मार्तं तथा चैव पौराणं वैदिकं तथा । तान्त्रिकं श्रौतं स्मार्तं च षड्विधं श्रुतिचोदितम् ॥ विण्मू-त्रादिकशौचेषु "शुद्धं च" परिकीर्तितम् । "स्मार्तं" "पौरणिकं" कर्मण्याचमेद्विधिपूर्वकम् ॥ "वैदिकं" श्रौतमित्यादि ब्रह्मयज्ञादि पूर्वकम् । अस्त्रविद्यादिकार्येषु 'तान्त्रिको' विधिरुच्यते ॥ श्रौता-चमनम् (आन्हिककारिकासु) प्रणवं पूर्वमुचार्य सावित्रीं तदनन्त-रम् । तथैव व्याहृतीस्तिस्रः श्रौताचमनमुच्यते ॥ स्मार्ताचमनम् ( भारद्वाजः ) केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ । द्वाभ्यामौष्ठौ तु सम्मृज्य द्वाभ्यामुन्मार्जनं तथा ॥ एकेन हस्तौ प्रक्षाल्य पादावपि तथैव च । सम्प्रोक्ष्यैकेन मूर्धानं ततः सङ्कर्षणा दिभिः ॥ आस्यनासाक्षिकर्णौ च नाभ्युरस्कं भुजौ क्रमात् । एव-माचमनं कृत्वा साक्षान्नारायणो भवेत् ॥ वैदिकाचमनम् ( आचा-

# ॥ अथ संकल्पः ॥

ततोदक्षिणहस्ते गन्धाक्षतपुष्पजलताम्बूलपूगीफलहिरण्यादिकं गृहीत्वा ॐ नमश्चण्डिकायै ३ इति वदन् संकल्पं कुर्यात तद्यथा ॐ श्रीमद्भगवतोमहापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणोवर्त्तमाने द्वितीयप्रहरार्द्धे गतासु

---

रतिलके ) कर्माङ्गे तु त्रिराचम्य प्राणायामत्रयं स्मृतम् । प्राङ्मुखोवापि कर्त्तव्यं कर्मकुर्य्यात्प्रयत्नतः ॥ जलाभावे आचमनम् ( आचारमयूखे ) क्षुते निष्ठीवने चैव व्रतोच्छिष्टे तथाऽनृते । पतितानां च सम्भाषे दक्षिणं कर्णं स्पृशेत् ॥ अग्निरापश्च वेदाश्च सोमः सूर्योऽनिलस्तथा । सर्वे देवास्तु विप्रस्य कर्णे तिष्ठन्ति दक्षिणे ॥ ( साङ्ख्यायनः ) आदित्यावसवोरुद्रावायुरग्निश्च धर्मराट् । विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने । एषु कर्मसु नाचामेत् दक्षिणं श्रवणं स्पृशेत् ॥ ( पराशरः ) प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा विप्रस्य दक्षिणे कर्णे वसन्ति मुनिरब्रवीत् ॥ गङ्गा च दक्षिणे कर्णे नासिकायां हुताशनः । उभयोः स्पर्शनाचैव तत्क्षणादेव शुध्यति ॥ ( नागदेवः ) अशब्दाभिरनुष्णाभिस्त्यक्ताभिः फेनबुद्बुदैः । आपद्गतानां शुद्धिः स्यादुष्णेनापि च वारिणा ॥ पादक्षालनशेषेण नाचामेद्वारिणा द्विजः । शुद्धाऽभावे पिवेत्किंचित्त्यक्त्वाभूमौ तु तज्जलम् ॥ ( मार्कण्डेयः ) कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् । कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य चेति ॥ ( शुद्धजलाभावे दक्षिणश्रवणस्पर्शः सर्वसाधारण इति ) मार्कण्डेयवचनादेव स्पष्टं भवति

पञ्चाशच्छरत्सु वर्त्तमानस्यैकपंचाशत्तमवर्षस्य आद्यमासे आद्यपक्षे आद्यादिने वर्त्तमानाब्दस्य युग्मेयामे तृतीये मुहूर्ते रथन्तरादिद्वादशकल्पानां मध्ये चाष्टमे श्रीश्वेतवाराहकल्पे स्वायम्भुवादिचतुर्दशमन्वन्तराणां वर्त्तमानवैवस्वतमन्वन्तरे वर्त्तमानवेधसोजन्मादिवसादतिक्रान्तेषु सप्तविंशतितमेषु महा-युगेषु वर्त्तमानाष्टाविंशातितमस्य महायुगस्य कृतत्रेताद्वापरेषु युगचरणेषु व्यतीतेषु वर्त्तमानस्यास्य कलेरपि प्रथमे चरणे श्रीमद्भागवतस्य पञ्चमस्कन्धोक्तसृष्टिकालनिरूपणाध्यायवि-हित पञ्चाशत्कोटियोजनावस्तीर्णे सप्तद्वीपात्मके भूम-ण्डलेतदर्धव्यापिनि निखिलजगन्मण्डलस्योत्तरार्द्धभागे जम्बूद्वीपाख्ये महति भूखण्डे ऐन्द्रादिनवखण्डान्तर्गते भरतखण्डे गङ्गादिसरिद्भिः पाविते पुष्करादितीर्थ-समन्विते विविधयज्ञधूमावधूतकल्मषे सप्तऋषिगा-श्रमयुक्ते आर्यावर्तान्तर्गतकुमारिकाक्षेत्रे मध्यरेखायाअमु-कभागे (चत्वारिंशद्योजनामिते मरुदेशे कापिलायतनसान्निधौ सर्वसमृद्धिसंयुते विक्रमपुरे नगरे) श्रीमद्विक्रमार्कराज्यद्गते-षुवर्षेषु संवत्सराभिधेषु मासानामुत्तमेऽमुकमासे[१] पक्षे[२] ऋतौ

---

सम्यक् वसन्त्यस्मिन् मासादयः सः सम्वत्सरः = द्वादशमासात्मकः।

(१) मत्स्यते परिमीयतेचन्द्रवृद्धिक्षयादिना इतिमासः।

(२) देवकार्यार्थं पितृकार्यार्थं वा पक्ष्यते परिगृह्यतेयः सः पक्षः।

तनोति = विस्तारयति वर्द्धमानां क्षीयमाणां च चन्द्रकलाम् यः काल-विशेषः सा तिथिः।

अयने[१] संक्रान्तौ[२] तिथौ वासरे नक्षत्रे योगे करणे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रे कुजे बुधे गुरौ शुक्रे शनौ राहौ केतौ च एवं गुणविशिष्टायां शुभपुण्यातिथौ अमुकगोत्रः अमुकप्रवरः अमुकशाखाध्यायी अमुकनामशर्मा वर्मा वाहं निष्कामसकामयोरेकतमेनाभीष्टेन श्रीजगदम्बिकाजगज्जननी श्रीदुर्गाभगवतीप्रीतिकामः ( श्रीशतचण्डीयागं ) करिष्ये । इतिप्रातिज्ञासंकल्पः ॥ ( अ०प्रकाशे । कामनाभेदेनपृथक् संकल्पाः ॥ ) ममेहजन्मनिभगवतीप्रीतिद्वारासर्वापच्छान्तिपूर्वकदीर्घायुर्विपुलधनधान्य पुत्रपौत्राद्यनवछिन्न संततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिध्यर्थं ॥ ममजीवच्छरीराऽविरोधेनामुकरोगस्य समूलनाशनेनापमृत्युनिवारणद्वाराद्दिप्रारोग्यार्थं ॥ ममजन्मराशेः सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्गोचराद्वाचतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थिताऽमुकग्रहसूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवहुतमफलप्राप्त्यर्थम् ॥ अमुक मारकग्रहदशान्तर्दशा तत्संवन्धिचोपदशादिनदशा वा षष्ठाष्टमद्वादशादिनिषिद्ध-

(१) अयने-यात्यनेन सूर्य्योदक्षिणाशामुत्तरशां चेत्ययनम् ।

(२) क्रमेण संचरतः सूर्य्यस्य (पूर्वस्मादुत्तरराशौ) प्रवेशः संक्रान्तिः ।

ऋयर्ति गच्छति अशोकपुष्पविकासादि असाधारणलिङ्गमिति कालविशेषः ऋतुः।

भावाधिपतिदशाजनितपीडाल्पायुराधिदैवाधिभौतिकाध्या-त्मजनितक्लेशनिवृत्त्यर्थम् ॥ आयुरारोग्यप्राप्त्यर्थं । मद्-पुत्रत्वभार्य्यावन्ध्यत्वदोषनिवृत्तिपूर्वकसत्पुत्रप्राप्त्यर्थं ॥ अनावृष्ट्यादिदुरितशान्त्यर्थं । दुर्भिक्षनिवारणार्थं भूमि-कम्पदोषनिवृत्त्यर्थं । परचक्रभयराज्यभ्रंशादिभयविनाशार्थं वा विषूचिकाकालस्फोटकालज्वराद्यमुक जनमारमहारोगो-पशांत्यर्थं । नानाकेतूदयोल्कापातादिदोषनिवृत्त्यर्थं । शत-चण्डीविधानं ब्राह्मणद्वारा कारयिष्ये । इति

## ॥ अथ संकल्पविचारः ॥

मनसा संकल्पयति वाचाभिलपति कर्म्मणा चोपपादयति इति हारितवचनादमुककामनया मयेदमनुष्ठातव्यमिति सङ्कल्पित-स्य कर्म्मणोवाचाभिलापे कर्त्तव्ये एकयुगनद्धवाहिन्यायेन फलस्या-प्यभिलापोदुर्निवारः । तथा च ( गौतमः ) अन्तर्जानुकरं कृत्वा सकुशं सतिलोदकम् । फलांशमभिसन्धाय प्रदद्याच्छ्रद्धयान्वितः ॥ ( तथाग्निपुराणस्य दानप्रकरणे ) धर्म्मार्थसम्पदैश्वर्य्यसौभाग्यारोग्य-वृद्धये । तथाचामुकगोत्राय तथाचामुकशर्मणे ॥ इति अथात्र फलांशमभिसन्धायेति पदस्य स्पष्टीकरणमेव संजातम् तदर्थमेव दानप्रकरणोक्तसंकल्पवाक्यस्योल्लेखः । प्रतिज्ञायां दाने चापि फलाभिलपनस्य साम्यात । संकल्पलक्षणं तूभयस्मिन्तुल्यमेव नहि कश्चित्फलस्य सिद्धिविरहाद्यज्ञादिकमाचरति यत्र यत्र काम्य-प्रयोगस्तत्रतत्रप्रतिज्ञासाङ्कल्पिकवाक्ये फलाभिलापस्यमुख्यत्व-मेवेति ॥ ( काम्येतु ) केचित् महाभारताद्युक्तफलकामइत्यभिल-पन्ति तत्रेष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात् । इष्टश्च तत्तदुक्त-फलविशेषः । तत्रापिकामनैव किञ्च फलांशमभिसन्धायेति प्रा-

गुक्तगौतमवचनात्। विधिवाक्यश्रुतफलोल्लेखस्यैव न्याय्यत्वमत-एवाश्वमेधफलंलभेदित्यादौ वचनोपात्तत्वेन तस्यैवेष्टत्वात् तदुल्लेखएवेति॥ मासपक्षतिथीनां च निमित्तानां च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्॥ इति ब्रह्माण्डपुराणवचनेन मासपक्षतिथीनां सर्वशः सर्वप्रकारेण कार्तिकादिरूपेण विशेषतः मासादिरूपेण सामान्यतश्च निमित्तानाञ्च सर्वशोदेशकालादिरूपेणोल्लेखनं। वचनप्रयोगमकुर्वतः फलभागित्वाभावप्रतिपादनात् अवश्यं मासादीनामुल्लेखे कर्तव्ये केचिन्माघशुक्लसप्तम्यामित्यादि मासपक्षयोस्तिथिविशेषणतयावाक्यमाचरन्ति "तदशुद्धम्" मासपक्षतिथीनां च द्वन्द्वसमासेन सर्वेषां प्राधान्यप्रतिपादनात् निमित्तानां च सर्वशः इत्यत्र चकारेण सर्वशः इत्यस्योभयत्रान्वयबलात्। मासपक्षतिथीनां सामान्यतोविशेषतश्चोभयथाप्रतिपादनस्यैव विहितत्वाच्च। माघे कुर्य्यात् शुक्लपक्षे कुर्य्यात् पञ्चम्यां कुर्य्यादित्यादि, तत्तद्विधिवाक्येषु माघादीनां सर्व्वेषां प्राधान्येन श्रवणात् मासपक्षयोस्तिथिविशेषणतयोपन्यासस्याशास्त्रत्वाच्च॥ ( पुराणान्तरे ) ओमद्यास्मिन्देशे अमुकराशिगते सवितरि अमुकपक्षे अमुकस्यान्तिथौ इत्यादिवाक्यरचनादर्शनाच्चापि। पौर्णमास्यमावस्ययोः शुक्लपक्षकृष्णपक्षाव्यभिचारादव्यावर्त्तकतया पक्षस्य विशेषणत्वानुपपत्या पक्षोल्लेखविधिवाधापत्तेश्च प्राधान्येन पक्षस्य प्रयोगे पक्षोल्लेखविधिरुपपद्यतएवेति। अस्मादेव वाक्यरचनादर्शनादमुकराशिस्थे भास्करे इत्यादौ प्रणवश्च प्रयोक्तव्य इत्यापातमेव शिष्टाचारोप्यतएव तथा दृश्यते॥ भारतवर्षाख्यभूप्रदेशइत्यस्य तु देशरूपनिमित्तत्वेनोल्लेखः कार्य्यएव तेन विनान्यस्मिन्देशे कार्य्यभूमित्वाभावेन क्रियादेः फलजनकत्वाभावात् यथा ( विष्णुपुराणे ) इतः सम्प्राप्यते स्वर्गोमुक्तिमस्मात्प्रयान्ति च तिर्य्यक्त्वं नारकत्वं च यान्त्यत्र पुरुषामुने॥ न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते। इति। एवं च गङ्गादितीर्थानाङ्ग्रहणसंक्रान्त्यादिकालानां च तत्रोक्तफलस्यान्यथासिद्धत्वेन निमित्तत्वा-

दुल्लेखोदुर्निवारएव । कुतुपापरान्हादीनान्तु प्राशस्त्यपरत्वात् रात्रिसन्ध्येतर सामान्यकालस्यैव फलजनकत्वादन्यथा सिद्धत्वेन न निमित्तत्वाभावादुल्लेखः । शुचित्वोपवीतित्वादीनान्तुअधिकार-सम्पादनद्वारा परम्परा निमित्तत्वान्नोल्लेखएवेति प्रतीमः । इति अतः परमन्यदप्यन्वेषणीयं सुधीभिः ॥

ननु सर्वत्रवाक्ये कथन्न मासादीनामुल्लेखइति सत्यमेतत् नतस्य फलभाग्भवेदित्यनेन यत्र यत्रैव प्रधानकर्मोल्लेखस्तत्र तत्रैव मासपक्षतिथीनाञ्चाप्युल्लेखः कार्यः अतएव निमन्त्रणानुज्ञा-प्रश्नदक्षिणाछिद्रावधारणेषु मासादीनामुल्लेखो निर्विवादएव अर्घ्यादिष्वङ्गेषु प्रधानकर्मोल्लेखाभावान्मासादीनामुल्लेखोना-स्तीति अतएव तर्पणवाक्येपि देवतानैवेद्यादिदानवत् मासादीना-मभिलापो न कार्य एव एवं च न तस्य फलभाग्भवेदित्यनेन यत्रैव फलसम्बन्धस्तत्रैव सङ्कल्पाभिलापविधानात् पुंसवनादौ सङ्कल्पाभिलापोनास्ति आमावस्याश्राद्धादौ तु विशेषविधानबला दनुज्ञारूपएवाभिलाप इति ॥

## ननु अद्यपदप्रयोगे किम्प्रमाणम् ॥

उच्यते— आगामिकार्तिकादिपदव्यावर्त्तनाय अद्यपदम्वाच्य-मेव नचागामिकार्तिकादीनामनुपस्थितत्वेन प्रकृतानामेवार्थलभ्य-त्वात् अव्यावर्तकत्वमितिवाच्यम् । शाब्दीह्याकांक्षा शब्देनैव प्रपू-र्यते । इति न्यायात् शब्देनान्वयेऽर्थापत्तिलभ्यस्यार्थस्यायुक्तत्वात् वस्तुतस्तु मुनिवचनादेवाद्यपदप्रयोगः । ( अग्निपुराणे ) यथा— अद्य सोमार्कग्रहणे संक्रान्त्यादौ सुतीर्थके । तथा च (स्कन्दपुराणे) प्रातः स्नानं करोम्यद्य माघे पापप्रणाशनम् । एवं च पूर्वलिखित पुराणवाक्यरचनायामपि अद्यपदप्रयोगोदृश्यते । अतएव मास पक्षतिथीनाञ्चेतिवचने चकारस्य कर्माधिकरणाहोरात्रवाचकाद्य पदसूचकत्वं बोध्यम् ॥ ( अत्रतीरभक्तीयाः— ) अस्मिन्नहनी त्यर्थे अद्यपदानुशासनादहः पदस्य दिवामात्रशक्तत्वेनाहोरात्र-

वाचकत्वाद्रात्रौ कर्मानुष्ठानेऽद्यपदानन्वयादस्यां रात्राविति अभि लापएव साधीयानिति वदन्ति । ( तदशुद्धम् ) यद्यप्यस्मिन्नहनी त्यर्थेऽद्यपदानुशासनं तथापिसर्वत्रैवाहोरात्रवाचकतया दृष्टत्वा- दहोरात्र एवाद्यपदस्य शक्तिः । यथा सद्यः पदस्य समानेऽहनी- त्यर्थेऽनुशासने सत्यपितत्कालवाचकत्वमेव । ( तथाचामरः ) सद्यः सपदितत्क्षणे इति । यदाहुः ( काव्यप्रकाशटीकायां ) चण्डीदासपण्डिताः ॥ अन्यद्धिशब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तं । व्युत्पत्तिलभ्यस्यैव मुख्यार्थत्वेगौःशेते इत्यत्रापि लक्षणा स्यात्गमेर्डोः इति गम्धातोर्डप्रत्ययेन व्युत्पादितस्य गोश- ब्दस्य शयनकालेऽपि प्रयोगादिति । तथाच ( अग्निपुराणे ) अद्य सोमार्कग्रहणे संक्रांत्यादौ सुतीर्थके । इतिवचने रात्रौ सोमग्रहणे अद्यपदप्रयोगः तथा अद्यस्थित्वाश्वोगमिष्यद्भिरल्पैर्व्रीडांस्माभि र्मीलिताक्षैर्जितेव इत्यादौच वर्तमानाहोरात्रएवाद्यप्रयोगोदृश्यते तथा ( कलापदुर्गावृत्तौ ) अमुत्रावात्समिति सकलां रात्रिं जाग- रितो रात्रेरप्रकाशकत्वात् अद्यतनकालं मन्यतइत्युक्तम् । (अथवा) अद्य पदस्य यदस्मिन्नहनीत्यर्थे यदनुशासनं तत्राहःपदं निरूढ- लक्षणया अहोरात्रपरम् । अद्यसोमार्कग्रहणे इत्याद्यनेकमुनिवच- नात् अहःपदस्य निरूढलक्षणया अहोरात्रपरत्वे अनेकशोदृष्ट- त्वाच्च । ( हारितः ) अहोरात्रेणचैकेन सावनोदिवसः स्मृतः । ( राजमार्तण्डे ) एकस्मिन्सावनेत्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥ ( विष्णुरहस्ये ) एकमाद्यन्तयोरह्नोः सायम्प्रातश्च मध्यमे । धर्म्म्योपवासे कुर्वीत न भोजनचतुष्टयम् ॥ अतएव निरूढलक्षणायाः शक्तितुल्यत्वात् "दुर्गावृत्तौ" अहरुभयतोऽर्द्धरात्रं लोकतः सिद्धमित्यनेनोभयतोर्द्ध- रात्रसहितदिवसे अहःपदव्यवहारोलोकसिद्धौ दर्शितः इति रात्राव- प्यद्यपदस्यैव प्रयोगोनास्यांरात्राविंतिप्रमाणाभावादित्यलं बहुनेति ॥ ( अत्राधुनिकाः ) यत्रैव मासपक्षतिथीनां निमित्तत्वं तत्रैव तेषा- मुल्लेखोनान्यत्र यथा अशौचव्यपगमविहितशय्यादानादौ तन्मात्र-

स्यैव निमित्तत्वात् मासपक्षतिथीनां पुनरविहितत्वेनज्ञायमानतया कार्य्यजनकत्वाऽभावेन निमित्तत्वाभावात् अनुल्लेखएवेति किन्त्वद्याशौचव्यपगमे इत्येवप्रयोक्तव्यमित्याहुः । तत्रनिमित्ताना मित्यनेनैवप्राप्तौ मासपक्षतिथीनाम्पृथगुपादानतया कार्यजनकत्वाऽभावेनवैफल्यादनिमित्तानामपितेषामुल्लेखः कार्यः । नचनिमित्त तयाप्राप्तानामेव कार्तिकादिविशेषाणां तेषां विशेषणतया सामान्य मासादिशब्दानामुल्लेखार्थं पुनर्विधानसाफल्यमिति वाच्यम् । मासादिशब्दानां विशेषमात्रतयैव पुनर्विधाने प्रमाणा भावात्उभयत्र प्राधान्यसूचकचकारद्वयोपादानवलेन सर्वश इत्यस्य उभयत्रान्वयात् सामान्यतो विशेषतश्चोभयथामासादीनामुल्लेखेविहितेसति विधानवैफल्यस्य तादवस्थ्याच । मासादीनांशब्दवाचकत्वे लक्षणाप्रसङ्गत्वाच्चेति । निमित्तीभूतकार्तिकादि विशेषमासादीनां माघादिशब्दानांच युगपदुल्लेखेप्रमाणाग्रहात् । कार्तिकादि विशेषमासादीनामनिमित्तत्वेनोल्लेखाभावे सामान्यतो मासादिशब्दानामुल्लेखस्यदुर्निवारत्वाच्च । निमित्तत्ववोधकानां विधीनामनुरोधे क्वचिदेकस्य क्वचिद्द्वयोः क्वचित्त्रयाणां क्वचिन्नैवोल्लेख इति विधानवैषम्यस्योपहसनीयत्वेन प्राचीनाचारविरुद्धत्वेनहेयत्वाच्च । प्रत्युतसूर्य्यार्घ्यादिदाने नित्यश्राद्धादावनुज्ञारूपसङ्कल्पवाक्ये माघेप्रातःस्नानादौ च मासपक्षतिथीनामुल्लेखः शिष्टाचार दर्शनाच्च पूर्वलिखितवाक्यरचनादर्शनाच्चेति । पौर्णमास्यमावास्ययोः शुक्लपक्षकृष्णपक्षाव्यभिचारात् सर्वत्रैव विधौ तत्र पक्षविशेषस्यविधानाभावेन निमित्तत्वाभावात् । पौर्णमास्यमावस्ययोः पक्षोल्लेखप्रसङ्गाभावाच्च । मासपक्षतिथीनाश्चेतिवचन बलादेव पक्षोल्लेखस्तत्रेति समाधानस्य भवद्भिरपि चिन्तितत्वाच्च । नचमासादीनामुपस्थितानां विधिवलादुल्लेखे सत्यपिनिमित्तत्वेनापि पुनरुल्लेखप्रसङ्गः कुत्रचित्स्यादितिवाच्यम् । एकेनैवोल्लेखेनोभयसमावेशात् । नहिघटायोन्मीलितंचक्षुः पटंप्रकाशयेदिति ॥ एवञ्च चान्द्रःसौरोवा मासविशेषो यत्र निमितं तत्रतस्यै-

वोल्लेखः यत्र मासविशेषस्य निमित्ततानास्ति तत्र "सौरेणैव भवेद्वाक्यमिति" स्मृतेः प्रागुक्तवचने मासविशेषस्यनिमित्तत्वाभावेसौरमासस्योल्लेखदर्शनाच्च सौरमासस्यैवोल्लेखः कार्यः। इति॥ ननुचिरदिनसाध्ये कर्म्मणि एकदिनसाध्येवा भिन्नतिथौ कीदृशो वावाक्यान्वयः ? ॥ उच्यते अद्यामुकतिथौकरिष्ये इत्यत्र वर्तमान तिथेस्तदहोरात्रस्यच साङ्गप्रधानकर्म्माधिकरणत्वावगतेस्तत्र च तस्यानुत्पन्नत्वात् विरुद्धोऽभिलापः। नच करिष्ये इत्यस्यादि क्रियानिष्पादनमर्थः इतिवाच्यम्। लक्षणाप्रसङ्गात् करिष्ये इत्यत्र कामनान्वयवशात् आदिक्रियानिष्पादनेनैव कामनाया निष्पन्नत्वादपरासांक्रियाणामनुष्ठानवैफल्यप्रसङ्गाच्च। साङ्गप्रधानकर्मणामेवफलश्रुतेरादिक्रियायां कामनान्वयाचेति। अत्रकेचित— अद्यामुकतिथावमुककाम इतिं कामनाधिकरणत्वेनान्वय इति समादधति तन्नमनोरमम् मासपक्षतिथीनान्तत्तद्विविधवाक्येषु कर्माधिकरणेनावगमात् चिरसाध्येकर्मणितादृशविध्यभावेपि तत्रैवान्वयस्ययोग्यत्वात् तिथ्यादिनाकामनान्वयस्य प्रतीत्यनुसन्धानविरहाच्च। कुत्रचिन्मासस्यविधानवलात्कर्म्माधिकारणतयाऽन्वयेसति तिथिविशेषस्यविधानाभावेऽपि मासपक्षतिथीनाञ्चेति वचनवलादवश्योल्लेखे तिथेः कामनान्वयस्यात्यन्तायुक्तत्वात् चेति॥ वर्द्धमानोपाध्यायस्तु–एकदिने तिथिद्वय साध्ये चिरदिनसाध्ये च कर्मणि अद्यामुकतिथावारभ्येत्यभिलापः इतिसमाधत्ते। तदानिर्विवादएवान्वय इति। अद्यामुकतिथावमुक कामनयामुककर्मकरिष्ये इत्यभिलापे कृ धातोः प्रयत्नमात्रार्थत्वेन अमुककामनया अमुककर्मणि यतिष्ये इत्यर्थेसति कामनायाः प्रयत्न सामान्यान्वितत्वात वर्तमानतिथौ येन केनापि प्रयत्नेनानुष्ठितेनैव तत्तदुक्तकामनायास्तत्तत्तिथौ प्रयत्नस्य निर्वाहात् तिथ्यन्तरेऽपि क्रियान्तरानुष्ठानमविरुद्धमिति प्राञ्चः। (केचित्) ब्राह्मणोद्देशपक्षे दातुमहमुत्सृजे इतिदानवाक्यमविचार्य्य वर्णयन्ति। तन्नापेक्षणीयम्। दा धातोः परस्वीकार फलकद्रव्यत्यागार्थत्वेन उत्सृज्य इत्यस्यान्वयात् दातुमित्यस्य स्वीकार-

मापादयितुमित्यर्थे लक्षणाप्रसङ्गात् । स्वाधीने च शब्दप्रयोगे लक्षणाया अयुक्तत्वाच्च ब्राह्मणायाहमुत्सृजे इत्यपि हेयम् दानगोचरतयैव फलश्रवणादुत्सर्गस्य त्यागमात्रार्थत्वेन फलानन्वयात् । विधिवाक्यश्रुत दा धातुप्रयोगस्यैव साधीयस्त्वाच्च । तस्माद्ब्राह्मणासम्पत्तावपि यथागोत्रनाम्ने ब्राह्मणायाहं सम्प्रददे इत्यैव साधीयः ॥ नच तदानीं स्वीकाराभावात् कथं दा धातुप्रयोगइति वाच्यम् । भवेदेवं यदि स्वीकारसाहित्येन त्यागो दा धात्वर्थः स्यात् । नच तथा साक्षाद्ब्राह्मणपक्षेऽपि त्यक्तस्यैव स्वीकारासंभवात् एवं सति त्यागव्यवधानेन वा किञ्चिद्विलम्बेन वा स्वीकारोन किंचित्क्षतिकरः इति सर्वविदुषां सम्मतम् । इति कौमुदिकारः ॥ करिष्यमाणकर्मसंकल्पारंभे देशकालयोर्निर्देशः प्रथममुपतिष्ठते अयं च निर्देशः आगमेषु सर्वत्र देशकालौ निर्दिश्यैति संक्षेपेणास्त्युल्लिखितः ॥ तत्र तत्रेति स्पष्टप्रतिपत्तये अयमुपक्रमः । निर्दिशेत्तावत्पूर्वपरामर्शोऽनन्तरं च कालोत्कीर्तनं च कर्तव्यमिति सध्रीचीनः पन्थाः ॥ तथाहि देशकाल विभागवित् देशः कालः पृथग्द्रव्यमित्यादि प्रामाण्यजातमप्यस्यैव परिपोषकमिति तदनुकूलोवाक्योपन्यासः ॥ हेमाद्रिमहासंकल्पे वाक्यवाहुल्येप्ययमेव क्रमोऽङ्गीकृत इति ॥ ( व्रतराजे ) सङ्कल्पवाक्ये विविधवाक्योपात्तधातोरेव तदुत्तमपुरुषस्य प्रयोगोयथास्यात्तादृशं कर्मणोविशेषनामसत्वे तत्सहिते च वाक्ये प्रयोज्यम् । यथाग्निहोत्रं होष्यामि सन्ध्यामुपासिष्ये । इति यथा वा देव पूजां करिष्ये, ब्रह्मयज्ञं करिष्ये नतु सन्ध्योपासनं करिष्ये ब्रह्मयज्ञेनयक्ष्ये इत्यादि । एवं सर्वत्र एतच त्रिस्थलीसेतौ प्रघट्टके स्पष्टम् । यत्र तु मंत्रं जपेत् मंत्रजपंकुर्यात् कुर्वेहं यमतर्पणम् । यमं सन्तर्पयेद्बुधः ॥ इत्युभयथापि विधिर्दृश्यते तत्र मंत्रं जपिष्यामि यमतर्पणं करिष्ये इति वा यथेष्टं वाच्यम् । यत्रत्वाम्नातं सङ्कल्पवाक्यमस्ति तत्रतदेव वाच्यम् ॥ यदा तु नियुक्तः करोति तदा करिष्ये करिष्यामीत्येवं द्विविधः प्रयोगः । इति । धातौ प्रयुज्यमाने करिष्यामीति परस्मैपदमेव

वदेत् क्रियाफलस्य कर्तृगामित्वात् । होष्ये आचरिष्ये, भोजयिष्ये, इत्याधुनिकाः प्रयोगास्त्वसाधवएव । आद्ययोः परस्मैपदित्वात् । अन्त्यस्य णिजन्तत्वेनोभयपदित्वेपि निगरण चलनेति सूत्रेण परस्मैपद नियमात् ॥ ( स्मार्तकर्मसु ) यजमानकर्तृकसाङ्गप्रधान प्रयोग सङ्कल्पोत्तरमाचार्य्यादिकर्तृकः स्वस्वकर्मसङ्कल्पप्रधान देवताग्रहस्थापनादिषुपुनः पुनः सङ्कल्पश्च शिष्टाचारएवार्थाच्छिष्टाचारप्रमाणकः ॥ प्रथमसङ्कल्पे कथितस्य देशकालादेः प्रयोगमध्येऽवान्तर सङ्कल्पे पुनरुच्चारप्राप्तौ प्रागुक्तविशेषणवति देशे काले चामुककर्मकरिष्ये इतिवाच्यमिति भट्टाः ॥ यदित्वव्यवहिते व्यवहिते वा दिनान्तरे करिष्यमाणस्य कर्मणः पूर्वेद्युः केनचित्कारणेन सङ्कल्पः प्रसक्तस्तदाद्यपदरहित पक्षान्तरकीर्तनान्तेऽद्यतनदिनाद्द्वितीयेऽहनीत्यादिस्वेष्टसंख्यं दिनमुक्त्वा तत्र तिथ्याद्यभिधानादि प्राग्वत्कुर्य्यात् ॥ इतिहिरण्यकेशिसूत्र—व्याख्यातः स्पष्टम् ॥

इति श्रीभाष्याचार्य्यसूनुप्रणीतशतचण्डीयज्ञविधानस्य
प्रथमखण्डे सङ्कल्पविचारः

गणेशपूजनन्तु सवकर्मादौ कर्तव्यं निर्विघ्नतार्थत्वात् । न ऋते त्वत्क्रियते इति ऋ १० । १० । ११३ । ९ मंत्रलिङ्गाच्च । तथा च ( लिङ्गपुराणे ) सर्वकर्मसमृद्ध्यर्थमादौ पूज्योगणेश्वरः । (पाद्मे च) नार्चितोहिगणाध्यक्षोयज्ञादौ यत्सुरोत्तमाः । तस्माद्विघ्नं समुत्पन्नमाकस्मिकमिदं खलु ॥ ( देवीपुराणे च ) सर्वं जगद्वशीकुर्य्यात् महागणपतिः सदा । स्वर्गापवर्गसंसिद्धिर्दुर्गायागात्प्रजायते ॥ ( परशुरामः ) गणेशं पूजयेत्पूर्वं निर्विघ्नार्थं स्वकर्म्मणः । पट्टे वा मृन्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः ॥ कार्य्यमष्टदलं पद्मं तस्योपरि गणेश्वरम् । गणानान्त्वेति संस्थाप्य पूजयेत्तदनन्तरम् ॥ (अथवा) प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु । अपिवाक्षत पुञ्जेषु नैवेद्यैश्च पृथक् २ ॥

आदौ गणपतिपूजनम् । ध्यानम्-उद्यद्दिनेश्वरुचिरं निजहस्तपद्मैः पाशाङ्कुशाभयवरान्दधतं गजास्यम् । रक्ताम्बरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥१॥ यत्पादपल्लवयुगं विनिधाय कुंभद्वन्द्वे प्रयाणसमये च गणाधिराज । विघ्नान्विहन्तुमलमस्य जगत्त्रयस्य गोविन्दमादिपुरुषं तमहं भजामि ॥ २ ॥ अविघ्नं कुरुते नित्यं विघ्नं परिहिनस्तियः । यात्रामंगलसिध्यर्थमेकदन्तं नमामि तम् ॥३॥ मङ्गलारुणविस्तीर्णा करपुष्करराजितम् शिवोद्भवं च भास्वन्तं कमलामोददं भजे ॥ ४ ॥ इति सम्प्रार्थ्याक्षतान् गृहीत्वा ओं गणनान्त्वेति मंत्रेण गणेशमावाहयेत् । ततः पुरुषएवेदꣳसर्वमित्यनेनासनदानम् ॥ ॐ एतावानस्येति पाद्यदानम् । ओं त्रिपादूर्ध्व इत्यर्घदानम् ओं ततोविराडजायतेत्याचमनम् । ओं तस्माद्यज्ञात्सर्वहुत इति स्नानम् । ओं युवासुवासा० इति वस्त्रयुग्मम् । ततः यज्ञोपवीतमिति यज्ञोपवीतार्पणम् । त्वां गन्धर्वा इति गन्धं० । अक्षन्नमीमदन्तेत्यक्षतान् अर्पयेत् । ओं श्रीश्चतेलक्ष्मीश्चेति पुष्पं० । ओं काण्डात्काण्डादिति दूर्वाम्० । ॐ धूरसिधूर्व धूर्वन्तामिति धूपम् । ॐ अग्निर्ज्योतिरिति दीपम् । ॐ नाभ्याऽआसीदिति नैवेद्यम् । ( पुनस्ततोविराड् इत्यनेन नैवेद्यान्ताचमनम् ) ॐ याफलिनीरिति मंत्रेण तथा एलालवङ्गसंयुक्तम् । इत्यनेन ताम्बूलार्पणम् । ओं हिरण्यगर्भ इति दक्षिणां० । ततः

अग्निर्देवतेति निराजनम् ( ततोगन्धपुष्पयुतं नारिकेला-दियुतं ताम्रपात्रं हस्ते निधार्यार्घं दद्यात् ( आचारतः ) ततो येतीर्थानीति प्रदक्षिणा । अन्ते प्रार्थना यथा– ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय सितसर्पविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय । विद्याधरायविकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ (इति प्रार्थनां-कृत्वा) ॐ यज्ञेनेतिमंत्रेण पुष्पाञ्जलिं क्षिपेत् ॥ ततो नमस्कारं कृत्वा अनेनपाद्यादिभिः कृतेनपूजनेन श्रीगण-पतिर्देवः प्रीयताम् कृतस्य श्रीगणेशपूजनाविधेः सर्वं परि पूर्णमस्त्विति देवाग्रे जलं क्षिपेत् ततः ॐ गणपतयेनमः इत्युक्त्वा कर्म समापयेदिति ॥ ( अथषड्विनायकपूजनम् ) तत्र प्रथमं गोधूमादिधान्यपुञ्जेषु हरिद्रारञ्जितेषु षड्-विनायकाः स्थाप्याः । ते च यथा मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा । अविघ्नोविघ्नकर्ता च षडेते विघ्न-नायकाः ॥ एतान् विनायकान् प्रतिपुञ्जेचैकैकंक्रमेणावाहयेत यथा— ॐ मोदायनमः मोदमावाहयामि । प्रमोदायनमः प्रमोदमावाहयामि । सुमुखायनमः सुमुखमावाहयामि । दुर्मुखायनमः दुर्मुखमावाहयामि । अविघ्नायनमः अवि-घ्नमावाहयामि विघ्नकर्त्रेनमः विघ्नकर्तारमावाहयामि । इत्यावाह्य ॐ मनोजूतिरितिप्रतिष्ठाप्य "ओं मोदादिषड्

विनायकेभ्योनमः" इतिनाममंत्रेण षोडशोपचारैः सम्पूजयेत् ॥ अनया पूजया मोदादिषड्विनायकाः प्रीयन्ताम् । इति च वदेत् ॥ ततः कलशस्थापनम्[१] । तत्प्रकारः ओं महीद्यौः पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ इति कलशाधारभूमिं स्पृष्ट्वा । ओं ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति व्वाह्मणस्तꣳ राजन्पारयामसि ॥ इति स्पृष्टप्रदेशे उपकल्पितप्रस्थधान्यस्य पुञ्जं कृत्वाष्टदलं विलिख्य ॥ ओं आ जिघ्र कलशम्मह्यात्वा व्विशन्त्विन्दवः ॥ पुनरूर्ज्जा निवर्तस्व सानः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा व्विशताद्रयिः ॥ इति धान्यपुञ्जस्योपरि अच्छिद्रं नूतनं हैमं राजतं ताम्रम् अभावे मृन्मयं वा सूत्रवेष्टितकण्ठं कृतस्वस्तिकं कलशं संस्थाप्य ॥ ओं व्वरुणस्योत्तम्भनमसि व्वरुणस्यस्कम्भसर्जनीस्थो व्वरुणस्यऽ ऋतसदन्यसि व्वरुणस्य ऽऋतसदनमसि व्वरुणस्य ऽऋतसदनमासीद ॥ इत्युपकल्पितकलशोदकेन तं पूरयित्वा ॥ ओं त्वाङ्गधर्वा अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ।

---

(षोडशोपचारैरिति) सहस्रं लोकेशः शतमकृत राजा पृथुरथो चतुःषष्टिः शक्रोमहतउपचारान् भगवतः । सुरर्षिर्द्वात्रिंशच्चतुरधिकविंशांश्च नहुषो युगेऽस्मिन्नाचार्य्याः खलु विदधिरे षोडशमितान् । भोग्योपचारा इह सन्ति केचिद्राजोपचारा इह केचन स्युः । अन्तर्भवन्ति ह्युपचार वर्गाः सर्वेऽपि ते षोडशसु क्रमेण ।

(१) कलशादिलक्षणं रुद्रकलशपूजने द्रष्टव्यं ।

त्वामोषधे सोमोराजा ऽविद्वान्यक्ष्मादमुच्यत इति गन्धं प्रक्षिप्य ॥ ॐ याऽओषधीःपूर्वा जाता देवेभ्यस्त्रियुगम्पुरा मनै नु वभ्रूणामहꣳ शतन्धामानि सप्त च। इति सर्व्वौषधीः प्रक्षिपेत्। (ततः) ओं काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च। इति दूर्वाः प्रक्षिप्य। ओं अश्वत्थे वोनिषदनम्पर्णे वो ऽवसतिष्कृता। गोभाज ऽइत्किलासथ यत्सनवथपूरुषम् ॥ इति "पञ्चपल्लवान्" प्रक्षिपेत्। (ततः) ओं स्योना पृथिविनो भवानृक्षरा निवेशनी यच्छा नः शर्म्म सप्रथाः ॥ इति "सप्तमृदः"। ओं परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे। इति "पञ्चरत्नानि"। (अभावेहेमवा) हेमादिप्रक्षेपे प्ययमेव मन्त्रः। (पुण्याहवाचनकलशे हिरण्यं प्रक्षेप्तव्यमेव सुवर्णपूर्णकलशम्। इत्यभिधानात्) ओं हिरण्यगर्भइति हिरण्यं प्रक्षिप्य। ओं सुजातोज्ज्योतिषा सह शर्म्मवरूथमा ऽसदत्स्वः। वासो ऽअग्ने विश्वरूपꣳ संव्ययस्व विभावसो। "इति वस्त्रयुग्मेन (रक्तसूत्रेण च) तं वेष्टयित्वा। ओं पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणावहा ऽइषमूर्ज्जꣳ शतक्रतो ॥ इति सतण्डुलपूर्णपात्रेण कलशाननम् [१]पिदध्यात्। तदुपरि। याः फलिनीर्य्या ऽअफला ऽपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्तानो मुञ्चन्त्वꣳ हसः ॥ इत्यनेन नारिकेलं

१ पुण्याहवाचन कलशस्य मुखाच्छादनं न कार्य्यम्।

( पूगीफलं ) वा स्वाभिमुखं संस्थापयेदिति सम्प्रदायः ॥ ( अत्र वरुणावाहनपूजने अपि केचिदाहुः ) ओं तत्त्वा यामि ब्रह्मणा ऽवन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो ऽवरुणेहवोध्युरुशꣳस मान ऽआयुः प्रमोषीः ॥ अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि "ओं अपां ऽपतये ऽवरुणाय नमः" इति वरुणं सम्पूज्य । कलशे देवता आवाहयेत् ॥ सर्व्वे समुद्राः सरितस्तीर्थानि जलदानदाः । आयान्तुममशान्त्यर्थं दुरितक्षयकारकाः । इति कलशे देवताआवाह्य कलशमभिमंत्रयेद्देवता आवाहयेच्च । कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूलेत्वस्य स्थितोब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो-ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशन्तु समाश्रिताः । [ अत्र गायत्री सावित्री शान्ति पुष्टिकरी तथा ] आ-यान्तु मम शान्त्यर्थं दुरितक्षयकारकाः । इति । ( ततः कुम्भप्रार्थना ) देवदानवसंवादे मथ्यमाने महोदधौ । उत्प-न्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे प्रतिष्ठिताः । त्वयि तिष्ठन्ति भूता-नि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्यावसवोरुद्राः विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदा ।

त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय सुपाशहस्ताय झषासनाय जलाधिनाथाय नमोनमस्ते । पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक पुण्याहवाचनं यावत्तावत्त्वं सन्निधौभव । इति कलशस्थापनप्रकारः ।

अथ

# दानखण्डोक्तपुण्याहवाचनप्रयोगः

## ॥ आश्वलायनीयः ॥

अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय ( आचार्य्यः ) स्वदक्षिणेन पाणिना सुवर्णपूर्णकलशं स्वर्चितं ( यजमानाञ्जलौ ) धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । ( आशिषः

---

आश्वलायनीय इति । परशाखीयमप्येतत्पुण्याहवाचनं गृह्यते । शिष्टाचारविषयत्वात् । स्पष्टीकृतंचैतत् ( प्रयोगप्रदीपे ) स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित् । अदृष्टमपि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् । निमित्तानि च ( संग्रहे ) पुण्येऽहनितु सम्प्राप्ते विवाहे चौलके तथा । व्रतबन्धे च यज्ञादौ तथा यजनकर्मणि । गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा गृहप्रवेशनेचैव ग्रामस्याभिनिवेशने । नवग्रहमखे शान्तावद्भुतेषु तथैवच । गजबन्धे तुरङ्गाणां दासादीनां च संग्रहे । धर्मकर्मसु सर्वेषु

प्रार्थयतः ) तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु। त्रीणिपदाविचक्रमे विष्णुर्गोपाऽअदाभ्यः । अतोधर्म्माणि धारयन् । तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति मन्त्रेण कलशं स्वशिरसा ( पत्नीशिरसा च ) संयोज्य

---

प्रारम्भे स्वस्तिवाचनम् । कर्म्मसमाप्तावपि कार्य्यमिति ( शौनकः ) स्वस्तिवाचनमेवं तु सर्वे षाम्वृद्धिकर्म्मणाम् । आदावन्ते च कर्तव्य-मिति वेदविदां मतम् । (तथा च व्यासः ) सम्पूज्य गन्धमाल्याद्यै र्ब्राह्मणान्स्वस्ति वाचयेत् । धर्मकर्मणि माङ्गल्ये संग्रामेऽद्भुत-दर्शने । गन्धमाल्याद्यैरिति वचनं गन्धपूर्वभाविनां पादप्रक्षालना दीनामुपचाराणामनावश्यकत्वबोधनार्थम् । आद्यशब्देन ताम्बूला-दिग्रहणम् । ( इति गोपीनाथः ) ( गृह्य परिशिष्टे । ) अथ स्वस्ति-वाचनमृद्धिपूर्ते षु । तथाच (आश्वश्लायनः) वैदिके तान्त्रिके चादौ स्वस्तिवाचनमिष्यते । इति । प्रयोगपारिजाते ( त्रिकाण्डः ) गर्भा-धानादि संस्कारेष्विष्टापूर्ते क्रतुष्वपि । वृद्धिश्राद्धं पुराकार्य्यं कर्म्मादौ स्वस्तिवाचनम् । ( केचित् ) वृद्धिश्राद्धं पुराकार्यमित्ये-तस्य वचनस्य यथाश्रुतमर्थमनुसरन्तः पूर्वं वृद्धिश्राद्धं ततः स्वस्ति-वाचनमित्येतादृशक्रमेणैवानुष्ठानमाचरन्ति । (प्रयोगमालायामपि) अथापरेद्युर्दे वानाम् । इत्यस्य व्याख्यानावसरे । पूर्वे द्युर्नान्दी-श्राद्धं कृत्वापरेद्युः पुण्याहं कुर्यात् इति । ( अन्येतु ) गर्भाधाना-दीत्यस्मिन्वाक्ये पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतावतैव सिद्धे पुनः कर्म्मादावित्युक्तिर्वृ द्धिश्राद्धसहितकर्म्मणआदौ स्वस्ति-वाचनप्राप्त्यर्था । तेन पूर्वं स्वस्तिवाचनमनन्तरम् वृद्धिश्राद्धमित्ये-वानुष्ठानक्रमइत्याहुः । ( गोपीनाथभट्टस्तु ) आदौ प्रधानसङ्कल्प-स्ततः पुण्याहवाचनम् । मातृपूजा ततः कार्य्या वृद्धिश्राद्धं ततः परमिति । ( ननु ) नैकान्हापित्र्यं दैवं च कुर्वन्ति प्रजा अस्य प्रमायुका भवन्तीति श्रुतेर्विरोधः । (शृणु) पूर्वेद्युः सङ्कल्पानन्तरम्-

कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव त्रिवारं कुर्यात् । ततः कर्तादिङ्मुखानां युग्मब्राह्मणानां हस्तेषु "अपां मध्ये स्थितादेवाः सर्वमप्सु प्रतिष्ठितम्" ब्राह्मणानां करे न्यस्ताः शिवाऽआपोभवन्तु ( मे ) ते

---

पुण्याहवाचनं विधाय परेद्युः वृद्धिश्राद्धं कर्म्माहे कर्म्मारम्भः । इति कृते न श्रुति विरोधः । ( प्रयोगमालायाम् पुण्याहकालः ) त्रिंशत्घटिकात्मकं दिवाप्रमाणं नवधा विभज्य विंशतिकलाधिक-घटिकात्रयात्मकनवभागेषु प्रथमतृतीयपञ्चमसप्तमनवभागाः पुण्याहाः । द्वितीयषष्ठभागौ श्लीलौ निन्द्यौ । चतुर्थाष्टमभागौ श्लीलौ निन्द्यौ । इति । पुण्याहवाचनं प्रयोगान्तर्गतमिति केचित् प्रयोगवहिर्भूतमितिवहवः । ( प्रयोगान्तर्गतमितिमते ) कृतनित्यक्रियः कृतमङ्गलस्नानः सपवित्रपाणिराचम्य प्राणानाय-म्येष्टदेवतानमस्कारपूर्वकं सुमुखश्चेत्यादीन्मङ्गलश्लोकान्पठित्वा देशकालौ संकीर्त्यामुककर्मकरिष्ये । तदङ्गत्वेन पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये । इति सङ्कल्पं कुर्य्यात् । ( यदातु ) प्रयोगाद्वहिर्भूतं पुण्याहवाचनादि तदामुककर्मकर्तुमा-दौपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये । इति सङ्कल्पपूर्वकं पुण्याहवाचनादि कृत्वा प्रधानसङ्कल्पः । एषएवकल्पो युक्तियुक्तः प्रतिभाति । पुण्याहवाचनादीनां स्वस्वारम्भकाले वा सङ्कल्पः । यथा पुण्याहवाचनारम्भे पुण्याह०···करिष्ये । मातृ०··· मातृ···करिष्ये । नान्दीश्राद्धा०···नान्दीश्राद्धं करिष्ये । इति । मातृका पूजन०···नान्दी०··· अङ्गत्वं ये स्वीकुर्वन्ति तन्मते तस्य पृथक्संकल्पोन । नान्दीश्राद्धसङ्कल्पेनैव तत्सिद्धेः । ( करिष्ये इति ) यानिभविष्यदनद्यतनकर्तव्यानि करोति जुहोति यजतीत्येवमादिविहितानि कर्माणि तेषु करिष्ये होष्या-

इति उक्त्वा । ओं शिवाआपः सन्तु इति जलं दद्यात् ।
सन्तु शिवाआपः इति ब्राह्मणाः प्रतिवचनं ब्रूयुः ॥
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसतिपुष्करे । सामे वसतु वै
नित्यं सौमनस्यं तथास्तु नः ॥ सौमनस्यमस्तु इति पुष्पं

---

स्मि यक्ष्ये इत्यादिशब्दस्थाने कर्ताहे होताहे यष्टाहे इत्येवं वा यथायथम् । भविष्यत्यनद्यतने लुट् विधानात् । कर्तृगामिक्रियाफलाभावे तु कर्तास्मि करिष्यामीति प्रयोगः सङ्गच्छते। (अवनीकृतजानुमण्डलइति) स्वस्तिवाचनकारिकासु (शौनकः) कर्ताथ दक्षिणं जानु पातयित्वा महीतले । इति । श्राद्धपरिभाषोपक्रमे (धर्माब्धिः) निपात्य दक्षिणं जानु देवान्परिचरेत्सदा पितॄणां परिचर्या तु वामजानु निपातनम् । इति । अत्रदैवपित्र्यकर्मविभागेविशेषः प्रदर्शितः एतच्चजानुनिपातनं । आच्याजानु दक्षिणतोनिषद्य० ( ऋ० सं० ७ । ६ । १८ । ) इतिश्रुतौ तथा । विपर्य्यासेन्तरिक्षे मन्त्रेजान्वाच्याहुतिं जुहुयात् । (४ । २६ । २५) इत्याश्वलायनसूत्रे तथा स्मृतिषु वाक्येषु च । क्वचिज्जान्वाच्येति क्वचिच्चजानुनिपात्येत्युभयथा तादृशतादृश कर्मोपक्रमेषु बहुत्र दरीदृश्यते । आच्याजान्वितिमन्त्रे जानुआच्य निपात्य इत्येवार्थं सायनाचर्य्योऽभिभाषिषत् । आच्येत्यवाङुपसर्गाद्गत्यर्थकादञ्चेः क्त्वा । निपात्येत्यत्र निपूर्वकणिजन्तपतधातोःक्त्वा । नितरांपातोनिपातः । ऊर्ध्वीकृतयोर्जान्वोरधः पातनंतस्यार्थः । (अत्र संशेरते बहवः ) किं निपातनशब्देन जानुन्युब्जीकरणं विवक्षितं आहोस्वित् केवलमधः पातनं वेति तत्रोर्ध्वजान्वोरधः पातनमेव निपातनं प्रतीमः । नतु न्युब्जीकरणम् ( कुतः ) स्वस्तिवाचनोपक्रमे । कर्ताथदक्षिणं जानुपातयित्वा महीतले । इति । (शौनकवाक्ये ) जानोर्महीतले सामान्यतः पातनमात्रविधानात्

दद्यात् । अस्तु सौमनस्यम् इति । ब्रा० । अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम । अक्षतं चारिष्टं चास्तु । इत्यक्षतान्दद्यात् । अस्त्वक्षतमरिष्टं च । इति ब्रा० । गन्धाः पान्तु सौमङ्गल्यं

---

न्युब्जीकरणपक्षाङ्गीकारे समग्रजानुनोभूतलपातनासंभवात् । यथोक्तापातने शास्त्रातिक्रमजन्यकर्म्मवैगुण्यापत्तेः भूतलएव जानु निपातस्य साधीयस्त्वात् सुशकत्वाच्च । अत इममर्थं प्रचिख्यापयिषु ( वृत्तिकृत् । ) सर्वत्रजानुनिपातनमुपस्थस्योत्तानत्वाविरोधेन कर्तव्यम् न न्यग्भावेन इत्यवोचत । (अस्यार्थः) जानुनिपातनं सर्वत्र उपस्थस्य ( उपस्थशब्दोऽत्र जानुमूलवचनः ऋ० सं० ८।१-१ ।) प्रहोताजातो । दयामुपस्थे इति । भाष्ये अपां अन्तरिक्षनामैतत् । अन्तरिक्षस्योपस्थे उत्संगे इति । उत्संगापरनाम्नो-जङ्घामूलदेशस्य उत्तानत्वाविरोधेन उत्तानत्वस्य अविरोधेन उत्तानत्वभङ्गो यथा न भवेत्तथा कर्तव्यं न न्यग्भावेन न्युब्जीकरणेन कर्तव्यमिति । ( कलशमिति ) स्थापनविचारः ( संग्रहे ) शुभेकर्मणि पुण्याहवाचने कलशद्वयम् । स्थापयेदशुभे त्वेकमिति यज्ञविदो विदुः । पूर्वकर्तव्यतामाह ( हारितः ) गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयार्चयेत् । प्रस्थधान्ये प्रतिष्ठाप्यं पूर्णं हि कलशद्वयम् । दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् । ( उभयत्रापि धारयेदित्यपिपाठः) ताम्बूलमक्षताद्रव्यं दूर्वाः पुष्पाणि चन्दनम् । कुङ्कुमाक्तानि पात्राणि अक्षताः कुङ्कुमान्विताः । पुण्यतीर्थोदकं सम्यङ्निधाय कलशं शुभम् । सुवर्णफलपुष्पादिद्रव्यं तत्र निधापयेत् । पात्रमक्षतपूर्णं च कलशोपरि निधापयेत् । एवं कलशद्वयं पूजोपयोग्यक्षताश्च । दक्षिणकलशचालननिषेधः ( स्मृत्यन्तरे ) पुण्याहवाचने चैव यः कुर्यात्कलशार्चनम् । दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरो-

चास्तु । इति भवन्तोब्रुवन्तु इति गन्धं द० । गन्धाः पान्तु सौमङ्गल्यं चास्तु इति ब्रा० । अक्षताः पान्तु आयुष्यमस्तु इति भवन्तोब्रुवन्तु इत्यक्षतान्दद्यात् । अक्षताः पान्तु । आयुष्यमस्तु इति ब्रा० । पुष्पाणि पान्तु सौश्रियमस्तु इति

---

भवेत् इति । कलशद्वयबोधकानि सन्ति यद्यपि इमानि वचनानि ( तथापि ) आचार्य्यउदक्कुम्भं तं धारयेत्तदनन्तरं इति परशुरामोक्तेः । बिभ्रत्कुम्भमपां पूर्णंपिहितानमर्चितमिति शौनकीय वचनात् । उदङ्मुखोवापिहितमुदङ्मुखं धारयन् इति बौधायन गृह्यसूत्रोक्तेः कलशमुद्धृत्य नमेत् । इति परिशिष्टोक्तत्वात् एक कुम्भेपि न हानिः । ( अथवा ) स्थापयेदिति वचनात् स्थापन विषयएवाशुभसम्बन्धिता । तेन शुभकर्मसम्बन्धिपुण्याहवाचने कलशैकत्वेपि न क्षतिः । तत्रस्थापनाभावात् । यश्च दक्षिणकलश चालन निषेधः स्मृत्यन्तरे स च धारापातात्प्राक् इतिज्ञेयम् । पुण्याहमण्डलमप्युक्तं ( कारिकायां ) तिस्रस्तिस्रस्तु रेखाविलिखितु समगाः पूर्वभागादिमध्ये मध्ये युग्युग्मरेखा वृषशशिवदना वन्हिमाहेश्वराग्राः । द्वेद्वेरेखे समग्रे हुतवहशिवयोर्द्वन्द्वरेखाः समग्रामाहेशाग्न्योस्त्रिवृत्तं वहिरथविहितं पुण्यकालेष्टदिक्ष । (अन्यत्रापि) अष्टाविंशतिरेखाभिः संयुतं पुण्यमण्डलं । दस्रादितारकारूपं कारयेद्धस्तमात्रकम् । रेखाणां वृत्रहादीनामश्वाद्याऋक्षदेवताः । एकैकामञ्जलिन्यसेत्तत्तद्रेखान्तरालके । इति । (मण्डलस्पर्शनमंत्रः) यदेतन्मण्डलमिति । मुकुलसदृशमिति (शौनकः) मेदनीगतजानुस्तु सरोजमुकुलोपमम् । अञ्जलिं शीर्षिण त्वाधाय प्रणमेत्त्रिः पुनः पुनः । हस्ते कलशमुद्धृत्यनमेत्त्रीणि पदानिच । ( आचार्य्यइति ) धारयित्वेति णिजन्तनिर्देशात् । (सुवर्णपूर्णमिति) एतच सर्वेषां पञ्चपल्लवसर्वौषध्यादीनामुपलक्षकम् । ( त्रिवारमिति ) अत्रमन्त्रो-

म० इति पुष्पाणि दद्यात्। पुष्पाणि पान्तु सौश्रियमस्तु इति ब्राह्मणाः। ( सफल ) ताम्बूलानि पान्तु ऐश्वर्य्यमस्तु इति भ०। इति फलं ताम्बूलं च दद्यात्। सफलताम्बूलानि पान्तु ऐश्वर्य्यमस्तु इति ब्राह्मणाः। दक्षिणाः पान्तु

---

पि त्रिरावर्तनीयः। भेदे मन्त्रावृत्तिः सान्निपातित्वादिति कात्यायनोक्तेः। ( इदमत्रगृह्यम् ) अथ स्वस्तयनं वाचयीत। ( अत्र-नारायणः ) वो० ओं स्व० ब्रुवन्तु इति। भुक्तास्ते विप्राः। ओं स्वस्ति इति प्रत्यूचुः। ( हरदत्तस्तु ) अथ तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत्। तथा च ( कारिकायां ) ततः पश्चाद्द्विजा अन्नैस्तर्पिता दर्भहस्तका इति। ( वो० गृ० सूत्रे। ) ब्राह्मणा अभुक्ताश्चेत् ॐ इति ओदनं ददाति। अथ ब्राह्मणान्नेन परिविष्य पुण्याहँ स्वस्तिऋद्धिमिति वाचयित्वा इतिवचनात्। अन्नेनामेन हिरण्येन वा ब्राह्मणान्सम्पूज्य तैरेव पुण्याहं वाचयेदिति विष्णुभट्टः ( उदङ्मुखानां ब्राह्मणानामिति ) तथैवाश्वलायनोक्तत्वात्। ( तथाचाश्वलायनः ) स्वयं प्राङ्मुखस्तानुदङ्मुखान्स्वस्तिवाचयेत् इति। [ कारिकायान्तु ] चत्वारः प्राङ्मुखाः स्थाप्यास्तेषां दक्षिणतोपरः। धारयन्नुदकुम्भं तु सापिधानमुदङ्मुखः। दक्षिणं वाहुमेतस्य स्वयं तिष्ठेत्स्पृशन्निव। पुण्याहं वाचयेदन्यान्नुदकुम्भं च धारकः इति। उक्तमुक्तं प्रतिब्रूयुः। शान्तिरस्त्वादिसप्तकमिति [ बोधायनगृह्यसूत्रेपि ] दर्भान्दूर्वां वा धारयमाणाः चत्वारो ब्राह्मणाः प्रशस्ताः [ प्रतिवचनसमर्थाः तद्दिवसे श्राद्धभोजनप्रतिग्रहादिरहिताः ) अरिक्तहस्ताः प्राङ्मुखायुग्मास्तिष्ठन्ति। तेषां दक्षिणतउदङ्मुखः...... दक्षिणं वाहुमाश्रित्य इत्यादि। ( विष्णुभट्टोऽपि ) कुशां...... धारयमाणाः अरिक्त... प्राङ्मुखाश्चत्वारस्तिष्ठन्ति तेषां दक्षिणत उदङ्मुखः इत्यादि

बहुदेयं चास्तु इति भव० इति दक्षिणां दद्यात् । दक्षिणाः पान्तु बहुदेयं चास्तु इति ब्राह्मणाः । स्वर्चितमस्तु इति जलं दद्यात् । अस्त्वर्चितामिति ब्रा० । दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशोविद्याविनयोवित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु । इति वाक्येन विप्रान्प्रार्थयेदिति "सम्प्रदायः" ततः

---

( प्रयोगपारिजाते आचार्यः ) वैदिके तान्त्रिके चादौ ततः पुण्याह इष्यते । पुण्याहवाचने विप्रायुग्मावेदविदः शुभाः । यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः । गन्धपुष्पार्चितास्तेतु सोत्तरीयाः कुशोपरि ( कुशायुधाइत्यपिपाठः ) आसीनाः पश्चिमे भागे पूर्णकुम्भस्य सत्तमाः । गुरोर्दक्षिणभागे तु कर्तासीत तदाज्ञया सूत्रेण वेष्टितंकुम्भं गुरुस्तिष्ठेदुदङ्मुख इत्यादि । (जलंदद्यात् इति) अत्र शौनकः तत्रादावापइत्येवं वदेद्वाचयिता ततः । वक्तारोपि शिवा आपः सन्त्वित्येवं ब्रुवन्त्वथ । अन्यत्रापि इति वाक्यानि पठेत् । (प्रयोगपारिजातेऽपि) शिवाः सन्त्वित्यादीनां वाक्यानां वाचनमेवोक्तं परं सपवित्रेषु पाणिषु जलं ददाति ओमाप इति । शिवा आपः सन्त्विति प्रत्यूचुः । इति बौधनीयवाक्यात् जलदानमपि प्राप्तं तस्माद्यथारुचि उभयमेव वा कर्तव्यम् । ( संस्कार रत्नमालायाम् ) दक्षिणाः पान्त्वित्येतैर्वाक्यैरुदकगन्धाक्षतपुष्पताम्बूलदक्षिणाभिः क्रमेण विप्रान्पूजयेत् । ततोविप्रा अवशिष्टानि वाक्यानि तत्तदनन्तरं क्रमेण प्रतिब्रूयुः । अक्षतमिति । बो० गृ० सू० अक्षतमिति । अक्षतान्ददाति । [ अक्षतशब्देन व्रीहिमिश्रास्तण्डुला उच्यन्ते । अक्षतं...चास्तु । ब्राह्मभावे केवलावाक्षताः । ( इति गोपीनाथः ) अक्षता...इति । बहुवचनान्तस्य अक्षतशब्दस्य पुंस्त्वात् । अरिष्टं चेति । अरिष्टं सूतिकागृहम् ) अत्र ददाति प्रतिगृह्णातीति प्रयोगाद् हस्तपूजनमेतदिति

कर्ता यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्म्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुः सामाथर्वाशीर्वचनं वह्वृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । इति वदेत् । वाच्यताम् इति विप्राः । ततः कर्ता । ओं द्रविणोदाः पिपीषति जुहोत प्रचतिष्ठत नेष्ट्राहतुभिरिष्यत ।१। सविता त्वा सवानाᳬसुवतामग्निर्गृहपतीनाᳬ सोमो वनस्पतीनाम् । बृहस्पतिर्वाचऽइन्द्रोज्ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्मपतीनाम् ।२। नतद्रक्षाᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳬ

गम्यते । वस्तुतस्तु ब्राह्मणपूजनमेतत् । जलादिदानं तु हस्ते एवोक्तसूत्रात् । यद्यपि बौधायनसूत्रेऽर्वाक् ब्राह्मणपूजनमिति प्रतीयते तथापि कुम्भस्य प्रणामान्तपूजां विधाय ब्राह्मणपूजनम् कर्तव्यम् । अथ शब्देन वद्धक्रमतया पदार्थोक्तिसमये स्वर्चितमपि कुम्भविशेषणस्यान्यथानुपपत्तेः । गन्धाः पान्तु सुमङ्गल्यं चास्तु इति वाक्यं यजमान एव पठेत् इति हेमाद्रिकारः । गन्धाः पान्तु इति यजमानस्य सुमङ्गल्यं चास्तु इति ब्राह्मणानाम् । (संस्कारभास्करकारः) इति सर्वैर्वक्तव्यम् इति कश्चित् । अत्र मूलं मृग्यम् । ओंकारमिति । तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् । त्रिमात्रस्तु प्रयोक्तव्यः कर्म्मारम्भेषु सर्वशः । तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्वार्थचिन्तकैः । पुण्याहवाचनं सर्वं ब्राह्मणस्य विधीयते । तदेव च निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोः (इति यमः) सोङ्कारं ब्राह्मणे कुर्य्यान्निरोङ्कारं महीपतौ । उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तयेदिति । (रुद्रकल्पद्रुमे) ऋग्यजुरिति । रुद्रकल्पद्रुमादौ ऋग्यजुः सामाशीर्वचनमित्येवोक्तं तेनाथर्वणमन्त्रपाठे मूलं मृग्यम् ।

ह्येतत् । योविभर्ति दाक्षायणꣳ हिरण्यꣳ सदेवेषु कृणुते दीर्घमायुः समनुष्येषु कृणुते दीर्घमायुः । ३ । उच्चाते जातमन्धसोदिवि सद्भूम्याददे । उग्रꣳ शर्म्म महिश्रवः । ४ । उपास्मै गायतानरः पवमानायेन्दवे अभि देवाँ इयक्षते ।५। इति मन्त्रानुक्त्वा व्रतजपानियमतपः स्वाध्यायक्रतुदयादम-

(ऋग्वेदिनः) ओं द्रविणोदाःद्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत् । द्रविणोदा वीरवती मिषंनो द्रविणोदारासते दीर्घमायुः । १ । सविता पश्चात्सविता पुरस्तात्सवितोत्तरात्तात् सविताधरात्तात् । सविता नः सुवतु सर्वतातिं सवितानोरासतां दीर्घमायुः । २ । नवो नवो भवति जायमानोऽन्हां केतुरुषसामेत्यग्रम् । भागं देवेभ्योविदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः । ३ । उच्चादिवि दक्षिणावन्तोऽअस्थुर्येऽ अश्वदाः सहतेसूर्य्येण हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोमप्रतिरन्तआयुः । ४ ॥ ( सामवेदिनः ) ओं देवो ३ वो ३ द्रविणोदाः पूर्णां विवष्ट्वा सिचम् । ऊद्ध्र्वा १ सिञ्चा २ ध्वमुपवापृणध्वम् । आदिद्वोदे २ व ऊहते । इडा २, ३ भा ३, ४, ३ । ऊँ २, ३, ४, ५, इ । डा ॥ १ ॥ अद्यनो देवसवितः । ओहोवा । इहश्रुधायि । प्रजावा २, ३ त्सा । वीः सौभगाम् । परादू २, ३ ष्वा ३ । होवा ३ हा । प्रियꣳ, सु २, ३, ४, ५, वा ६, ५, ६, दक्षा ३ या २, ३, ४, ५, ॥ २ ॥ चन्द्रमा आउवा । सुवान्तारा उवा । सुपर्णोधाउवा । वतेदिवि । नवोहिराउवा । एयनायिमाया उवा । पदं विन्दा उवा । तिविद्युता । वित्तं मा आउवा । स्यरोदा २, ३, सा ३, ४, ३, यि । ऊँ २, ३, ४, ५ इ । डा । ॥ ३ ॥ उच्चाता ३ यि जातमन्धसाः । दिवाइसा १द्भू २ । मिया २, ३, ददाइ । उग्रंशर्म्मा । महा २, ३, यिश्रवाउ । वा । ३ स्तौषे २, ३, ४, ९, ५, ॥ ४ ॥ उपा २ स्मै । गा ३ यो ३ तानाराः ।

शमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् इति विप्रान्प्रार्थयेत् समाहितमनसः* स्म 'इतिविप्राः' कर्ता प्रसीदन्तु भवन्तः इति वदेत् । प्रसन्नाः स्म "इतिविप्राः" ततोयजमानोवक्ष्यमाणैकसप्ततिवाक्यानि पठन् प्रतिवाक्यं पात्रे जलं पातयेत् तत्रारिष्टनिरसनमस्तु यत्पापं । इति

---

पा ३ वामा ३ ना । या २, ३, आ । हुम्मायि । दा ३ वायि । अभिदेवाँ इया २ त्ताउ । वा ३, ४, ५, ॥ ५ ॥ (अथर्ववेदिनः) ओं धातारातिः सवितेदञ्जुषन्तां प्रजापतिर्निधिपतिर्नोऽअग्निः । त्वष्टाविष्णुः प्रजाया संरराणोयजमानाय द्रविणन्दधातु ॥ १ ॥ अभयं द्यावा पृथिवी इहास्तुनोऽभयं सोमः सवितानः कृणोतु । अभयं नोस्तूर्वान्तरिक्षं सप्तऋषीणां च हविषाऽभयं नोऽअस्त ॥२॥ नवोनवोभवसि जायमानोऽन्हांकेतुरुषसा मेष्यग्रम् । भागं देवेभ्यो-विदधास्यायन्प्रचन्द्रमस्तिरसे दीर्घमायुः । ३ । उच्चैर्घोषोदुन्दुभिः सत्वनायन् वानस्पत्यः सम्भृत उस्त्रियाभिः । वाचंक्षुणवानोदमय-न्सपत्नान् सिंह इव जेष्यन्नभितं स्तनीहि । ४ ।

* मन इति । प्रयोगपारिजाते ( कारिका ) मन इत्यादिकं मन्त्रमेकाग्रमति-रादिशेत् । मनसः स्मइतिब्रूयुस्तेसमाहितपूर्वकम् । प्रसीद० इति । प्रसीदन्तु भवन्तइत्यथोवाचयिता वदेत् । प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथान्विताः । ( पातनीयमिति ) प्रतिवाक्यं पात्रे जलं पातयेत् इति ( गोपीनाथः ) वाराणसेयाः याज्ञिकाः कलशोपर्यक्षतानपि क्षिपन्ति । वस्तुतस्तु एषां वाचनमेव । दानखण्डे वाचनस्यैवोक्तत्वात् । तेन जलपातनमक्षतप्रक्षेपोवाऽनाकरमेवेति विद्याधरः । अत्र विप्राः अस्तु सम्पद्यन्तां प्रीयन्तां प्रीयेतां इत्यादीनि वचनानि कर्तृवाक्यानु-रोधेन दद्युः इति ( सं० र० मालायाम् ) हेमाद्रौ आश्वलायनगृह्यपरिशिष्टे । १२।१३।१५।४६।४८।६१।६८।६९।७०।७१ एतत्सङ्ख्याकानि वाक्यानि न सन्ति । ( इत्यवध्येयम् ) अत्र रोगमित्यपपाठः । रोगशब्दस्य पुंलिङ्गत्वात् । ईतय इति । अतिवृष्टिरनावृष्टिमूषकाः शलभा शुकाः । प्रत्यासन्नाश्चराजानः षडेते ईतयः स्मृताः । अलक्ष्मीः ह्रतानिरिदति हेमाद्रौ ।

द्वाभ्यां हताश्चब्रह्मद्विषः इत्यादीभिः सप्तवाक्यैश्च पात्राद्बहिरुत्तरतोजलं पातनीयमिति ( सम्प्रदायः ) शान्तिरस्तु १पुष्टिरस्तु २तुष्टिरस्तु ३वृद्धिरस्तु ४अविघ्नमस्तु५ आयुष्यमस्तु ६आरोग्यमस्तु ७ ( शिवमस्तु ) ८शिवंकर्म्मास्तु ९कर्म्मसमृद्धिरस्तु १० धर्म्मसमृद्धिरस्तु ११ वेदसमृद्धिरस्तु १२ शास्त्रसमृद्धिरस्तु १३ धनधान्यसमृद्धिरस्तु १४ पुत्रपौत्रसमृद्धिरस्तु ) १५ इष्टसम्पदस्तु १६ ( बहिः ) अरिष्टनिरसनमस्तु १७ यत्पापं ( रोगोऽशुभमकल्याणं ) तद्दूरेप्रतिहतमस्तु १८ अन्तः यत् श्रेयस्तदस्तु १९ उत्तरे कर्म्माणि निर्विघ्नमस्तु २० उत्तरोत्तरमहरहराभिवृद्धिरस्तु २१ उत्तरोत्तराः क्रियाः शुभाः ( शोभनाः ) सम्पद्यन्ताम् २२ तिथिकरणमुहूर्तनक्षत्र ( ग्रहलग्न ) सम्पदस्तु २३ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् २४ तिथिकरणे ( स ) मुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदेवते प्रीयेताम् २५ दुर्गापाञ्चाल्यौ प्रीयेताम् २६ अग्निपुरोगाविश्वेदेवाः प्रीयन्ताम् २७ इन्द्रपुरोगामरुद्गणाः प्रीयन्ताम्२८ ब्रह्मपुरोगाःसर्वे वेदाः प्रीयन्ताम् २९ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ३० माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ३१ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ३२ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ३३ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ३४ श्रीसरस्वत्यौ प्रीयेताम् ३५ श्रद्धामेधे प्रीयेताम् ३६ भगवती कात्यायनी प्रीयताम् ३७ भगवती माहेश्वरी प्रीयताम् ३८ भगवती

पुष्टिकरी प्रीयताम् ३६ भगवती तुष्टिकरी प्रीयताम् ४० भगवती ऋद्धिकरी प्रीयताम् ४१ भगवती वृद्धिकरी प्रीयताम् ४२ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ४३ सर्वाः कुलदेवताः प्रीयन्ताम् ४४ सर्वाः ग्रामदेवताः प्रीयन्ताम् ४५सर्वाइष्टदेवताः प्रीयन्ताम् ४६ (वहिः) हताश्च ब्रह्मद्विषः ४७ हताश्च परिपन्थिनः ४८ हताश्च विघ्नकर्तारः ४६ शत्रवः पराभवं यान्तु ५० शाम्यन्तु घोराणि ५१ शाम्यन्तु पापानि ५२ शाम्यन्त्वीतयः ५३ ( अन्तः ) शुभानि वर्द्धन्ताम् ५४ शिवा-आपः सन्तु ५५ शिवाऋतवः सन्तु ५६ शिवाअग्नयः सन्तु ५७ शिवाआहुतयः सन्तु ५८ शिवावनस्पतयः सन्तु ५६ शिवाओषधयः सन्तु ६० शिवाआतिथयः सन्तु ६१ अहोरात्रे शिवे स्याताम् ६२(यजुः)निकामे निकामेनः पर्ज्जन्योऽवर्षतु फलवत्योनऽओषधयः पच्यन्तां योगक्षेमोनः कल्पताम्

---

(ऋक्) शंवः कनिक्रदद्देवः पर्जन्योअभिवर्षत्वोषधयः प्रतिधीयताम् । शन्नोद्यावापृथिवी शं प्रजाभ्यः शन्नोऽअस्तु द्विपदे शञ्चतुष्पदे । (साम) त्वष्टा ३, ४ नोदैवियम् वचाः । पर्जन्योब्रह्मणस्पा २, ३, तीः । पुत्रैर्भ्रातृभिरदितिनूपातू २, ३, नाः । दुष्टारा २, ३, न्त्रा । मेणंवा २, ३, । चा ३, ४, ३, । ॐ २, ३, ४, ५, इ । डा ॥ (अथर्व) त्वष्टा मे दैव्यं वचः पर्जन्योब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिनुपातुनोदुष्टरं त्रायमाणं सहः ॥ (ऋक्) उद्गातेव शकुने सामगायसि ब्रह्मपुत्र इव शवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतोनः शकुने भद्रमावद विश्वतोनः शकुने पुण्यमावद ॥ १ ॥ (साम) पुनानः सोमा ३ धारा २, ३, ४ या ।

६३ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताः ) आदित्यपुरोगाः सर्वेग्रहाः प्रीयन्ताम् ६४ भगवान्नारायणः प्रीयताम् । ६५ भगवान्पर्जन्यः प्रीयताम् ६६ भगवान्स्वामीमहासेनः प्रीयताम् ६७ पुरोऽनुवाक्यया यत्पुण्यं तदस्तु याज्यया यत्पुण्यं तदस्तु वषट्कारेण यत्पुण्यं तदस्तु प्रातः सूर्य्योदये यत्पुण्यं तदस्तु ततः ( कर्ता ) "एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये" इति वदेत् "वाच्यताम्" इति विप्राः । ( यजमानः ) ब्राह्मं पुण्यमहर्य्यच्च सृष्ट्युत्पादनकारकम् वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः । भोब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्म्मणः पुण्याहं भवन्तोब्रुवन्तु । "ओंपुण्याहं" इति त्रिर्विप्राब्रूयुः । यजु० २ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहिमा ॥ १ ॥ ( यज० ) पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम्

---

आपोवसानो अर्षस्यारत्नधायोनिमृतस्य सा २ यि दसायि । ऊँहा ३ उवा । उत्सोदेवोहिरा २, ३, हायि । ऊँहा ३ उवा । एयया । ऊँ २ होवा । हो ५, इ । डा । २ । (अथर्व) पुनन्तु मा देवजनाः पुनन्तु मनवोधिया । पुनन्तु विश्वाभूतानि पवमानः पुनातु मा ॥३॥

पुण्याहमिति । पुण्याहं स्वस्तिमृद्धिं च भवेत्पूर्वं ब्रुवन्ति यति । प्रणवाद्यं त्रिराचष्टे भवदादिविनापरे । पुण्याहादेस्त्रिरभ्यासे मन्दमध्योच्चनिःस्वनम् । (त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैः) आश्रयेरन्निमे सर्वे यथागमपरम्परम्

मम सकुटुम्बस्येति । मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाशीर्वाचनमपेक्षमाणायामुककर्म्मणः पुण्या० इत्यादि (रत्नमालायाम्)

ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः। भोब्राह्मणाः मम स० कर्म्मणः कल्याणं भवन्तो ब्रुवन्तु । इति त्रिः कर्ता वदेत्। "ओं कल्याणम्" इति त्रिर्विप्राः। यज०। (यजु०) ओं यथेमांवाचङ्कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याᳬशूद्राय चार्य्याय चस्वायचारणाय च प्रियोदेवानान्दाक्षिणायै दातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु ॥ २ ॥ यज० सागरस्य तु याऋद्धिर्महालक्ष्म्यादिभिः कृता। सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः। भो ब्राह्मणाः मम स० कर्म्मणः भं० इति त्रिः कर्ता । "ओं ऋद्ध्यताम्" इति त्रिर्विप्राः । यज० सत्रस्य ऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभूम दिवम्पृथिव्या अद्ध्यारुहामाविदामदेवान्स्वर्ज्ज्योतिः ॥ ३ ॥ यज० । स्वास्तिस्तु याविनाशाख्या पुण्यकल्याणवृद्धिदा विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः। भोब्रह्मणाःममसकु०कर्म्मणे स्वस्ति भवन्तोब्रुवन्तु इति त्रिः कर्तावदेत् । "ओं आयुष्मते स्वस्ति" इति त्रिर्विप्राब्रूयुः। ओंस्वास्तिनऽइन्द्रोवृद्ध-

---

(ऋक्) अपाः सोममस्तमिन्द्रप्रयाहि कल्याणीर्जायासुरणं गृहेते। यत्रारथस्य बृहतोनिधानं विमोचनं वाजिनोदक्षिणावत् ॥ २ ॥ (साम) काया नश्चा ३ इत्रा ३ आभुवात्। ऊ। ती सदावृधः स। खा। ऊँ ३ हो हा ई। कया२३ शचाइ। छयौ हो ३। हुम्मा २। वा ३ र्तो ३, ५, हाई ॥ २ ॥ (अथर्व) विश्वजित्कल्याण्यै मा

श्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ४ ॥ दानखण्डे एतावदेव पुण्याहवाचनम्) मृकण्डसूनोरायुर्यद्ध्रुवलोमशयोस्तथा । आयुषा तेन संयुक्ता जीवेम शरदः शतम् । शतं जीवन्तु

---

परिधेहि । कल्याणिद्विपाच्च सर्वंनोरक्ष चतुष्पाद्यच्च नस्वम् ॥ ३ ॥ (ऋक्) ऋध्यामस्तोमं सनुयाम वाजमानोमन्त्रं सरथेहोपयातम् । यशोन पक्वं मधुगोष्वन्तरा भूतांशो अश्विनोःकाममप्राः ॥ १ ॥ ( साम ) ॐ होवा ॐ होवा ॐ हो३वा । अगन्मज्योतिः । अगन्मज्योतिः । अगन्मज्योतिः । अमृता अभूम । अमृता अभूम अमृताऽअभूमान्तरिक्षं पृथिव्याअध्यारुहामान्तरिक्षं पृथिव्याअध्यारुहामान्तरिक्षम् । पृथिव्याध्यारुहामा दिवमन्तरिक्षादध्यारुहाम । २ । अविदामदेवान् । ३ । समुदेवैरगन्महि । ३ । ॐ होवा ॐ होवा ॐ ३ होवा । ३ । सुवज्ज्योती २,३,४,५ ॥ ३ ॥ ( अथर्व ) ऋधङ्मन्त्रोयोनिं य आवभूवामृतासु वर्द्धमानः सुजन्मा । अदब्धासुर्भ्राजमानोहेवत्रितोदाधार त्रीणि ॥ ३ ॥ ( ऋक् ) स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभियावाममेति । सानो अमासोऽअरणेनिपातु स्वावेशाभवतु देवगोपा ॥ १ ( साम ) त्रातारमिन्द्रमविता । रमी २,३ न्द्राम् । हवेहवेसुहवाँ शूरमी २, ३ न्द्राम् । हुवाइनुशक्रं पुरुहू । तमी २-३ न्द्राम् । इदांस्वस्तिनो मघवा । वा ४,३,३ इतू३वा ५ इन्द्रा६,५, ६,; ॥ २ ॥ ( अथर्व ) स्वस्तिमात्र उत पित्रेणो अस्तु स्वस्तिगोभ्यो जगतीभ्यः । विश्वंसुभूतं सुविदत्रं नोऽअस्तुज्योगेवदृशेमसूर्यम् ॥ ४ ॥

( ३ ) यथागमपरम्परोक्त वचनमाश्रित्यैव कल्याणवचनं स्वस्तिऋद्ध्यों विपर्यासं ब्राह्मंपुण्यमित्यादयः श्लोकाश्चाधिकाः परशुरामादिभिरुक्ता इति वेदितव्यम् इति स्मार्तप्रभुकारः ।

( ४ ) कर्मणे स्वस्तीति वकारश्चतुर्थ्यन्तं तत्तन्नामोक्तिपूर्वकम् । स्वस्तीति च प्रब्रुयुरथ सर्वेऽपि ते द्विजाः ( इति संस्कारगणपतौ ) अत्र नमः स्वस्तिस्वाहेत्या-

भवन्तः। (इति विप्राः) यजुः । शतमिन्नुशरदोऽअन्ति देवा यत्रानश्चक्रा जरसन्तनूनाम्। पुत्रासोयत्र पितरो-भवन्ति मानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ शिवगौरी-विवाहे या या श्रीरामे नृपात्मजे। धनदस्य गृहे या श्रीरस्माकं

---

(ऋक्)शतंजीव शरदोवर्द्धमानः शतंहेमन्ताच्छतमुवसन्ता ३न्। शत-मिन्द्राग्नी सविता बृहस्पतिः शतायुषाहविषेमं पुनर्दुः ॥१॥ (साम) हाउहाउहाउ। यशोहाउ३ । वर्चोहाउ ३। आस्मिन् हायि २ आस्मिन्हा३,१,उ। वा २। तवेदिन्द्रावमंवसु। त्वंपुष्यसिमध्य-

दिना स्वस्तियोगे चतुर्थी। अव्ययादाप्सुप इति विभक्तेर्लुक्। केचित्तु कर्त्रे मह्यं स्वस्तिभवन्तोब्रुवन्तु, आयुष्मते मह्यं स्वस्ति भवन्तोब्रुवन्तु इति वाक्यं प्रयुञ्जते। एवं च आयुष्मते स्वस्तीत्यादि प्रतिवचनमप्युपपद्यते। नह्यत्र कर्म्मण आयुराशास्यते। सर्वस्य श्रीऋद्ध्यादेः स्वसम्बन्धित्वेनेष्यमाणतया प्रायस्तस्या-पपाठादिति। वस्तुतस्तु मह्यमित्येवं प्रयोगाभावपक्षे कर्मणः स्वस्त्याकांक्षायां कर्मणे इति चतुर्थीप्रयोगः पारिजातादावुक्त इति न काऽप्यनुपपत्तिः। मह्यमिति प्रयोगे तु स्वस्तियोगे मह्यमित्यत्र चतुर्थ्यानिराकाङ्क्षत्वेन कर्मशब्दे चतुर्थ्युत्पत्तौ मानाभावः। तेन मह्यमित्यस्य कर्म्मण इत्यनेन सहान्वये अमुककर्म्मणः कर्त्रेमह्यं स्वस्ति भवन्तोब्रुवन्तु इति वाक्यं योजनीयम्। तेनात्रामुककर्म्मणः कर्त्रेमह्यमिति पक्षे आयुष्मते स्वस्तीति प्रतिवचनं कर्म्मणः स्वस्तीति पक्षे तु केवलं स्वस्तीति प्रतिवचनम् इति (विद्याधरः) स्वस्तिस्तु याविनाशाख्येत्यादौ तु स्वस्तिशब्दो-ऽनव्ययस्तथैव पुराणे पाठात्।

( ५ ) एतावदेवेति । सम्प्रदायमनुसृत्यैव मृकण्डसूनोरित्यादिकमपि लिख्यते। अत्र पुण्यं कल्याणमृद्धिं च स्वस्तिश्रीरिति,, पञ्चकम्। इति वचनात् भो ब्रा० अस्य कर्मणः श्रीरस्त्विति भवन्तोब्रुवन्तु अस्तु श्रीः । मनसः काममा० इति श्रीवाचनमिच्छन्ति। प्रायोऽयं दाक्षिणात्यसम्प्रदायः। मृकण्डसूनोरित्युच्चा-रिते न पृथक् श्रीवाचनं कार्य्यम्। शिवगौरीविवाहे इत्यनेनैव गतार्थत्वात् इति।

( ६ ) प्रीयतामिति । तत्तत्कर्मदेवतानामप्रथमया विभक्त्या सङ्कीर्त्य प्रीयतां प्रीयेतां प्रीयन्ताम्,, इति एकत्वाद्यनुसारेणोक्त्वा पात्रे जलं क्षिपेत्। ननु कलशोपरि। रक्षाशिष इति। दत्ताशिष इति क्वाचित्कः पाठः।

सास्तु सद्मानि । "अस्तुश्रीः" इति विप्राः । मनसः काम-माकूतिं व्वाचः सत्यमशीय । पशूनाᳬ रूपमन्नस्यरसोयशः श्रीःश्रयताम्मयिस्वाहा ॥ ६ ॥ प्रजापतिर्लोकपालोधाता ब्रह्मा च देवराट् । भगवान् शाश्वतोनित्यं सनो रक्षतु

मम् । सत्राविश्वस्यपरमस्यराजसि । न किष्ट्वागोषुवृण्वते । हा उ हाउ हाउ । यशोहाउ३ । वर्चोहाउ३ । आसिन्हायि२ । आस्मि-न्हा३, १, उ । वा२ । आयुर्विश्वायुर्विश्व विश्वमायुरशीमहि प्रजां त्वष्टरधिनिधेह्यस्मेशतं जीवेमशरदोवयन्ते२, ३, ४, ५ ॥ २ ॥ ( अथर्व ) आयुरस्मै धेहिजातवेदः प्रजां त्वष्टरधिनिधेह्यस्मै । रायस्पोषं सवितरासुवास्मै शतंजीवाति शरदस्तवायम् ॥ ३ ॥ ( ऋक् ) श्रियेजातः श्रियआनिरियाय श्रियं वयोजरितृभ्योदधाति श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथामितद्रौ ॥१॥ ( साम ) श्रायन्त इवसू ४ रायां विश्वा २ । ईंदिन्द्रा २ स्यभा२ क्तावासूनिजातो जनिमानियोजासा २ । प्रतिभागंनदी २धिमः । प्रा २३ ती । भागां ना ३ दाहुँ । धीमा ३ः । ओ २,३,४ वाश्रिये ॥ २ ॥ (अथर्व) एहयातुवरुणः सोमोअग्निर्बृहस्पतिर्वसुभिरेहयातु । अस्य श्रियमुपसंयातु सर्व उग्रस्यचेतुः समन सः सजाताः ॥३॥ ( ऋक् ) प्रजापते नत्वदेतान्यन्योविश्वाजातानिपरिता वभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयं स्याम पतयोरयीणाम् ॥ १ ॥ ( साम ) हाउ । ३ । इमाः । ३ । प्रजाः । ३ । प्रजापते होई । २ । प्रजापते । हा ३, १ उ । वा । २ । ए । हृदयम् । २ । ए । हृदया ३१ उ । वा २ । प्रजारूपमजीजने ३ । इट इडा २३४५ ॥ २ ॥ ( अथर्व ) प्रजापतेरावृतोब्रह्मणा वर्म्मणाहं कश्यपस्य ज्योतिषा वर्चसा च । जरदष्टिः कृतवीर्य्योविहायाः सहस्रायुः सुकृतश्चरेयम् ॥ ३ ॥ ( ऋक् ) स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिष आस-त्सिपूर्वीः । रायोवन्तारोबृहतः स्यामास्मेऽअस्तुभगइन्द्रप्रजावान् ॥

सर्वतः । भगवान्प्रजापतिः प्रीयताम् । (इति पात्रे जलं क्षिपेत्) यजुः । प्रजापते नत्वदेतान्यन्योविश्वारूपाणि परितावभूव । यत्कामास्ते जुहुमस्तन्नोऽ अस्तु व्वयꣳ स्याम पतयोरयीणाम् ॥ ७ ॥ आयुष्मते स्वस्तिमते यजमानाय दाशुषे । श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः । देवेन्द्रस्य यथा स्वस्ति यथा स्वस्ति गुरोर्गृहे । एकलिङ्गे यथा स्वस्ति तथा स्वस्ति सदा मम ।"आयुष्मते स्वस्ति" इति विप्राः । प्रतिपन्थामपद्महि स्वस्ति गामने हसम् । येन विश्वाः परिद्विषोव्वृणक्ति विन्दते वसु ॥८॥ कृतैतद्दानखण्डोक्तपुण्याहवाचनकर्म्मणः साङ्गतासिद्ध्यर्थं तत् सम्पूर्णफलप्राप्त्यर्थं च पुण्याहवाचकेभ्योब्राह्मणेभ्योविभज्य मनसोद्दिष्टां दक्षिणां दातुमहमुत्सृजे ।(इदं दक्षिणादानमाभिषेकान्ते युक्तं अभिषेकस्यपुण्याहवाचनान्तर्भूतत्वात्) ततःकर्ता अस्मिन्पुण्याहवाचने न्यूनातिरिक्तोयोविधिः सउपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च परिपूर्णोऽस्तु । ( इति वदेत् समाचारात् ) "अस्तु परिपूर्णइति द्विजाः"

---

१ ॥ ( साम ) ईयइया ३हायित्यमूषुवाजिना३न्दे३ वजूतमूई३य-ईया । हा ३ ४ यिसहोवानन्ता । रूता ३ । रां रथानां । इयइया ३ हाई । अरिष्टा३ नायिमि३म्पृत । नाजमाशुम् । ई ४ यइया । हा २३४५ यि । स्वस्त । यायि । तार्क्ष्यमिहा ३४३ । हू ३ वा ५यिमा ५६५ ॥ २ ॥ ( अथर्व ) त्यमूषुवाजिनं देवजूतं सहोवानन्त-रुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहाहुवेम ॥ ३ ॥

ततोविप्राः कर्तुर्वामतः पत्नीमुपवेश्य पातितेन जलेन पल्लवदूर्वाभिरुदङ्मुखास्तिष्ठन्तउपविष्टावा सपत्नीकं कर्त्तारमभिषिञ्चेयुः । ( तत्र मन्त्राः ) पयः पृथिव्याम्पयऽओषधीषु पयोदिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १ ॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधासो देशेऽभवत्सरित् ॥ २ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ ३ ॥ वरुणस्योत्तम्भनमसि० ॥४॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । सरस्वत्यै वाचोयन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामि ॥ ५ ॥ ( असौ ) देवस्यत्वास०.........भ्याम् । सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ६ ॥ देवस्यत्वा०.........भ्याम् । अश्विनौभैष-

---

( ७ ) दक्षिणामिति । तथा च हेमाद्रौ । पुण्याहान्तेऽर्चयेद्विद्वान्दक्षिणाभिः स्वशक्तितः

( ८ ) वामतः पत्नीमुपवेश्येति । (धर्मप्रवृत्तौ) आशीर्वादेऽभिषेके च पादप्रक्षालने तथा । शयने भोजने चैव पत्नीतूत्तरतोभवेत् । (संस्कारगणपतौ) वामे सिन्दूरदाने च वामे चैव द्विरागमे । वामेऽशनैकशय्यायां भवेज्जाया प्रियार्थिनी । सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा । अभिषेके विप्रपादक्षालने चैव वामत इति । विप्रपादप्रक्षालनं च पित्र्येकर्मणि बोध्यम् । इति (स्मार्तप्रभुकारः) वामे पत्नी त्रिषु स्थाने पितॄणां पादशौचने । रथारोहणकाले च ऋतुकाले सदा भवेदिति । यद्यपि । शान्तिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु । वामे ह्युपविशेत् पत्नी व्याघ्रस्य वचनं यथा । इति वचनात् सर्वत्रैव वामभागे उपवेशनम् प्राप्तम् । परं । पश्चादग्नेरुपविशतोदक्षिणतः पत्नीति कात्यायनसूत्रविरोधादुपेक्षणीयमिदम् । इति ।

ज्येन तेजसे ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन ळ्वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ ७ ॥ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥ ८ ॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवोबृहस्पतिः । सचेतसोऽविश्वेदेवा यज्ञम्प्रावन्तुनः शुभे ॥ ९ ॥ त्वं यविष्ठ दाशुषोनॄँः पाहि शृणुधीगिरः । रक्षातोकमुतत्मना ॥ १० ॥ अन्नपतेऽन्नस्य नोदेह्यनमीवस्य शुष्मिणः । प्र प्र दातारन्तारिषऽऊर्ज्जन्नोधेहि द्विपदे शञ्चतुष्पदे ॥ ११ ॥ द्यौःशान्ति० ॥ १२ ॥ यतोयतः ॥१३॥ इत्यभिषिच्य अमृताभिषेकोऽस्तु इति वदेयुः ( केचिदाभिषेकं न कुर्वन्तीति प्रयोगदीपे ) कृतैतदभिषेककर्मणः समृद्ध्यर्थं दक्षिणां दास्ये इति केचित् ॥

इति श्रीभाष्याचार्य्यपण्डितहरिनामदत्तशास्त्रितनयविद्यावाचस्पति पण्डितदेवीप्रसादशास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य प्रथमखण्डे सविचारः पुण्याहवाचनप्रयोगः ॥

# ॥ अथ मातृकापूजनम् ॥

देशकालौ सङ्कीर्त्य । श्रीगणपतिसहितगौर्य्यादिषोडशमातॄणामावाहनपूर्वकं पूजनमहं करिष्ये । इति संकल्प्य । गणानान्त्वेति गणपतिमावाहयेत् ॥ ओं शर्मास्यवधूतꣳ रक्षोऽवधूताऽअरातयोऽदित्यास्त्वगसि प्रतित्वादितिर्व्वेत्तु । अद्रिरसि ळ्वानस्पत्योग्रावासि पृथुबुध्नः प्रति-

त्वादित्यास्त्वग्वेतु। हिमाद्रितनयां देवीं वरदां भैरवप्रियां। लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ॥ गौर्य्यै नमः गौरीमावाहयामि स्था० ॥ १ ॥ ओं पावकानः सरस्वती वाजेभिर्व्वाजिनीवती । यज्ञंवष्टुधियावसुः ॥ सुवर्णाभां

नान्दीश्राद्धस्य पार्थक्येन संकल्पकरणे मातृकापूजनोत्तरं पाकान्तरेण वैश्वदेवं कृत्वा तत्कर्तव्यम् ॥ पुण्याहवाचन सहैतत्संकल्पे तु पुण्याहवाचनात्पूर्वं वैश्वदेवः पाकान्तरेणैवकार्यः । वस्तुतस्तु पार्थक्येनैव सङ्कल्पोयुक्त इति (सं० रत्नमालायाम्) [मातृकापूजनमिति] तत्र गौर्य्याद्याश्चतुर्दशषोडश वेत्युपस्थितौ बहुत्र चतुर्दशपदसमभिव्याहारान्मातरोलोकमातर "इतिद्वयं" सर्वासां विशेषणम् इति (आदित्यभाष्ये) हेमाद्रिरूपनारायणमदनरत्नादिकारास्तु । पूज्यास्तु षोडशैवं मातरोलोकमातर इति परिगणनान्तः पठन्ति ॥ अतएव पद्धतिकारैर्निबन्धकारैश्च द्वौपक्षावुपन्यस्तौ। (वस्तुतस्तु) चतुर्दशमातृणामेव सत्वाचतुर्दशेत्येवपाठः श्रेयान् ॥ अतएव अविछिन्नाध्ययनसम्प्रदायसमागतं पाठं सम्यग्जानंतः परिशिष्टाऽध्येतारोऽपि वृद्धौ पूज्याश्चतुर्दशेत्येवं पठन्ति। वाजसनेयिभिश्च स्वगृह्ये मातृपूजाविधेरनुक्तत्वात्। [कमपि पक्षमाश्रित्य पूज्यन्ते] सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् । इति संग्रहवचनात् यद्यपि स्वेच्छयोक्तं तथापि तैश्छन्दोगपरिशिष्टोक्ताएव मातरः पूज्याः । कात्यायनसूत्रपरिशिष्टयोरेककर्तृत्वात् पारस्करमतस्याश्रयणीयत्वाच्च । तथा च (स्मृतिसंग्रहे) न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते। कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितमिति ॥ परेषां करोतीति हि व्युत्पतेः । अतश्च गौर्यादिपक्षमवलम्ब्यैव "वाजसनेयिभिः पूजा कार्या

पद्महस्तां विष्णोर्वक्षःस्थले स्थिताम् । त्रैलोक्यपूजितां देवीं पद्मामावाहयाम्यहम् ॥ पद्मायै नमः पद्मामावाहयामि स्थाप० ॥२॥ निवेशनः सङ्गमनो वसूनां ऽविश्वा रूपाऽभिचष्टे शचीभिः । देवऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनां ॥

एतासांप्रत्येकंदेवतात्वं गौरीत्वादिनाऽसमुदितानांचमातृत्वेनैकंवा-देवतात्वं । अत्रकेचिन्मातरः सगणाधिपा इत्यत्र मातृणां गौ-र्य्याद्यविशेषितानां पूज्यत्वावगमात्तासामेव मिलितानां देवतात्वं न चतुर्थ्यादिविशेषितानां । अश्रुतत्वात्तासां । यद्यपि गौरीपद्मे-त्यादिना विशेषिताएव मातरोदेवतात्वेन श्रूयते तथापि । तस्य वचनस्योद्देशमात्रपरत्वान्मिलितानामेव मातृणां देवतात्वमिति मन्यंते अन्ये तु प्रत्येकं देवतात्वमाहुः । युक्ततरं चैतत् ॥ अन्यथा बहुत्वविशिष्टमातृणामेकदेवतात्वे वृद्धौ पूज्याश्चतुर्दशेति चतुर्दश-संख्यानुपपत्तेः । दशोपचारैर्देवेशि प्रत्येकं नामभेदत इति रुद्र-यामले प्रत्येकं पूज्यत्वविधानानुपपत्तेश्च । तस्मात्प्रत्येकं देवतात्वं अत्र गौर्य्यादीनां प्रत्येकं देवत्वात्वपक्षे नियामकाभावे पूर्वमेव युक्तम् इति । वाजसनेयिन आहुः । तद्वि० ॥ ( गणपतिमिति ) यद्यपि ब्रह्माद्याश्च तथा सप्त दुर्गाक्षेत्रं च गणाधिपानितिवचनं तथा गणेशेनाधिकाह्येता वृद्धौ पूज्यास्तु षोडशेति वचने च गणपतिपूजनमुक्तं तथापि तत्र क्रमाभावात् "आदौ विनायकः पूज्योह्यन्ते च कुलदेवतेति" वह्वृचपरिशिष्टानुरोधाच्च वह्वृचाना-मादौ गणपत्यादित्रयं । वास्तुयागमकुर्वाणस्तवाहारो भविष्यतीति वचनेन केषांचिदाचाराद्वास्तोष्पतिं ततोब्राह्म्यादि सप्त ततो-गौर्य्यादिषोडशमातर आवाह्य पूजयेदिति । तेन सप्तविंशतिरिति सर्वमनवद्यम् ॥ क्वचिद्गौर्य्यादिक्रमः क्वचिद् गणपत्यादिक्रमस्तेन द्विविधः शिष्टाचारोऽनुमीयते । एतद्देशीयाः न ऋते त्वक्रियते

उत्पलाक्षीं सुदर्शनां शचीं कुण्डलधारिणीम् । देवराजप्रियां भद्रां शचीमावाहयाम्यहम् ॥ शच्यै नमः शचीमा० ॥ ३ ॥ ओं मेधाम्मेऽवरुणोददातु मेधामग्निः प्रजापतिः मेधामिन्द्रश्च ऽवायुश्च मेधान्धाता ददातु मे स्वाहा ॥

इति मन्त्रलिङ्गात् । नार्चितोहि गणाध्यक्ष इति पाद्मवचनाच्च निर्विघ्नतासम्पादनायादौ गणपतिमेव पूजयन्ति । (इति दिक्) यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः । इति पुराणान्तरवचनेनाङ्गत्वम् । गणशः क्रियमाणानां मातॄणां पूजनं सकृत् । सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु । ( मातॄणां पूजनं सकृदिति पृथग्वचनादेवं ज्ञायते मातृपूजनं श्राद्धस्यानङ्गमेव भवति) अत एव श्राद्धरहितेष्वपि वर्धापनादिकर्मसु एतासां पूजनं दृश्यते । कर्म्मादिषु तु सर्वेषु मातरः सगणाधिपाः । इति कात्यायनवचनेन कर्म्माङ्गत्वमपि प्रतीयते । अतोयथारुचिः । (सहितेति) गणेशे नाधिकाद्ये ता इति वचनात् ॥ पूजाफलं च(कर्म्मप्रदीपे) पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः(पूजितास्तामातरः पूजयितारं पूजयन्ति अभ्युदयसम्पादनेन प्रीणयन्ति) अकरणे प्रत्यवायःइतिशातातपः । अकृत्वामातृयागन्तु वैदिकं यः समाचरेत् । तस्य क्रोधसमाविष्टाहिंसामिच्छन्ति मातरः अनिष्ट्वा पितृयज्ञेन वैदिकङ्किञ्चिदाचरेत् । तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः । पूजास्थानानि तदुपकरणानि च ( कूर्म्मपुराणे ) पूर्वं तु मातरः पूज्याः भक्त्यैव सगणेश्वराः । स्थण्डिलेषु पवित्रेषु प्रतिमासु द्विजातिषु । पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि । पूजयित्वा मातृगणं कुर्य्याच्छ्राद्धत्रयं बुधः । तथा च ( कर्म्मप्रदीपे ) प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु । अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथक् २ ॥ इति । (शुद्धासु रजतादिधातुमयीषु अक्षतपुञ्जोयवसमुष्टयः ) ( परशुरामोऽपि ) कृत्वाभ्युदयिकंश्राद्धंमातृपूजनपूर्वकम् । आवाहनादिपुष्पाञ्जल्यन्तं

विवस्वत्फुल्लहस्ताब्जां संस्तुतां पद्मवासिनीम् । बुद्धिप्रसादिनीं सौम्यां मेधामावाहयाम्यहम् ॥ मेधायै नमः । मेधामा० स्था० ॥ ४ ॥ ओं सविता त्वा सवानाᳬसुवतामग्निर्गृहपतीनाᳬसोमो वनस्पतीनाम् । बृहस्पतिर्वाच ऽइन्द्रो ज्ज्येष्ठयाय रुद्रः पशुभ्योः मित्रः सत्यो वरुणो धर्म्मपतीनाम् ॥ जगत्स्रष्ट्रीं जगद्धात्रीं पाद्विरूपेण संस्थिताम् । ओंकाराद्यां भगवतीं सावित्रीं स्थापयाम्यहम् ॥ सावित्र्यै नमः । सावित्रीमा० स्था० ॥ ५ ॥ ओं प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा० । ओं अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ दैत्यपक्षक्षयकरीं देवीं देवानां

---

गणेशपूजनं समाप्य गौरीपूजां कुर्य्यादेवमन्यासामपि "अयं काण्डानुसमयः । गणपतेरावाहनं कृत्वा गौर्यादीनामावाहनं गणपतेरासनं दत्वा गौर्य्यादीनामासनं अयं पदार्थानुसमयः । अत्र पदार्थानुसमयएवेति रुद्रपद्धतौ नारायणभट्टाः । संस्कारभास्करे इदं पक्षद्वयमपि प्रामाणिकतयोपन्यस्तमतोयथारुच्यनुष्ठेयम् ॥ द्वितीयपक्षेऽपि धूपदीपनैवेद्यादीनि पृथक् २ तन्त्रेण वा भवन्ति । एतासां गौरीत्वादिना प्रत्येकं देवतात्वं इति पक्षे काण्डानुसमयेन पदार्थानुसमयेन वा प्रत्येकं पूजा । मातृत्वेन देवतात्वे त्वेकैक पूजेति न ताम्बूलादिभेदः । कमपिपक्षमुररीकृत्य प्रत्येकं सह वा सर्वाः पूजयेत् । पदार्थानुसमयपक्षेऽपि उपचाराः सर्वाभ्यः पृथक् पृथगेव देयाः । तन्त्रेणेति सम्प्रदाय इति ॥ (षोडशमातृभ्यो नमः) इति मातृणां षोडशसङ्ख्यावत्वेन संज्ञात्वात् । सप्तर्षिभ्योनमः इतिवत् दिक्संख्येसंज्ञायामिति समासः । इति विद्याधरः ।

चाभयप्रदाम् । गीर्वाणवन्दितां देवीं विजयां स्थापया-
म्यहम् ।। ओंविजयायै नमः विजया० स्था० ।। ६ ।। ओं
बह्वीनाम्पिता बहुरस्य पुत्राश्चिश्चाकृणोति समनावगत्य ।
इषुधिःसङ्काः पृतनाश्च सर्व्वाः पृष्ठेनिनद्धो जयति प्रसूतः ।
विश्वभद्रां जयां रक्तां रक्ताम्बरधरां सदा । त्रैलोक्यवन्दितां
देवीं जयामावाहयाम्यहम ।। जयायै नमः जयामा० स्था०
।। ७ ।। ओंइन्द्रऽ आसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽ
एतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो
यन्त्वग्रम् ।। मयूरवाहनारूढां शक्तिखड्गधनुर्धराम् । आवा-
हयेद्देवसेनां तारकासुरमर्द्दिनीम् ।। देवसेनायैनमः देवसेनामा०
स्था० ।। ८ ।। ओंपितृभ्यः स्वधायिभ्यः स्वधानमः पिता-
महेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधा-
यिभ्यः स्वधानमः । अक्षन्पितरो मीमदन्तपितरोतीतृपन्त
पितरःपितरः शुन्धद्ध्वम् । कव्यमादाय सततं पितृभ्यो या प्रय-
च्छति पितृलोकार्चितां देवीं स्वधामावाहयाम्यहम ।। स्वधायै
नमः स्वधामा० ।।९।। ओं स्वाहा प्राणेभ्यः साधिपतिकेभ्यः
पृथिव्यै स्वाहाऽग्नये स्वाहान्तरिक्षाय स्वाहा वायवे
स्वाहा । दिवे स्वाहा सूर्य्याय स्वाहा ।। हविर्गृहीत्वा सततं
देवेभ्यो या प्रयच्छति । स्वर्गलोकार्चिता स्वाहा समागच्छ
ममाध्वरे ।। स्वाहायै नमः स्वाहा० ।। १० ।। ओं अना-
धृष्टा पुरस्तादग्नेराधिपत्य आयुर्म्मेदाः पुत्रवती दक्षिणत
ऽइन्द्रस्याधिपत्ये प्रजाम्मेदाः सुखदा पश्चाद्देवस्य सवितुरा-

धिपत्ये चक्षुर्म्मेदाः । आश्रुतिरुत्तरत्तो धातुराधिपत्ये रायस्पोषम्मेदाः । विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्य ऽओजोमेदाठिवश्वाभ्यो मानाष्ट्राभ्यस्पाहि मनोरश्वासि ॥ भूतग्राममिदं कृत्स्नं याभिरुत्पादितं पुरा । त्रैलोक्यपूजिता देवीर्मातृरावाहयाम्यहम् ॥ ११ ॥ ( मातृभ्योनमः मातृरा० स्था० ॥११॥) ओंरयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभुच मे प्रभुच मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवञ्चमेक्षितञ्चमेऽन्नञ्चमे क्षुच्चमे यज्ञेनकल्पताम् ॥ आवाहये लोकमातृर्ज्जयन्तीप्रमुखाः शुभाः । नानाभीष्टप्रदाः शान्ताः सर्वलोकहितावहाः ॥ ( लोकमातृभ्योनमः । लोकमातृरा० स्था० ॥ १२ ॥ ) ओं भद्रङ्कर्णेभिः शृणुयामदेवा भद्रम्पश्ये माक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहिदेवाहितं यदायुः ॥ नमस्तुष्टिकरीं देवीं लोकानुग्रहकारिणीम् । सर्वकामसमृद्ध्यर्थं धृतिमावाहयाम्यहम् ॥ धृत्यै ( हृष्ट्यै ) नमः । धृति ( हृष्टि ) मावा० स्था० ॥ १३ ॥ ओं अङ्गान्यात्मन्भिषजातदश्विनात्मानमङ्गैः समधात्सरस्वती । इन्द्रस्य रूपꣳ शतमानमायुश्चन्द्रेण ज्योतिरमृतन्दधानाः ॥ प्रणतानां इहलोकेऽस्मिन्पुत्रपुष्टिसुखप्रदाम् । भक्तेभ्यश्चाभिवरदां विद्युज्ज्वालार्ककुण्डलाम् ॥ पुष्ट्यैनमः । पुष्टिमा० स्था० ॥ १४ ॥ ओं जातवेदसे सुनवामसोममरातीयतोनिदहाति वेदः । सनः पर्षदाति दुर्गाणि विश्वानावेव सिन्धुन्दुरितात्यग्निः । आवाहयामि तां तुष्टिं सर्वलोकेषु

पूजिताम् । सन्तोषभावनादेवीं रक्षणीयाध्वरे मम । तुष्ट्यै नमः तुष्टिमा० स्था० ओं तत्सवितु० । तामात्मदेहिनां देवीं सर्वकामफलप्रदाम् वंशरक्षाकरीं गोत्रदेवीमावाहयाम्यहम् ।। कुलदेव्यै नमः कुलदेवीमा० स्था० गणेशपूर्वकगौर्य्यादिषोडशमातृभ्योनमः । इति षोडशोपचारैःसम्पूजयेत् । पूजनं समाप्य आयुरारोग्यमैश्वर्य्यं ददध्वं मातरोमम । निर्विघ्नं सर्वकार्य्येषु कुरुध्वं सगणाधिपाः । इति नारिकेलफलं समर्प्य । कृताञ्जलिः । यन्न्यूनमतिरिक्तं तत्सर्वं परिपूर्णमस्तु

वसोर्द्धाराप्रयोगः ।। मातृपूजासान्निहिते कुड्ये यथाचारं तप्तघृतेन दुग्धेन वा सप्तधाराः पञ्चधारा वा प्राक्संस्था उदक्संस्था वा प्रादेशमात्रीः कुर्य्यात् । (तत्रमन्त्रः) ओं व्वसोः पवित्रमसिशतधारं व्वसोः पवित्रमासि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ।। इति ततश्चोपरिभागे तु कुङ्कुमेन विभूषयेत् । तासां प्रतिष्ठां च कुर्य्यात् । ओं तदस्तु मित्रावरुणास्तदग्नेशंय्योरस्मभ्यमिदमस्तु शस्तम् अशीमहि गाधमुतप्रतिष्ठां नमोदिवे बृहते सादनाय ।।१।। ओं मनोजूतिर्जुषतामाज्यस्योति मनसावाऽइदर्ठ॰ सर्वमासन्त-

(वसोर्द्धारा इति) वसोश्चेदिराजस्याग्नेर्वा तदुद्देशप्रवृत्तत्वेन तत्सम्बन्धिनीं घृतधारां कुर्य्यात् । (यद्वा) वसोर्मन्त्रेण धारावसुधारेति प्राप्ते वसोर्द्धारेति प्रयोगोघृतमातृषु योगरूढः । अत एव वसोर्द्धारेति समाख्यानं वक्ष्यमाणवचनेषु सङ्गच्छते । समाख्या

न्मनसैवैतत्सर्वमाप्नोति बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमं दधात्विति यद्विवृढन्तत्सन्दधाति विश्वेदेवासऽइहमादयन्तामिति सर्व्वं वै विश्वेदेवाः सर्वेणैवैतत्सन्दधाति सपदि कामयेतद् ब्रूयात्प्रतिष्ठेति ॥ २ ॥ एषवै प्रतिष्ठानाम यज्ञोयत्रैतेन यज्ञेन यजन्ते सर्वमेवप्रतिष्ठितम्भवति ॥ इत्येतैर्मन्त्रैः प्रतिष्ठाप्य । "वसोर्द्धारादेवताभ्योनमः"

यौगिकः शब्दः । वसोर्द्धारां जुहोतीत्यादौ तु कर्मनामधेयम् ॥ मातृपूजासन्निहिते इति । (रुद्रयामले) तत्पुरः सन्निधाने वा कुड्येरेखा घृतेन च धारालिङ्गेन मन्त्रेण पञ्च वा सप्त वा लिखेत् । अत्र तत्पुर इत्याद्युक्तेः पाठक्रमाच्च मातृपूजां समाप्यैव वसोर्द्धारा कार्य्या इति उक्तं भवति । वसोर्द्धारास्थलं चोक्तं (प्रयोगदीपे) गृहनिर्गमवामे च वसोर्द्धारावितर्दिका । कार्य्या विवाहे विद्वद्भिर्गृहे वै पूर्वदक्षिणे । गृहे वै पश्चिमे द्वारे तथा उत्तर एव च । वसोर्द्धारावेदिका च गृहनिर्गमदक्षिणे इति ॥ दुग्धेनवेति । (परशुरामः) नातिनीचोच्छ्रितेकुड्येवसोर्द्धारास्तु सर्पिषा । पञ्च वा सप्तधारा वा वसोर्मन्त्रेण कारयेत् । दुग्धेन वा वसोर्द्धाराः कार्य्यास्तासां च देवताः । श्रीश्च लक्ष्मीर्धृतिर्मेधास्वाहा प्रज्ञा सरस्वती । माङ्गल्येषु प्रपूज्यन्ते सप्तैताः घृतमातरः । संस्कारभास्करे मातृपूजानन्तरमन्यासामपि मातॄणां पूजनं दृश्यते । तद्यथा । "जलमातरः" । मत्सी कूर्म्मी च वाराही माण्डूकी मकरी तथा ग्राहकी क्रौञ्चकी चैव सप्तैताजलमातरः ॥ कांस्ये वा ताम्रपात्रे वा प्रभूतजलपूरणम् । तत्र मत्स्याद्या आवाह्य पूजयेज्जलमातृका इति ॥ "स्थलमातरः" । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा वाराही च तथेन्द्राणी चामुण्डा स्थलमातरः । "द्वारमातरः" । जयन्ती मङ्गला चैव पिङ्गला दक्षिणे गृहात् । आनन्दवर्द्धिनी वामे महा-

श्रियादिसप्तघृतमातृभ्योनमः" इति वा षोडशोपचारैः सम्पूजयेत् ॥ पूजनान्ते आचरितवसोर्द्धारापूजनविधौ यत् न्यूनातिरिक्तं तत्सर्व्वं परिपूर्णमस्तु इति कृताञ्जलिः प्रार्थयेत्। अनया पूजया श्रियादिसप्तघृतमातरः प्रीयन्ताम् ॥ (तत आयुष्यसूक्तजपः) देशकालौ सङ्कीर्त्य। करिष्यमाणादः कर्म्मणोऽमङ्गलनाशार्थमायुष्यजपं करिष्ये। आयुष्यं व्वर्च्चस्यꣳ रायस्पोषमौद्भिदम् इदꣳ हिरण्यंव्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्। योबिभर्ति दाक्षायणꣳ हिरण्यꣳ सदेवेषु कृणुते दीर्घमायुः ॥ २ ॥ यदाबध्नन्दाक्षायणाहिरण्यꣳ, शतानीकायसुमनस्यमानाः। तन्मऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥३॥ इति जपः। –

---

काली च निर्गमे। गृहस्य दक्षिणे भागे तिस्रोलेख्यास्तु मातरः। वामभागे तथा द्वे च जयन्त्यादिक्रमेण तु। "गृहमातरः" कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिस्तु मातर इति ॥ (आयुष्यजपद्धति) तथा च (कात्यायनः) आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत्। (आयुषे हितानि आयुष्यं वर्चस्यमित्यादीनि त्रीणि मन्त्रवाक्यानीति नारायणो वृत्तिकृत्। आनोभद्रा इत्यादीनि दशेति हेमाद्रिः। अत्र जप्त्वेति समानकर्तृकतायां क्त्वा प्रत्ययविधानाद्यजमानकर्तृकएवायं जपोनत्र्त्विक्कर्तृक इति बोध्यम् ॥ इति स्मार्ते प्रयो॰ ॥

# ॥ अथ नान्दीश्राद्धम् ॥

उदङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौसंकीर्त्य अमुकयागकर्म्मणि सांकल्पिकाविधिना ब्राह्मणयुग्मभोजन-पर्य्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येन नान्दीश्राद्धं करिष्ये इति संकल्प्य। पाद्यादिदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादावनेजनम् पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः ॥१॥ अमुकगोत्रा मातृपितामहीप्रपितामह्यः नान्दीमुख्यः ओं

---

( नान्दीश्राद्धमिति ) ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञकाः। प्रपञ्चितञ्चैतद्धेमाद्रौ ग्रन्थविस्तृतिभयान्नात्र लिखितम्। श्राद्धकाशिकायामपि स्पष्टतरेण प्रतिपादितम् ॥

## अथ नान्दीश्राद्धकालनिर्णयः।

बौ० प्र० मालायाम् ( गृह्यसू० ) नैकान्हा पित्र्यं दैवं च कुर्वन्ति प्रजाअस्यप्रमायुका ( नष्टायुषः ) भवन्ति। तस्मात्पितृभ्यः पूर्वेद्युः क्रियते इति श्रुतेश्च पूर्वेद्युरेव नान्दी श्राद्धकालः। तथा च ( श्राद्धकाशिकायां नान्दीकालनिर्णयः ) किं वृद्धिश्राद्धं दिनत्रये कार्य्यमुतैकदिनएव। तत्रैकआहुः। एकस्मिन्कर्माह एव। मातृभ्यः प्रथमंदद्यात् पितृभ्यस्तदनन्तरम्। ततोमातामहेभ्यश्च वृद्धौश्राद्धत्रयं स्मृतम्। इति वचनात्। ( तद्युक्तम्। ) अस्यापि त्रिदिनविधायकत्वप्रतिभानात्। तथा च ( स्मृतिः ) मातृश्राद्धंतु पूर्वेद्युः कर्म्माहन्येव पैतृकम्। मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं

भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहा सम्पद्यताम् वृद्धिः ॥ २ ॥ अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः ॥ ३ ॥ (द्वितीयगोत्राः) मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनम् स्वाहा सम्पद्यतां वृद्धिः ॥ ४ ॥ ( अथासनदानम ) सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां ओंभूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यताम् वृद्धिः नान्दीश्राद्धे क्षणौ

---

भवेत् । ( वसिष्ठोऽपि ) पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहागणस्य त्विति ॥ नन्वेकदिनकरणं दिनत्रयाशक्तौ कर्माहे वेदितव्यम् । इतिचेत् ( तदपिन ! ) तत्रापि पूर्वेद्युरेवविहितत्वात् । तथा च पृथक्दिनेष्वशक्तश्चेदेकस्मिन्पूर्व वासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥ तान्त्रिकमित्येकदिने विशिष्टविधिः । ( वृद्धमनुरपि ) अलाभे भिन्नकालानां नान्दीश्राद्धत्रयंबुधैः । पूर्वेद्युरेव कर्तव्यं पूर्वान्हे मातृपूर्वकम् । यत्त्वेकदिनएवात्राचरन्ति तद्वचनादर्शननिबन्धनम् । जातिकर्मादिविषयं वेत्यविरोधः । इति । तथा च ( गृह्यसूत्रे ) अथापरेद्युर्देवानाम । पूर्वेद्युर्नान्दीश्राद्धं कृत्वापरेद्युर्देवानाम् । [ प्रयोगपारिजाते अत्रिः ] पूर्वाह्ने तु भवेद्वृद्धिर्विनाजन्मनिमित्तिकम् । पुत्रजन्मनिकुर्वीत श्राद्धंतात्कालिकंबुधः । [ गृह्यसूत्रे ] । तेषुपूर्वेद्यु रेववृद्धिपूर्तेषु । यच्चगृह्यपरिशिष्टे । महत्सुपूर्वेद्यु स्तदहरल्पेषु । पुंसवने च सीमन्ते अन्न चौलोपनयने । गोदाने स्नानउद्वाहे नान्दीश्राद्धं पुरोहितम् । इत्यादिवचनमवलम्ब्य कर्माहदिन

# ॥ अथ नान्दीश्राद्धम् ॥

उदङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौसंकीर्त्य अमुकयागकर्म्मणि सांकल्पिकाविधिना ब्राह्मणयुग्मभोजन-पर्य्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येन नान्दीश्राद्धं करिष्ये इति संकल्प्य। पाद्यादिदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादावनेजनम् पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः ॥१॥ अमुकगोत्रा मातृपितामहीप्रपितामह्यः नान्दीमुख्यः ओं

---

(नान्दीश्राद्धमिति) ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञकाः। प्रपञ्चितञ्चैतद्धेमाद्रौ ग्रन्थविस्तृतिभयान्नात्र लिखितम्। श्राद्धकाशिकायामपि स्पष्टतरेण प्रतिपादितम् ॥

### अथ नान्दीश्राद्धकालनिर्णयः।

बौ० प्र० मालायाम् (गृह्यसू०) नैकान्हा पित्र्यं दैवं च कुर्वन्ति प्रजाअस्यप्रमायुका (नष्टायुषः) भवन्ति। तस्मात्पितृभ्यः पूर्वेद्युः क्रियते इति श्रुतेश्च पूर्वेद्युरेव नान्दी श्राद्धकालः। तथा च (श्राद्धकाशिकायां नान्दीकालनिर्णयः) किं वृद्धिश्राद्धं दिनत्रये कार्य्यमुतैकदिनएव। तत्रैकआहुः। एकस्मिन्कर्माह एव। मातृभ्यः प्रथमंदद्यात् पितृभ्यस्तदनन्तरम्। ततोमातामहेभ्यश्च वृद्धौश्राद्धत्रयं स्मृतम्। इति वचनात्। (तदयुक्तम्।) अस्यापि त्रिदिनविधायकत्वप्रतिभानात्। तथा च (स्मृतिः) मातृश्राद्धंतु पूर्वेद्युः कर्म्माहन्येव पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं

भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहा सम्पद्यताम् वृद्धिः ॥ २ ॥ अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः ॥ ३ ॥ (द्वितीयगोत्राः) मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनम् स्वाहा सम्पद्यतां वृद्धिः ॥ ४ ॥ ( अथासनदानम ) सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां ओंभूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यताम् वृद्धिः नान्दीश्राद्धे क्षणौ

---

भवेत् । ( वसिष्ठोऽपि ) पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहगणस्य त्विति ॥ नन्वेकदिनकरणं दिनत्रयाशक्तौ कर्माहे वेदितव्यम् । इतिचेत् ( तदपिन ! ) तत्रापि पूर्वेद्युरेवविहितत्वात् । तथा च पृथक्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥ तान्त्रिकमित्येकदिने विशिष्टविधिः । ( वृद्धमनुरपि ) अलाभे भिन्नकालानां नान्दीश्राद्धत्रयंबुधैः । पूर्वेद्युरेव कर्तव्यं पूर्वान्हे मातृपूर्वकम् । यत्त्वेकदिनएवात्राचरन्ति तद्वचनादर्शननिवन्धनम् । जातिकर्मादिविषयं वेत्यविरोधः । इति । तथा च ( गृह्यसूत्रे ) अथापरेद्युर्देवानाम । पूर्वेद्युर्नान्दीश्राद्धं कृत्वापरेद्युर्देवानाम् । [ प्रयोगपारिजाते अत्रिः ] पूर्वाह्णे तु भवेद्वृद्धिर्विनाजन्मनिमित्तिकम् । पुत्रजन्मनिकुर्वीत श्राद्धंतात्कालिकंबुधः । [ गृह्यसूत्रे ] । तेषुपूर्वेद्यु रेववृद्धिपूर्तेषु । यच्चगृह्यपरिशिष्टे । महत्सुपूर्वेद्यु स्तदहरल्पेषु । पुंसवने च सीमन्ते अन्न चौलोपनयने । गोदाने स्नानउद्वाहे नान्दीश्राद्धं पुरोहितम् । इत्यादिवचनमवलम्ब्य कर्माहदिन

क्रियेताम् । ओं तथा प्राप्नुतां भवन्तौ प्राप्नुवावः ॥ १ ॥ अमुकगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनाम् ओं भूर्भुवः स्वः इदमासनं सुखासनम् स्वाहा नमः सम्पद्यताम् वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् ॥ ओं तथा प्राप्नुतां भवन्तौ प्राप्नुवावः ॥ २ ॥ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानाम् ओं भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यताम् वृद्धिः नान्दीश्राद्धे०॥३॥ द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानाम् । ओं भूर्भुवः स्वः इदमासनं सुखा० ॥ ४ ॥ ( ततोगन्धादिदानम् ) सत्यवसुसंज्ञकेभ्यो-

---

एवाचरन्ति तदप्ययुक्तम् । जातकर्मादिसंस्कारेष्वेव सद्योवा पूर्वेद्युर्वेत्युक्तत्वात् । [सद्योविधिरापद्विषयः] निषेधस्यबलीयस्त्वात् । ( स्मृतौ ) एकविंशत्यहयज्ञेविवाहे दशवासराः । त्रिषट्चौलोपनयने नान्दीश्राद्धंविधीयते ॥ पुत्रजन्मनिमित्ते तु तत्काले निशि वा दिवा । भुक्तोव्रतोपवासी वा वृद्धिश्राद्ध तु कारयेत् ॥ इति । विशिष्टवचनादेवजातकर्म्मादौ सद्यः श्राद्धमन्यत्रपूर्वेद्युरेव । अतश्चा विहितेष्वपिपूर्वेद्युरेव इतिनान्दीश्राद्धकालनिर्णयः । ( सङ्कल्पविधिनेति । ) ( संवर्तः ) समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् । अपि सङ्कल्पविधिना तस्मिन्काले विधीयते । पात्रे भोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते तत्प्रयुक्तोविधिर्यस्तु स तेन व्यपदिश्यते । तावन्मात्रेण संबद्धं श्राद्धं सांकल्पमुच्यते । तत्रैतावान्विशेषोक्तो व्यासेन ( प्रयोगपारिजाते ) सङ्कल्पं तु यदा कुर्य्यान्नकुर्य्यात्पात्रपूरणम् । नावाहनाग्नौ करणं पिण्डांश्चैव न निर्वपेत् । इति । ( पात्रपूरणं अर्घ्यदानम् ) आवाहनस्य समन्त्र-

विश्वेभ्योदेवेभ्योनान्दीमुखेभ्यः इदं गन्धाद्यर्च्चनं स्वाहा सम्पद्यतां वृद्धिः ॥ १ ॥ अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्योनान्दीमुखीभ्यः इदं गन्धाद्यर्च्चनं स्वाहा सम्पद्यतां वृद्धिः ॥ २ ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनान्दीमुखेभ्यः इदं गन्धाद्यर्च्चनं स्वाहा स०॥३॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनान्दीमुखेभ्यइदं गन्धाद्यर्च्चनं स्वाहा सम्पद्यतां वृद्धिः ॥४॥ (ततोभोजननिष्क्रयद्रव्यदानम्) सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनान्दीमुखेभ्योब्राह्मणयुग्मभोजनपर्य्याप्तमन्नं तन्निष्क्रयीभूतं किञ्चिद्धिरण्यं दत्तममृतरूपेण स्वाहा सम्पद्यताम् वृद्धिः ॥ १ ॥ अमुकगोत्राभ्योमातृपितामही-

---

कस्य निषेधोनत्वावाहनस्वरूपस्य। तदभावेदेवता सान्निध्याभाव प्रसङ्गात्। तत्रावाहनमन्त्रमनुक्त्वैव सत्यवसुसंज्ञकान्विश्वान्देवानावाहयामीत्येतावदुक्त्वा देवावाहनं कार्य्यम् ॥ पित्राद्यावाहनमप्येवमेव। पिण्डाँश्चैवेत्यत्र च शब्देनोच्छिष्टपिण्डस्यापि निषेधः। (अतएव स्मृत्यन्तरे) सङ्कल्पं तु यदाकुर्यान्नकुर्य्यात्पात्रपूरणम्। विकिरश्च न दातव्यः पिण्डाँश्चैव न निर्वपेत् ॥ अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् सतदा वाचयेद्विप्रान्सकलान्सिद्धिरस्त्विति ॥ एवमनुष्ठानेशाठ्यासम्भवे सति मुख्यकल्पानुष्ठानफलं भवति। (तथा च स्मृत्यन्तरे) श्राद्धानुकल्पं यः कुर्य्याज्जात्ववस्थाद्यपेक्षया। श्राद्धांशेनाप्यवाप्नोति मुख्यश्राद्धफलंनरः। इति। (तथा च भविष्यपुराणे) पिण्डनिर्वापणं कुर्य्यान्न वा कुर्य्यान्नराधिप। वृद्धिश्राद्धे महाबाहो कुलधर्मानपेक्ष्यतु। (साम्नः) पिण्ड निर्वापणं नित्यम्। तथा च (श्राद्धकाशिकायाम् निगमः।) योऽ

प्रपितामहीभ्योनान्दीमुखीभ्योब्राह्मणयुग्म० ॥ २ ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनान्दीमुखेभ्योब्राह्मणयुग्मभोज० ॥ ३ ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनान्दीमुखेभ्योब्राह्मणयुग्मभोज० ॥४॥ (ततः सक्षीरमुदकदानम्) सत्यवसुसंज्ञका विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम् । अमुकगोत्रामातृपितामहीप्रपितामह्यः प्रीयन्ताम् । अमुकगोत्राः पितृपितामहप्रपितामहाः प्रीयन्ताम् ॥ ( द्वितीयगोत्राः ) मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः प्रीयन्ताम्(अथाशीषोग्रहणम्) गोत्रं नो वर्द्धताम् वर्द्धताम्, वोगोत्रम् दातारोनोऽभिवर्द्धताम्(अभिवर्द्धतांवोदातारः)वेदाश्चनोऽभिवर्द्धताम् । (वर्द्धन्तांवोवेदाः)संततिर्नोवर्द्धताम् (वर्द्धतां वः संततिः)श्रद्धा च नोमाव्यगमत् । (माव्यगमद्धः श्रद्धा)बहुदेयं च नोऽस्तु

ग्नौ तु विद्यमाने हि वृद्धौ पिण्डान्न निर्वपेत् । पतन्ति पितरस्तस्य नरके सतुपच्यते । तस्मात्साग्नेः पाकेनाग्नौकरणं पिण्डं निरग्नेरामान्नेनेति व्यवस्था अत्र विशेषोऽपि श्राद्ध काशिकायां । पिण्डहीनेपिकर्तव्यं विकिरं पात्रपूरणम् । अग्नौकरणमर्घंचेत्यैतच्छ्राद्धचतुष्टयम् । वर्जने पिण्डहीनेपि कर्तव्यं विकिरं पात्रपूरणम् । कुशान् स्थाप्य स्वधां कुर्य्यात्क्षिपेदग्नौ जलेपिवा । "यत्तुसङ्कल्पयंदा... नकुर्य्या...पात्रपूरणम् । इति तच्छ्राद्धान्तरविषयमपिण्डकयथादेश कुलाचारविषयं वा ॥ वृद्धिश्राद्धे कुलाचारदेशकालाद्यपेक्ष्यहीति भविष्यद्वाक्य शेषात् ॥ यज्ञादौक्रियमाणनान्दीश्राद्धेऽमूलादर्भाः मङ्गलकर्म्मादौ क्रियमाणे दर्भास्थाने दूर्वा एव कुशस्थाने दुर्वाः

अस्तुवोवहुदेयम् ) अन्नं च नो वहुभवेत् (भवतुवोवहु अन्नम् अतिथींश्च लभामहे । लभन्तां वोऽतिथयः) याचितारश्च नः सन्तु (संतुवोयाचितारः) एता आशिषःसत्याः सन्तु । ( सन्त्वेताः सत्याशिषः ) ( ततोदाक्षिणादानम् ) सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनान्दीमुखेभ्यः कृतस्य ना-

---

स्युर्मङ्गलस्याभिवृद्धये इति ( सं०भास्करीयवचनात् । ) ऋजवो-दर्भाः । इति ( सूत्रम् ) पित्र्ये द्विगुणाः प्राप्नुवन्ति ते च प्रतिषि-ध्यन्ते । ऋजवः प्रत्येतव्याः । तथा च (कारिका) ऋजून्दर्भान्समू-लांस्तु दत्वैषामासनेषु तु । दर्भशब्दोऽत्रदूर्वादिद्रव्योपलक्षको न समूलत्वज्ञापकः। तेनात्र दूर्वासाहचर्य्यादमूलाऋजुदर्भाभवन्ति इति च (श्राद्धकाशिका०) तथा च पुराण समुच्चये। दधिदूर्वाक्षत-मधुरान्नमिश्रैः । सत्यवस्विति । ( प्रयोगपारिजातेशङ्खः ) इष्टि-श्राद्धे क्रतुर्दक्षौ अष्टम्यां कामकालकौ । नान्दीमुखे सत्यवसू काम्ये च धूरिलोचनौ । पुरूरवाद्रौं ज्ञातव्यौ पार्वणे समुपस्थिते । नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत् । शुभार्थी प्रथमान्तेन वृद्धौ संकल्पमाचरेत् । न षष्ठ्यायदिवाकुर्य्यान्महादोषोभिजायते । अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् । अनाम्नांचातिलाद्यैश्च नान्दीश्राद्धं च सव्यवत् ॥ (नान्दीमुख्य इति) मातृपार्वणे नान्दी-मुख शब्दे ङीष् विकल्पान्नान्दीमुख्य इतिनान्दीमुख इति पक्षद्वयमु-च्चारे । अनादिसंज्ञात्वेन नखमुख संज्ञायाम् इतिनिषेधानवतारात् (स्वाहेति ) न स्वधां प्रयुञ्जीत । इति सूत्रेण स्वधोदाहरण प्रति-षेधात् ॥ स्वधानमः पदस्थाने स्वाहा कारोभवेदिहेति कारिकावच नाच्च । [ पाद्यमिति ] [ पाद्यमित्यादि शब्दत्रयोपादानमादरा र्थमेव ] अभ्यासे भूयांसमर्थंमन्यन्ते "इति यास्कोक्तेः" । वस्तु तस्तु इदं वः पाद्यमेतावदेव वाक्यं रुद्रकल्पद्रुमादिपद्धतिषु ॥ युक्तं

न्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलानि-ष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ॥ १ ॥ ( यवमूलमार्द्रकम् ) अमुकगोत्राभ्योमातृपितामहीप्रपिता-महीभ्योनान्दीमुखीभ्यः कृतस्य नान्दी० ॥ २ ॥ अमुक-गोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनान्दीमुखेभ्यः कृतस्य नान्दी० ॥ ३ ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्ध-प्रमातामहेभ्यः सपत्नीकेभ्योनान्दीमुखेभ्यः कृतस्य० ॥४॥ (ततोनान्दीश्राद्धंसुसंपन्नं) इति पठित्वा। ओं व्वाजेऽवाजे वतऽवाजिनोनोधनेषु ऽविप्राऽअमृताऽऋतज्ञाः। अस्यमद्ध्वः पिवतमादयद्ध्वन्तृप्तायात पथिभिर्देवयानैः । आमावाजस्य प्रसवोजगम्यादेमे द्यावापृथिवी ऽविश्वरूपे । आमागन्ता-म्पितरा मातरा चामा सोमोऽमृतत्वेन गम्यात् । वाजिनो-वाजजितो वाजऽं ससृवाꣳसो बृहस्पतेर्भागमवाजिघ्रत नि-मृजानाः इति मन्त्रद्वयेन विसर्जयेत् ॥ अस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तोयोविधिः सउपविष्टब्राह्मणवचनात् नान्दीमुख प्रसादात्सर्वः परिपूर्णोस्तु ॥ ( अस्तुपरिपूर्णः ) ( इतिना-न्दीश्राद्धम् । )

---

चैतत् । शब्दत्रयोपादानं त्वनर्थकमेवेति स्मार्तप्रभुकारः । ( आभ्यु-दयिकेप्रदक्षिणमुपचारः इति सू० ) अभ्युदये यच्छ्राद्धं तदाभ्युद-यिकम् । प्रदक्षिण ग्रहणात् यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन कर्तव्यतादि भवेत् । तथा च ( कारिकाकारः ) प्राङ्मुखोऽत्रोपवीतीस्यादुपचाराः प्रदक्षिणम् । पूर्वाह्णे इति सू० ।

# ॥ अथ आचार्य्यादिवरणम् ॥

तत्रादौ सङ्कल्पः ॥ देशकालौ सङ्कीर्त्य । अमुक याागाङ्गं आचार्य्यब्रह्मऋत्विजां वरणमहं करिष्ये इति संकल्प्य । स्वयं प्राङ्मुखस्सन् आचार्य्यकर्म्मकर्तुं योग्यं ब्राह्मणं उदङ्मुखमुपवेश्य पादप्रक्षालनादिभिः सम्पूज्य एक-

---

नापरान्हे । यवैस्तिलार्थाः । यस्तिलार्थः ससर्वोयवैः कर्तव्यः । तिलकार्य्यं यवैः कुर्य्याद्युग्मानत्रनिमन्त्रयेत् । तिलोसीति पदस्थाने यवोसीतिपदं वदेत् । विस्तृतविधिस्तु श्राद्धकाशिकायां द्र० । युग्मेति । युग्मानाशयेदिति सूत्रम् । युग्मान् द्विचतुरादीन् भोजयेत् इति भाष्यकारः । द्राक्षामलकेति । द्राक्षामलकमूलानि यवान्वाथनिवेदयेत् । तानेव दक्षिणार्थंतु दद्याद्विप्रेषु सर्वदा । इति ( ब्रह्मपुराणे ) द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां युवाभ्यां सम्प्रददे इत्यादिप्रयोगः । नेकैकस्यात्र दीयत इत्युक्तेः इति श्राद्ध काशिकायां महानदीषु सर्वासु तीर्थेषु च गयां विना जीवत्पितापि कुर्वीतश्राद्धं पार्वणधर्मवत् । इति । नजीवत्पितृकः कुर्य्याच्छ्राद्धमग्निमृतेद्विजः इति वचनात् साग्नेर्जीवत्पितृकस्यापि श्राद्धविधानम् । इतिदिक् ।

[ इतिश्रीभाष्याचार्य्यसूनुसङ्कलितशतचण्डीयज्ञविधानस्य-
प्रथमखण्डेसविचारनान्दीश्राद्धक्रमः ॥ ]

( वरणमिति ) ऋत्विजोवृत्वा मधुपर्कमाहरेत् इति ( शान्तिसारे ) मधुपर्कानन्तरमेव मण्डपप्रवेशो न प्राक् । प्रवेशानन्तरकार्य्याणामाचार्य्याद्यधीनत्वात् । इति । मधुपर्कपूजानन्तरमेव ऋत्विजः कर्म्म कुर्वन्ति । इत्यप्याह ( शान्तिसारे विश्वामित्रः )

ऋत्विक् देयद्विगुणवस्त्रकुण्डलांगुलीयकादीनि गृहीत्वा। देशकालौ संकीर्त्य, अमुकप्रवरान्वितं अमुक गोत्रं अमुक नामानं अमुकशाखाध्यायिनं अमुकप्रवरान्वितअमुकगोत्रोहं अमुकयागकर्मणि एभिश्चन्दनवासोलङ्करणादिभिराचार्य्यत्वेन त्वामहं वृणे। इत्युच्चार्य्य वृतोस्मि इति तेनोक्ते॥ आचार्यस्त्वं यथा स्वर्गे शक्रादीनां वृहस्पतिः तथा त्वं ममयज्ञेऽस्मिन्नाचार्य्योभव सुव्रत ॥ ओं वृहस्पते अतियदर्य्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसऽऋतप्रजाततदस्मासु द्रविणन्धेहिचित्रम्॥ इति तं प्रार्थयेत्॥ एवमेव वस्त्रकुण्डलकादीनि गृहीत्वा। देशकालौ सङ्कीर्त्य। कृताकृतावेक्षणार्थं ब्रह्मकर्मकर्तुममुकप्रवरान्वितं…एभिश्चन्दनवासोऽलङ्करणादिभिर्ब्रह्मत्वेन त्वामहं वृणे। इति उच्चा-

---

सम्पूज्य मधुपर्केण ऋत्विजः कर्म्म कारयेत्। अपूज्य कारयेत्कर्म्म किल्विषेनैव युज्यते। इति। (शान्तिमयूखेऽपि) मधुपर्केण सम्पूज्य शुक्लमाल्याम्बरानुलेपनः सपत्नीकऋत्विक्सहितो भद्रङ्कर्णेभिरिति वेदघोषेण मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेदिति। (जलाशयविधौ मात्स्ये) पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनम्। इत्यादिना पुण्याहवाचनानन्तरं मण्डपनिर्माणमुक्त्वा शुभास्तत्राष्टहोतारइत्यादिवचनेन ऋत्विग्वरणंचोक्त्वा यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम्। इति। तथाच (शान्तिसारे) मधुपर्कोत्तरं कर्तव्यम् इति विलिख्य। यजमानः इत्यारभ्य यागमण्डपम् इति। सर्वत्र शतचण्डीप्रयोगे। अर्चितास्ते द्विजश्रेष्ठाः। कृतस्वस्त्ययनो-

र्य्यं वृतोस्मीतितेनोक्ते । यथा चतुर्मुखोब्रह्मा सर्ववेद विशारदः । तथा त्वं ममयज्ञेऽस्मिन् ब्रह्माभवद्विजोत्तम ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोऽवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्च योनिमसतश्च ठिवः ॥ इति प्रार्थयेत् ॥ एवमेव ऋत्विजोवृत्वा । तान् प्रार्थयेत् । ( प्रार्थना ) भगवन् सर्वकर्मज्ञ सर्वधर्मवृतां वर । वितते मम यज्ञेऽस्मिन् ऋत्विक् त्वं भव सुव्रत । एवमेव बह्वृचं वृणुयात् । वरणानन्तरं प्रार्थनाकार्या । ऋग्वेदः पद्मपत्राक्षोगायत्र्यः सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्

---

मन्त्रैर्वेदवादित्रनिस्वनैः । चण्डिकामण्डलं चापि परिवारविभूषितम् पश्चिमद्वारमार्गेण प्रविश्य क्रतुमण्डपम् । ददाति पूजनेऽनुज्ञां देशिकाय कृताञ्जलिः इति । "अर्चितः कृतः" इत्यादिभूतकालद्योतकपदोपादानात् बहुतरग्रन्थेषु एवं विधक्रमदर्शनाच्च मधुपर्कान्तं कर्म्मकृत्वैव मण्डपप्रवेशो नार्वाक् । पट्टकूले तथा शुद्धे परिधायाथ वाससी अङ्गणे गृहशालायामथवा गौणमण्डपे । इति ( परशुराम वचनाच्च ) मधुपर्कान्तं कर्म्म गृहे कर्म्मकुर्य्यां गौणमण्डपे वा कार्य्यमिति दिक् ॥ नान्दीश्राद्धानन्तरं ऋत्विगादिवरणं ततोमधुपर्कार्चनं । इत्येवक्रमः प्रशस्तः ॥ देयेति । वस्त्रयुग्मं तथाप्पूरं ( अप्पूरं जलपात्रम् ) केयूरं कर्णभूषणं अङ्गुलीभूषणं चैव मणिवन्धस्य भूषणं कण्ठाभरणयुक्तानि प्रारम्भे धर्मकर्म्मणः । पुरोहिताय दत्वाथ ऋत्विग्भ्यश्चापि दापयेत् ॥ भोजनं भोजनाधारः छत्रोपानत्कमण्डलु । आसनं वसनं मुद्रा कर्णभूषोपवीतकम् एतद्दशविधं देयं पदं वरणसिद्धये । पदाभावे त्रयं देयं पात्र वस्त्राङ्गुलीयकम् इति ( रुद्रकल्पे )॥

त्वं च मखेभव । ओं अग्निमीले पुरोहितं यज्ञस्य देव-मृत्विजम् । होतारं रत्नधातमम् ॥ ( इति प्रार्थ्य ) यजु-र्वेदिनं वृणुयात् । ततः ( प्रार्थना ) यजुर्वेदः कातराक्षस्त्रै-ष्टुभोविष्णुदैवतः । काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव । ओं इषेत्वोर्ज्जेत्वा व्वायवस्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमायकर्म्मणऽआप्यायद्ध्वमध्न्या इन्द्राय भाग-म्प्रजावतीरनमीवाअयक्ष्मामावस्तेन ईशत माघशर्ठं सोद्ध-ग्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्य पशून्पाहि ॥ इति ( प्रार्थ्य ) सामगं वृणुयात् । ततः ( प्रार्थना ) सामवेदस्तु पिङ्गाक्षोजाग्रद्रै शुक्रदैवतः । भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव। ओं अग्नआयाहि व्वीतये गृणानो हव्य दातये । निहोता सत्सि वर्हिषि । इति ( प्रार्थ्य । ) अथ-र्वपाठिनं वृत्वा ( प्रार्थयेत् ) अथर्वेद वृहन्नेत्रानुष्टुभोरुद्र-दैवतः । वैशम्पायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये । शंय्योराभिस्रूवन्तु नः ॥ इति । एवं सदस्यादीनपि वृत्वा ब्राह्मणानामग्रे अञ्जलिं वध्वा प्रार्थना कार्य्या । ( प्रार्थना । ) ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः देयानां च दातारः पातारः सर्वदेहिनां । जपयज्ञैस्तथाहोमैर्दानैश्च विविधैः पुनः । देवानां ऋषीणां च तृप्त्यर्थं पावनी कृताः । येषां देहे स्थिता वेदा पावयन्ति जगत्त्रयम् । रक्षन्तु सततं ते मां जपयज्ञैर्व्यवस्थिताः । ब्राह्मणाजङ्गमं तीर्थं त्रिषु लोकेषु

विश्रुतम् । तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिनोजनाः । पावनाः सर्व्ववर्णानां ब्राह्मणाब्रह्मरूपिणः । सर्वकर्म्मरतानित्यं वेदशास्त्रार्थकोविदाः । श्रोत्रियाः सत्यवाचश्च ग्रहध्यानरताः सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः । अंगीकुर्वन्तु कर्म्मैतत्कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्तामन्त्रार्थे स्थिरबुद्धयः । अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । मन्त्रध्यानरतानित्यं प्रसन्नमनसः सदा । इत्यादि ॥

# ॥ अथ मधुपर्कविधिः ॥

अर्घ्यासनहरणम् ॥ साधु भवानास्तामर्च्चयिष्यामो-भवन्तम् । इति यजमानोऽर्चनीयं प्रतिवदाति । अर्घ्यः । "अर्च्चनीयः" । इति प्रतिवदेत्। ततो"विष्टरोविष्टरोविष्टरः"

शुभास्तत्र होतारोद्वारपालास्तथाष्टवै । अष्टौ तु जापकाः कार्य्या ब्राह्मणावेदपारगाः [ प्राचीनपद्धतौ ] अष्टौ होतारः अष्टौ जापकाः अष्टौ द्वारपालाः गुरुश्चैवं पंचविंशतिः ऋत्विजोभवन्ति । अत्राशक्तो अष्टौ होतारश्चत्वारो जापकाश्चत्वारो द्वारपाला गुरुश्चेति सप्तदश अत्राप्यशक्तौ चतुरोहोतॄन् चतुरो द्वारपालान् चतुरो जापकान् गुरुं चेति त्रयोदश पञ्चकुण्डीपक्षे पञ्चविंशतिरित्युत्सर्गमयूखे । एककुण्डीपक्षे तु ऋत्विजां सङ्कोचेनापि निर्वाहोज्ञेय इति ( मदनरत्नादयः ) वृताः कुर्वन्ति ये यज्ञमृत्विजोयाजकाश्च ते । इति ( कात्यः ) योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते यश्च स्वं देयं त्यजति स स्वामी । मातृपूजनं नान्दीश्राद्धं च कृत्वा आचार्य्यं वृत्वा द्वात्रिंशत् षोडशाष्टौ वा वृत्वा तान्सम्पूजयेन्मधुपर्कादिना सदस्यवरणमप्यत्रेति त्रिविक्रमादयः । अन्ये सदस्यवरणं नेच्छन्ति प्रयोजनाभावात् ।

इति यजमानपुरुषेणोक्ते यजमानोविष्टरं हस्ते गृहीत्वा प्रति-गृह्यताम्" इत्यर्हणीयायप्रयच्छति । ततोर्हणीयोयजमानस-काशात् ॥ उभाभ्यां हस्ताभ्यां विष्टरं पञ्चविंशाति कुशमयं तूष्णीं प्रतिगृह्य आसने निधाय तदुपर्य्युपविशाति ॥ ओं वर्ष्मोस्मि समानानामुद्यतामिव सूर्य्यः इमन्तमभितिष्ठामि योमाकश्चाभिदासति इत्यनेन मंत्रेण । ततः "पाद्यं पाद्यं पाद्यं" इति तत्पुरुषेणोक्ते "प्रतिगृह्यताम्" इति यजमानेन चोक्ते यजमानसकाशात् पाद्यं प्रतिगृह्य भूमौ निधायाञ्ज-लिनाजलमादाय दक्षिणं पादंप्रक्षालयति ॥ ओं विरा-जोदोहोसि विराजोदोहमशीय मयि पाद्यायै विराजोदोह इत्यनेन । वामपादप्रक्षालनमपि अनेनैव मन्त्रेण कुर्य्यात् । ततः पूर्ववद्द्वितीयं विष्टरं गृहीत्वा भूमौ निधाय तस्योपरि पादौ करोति । ओं वर्ष्मोस्मीति मन्त्रेण । ततोअर्घोअर्घो अर्घः इति तत्पुरुषेणोक्ते प्रतगृह्यतामिति इति य० अर्ह-णीयश्च यजमानसकाशात् अर्घ्यं प्रतिगृह्णाति । आपस्थ-युष्माभिः सर्वान्कामानवाप्नवानि इति मन्त्रेण। तत ऊर्ध्वं शिरसाऽभिवन्द्य प्रागुदग्मध्ये निनयन् अभिमन्त्रयेत् । समुद्रंवः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टास्माकं वीरामापरासेचिमत्पय इत्यनेन मन्त्रेण । ततो यजमान आचमनीयोदकपात्रहस्तः आचमनीयम् ३ इत्यन्येनोक्ते प्रतिगृह्यतामित्याचार्य्यायाचमनीयं ददाति । ततोऽर्हणीयः प्रतिगृह्णामीत्युच्चार्य्य आचामति। ओं आमागन्यशसासंसृज

सृजᳲवर्च्चसातम्माकुरु प्रियम्प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्। इति मन्त्रेण सकृत् द्विः तूष्णीं आचामति। कांस्यपात्रस्थं कांस्यपात्रपिहित दधिमधुघृतात्मकमधुपर्क्कं हस्ते कृत्वा "मधुपर्कों मधुपर्कों मधुपर्क" इत्यन्येनोक्ते मधु-पर्कः प्रातिगृह्यताम् इति यजमानोवदेत्। ओं मधुपर्कं प्रतिगृह्णामीत्यभिधाय। यजमानहस्तस्थमेवतत्पात्रमुद्घाट्य (ओं मित्रस्य त्वा चक्षुषा प्रतीक्षे( इति मंत्रेण वीक्ष्य ओं देवस्यत्वा सवितुः प्रसवेऽश्विनोर्वाहुभ्याम्पूष्णोहस्ता-भ्याम् प्रतिगृह्णामीत्यनेन प्रतिगृह्य सव्ये पाणौ निधाय। दक्षिणानामिकया। ओं नमः श्यावास्यायान्यशने यत्तऽ आविद्धं तत्ते निष्कृन्तामि। इत्यनेन प्रादाक्षिण्येन मधुपर्कं सकृदालोड्य किंचिद्भूमौ निःक्षिप्य पुनरेवं द्विवारमालोड्य भूमौ निःक्षिपेत्। ततः ओं यन्मधुनोमधव्यं परमᳲ रूप-मन्नाद्यं तेनाहं मधुनोमधव्येन परमेण रूपेणान्नाद्येन पर-मोमधव्योऽन्नादोऽशानीत्यनेनानामिकाङ्गुष्ठाभ्याम्प्राश्य। पुनरेवं वारद्वयं प्राश्य शेषभुग्भ्योदद्यात्॥ ततः स्मार्तवि-धिनाचम्येन्द्रियाणि संस्पृशेत्। तद्यथा। ओं वाङ्मआस्ये-ऽस्तु। इति कराग्रेण मुखालम्भनम्। ओं नसोर्मे प्राणोऽस्त्विति दक्षिणवामनासारन्ध्रद्वये। ओं अक्ष्णोर्मे चक्षुर-स्त्विति दक्षिणोत्तरचक्षुषी। ओं कर्णयोर्मेश्रोत्रमस्त्विति कर्णयोः। ओं वाह्वोर्मे बलमस्त्विति वाह्वोः। ओं ऊर्वोर्मे ओजोस्त्विति युगोर्वोः। ओं अरिष्टानि मेऽङ्गानि तनूस्तन्वा

मे सह सन्त्विति शिरः प्रभृतीनि सर्वांगान्युभाभ्यां हस्ताभ्यामालभ्याचामेत् ॥ ततः ओं "गौगौंगौं" इत्यन्येनोक्ते यजमानेन च प्रत्युक्ते । ब्राह्मणः । ओं मातारुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय मागामनागामादितिं वधिष्ट ममामुष्य यजमानस्य च पाप्माहतः । इति वदेत् ॥ उत्सृजत तृणान्यत्तु इत्युच्चैर्ब्रूयात् ( इति यजुर्वेदिमधुपर्क विधिः ) ।

ततः आचार्य्यः । यदावध्नन्दाक्षायणाहिरण्यꣳ शतानीकाय सुमनस्यमानाः । तन्मऽआवध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ येनवद्धोवलीराजादानवेन्द्रोमहावलः । तेन त्वां प्रतिवध्नामि रक्षे माचल माचल । इति मन्त्राभ्याम् दम्पती हस्तयोः कङ्कणबन्धनं शिरसि कुङ्कुमेन तिलकं च कुर्यात । काण्डात्काण्डादिति दूर्वयामार्जनम् च कुर्यात् ॥

## ॥ अथ मधुपर्कविचारः ॥

ऋत्विजोवृत्वा मधुपर्कमाहरेत् । इति गृह्यसूत्रात् वरणानन्तरं मधुपर्कप्रदानम् इत्युपलभ्यते । अतो तद्विधिः प्रदर्श्यते । षडर्घ्याभवन्ति आचार्यऋत्विक्वैवाह्योराजाप्रियः स्नातक इति । ये दक्षिणापरिक्रीताः कर्म्माणि कुर्वन्ति ते ऋत्विजः पुनर्वक्ष्यमाणा एवार्घ्याः न ततोन्यत्र इति ( कर्काचार्यः ) यागंकरिष्यन्तएवर्त्विजोऽर्हयेयुः इति ( जयरामः ) यज्ञं करिष्यन्तोयजमानः (ऋत्विजः) याजकान् अर्हयेयुः इति (हरिहरः) (गदाधरस्तु) वक्ष्यमाणास्त्वृत्विज इति व्याख्यानावसरे ऋत्विजस्तु वक्ष्यमाणा यागकाले एव पूजनीया न ततोऽन्यत्र । इदं सूत्रं हरिहरणान्यथाव्याख्यातम्

इत्याह ॥ ( आसनहरणमिति ॥ ) आसनमाहार्य्याह साधु० भवन्तमिति । सूत्रम् ॥ ( आसनं वारणादिदारुमयं पीठादि अनुचरैरानाय्य आह = ब्रवीति ) "अर्चक" इति शेषः । शुद्धासनलक्षणं प्राह (मरीचिः) शणसूत्रादिनीतं च निर्मितं शोधितैः शरैः । मुख्यं स्थूलतमं रम्यं प्राहुः शुद्धं सुखासनम् ॥ तथाच (पराशरः) सिंहासनं सुवर्णादिधातुना निर्मितं शुभम् ॥ दारुभिर्निर्मितंचाथ शरैर्वा शुद्धमासनम् ॥ दारुभिरिति शुद्धैर्यज्ञीयकाष्ठचन्दनदेवदारुप्रभृतिभिरिति भावः ) ( अर्च्चयिष्यामः ) इति बहुवचनं भार्य्यापुत्रादिसर्वगृह्यापेक्षम् । [ तथा च श्रुतिः] यत्र वा अर्हन्नागच्छति सर्वगृह्या एव तत्र चेष्टयन्तीति । यजमान पुरुषेणोक्ते इति । अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि इति [ गृह्य परिशिष्टे ] आहरन्तिविष्टरं…का ँ स्येनेति सूत्रम् ॥ आहरन्ति स्वपुरुषाएव विष्टरमुपवेशनार्थं इति जयरामः ॥ आनयन्ति यजमान पुरुषा इति हरिहरः । आहरन्ति इति बहुवचनादर्घयितुः पुरुषा विष्टरादीनि आहरन्ति इति"गदाधरः"उच्चारणार्थे बहुवचनम् इति कर्काचार्य्यः । [ विष्टरमिति ॥ ] तत्राह ( मनुः ) पूजकोयजमानस्तु दत्वादौ शुद्धमासनम् । तस्योपवेशनार्थं तु विष्टरं प्रददेत्पुनः । ( कारिकायाम् ) विष्टराद्युपकल्प्यैनमुपवेश्यासने शुचौ । अत्रोपकल्पितं पूर्वं विष्टरं त्रिर्निवेदयेत् ॥ (विष्टरलक्षणमाह भर्तृयज्ञः) विष्टरस्त्रिवृदरत्निमात्रः कौशोरज्जुविशेषः । प्रादेशमात्रं त्रिवृतं कौशं काशनिर्मितं वेति रेणुकः । पञ्चाशताभवेद्ब्रह्मा तदर्द्धेन तु विष्टरः । ऊर्ध्वकेशोभवेद्ब्रह्मा लम्वकेशस्तु विष्टरः । दक्षिणावर्तं ब्रह्मा च वामावर्तस्तु विष्टरः इति ( गृह्यपरिशिष्टे ) पञ्चविंशति दर्भाणां वेण्यग्रे ग्रन्थिभूषितम् । विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्तितम् । इति वि० पद्धतौ । पञ्चविंशतिदर्भतरुणमयं कूर्चम् विष्टरमिति ( हरिहरभाष्ये ) पादयोरन्यमिति सूत्रे पादयोरन्यमिति वचनादत्रद्वयोराहरणमिति (भर्तृयज्ञः) विष्टरं त्रिर्निवेदयेत् । इति कारिकातः अन्यस्त्रिस्त्रिः प्राह इति सूत्रादपि । अर्चकादपरः

आनाय्य त्रिर्वदेत् । यत्तु "अर्चकादपरेण" इति व्याख्यानावसरे वि० प० टीकाकारेण दातृप्रतिगृहीत्रोर्भिन्नेन पुरोधसा उपाध्यायेन वेतिव्याख्यातं तच्चिन्त्यम् । यजमानपुरुषस्यापि यजमान भिन्नत्वात् तस्यैवोक्तिः कल्पनीया । आहरणकर्तुरेव वस्तुज्ञापनायोक्तिः समीचीना । मत्कृतविवाहपद्धतौ उपाध्याय आहइति तत्तु एतद्देशीयपरिपाट्यनुरोधेन । ( हस्तेगृहीत्वेति ) पाणिभ्यां विष्टरप्रतिग्रह इति हरिहरवचनात् । तदतीवमन्दं प्रमाणाभावात् ( इति गदाधरः ) [ प्रतिगृह्य ेति । ] प्रशस्तादुत्तमं दानं प्रतिगृह्णातिसत्तमः । प्रतिग्राह्युन्मुखीभूय विपर्य्ययमतोऽन्यथा । इति ( हारीतवचनात् ) दातुः प्रशस्तत्वसिद्ध्यै दानस्य चोत्तमत्वप्राप्त्यै उन्मुखीभूय प्रतिग्रहणं कार्य्यम् ॥ ( उपविशतीति ) ३ॐ वर्ष्मोस्मि०...... इति सूत्रात् । ग्रहणोपवेशनयोर्मध्ये मन्त्रः पठितः सलिङ्गादुपवेशने विनियुज्यते । लिङ्गं हि भवति इमंतमभितिष्ठामीति । एवमेवेतरेषां पञ्चानांत्रिर्निवेदनम् ॥ ( प्रक्षालयतीति ) आसीनायासने तस्मिन्पादयोर्विष्टरं तथा दद्यादन्यं ततोदाता पादौ प्रक्षाल्य यत्नतः । इति भृगूक्त्या पादौ प्रक्षाल्यान्य विष्टरदानम् पादयोरन्यं विष्टर आसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणंप्रथमम् । इति सू० ॥ सचायमुपदेशोनानुक्रमः प्रक्षाल्य हि पादौ विष्टरे क्रियेते । इति तस्मात्पाद्योत्तरकालं द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते । ( तथाचोत्तरसूत्रम् ) विष्टरआसीनायेति । तेनैकस्मिन्विष्टरे आसीनस्य पादप्रक्षालनं ततो द्वितीयविष्टरदानम् ॥ ( तथा चाचारचन्द्रोदये ) दत्वोपवेशनायादावासनं विष्टरं तथा । पादप्रक्षालनायाम्भः स्थितं ताम्रादिभाजने । पाद्यद्वयं विष्टरवद् दद्याद्दक्षिणसव्यतः । पाद्यान्ते विष्टरं देयं पूर्वेण विधिना पुनः ॥ पादार्थमुदकं कोष्णं ताम्रपात्रे च संस्थितम् । तेन प्रक्षालयेत्पादं विधिना च तथापरम् ॥ ( दक्षिणं प्रथममिति ) ब्राह्मणोदक्षिणं पादं पूर्वं प्रक्षालयेत्सदा । क्षत्रादिप्रथमं सव्यमिति धर्म्मानुशासनम् इति

(पद्मपुरा०) (अर्घमिति) अर्घशब्देन उदपात्रमेवेति (कर्काचार्य्यः) अर्घ्यतेऽनेनेत्यर्घः आपएवमन्त्रलिङ्गात् इति (जयरामः) गन्धादियुक्त-मर्घ्यं च प्रतिगृह्य निवेदितम् इति (कारिकाकारः) कांस्यपात्रं भवेद्विप्रे स्वर्णपात्रं तु भूमिपे। रौप्यपात्रं भवेद्वैश्ये लोहपात्रञ्च शूद्रके इति ( प्रतिवर्णं पात्रभेदोब्रह्मपुराणे ) ( शिरसेति ) दातुरर्घ्योऽर्घ्यमादाय तस्माच्छिरसि धारयेत्। मन्त्रान्ते सर्वकामः सन्किञ्चित्पुष्पादिकं युतम् इति ( कामधेनु ग्रारोक्तेः ) निनयन् इति गृहीत्वार्घं गुरुस्त-स्मात्पुष्पं दत्वा स्वमूर्द्धनि। करयुग्मेन तं भूयोमौलिपर्य्यन्तमानमेत् शनैरानस्यैशदिशि तं मन्त्रेण समुत्सृजेत्। [ मन्त्रेण समुद्रं व इत्यनेन ] [ प्रागुददग्वा निनयनम् इति [ वासुदेवः ] आचमनी-यमिति। आचामति······तनूनामितिसूत्रात् ॥ आचमनलक्षणम् पूर्वंप्रतिपादितं द्रष्टव्यम्। वीक्ष्येति। तथा च बृहत्पाराशरः। मधुपर्कं प्रतिगृह्य पीत्वा तं यस्तु सन्त्यजेत्। तेन पापं महाघोरं तं तु नाशु प्रतिग्रहेत्। न दोषोमनुरित्याह सम्प्रतीक्ष्य प्रतिग्रहे। आनीयमानमीक्षेत मित्रस्यत्वेति मन्त्रतः इति ( कारिकाकारः ] मधुपर्कलक्षणं च [ गृह्यसूत्रे ] दधिमधुघृतमपिहितं काँस्ये काँस्येनेति। ( दधिमधुघृतं कांस्यभाजने स्थितं कांस्यभाजने-नैवापिहितमाच्छादितमिति तस्यार्थः ) तथा च ( स्मृतिः ) संशोधितं दधिमधुकांस्यपात्रे स्थितं घृतम्। कांस्येनान्येन संछन्नं मधुपर्कमितीर्य्यते। शोधनञ्च ( बृहत्पाराशरेणोक्तम् )

दधिक्राव्णेति दध्नश्च वस्त्रान्निष्कासनञ्च यत्। मधुव्वातेति तिसृ-भिर्मधुनः शोधनं स्मृतम्। आज्यमग्नावधिश्रित्य वन्हिनाऽनुसृते घृते। घृतङ्घृतेति मन्त्रेण वस्त्रपूतञ्च शोधनम्। एतच्छोधनमेते-षां मधुपर्कविधौ मतम् ॥ अन्यत्र मधुपर्कात्तु वस्त्रपूतं हि केवलम्। ( केवलम्अमन्त्रकम् ) मधुपर्केदध्यादिपरिमाणमपि तेनोक्तम्। सर्पिश्च पलमेकन्तु द्विपलं मधु कीर्तितम् ॥ पलमेकं दधि प्रोक्तं मधुपर्कविधौ बुधैः ॥ सर्पिरेकगुणं प्रोक्तं शोधितं द्विगुणंमधु। मधुपर्कविधौ प्रोक्तं सर्पिषा न समं दधि। इति ( आपस्तम्बः )

शुद्धज्ञापनार्थं यजमानकरस्थमेव निरीक्षणं कार्य्यम् । निर्दुष्टं चेत्तदा प्रतिगृह्णीत अन्यथा अपद्रव्यं निस्सार्य्य ग्राह्यम् । निरीक्षणहेतुश्चोक्तः ( स्मृतिसारादिषु ) रोमभिस्तु भवेत्कुष्ठी मक्षिकाभिर्दरिद्रता । कीटकैश्च भवेदन्धस्तदर्थं हि निरीक्षणम् । गवां दुग्धे तु रोमाणि घृतमध्ये तु मक्षिकाः । मधौ च कीटकास्तुवै तदर्थं हि निरीक्षणम् । (अदृष्टफलं स्मृतिषु) पुंभिश्च यत्कृतं पापं बाल्ययौवनवार्द्धके । तत्सर्वं नाशयेत्पापं मधुपर्कोऽवकाशने । ( अवकाशने पिधानमुद्घाट्यावलोकने ) मधुपर्के दध्यलाभे पयोजलं वा प्रतिनिधिः । मध्वालाभे घृतं गुडं ( वेत्याश्वलायनः) दानखण्डे तु । दध्यलाभे पयः कार्य्योमध्वलाभे तथा गुडः । घृत-प्रतिनिधिं कुर्य्यात्पयोवा दधि वानघेति । ( बोधायनमते ) आस्तृतदर्भेषु सकृच्च मधुपात्रस्यासादनं विहितं परं विश्वपतिप्रयोगे प्रोक्षणीपात्रस्याप्यासादनमुक्तं तच्चिन्त्यं । गृह्यसूत्रे विष्णुभट्टि-प्रयोगेप्यनुक्तत्वात् । ह्रसीयसि पात्रे सम्भृत्य महत्तरेण पात्रेण पिधानं । सूत्रेण वेष्टनं कार्य्यम् इति ( गोपीनाथः ) परं कृतवेष्ट-नस्य निरीक्षणं कथं भवेदिति विचारयन्तु विज्ञाः । प्रतिगृह्येति । देवस्यत्वेति प्रतिगृह्णातीति सूत्रात् ॥ तथा च ( कारिका ) देव-स्यत्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः । आलोड्येति । सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौतीति सूत्रात । तथैव ( वामनपुराणे ) मधुपर्कं समादाय देवस्यत्वेति मन्त्रतः । दाता दत्तं प्रगृह्याथ सव्ये पाणौ निधापयेत् । दक्षिणहस्तानामिकया त्रिः समालोडयेद्वरः । तन्मूले ऽङ्गुष्ठमादाय मधुपर्कश्च सर्वगम् । ओं नमः श्यावास्यायेति मन्त्रेणैव विचक्षणः । इति । (निक्षिपेदिति) अनामिकाङ्गुष्ठ न चत्रिर्निरूक्षयति इति सूत्रम् । मधुपर्कैकदेशं पात्राद्बहिः क्षिपतीतिसूत्रार्थः) नमः श्यावास्यायेति षड्वारं मन्त्र-पाठः । विलोडनत्रये "त्रिवारं" विलोडनानन्तरं भूमिनिक्षेपणेऽपि त्रिवारं एवं कृत्वा षड्वारं ॥ मन्त्रपठनानन्तरम् "आलोडनभू-म्याक्षेपणयोः" अभिधानात् आह च ( योगीयाज्ञवल्क्यः ) सं-

विधाय करस्थं तं मन्त्रेणालोड्य निक्षिपेत्। त्रिस्त्रिवारं भाष्यबलान्मन्त्राभ्यासकृतिस्तथा। (अन्यत्रापि) प्रतिप्रवपणं कुर्य्यात्तथा प्रतिनिरूक्षणम्। मन्त्राभ्यासं सूत्रकारभाष्यकारनिरूपणात् इति (प्राश्येति) तस्य त्रिः प्राश्नाति यन्मधुनो······असानीति सूत्रम्। तस्यमधुपर्कस्यैकदेशमादाय। यन्मधुनो इति मन्त्रेण सकृत्प्राश्य पुनरनेनैव मन्त्रेण उच्छिष्टएव द्वितीयं प्राश्य तथैव तृतीयं प्राश्नाति। इति सूत्रार्थः तस्येत्यवयवलक्षणाषष्ठी। त्रिशब्दानुवृत्तौ पुनस्त्रिर्ग्रहणम्। एकद्रव्ये कर्म्मावृत्तौ सकृन्मन्त्रवचनशङ्काव्युदासार्थम्॥ मधुमतीभिर्वा प्रत्यृचम्। इति सूत्रात् आभिर्ऋग्भिर्वा प्राशयेत्) ततश्चैवम्। मधुव्वाता इति प्रथमम्। मधुनक्तमिति द्वितीयम्। मधुमान्न इति तृतीयम्। (पराशरः) यन्मधुनेति मन्त्रेण त्रिस्त्रिरर्घ्यः पिबेन्मधु। [ "मधु" मधुपर्कं नामैकदेशेनामग्रहणमितिन्यायात् ] उच्छिष्टस्यैव मन्त्रोच्चारणम्। ननूच्छिष्टः कथं मन्त्रोच्चारयेत्। सत्यम्। ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने। मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्। मधुपर्कभक्षणे उच्छिष्टाभावान्न मन्त्रोच्चारणे दोषः। मधुपर्कप्राशनफलं च (स्मृतौ) गङ्गोदकं पञ्चगव्यं मधुपर्कं कुशोदकम्। अन्तर्गच्छेत्तु यस्यांहोहित्वा सर्वाधिकारकृत्। इति। मधुपर्कशेषप्रतिपत्तिमाह (सूत्रकारः) पुत्राय०······उच्छिष्टं दद्यात् सर्वं वा प्राश्नीयात। इति। (आपस्तम्बेन व्यवस्था प्रदर्शिता) शिष्याय शेषमाचार्य्यः पुत्रायर्त्विक् प्रियाय च शेषं त्वतोवरोनोज्झेत्। प्राग्राजासंचरे त्यजेत्। सर्वं पुत्राय वा शेषं दद्युः शिष्याय तम्विना। दद्युः शिष्यं विना पूर्वेऽसञ्चरेद्युश्च सर्वतः। इति। (आचम्येति) ननु आचमनीयम्०······इत्यादिनाचमनविधिनाचान्तोऽपि पूर्वं "मधुपर्केनोच्छिष्टोभवति द्विज" इत्यादि स्मृतिबलात्। मधुपर्कं भक्षितेप्यशुचित्वाभावात्पुनराचमनविधानमसङ्गतम्। सत्यम्। अनाचान्तस्य प्राणायतन (इन्द्रिय) स्पर्शनं माभूदित्येतदर्थं पुनराचमनम्। इति आचमनं कृत्वेति भाष्ये यद्यपि एकवचनेन सकृदत्र जलपानं

प्राप्तम् । तथापि शास्त्रबलात् त्रिवारमेव पानं कर्तव्यम् आचमनं कृत्वा इत्यादिपदैस्त्रिवारमेव जलपानं लोके दृष्टत्वाच्च । लिखितं च (नरसिंहपुराणे) हस्तगं प्रथमात्तीर्थाद्दक्षिणात्त्रिः पिबेज्जलम् । अशब्दमनस्रावमवहिर्जान्वबुद्बुदम् । आचमनतीर्थमाह ( मनुः ) ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन । तीर्थान्याह ( योगियाज्ञवल्क्यः ) कनिष्ठा-देशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनु क्रमात् ॥ तथा च ( ब्रह्मपुराणे ) मूलरेखामुखाङ्गुष्ठमणिबन्धेषु मध्यमम् । प्राजापत्यं महातीर्थं विप्रस्तेनाचामेत्सदा । धनायुर्दा-रेखासु सोमतीर्थं तु मध्यमम् । लाजादिहवनं तेन कर्तव्यं वपनं तथा । ( वपनं ब्रीह्यादिनिर्वापः ) पवित्रकरआचामेच्छुचि कर्म्मार्थमादरात । कुशमात्रकरोवापि दर्भमात्रकरोऽपि वा (पवित्रं हिरण्यम् ) पवित्रं हिरण्यं वै श्रुतेः । संस्पृशेदिति । प्राणान्त्संमृ-शति……सहेति । ( दक्षः ) प्रक्षाल्य हस्तौ पादौ च त्रिःपिवेदम्बु-वीक्षितम् । संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततोमुखम् । संवृत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् । मध्यमाङ्गुष्ठयोगेन चक्षुः श्रोत्रे पुनः पुनः । अङ्गु-ष्ठानामिकाभ्याञ्च स्पृशेत् स्कन्धौ पुनः पुनः । ( शङ्खोप्याह ) तर्ज-न्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् । मध्यमाङ्गुष्ठयोगेन स्पृशे-न्नेत्रद्वयं ततः । अङ्गुष्ठानामिकायाश्च योगेन श्रवणे स्पृशेत् । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः । ( स्पृशेत् आलभेत् ) वरशाखया* "मधुपर्कदानं" इति ( गृह्यपरिशिष्टे ]

*वेदास्ते ऋग्यजुः सामाथर्वाख्याः परिकीर्तिताः । तेषां शाखाविशेषाश्च कथ्यन्ते ऽध्ययनानि च । ऋग्वेदस्यप्रथमतः पञ्चशाखाभवन्तिहि । आद्याश्वलायनी शाखा ततः सांख्यायनी मता । पुष्कला चाथ माण्डुक्या पञ्चमी स्याद्दुदुम्बरा । पञ्चानां चाथ शाखानां तासामध्ययनं यथा । तत्र चर्चा शावकश्च चर्चकश्रवणं तथा । भवेत्पाठक्रमः पाठक्रमो दण्डक्रमः क्रमः । ऋचां दशसहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिपादश्चैतत् पारायणं स्मृतं । अस्याध्यायाश्चतुः षष्टि-

वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदितः। मधुपर्कः प्रदातव्योऽन्यशाखेपिदातरि। [ अत्र ऋत्विगाद्युपलक्षणार्थं वर-दातृशब्दौ इति गदाधरभाष्यकारः ] ऋत्विगादीनामपि अर्च्य शाखयैव मधुपर्को न तु दातृशाखया इति ( धर्मसिन्धौ ) तदुक्त-

मेण्डलानि दशध्रुवं। वर्गाणां परिसङ्ख्याते द्वेसहस्त्रेषडुत्तरे। सहस्रमेकं सूक्तानां निर्विशङ्कोविकल्पनं। दशसप्तसुपाठान्ते संख्यातो वै पदक्रमः। यजुर्वेदस्य शाखाः स्युः शतसङ्ख्यामिताः किल। तासां मध्येऽतिविख्याताश्चतुर्विंशतिसंख्यकाः। काण्वामाध्यन्दिनी चाथ जावालातदनन्तरं। सापेया ख्यातितः प्रोक्ताह्यापस्तम्वेति यां विदुः। श्वेताश्वततरा ताम्रा ऋणीया तु ततः परं। ततः पूर्णरसा शाखा तत आविष्टिका मता। परमाविष्टिका चौख्या वौधाख्या शान्तिका मता आह्वरिका चरणका मित्रायणीयका ततः। हरीतकर्णिका शाला वलोया तदनन्तरं। मर्चिकाठा-प्राच्यकाठा सपिप्पलकाठका। ततश्चोपवनाख्यास्याच्चैत्तिरीया ततः परं। एवं शाखाहि यजुषां चतुर्विंशतिरीरिता। तासां ऋचामध्ययनं द्वेसहस्त्रेप्रकीर्तिते। शतन्यूने तथा भूयो मन्त्रो वाजसनेयिके। श्लोकेन परिसङ्ख्यातं ब्राह्मणंतु चतुर्मुखः अष्टादश सहस्राणि भवन्ति परिसंख्यया। अधोत्यत्रिगुणं तानि क्रम पारो भवन्ति च। तत्सप्तस्थावराश्चेति शाखास्तिस्रोभवन्ति हि। पारासर्वं पारासुमणिः पदक्रमजटाक्रमैः। पारश्चेति च सप्त स्युः स्थावराख्या मता इह। ( स्वाध्यायमात्रपठनं संहिता सम्यगीरिता। पदं प्रतिपदच्छेदः क्रमः पूर्वापरैः कृतः। पादमात्रं त्रिशः पूर्वपरोक्तिश्च जटामता। एवं पदक्रमजटाक्रमपाठोऽघ-नाशनः। साम्नः सहस्रं शाखाः स्युः पुरा मुमिभिरीरिता। ता अनध्ययनैर्हीयमानाः सत्यात् पुरा किल। आद्याराणायनीताख्या द्वितीयासाद्वमुग्रिका। व्यासी तृतीया विज्ञेया तुर्य्या भागुरिका स्मृता। यौगुण्डी पञ्चमो प्रोक्ता षष्ठी गौर्गालवी तथा। सप्तमी चोपमन्वी च कराटा चाष्टमी तथा। नवमी मशकन्यार्वा दशमी वार्षग-ण्यका। एकादशी शालिहोत्री कौथुमी द्वादशी स्मृता। जैमिन्यन्ताश्च ताश्चान्या आचार्यैरुपदर्शिताः। कालायाथ महापूर्वकालाया कन्वमालया। गङ्गीला हिरण्य-केशी कन्याख्यमालया। कन्यामालापि षोढा स्यादेवं स्यादेकविंशतिः। राराय-णीया प्रथमा वातरायणीया ततः। दैन्या वृथा च प्राचीना तैजसंज्ञाततः परं सौतकीये तिष्ठताः स्युस्तासामध्ययनं पुनः। अष्टौपाठसहस्राणि सामानि च चतु-र्दश। सौर्य्यायणी सहस्रे द्वे ततः सामगणाः स्मृताः। संहितानां तु सर्वेषां सार्व-साहस्रमेव च। सार्द्धसप्तसहस्रं तु पश्चिकाः परिकीर्तिताः। चतुः सहस्रश्छोटा छान्दोग्यास्त्रिसहस्रशः। नवसाहस्रकं साम स्तौभस्तत्र चतुर्दश। एषां प्रपाठकाः ज्ञेयाः शतं च षोडशोत्तरं। दर्कादौ ग्रामतोज्ञेयमरण्येऽपि तथैव च। त्रयोविंशोह्य-

मन्यत्रापि । अन्यशाखया मधुपर्कं इति [ जगन्नाथ-कारिकायामपि ) तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं ततः । इति । सर्वत्रयजमानशाखयैव मधुपर्क इति ( जयन्तः ) तात्तुकैरपि नादृतम् इति ( गदाधरभाष्ये) तथा च (संवर्तः) आगताय वरायास्मै मधुपर्कंप्रकल्पयेत् । दाताऽर्हते विधानेन वरशाखोक्तमार्गतः। [ भारद्वाजोपि । ] कन्यादाता वरंसम्यङ् मधुपर्केण पूजयेत् । वरशाखानुसारेण ततः कन्यां प्रदापयेत् । इति । ( अन्यत्रापि ) ब्राह्मादि विवाहेषु वरशाखोक्तमार्गतः । इति । जयन्त वचनं तु गांधर्वादिविषयकमेव प्रतिभाति । तद्यथा गांधर्वादिषु यत्नेन मधुपर्कं स्वशाखया । दाताकुर्याद्विधिनास्नातके विधिनार्चयेत् । इति सर्वत्राचार्यो यजमानसम शाखीय एव कार्यः । अन्यथा चार्यस्य यजमानशाखाध्ययनाभावे तच्छाखीय पदार्थानां निर्वाहएव न स्यात् । स्व [ आचार्य ] शाखयैवानुष्ठाने तु वैगुण्यमापद्येत । ऋत्विजस्तु भिन्नशाखीया अपि शास्त्रे गृहीताः । आशौचं मधुपर्कानन्तरम् न भवति । गृहीतुः मधुपर्कस्य यजमानाच्च ऋत्विजः पश्चादाशौचे पतिते न भवेदितिनिर्णय इति ( ब्राह्मोक्तेः । ) मधुपर्कात् पूर्वन्तु भवत्येवाशौचम् इति [ शुद्धि विवेके ] ।

[ इतिश्रीभाष्याचार्य्य पं० हरिनामदत्तशास्त्रितनय विद्यावाचस्पति पं० देवीप्रसाद शास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य प्रथमखण्डे मधुपर्कदानविचारः ]

---

नागानां उज्झागानमतः परं । अष्टौहि ब्राह्मणग्रन्थाः पौचं ब्राह्मणमादिमं । षड्वं शाख्याद्द्वितीयं स्यात्ततः सामविधिर्भवेत् । आर्षेयं देवताध्यायं भवेदुपनिषत्ततः संहितोपनिषद्विंशो ग्रन्था अष्टावकारिताः ॥ अथर्वणस्तु वेदस्य दशशाखा भवन्तिहि । पैप्पलादी सौनकी च स्तोवी जावालिका तथा । जलवा ब्रह्मगर्भी च वेदशीर्षा च सौभगा । वेददर्शा च चरणा तासामध्ययनं पुनः । ता द्वादशसहस्राण्यशीति त्रिशतानि च । पर्य्यायके द्वेसहस्रे क्रमशो वाचकान् बहून् । ग्रामाकर द्वादशाष्टसहस्राणि भवन्तिहि । प्रपाठकशतं चासीद् गोपथब्राह्मणं ततः । पूर्वोत्तरे ब्राह्मणे च तस्यामेवावतिष्ठतः । नक्षत्रकल्पः प्रथमं कल्पो वैतालिकस्ततः । संहिताविधिकल्पस्तु तृतीयः परिकीर्तितः । चतुर्थाङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः लक्षं ग्रन्थाभवन्त्येवं मन्त्रार्थविशसम्मताः ।

# अथ ऋग्वेदिनां मधुपर्कविधिः

पञ्चविंशति कुशनिर्मितं विष्टरं गृहीत्वा ओं विष्टरोविष्टरोविष्टरः प्रतिगृह्यतामिति यजमानेनोक्ते। अर्घ्यः "प्रतिगृह्णामि" इत्युक्त्वा। ओं अहं वर्ष्म सुजातानां विद्युतामिव सूर्य्यः। इमं समभिस्तिष्ठामि यो मा कश्चाभिदासतीत्यनेन उदगग्रे विष्टरे उपविशेत्॥ ओं पाद्यं पाद्यं पाद्यं प्रतिगृह्यतामित्युक्त्वा। ओं पाद्यं प्रतिगृह्णामीत्यर्घ्येण प्रत्युक्तस्तस्याञ्जलावभिषिञ्चेत्। अर्घ्यस्तु तूष्णीं गृहीत्वा पादौ प्रक्षालयेत्॥ एवं अर्घो अर्घो अर्घः। प्रतिगृह्यतामित्युक्ते। अर्घ्यः प्रतिगृह्णामीत्यभिधाय तदादाय स्वशिरसि दद्यात्। ओं आचमनीयम् ३। प्रतिगृह्यतामिति दाता वदेत्। आचमनीयं प्रतिगृह्णामीत्यर्घ्येण प्रत्युक्तो यजमानस्तस्मै दद्यात्। अथार्घ्यस्तदेकदेशं गृहीत्वा। "ओं अमृतोपस्तरणमसीति" पीत्वाऽन्यैनैवोदकेन शुद्ध्यर्थमाचामेत्। ततोऽर्घ्याय दधिमधुघृतगर्भं कांस्यपात्रं महता कांस्यपात्रेणपिहितं कराभ्यामादाय। मधुपर्कः ३। प्रतिगृह्यतामिति निवेदयेत्। तच्चानीतमधुपर्कं। मित्रस्य त्वा० ......इति दृष्ट्वा। देवस्यत्वा० इत्यादि मन्त्रेणाञ्जलिना गृहीत्वा वामकरे निधाय पिधानमुद्घाट्य। मधुव्वाता इत्यादितिसृभिरनामिकाङ्गुष्ठेनालोड्य तस्मात् किञ्चिदादाय। ओं वसवस्त्वागायत्रेण छन्दसा भक्षयन्तु इति मन्त्रेण प्राच्यां विसृज्य (पुनरादाय) ओं रुद्रस्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणस्यां विसृज्य पुनरादाय। ओं अदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चिमायां विसृज्य। (पुनरादाय) विश्वेत्वा देवा अनुष्टुभेन छन्दसा भक्षयन्तु इत्युदीच्यां विसृज्य। (पुनरादाय) ओं भूतेभ्यस्त्वा प्रक्षिपामिति त्रिरूर्द्धमुत्क्षिप्य। मधुपर्कैकदेशमादाय तत्पात्रं भूमौ निधाय। ओं विराजो दोहोसीति प्रथमं प्राश्याचम्य। (पुनरादाय) ओं विराजो दोहमशीयेति। द्वितीयं प्राश्याचम्य

( पुनरादाय ) मयि दोहं पाद्यायै विराज । इति तृतीयं प्राश्याचम्य शेषमुच्छिष्टभोजिने दद्यात् । ओं अमृतापिधानमसीत्याचमनी-योदिकेन द्विराचामेत् ॥ ततो गौर्गौर्गौः "प्रतिगृह्यता"मित्युक्ते । ओं गां प्रतिगृह्णामीत्युक्त्वा । मातारुद्राणामिति मन्त्रेण समुत्सृजेत् इति ऋग्वेदिनां मधुपर्कविधिः ॥

# अथ सामगानां मधुपर्कविधिः

यजमानो मण्डपोत्तरदेशे बद्धां गामनेन मन्त्रेणोपतिष्ठेत् ॥ ओं अर्हणा पुत्रवाससा धेनुरभवद्यमे । सा नः पयस्वती इहा उत्तरागमम् । इत्युक्त्वार्हणीयः प्रत्युत्थानादिना सम्मानितस्तिष्ठन्नेवासनमुद्वीक्ष्य जपेत् । ओं इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति । ततः "विष्टरौ" गृहीत्वा अर्हणीयाय दद्यात् ॥ अर्च्यः । तयोरेकं विष्टरं गृहीत्वा ॥ ओं या ओषधीः सोमराज्ञीर्वह्वीः शतविचक्षणाः । ता मह्यमस्मिन्नासने अच्छिद्राः शर्म्म यच्छत ॥ इति मन्त्रेण उदग्रं निधाय तदुपर्य्युपविश्य "द्वितीयं" विष्टरं पादयोरधोनिदध्यात् ॥ तत्रायं मन्त्रः । या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म्म यच्छत ॥ ततः उदकमानीय निवेदितवति यजमाने । अर्घ्यः आत्मछायामपश्यन्नेव ओं यतोदेवीः प्रतिपश्यामापस्ततोमाराद्धिरागच्छ । इत्यनेन तद्वीक्षेत । अथार्च्यः स्वयमेव पूर्वं ( वामं पादं ) ओं सव्यं पादमवनेजनेनिजेऽस्मिन् राष्ट्रे श्रियं दधे इत्यनेन प्रक्षाल्य । ( दक्षिणं पादं ) ओं दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्रे श्रियमावेशयानीत्यनेन । प्रक्षाल्य । ( उभौपादौ ) ओं पूर्वमन्यमपरमन्यमुभौ पादाववने निजे राष्ट्रस्य ऋद्ध्या उभयस्यावरुद्ध्यै ॥ इत्यनेन प्रक्षालयेत् ॥ ततः दधि-दूर्वाक्षतकुसुमचन्दनाद्युपेतंशङ्खादिपात्रस्थमर्घ्यमादाय । ओं अर्घ्यम् ३ प्रतिगृह्यतामित्युक्ते । अर्घ्यं प्रतिगृह्णामिति प्रत्युक्तवते

तस्मै अर्घ्यं दद्यात् ॥ अर्घ्यस्तु तदेकदेशं हस्तेनादाय शिरसि ॥ ओं अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम् । इति पठित्वा क्षिपेत् ॥ ततः आचमनीयग्रहणाय प्रेरितोऽर्घ्यः । ओं आचमनीयम् ३ प्रतिगृह्णामीत्युक्त्वा तत् प्रतिगृह्य । ओं यशोऽसि यशो मयिधेहीत्यनेनाचामेत् ॥ ततः पूर्ववत् "मधुपर्कं" प्रतिगृह्य तत् पात्रमादायोद्घाट्य ॥ ओं यशसो यशोऽसीत्यनेन गृह्णीयात् । ततः । ओं यशसो भक्ष्योऽसि श्रियं मयिधेहि । इति मन्त्रेण प्रथमं कनिष्ठाङ्गुष्ठाभ्यां ततोऽनामिकाङ्गुष्ठाभ्यामादाय मन्त्रावृत्या त्रिः प्राश्य चतुर्थं तूष्णीं पिबेत् ॥ शेषमुच्छिष्टभोजिने दद्यात् ॥ ततो गौर्गौर्गौ इति नापितेन निवेदितां गामादाय । ओं मुञ्च गां वरुणपाशाद्द्विषन्तेमेऽभिधेहि । तं जह्यमुष्य चोभयोरुत्सृजगामत्तु तृणानि पिबतूदकमित्यनेनोत्सृजेत् ॥ ततो पूर्ववत् । मातारुद्राणामित्यादिनाभिमन्त्रयेत् ॥ इति सामगानां मधुपर्कविधिः ॥

# अथाथर्ववेदिनां मधुपर्कविधिः

यजमानो बहून् दर्भान् आदाय विष्टरान् कुर्विति पूज्यं प्रति वदेत् । पूज्यस्तानादाय । ओं ऋतेन त्वा कर्म्मणा संनह्यामि । इत्येकशाखं प्रथमं पाद्यार्थम् ॥ ओं सत्येन त्वा कर्म्मणा संनह्यामीति द्विशाखं द्वितीयमासनार्थम् । ओं तपसा त्वा कर्म्मणा संनह्यामीति त्रिशाखं तृतीयं ॥ मधुपर्कार्थमिति विष्टरत्रयं निर्म्माय । यजमानहस्ते । ओं अतिसृष्टया द्वेष्ट्या योऽस्मान् द्वेष्टि यञ्च क्वयन्द्विष्मोऽस्य च दातुरित्यनेन दद्यात् ॥ ततः कर्ता पाद्यार्थमुदकं गृहीत्वा पूज्यं प्रति । ओं पादाम्भो इति निवेदयेत् ॥ पूज्यस्तु तद्दृष्ट्वा मन्त्रचतुष्टयेन तदभिमन्त्रयेत् ॥ ओं हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः । या अग्निं गर्भं दधिरे सुवर्णास्तान ऽआपः शं स्योना भवन्तु ॥ १ ॥ ओं यासां

देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं दधिरे सुवर्णाः । शिवेन मा चक्षुषा पश्यतायशिवया तन्वो यः स्पृशत त्वचम्मे ॥ २ ॥ ओं घृतश्वश्च्युतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु । शिवेनमा चक्षुषा पश्यतायशिवया तन्वो यः स्पृशत त्वचं मे ॥ ३ ॥ ओं घृतश्वश्च्युतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु । शिवेन मा चक्षुषा पश्यतायतु० ॥ ४ ॥ ततः पूज्यः । ओं मयि ब्रह्म च तपश्च धारयाणीति मन्त्रेण पाद्योदकैकदेशेन दक्षिणं पादं प्रक्षाल्य । ओं मयिक्षुद्रंविशश्च धारयाणीति मन्त्रेण सव्यं पादं प्रक्षाल्य । ओंइमौ पादाववनिक्तौ ब्राह्मणं व्यशसावताम् । आपः पादावनीजनी-र्द्विषन्तं निर्दहन्तु मे इति पाद्यमनुमन्त्र्यासनदातारमीक्षेत । ततो यजमानः । ओं सविष्टरमासनं भोरिति पूज्यायासनमाहरति पूज्यस्तदादाय । ओं विसृग्वरिं पृथिवीमावदामिक्षां भूमिं ब्रह्मणा वावृधानम् । जज्ञे पुष्टिं विभ्रतीमन्नभागं घृतं त्वा निनिषेमभूम । इति मन्त्रेण द्विशाखविष्टरासने उपविश्यएकशाखविष्टरे पादौ ॥ ओं द्वेष्ट्या योऽस्मान् द्वेष्टि यश्च वयन्द्विष्मोऽस्य च दातुरिति मन्त्रेण स्थापयेत् ॥ ततः कर्त्ता अर्घपात्रस्थोदकं गन्धाद्यनुविद्धं गृहीत्वा ओं अर्घ्यं भोः इत्यर्घ्यमर्घ्यायावेदयेत् । अर्च्यस्त तद्-गृहीत्वा ओं अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम् । अपोऽमृतास्थाममृतमाकृणुत दासाअस्माकं बहवोभवन्तु अश्वा-वहो ममाप्यस्तु जुष्टो भूर्भुवः स्वर्जनदोम् । इति मन्त्रेणाभि-मन्त्र्यात्माभिमुखं तूष्णीं नीत्वा ॥ ओं तेजोऽस्यमृतमसीत्यनेन ललाटमालभेत । कर्ता आचमनीयमुदकं गृहीत्वा आचमनीयं भो इति निवेदयेत् । अर्च्यस्तदादाय । ओं जीवास्थजीव्यासं सर्वमायु-र्जीव्यासम् । उपजीवस्थोपजीव्यासं जीवनास्थ जीव्यासं सर्वमायु-र्जीव्यासम् । इन्द्रजीव सूर्य्यजीव देवाजीवाजीव्यासमहं सर्वमायु-र्जीव्यासम् इत्यनेनाचामेत् । ततः कर्ता । मधुपर्कमधः स्थ त्रिशा-खविष्टरमूर्ध्वं स्थैकशाखविष्टरमादाय । ओं "मधुपर्कोंभो" इति

निवेदयेत् । अर्घ्यो यजमानहस्तस्थमेव मधुपर्कपात्रमेभिर्मन्त्रैरनुमन्त्रयेत् ॥ ओं मधुव्वाता इत्यादिभिः । पुनरेभिरेव प्रत्यभिमन्त्रयेत् । ततः उद्घाटितपिधानं मधुपर्क्कमहंप्रागवत् । ओं सूर्य्यस्य त्वा प्रतीक्षे । इति प्रतीक्ष्य । ओं अयुतोऽहमयुतोम ध्नाम्ययुतं मे चक्षुरयुतं मे श्रोत्रमयुतोमे प्राणोऽयुतोमे पानोऽयुतोहं सर्व इति । ओं देवस्यत्वा······हस्ताभ्यां प्रसूतः प्रशिषा गृह्णामीति गृहीत्वा स्थण्डिले निधाय । ओं पृथिव्यास्त्वानाभौ सादयाम्यदित्या उपस्थे । इत्यनेन भूमौनिधायाङ्गुलीद्वयेन प्रदक्षिणमालोड्य अनामिकाङ्गुष्ठेन च संगृह्य । एभिर्मन्त्रैः प्राश्नीयात् ॥ ओं भूस्तत् सवितुर्वरेण्यं भूः स्वाहा । ( इति प्रथमं ) ओं भुवः भर्गोदेवस्य धीमहि भुवः स्वाहा । ( इति द्वितीयं ) ओं स्वः धियोयोनः प्रचोदयात् स्वः स्वाहेति । ( तृतीयं ) ओं जनः स्वाहा ( इति चतुर्थं ) ओं दधत् स्वाहा ( इति पञ्चमं ) ओं करत् स्वाहा । ( इति षष्ठं ) ओं त्रुहन् स्वाहा । ( इति सप्तमं ) ओं अहं स्वाहा ( इत्यष्टमं ) ओं तत् स्वाहा । ( इतिनवमं ) ओं शं स्वाहा ( इतिदशमं ) एकादशश्च प्राश्य तूष्णीं ( द्वादशं ) प्राश्नीयात् ॥ शेषमुच्छिष्टभुजे दत्वाचामेत् ॥ ततः । ओं गौगौंगौः इति गां निवेदयेत् । अर्घ्यस्तामादाय । ओं भूतमसि भवदस्यन्नं प्राणोवहुर्वधज्येष्ठाय त्वा नामतु ओं भूर्भुवः स्वर्जनदोम् । इत्युत्सृज्य । ओम् मातारुद्राणां······वधिष्ट । तृणानि गौरत्तु इत्याह ॥ सूर्य्यवशाद्भगवती हि भूयाः अथ वयं भगवन्तः स्याम इति अद्धि तृणमघ्न्येऽधिष्वेदानीं पिव शुद्धमुदकमाचरन्तीति मन्त्रेण प्रतिष्ठमानां गामनुमन्त्र्ययजमानस्य मम च पाप्माहतः इति वदेत् ॥ इति अथर्ववेदिनां मधुपर्कविधिः ॥

इति मण्डपवाह्यकरणीयमधुपर्क्कान्ताविधिः

# ॥ अथ मण्डपप्रवेशविधिः ॥

मधुपर्क्कार्च्चनानन्तरं संभारान्गृहीत्वा सुवासिनी ब्राह्मणांश्चाग्रतः कृत्वा सतूर्यघोषः सपरिकरः शुक्लाम्बर धरः शुद्धमाल्यानुलेपनः साचार्यर्त्विक्सहितः सपूर्णकुम्भो-यजमानः ॥ ओं भद्रङ्कर्णेभिः शृणुयामदेवा भद्रम्पश्येमाक्ष-भिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहिदेवाहितं यदायुः ॥ इति मन्त्रेण "मण्डपं" प्रदक्षिणीकृत्य पश्चि मद्वारसमीपमागत्य । पाणिभ्यां चार्घपात्रमादाय वक्ष्य-माणमन्त्रान्पठेत् । आशुः शिशानः ऋचंवाचं स्वस्तिन इत्यादिकं च पठेत् (अशक्तश्चेत् ऋत्विजएवपठेयुः) आशुः शिशानोवृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोनिमिषऽएकवीरः शतᳬसेना अजयत्साकमिन्द्रः ऋचं ञ्वाचम्प्रपद्ये मनोयजुः प्रपद्ये साम प्राणम्प्रपद्ये । चक्षुः श्रोत्रम्प्रपद्ये । ञ्वागोजः सहौजो मयि प्राणापानौ । ओं स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्वव्वेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोवृहस्पतिर्दधातु । ओं द्यौः शान्तिरिति च पठेत् ॥ ततोद्वारदेशे । पृथ्वीं चतुर्भुजां शुक्लां कूर्मपृष्ठोपरिस्थितां पद्मशङ्खचक्रशूल करां विहसितां सुप्रसन्नां गोरूपधरां सवत्सां वसुंधरां ध्यात्वा पृथ्वीमावाहयेत् । ओं आवाहयामि त्वां देवीं धरि-त्रींलोकधारिणीम् । जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलिपु-

ष्करैः । एह्येहि पृथिविदेवि यज्ञेऽस्मिन्सन्निधिं कुरु । भूत-धात्री रत्नगर्भा विपुलासागराम्बरा । अस्मिन्यज्ञे महा देवि विघ्नं विध्वंसयाम्बिके । इत्यावाह्य । ओं भूम्यैनमः इति सम्पूज्य पुष्पाञ्जलिं दत्वा पाणिभ्यां चार्घपात्रमादाय ओं घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा द्यावापृथिवी वरुणस्य धर्म्मणा विष्कभिते अजरे भूरिरे-तसा ॥ इति मन्त्रमुच्चार्य । उद्धृतासि वराहेण कृष्णेन शतबाहुना । दंष्ट्राग्रे लीलया देवि यज्ञार्थे त्वां वृणोम्यहम् । ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च । पार्वत्या चैव गायत्र्या स्कन्देन श्रवणेन च । यमेन पूजिता देवि धर्म-वृद्धि जिगीषया । सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिता । गृहाणार्घ्यं च मे देवि सौभाग्यं च प्रयच्छमे । इति भूम्यै अष्टाङ्गार्घ्यं दद्यात् ( तत ऊर्ध्वं गणेशाय नमः दक्षिणे महालक्ष्म्यै नमः वामे महासरस्वत्यै नमः धात्रे-नमः दक्षिणांसे । विधात्रे नमः वामांसे द्वारश्रियै नमः मध्ये । देहलीमध्ये वास्तुपुरुषायनमः इति सम्पूजयेत ) ततः साष्टाङ्गं प्रणिपत्य वेदध्वनिभिः सह मण्डपस्य तेनैव द्वारेण प्रविशेत् । "होमद्रव्य प्रवेशः पूर्वद्वारेण" । दानद्रव्य

---

पश्चिमद्वारमिति ( मत्स्यपुराणे ) यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमद्वारमाश्रित्य प्रविशेद्यागमण्डपम् ॥ ( भक्तिविलासे । ) यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । ऋत्विग्भिः सहितः पश्चाद्द्वारेण प्रविशेत्तत इति । ( अर्घ्य-मिति ) यथायादलङ्कृतोमौनी यागार्थं यागमण्डपम् ॥ आचम्यविधिनातत्र सामा-न्यार्घंस्विधाय च । द्वारमस्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् । ( मन्त्रमहोदधौ )

प्रवेशो दक्षिणद्वारेण। दक्षिणार्थान् संभारान् उत्तरद्वारेण प्रवेशयेत् ॥ ततः प्रविश्य ( दक्षिणद्वारस्य पश्चिमपार्श्वे प्राङ्मुख उपविश्य ) आचार्य्यादीन् यथाविहितं कर्म्मकुरुत इति ब्रूयात्। करवाम इति आचार्य्यादयो ब्रूयुः। पुरुषसूक्त श्रीसूक्ते च प्रजपेत् इतिमण्डपप्र० ॥

## ॥ अथरक्षाविधानम् ॥

तत आचार्य्यो वामहस्ते गौरसर्षपान् लाजामिश्रितान् गृहीत्वा वक्ष्यमाणमन्त्रैः सर्वतोमण्डपान्तरे बाह्ये च विकिरेत्। तत्र मन्त्राः ओं कृणुष्वपाजः प्रसितिन्नपृथ्वीं

---

गृहद्वारमथागत्य द्वारपूजां समाचरेत्। द्वारमस्त्राम्बुना प्रोक्ष्य गणेशंचोर्द्ध्वतोयजेत् महालक्ष्मीं दक्षभागे वामभागे सरस्वतीम्। पुनर्दक्षे यजेद्विघ्नं गङ्गां च यमुनामपि। पुनर्वामे क्षेत्रपालं स्वः सिन्धुयमुने अपि पुनर्दक्षे तु धातारं विधातारं तु वामतः। तद्वन्निधीशं शङ्खपद्मौ ततोर्चेद्द्वारपालकान्। द्वारपूजां विधायेत्थंप्रविश्यार्चनमन्दिरमिति ॥ एतत्पूजनंचतान्त्रिकम् ॥ ( सर्षपानिति ) समन्ततश्च सिद्धार्थान् किरेद्रक्षोघ्नमन्त्रतः। ( पञ्चगव्यमिति ) ( प्रतिष्ठासारे ) सर्वतः पञ्चगव्येन प्रोक्षयेद्याग मण्डपं। आपोहिष्ठेत्यृचेनैव ततः स्वस्त्ययनं जपेत् ॥ मण्डपपूजनंकृत्वा वास्तुपूजा कार्या। वास्तुपूजांविधाय वा मण्डपपूजनम्। एक पक्षमवलम्ब्य यथारुचिः पूजा कार्य्या। द्वयोः पक्षयोः शास्त्रे विधानात्। समण्डपं प्रविश्याथ तोरणादि प्रपूज्य च वास्तु यागं ततः कुर्य्यात्प्रासादे मण्डपेऽथवा ( इति हेमाद्रौ ) प्रतिष्ठाप्रकाशादौ शान्तिप्रकाशे च वास्तुपूजनोत्तरमपि मण्डपपूजनम् लिखितम्। ( भैरवमिति। ) उद्यमोन्तपरिस्पन्दः पूर्णसंभाव नामकः। सएव सर्वशक्तीनां सामरस्यादशेषतः विश्वतोभरितत्वेन विकल्पानां विमोदिनाम्। अलं कवलनेनापीत्यन्वर्थादेव भैरवः यद्वा भैरवो भयङ्करः सर्वनियन्तोच्यते। भीषाऽस्माद्वातः पवत इति श्रुतेः महद्भयं वज्रमुद्यतमित्यादि श्रुतावुपात्तस्य भयङ्करत्वस्य परब्रह्मलिङ्गतायाः कम्पनाधिकरणे वर्णनात् इति।

याहिराजेवाममवाँ २॥ इभेन। तृष्वीमनुप्रसितिन्द्रूणानोस्तासि विध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तव ऽभ्रमासऽआशुयापतन्त्यनुस्पृशधृषता शोशुचानः। तपूᳬंष्यग्ने जुह्वापतङ्गानसन्दितोऽविसृजऽविष्वगुल्काः ॥ २ ॥ ओं प्रतिस्पशोऽविसृजतूर्णितमोभवापायुर्ऽविशोऽअस्याऽअदब्धः। योनोदूरेऽअघशᳬंसोयोऽअन्त्यग्ने माकिष्टेव्यथिरादधर्षीत् ॥ उदग्ने तिष्ठप्रत्यातनुष्वन्न्यमित्राँ२॥ ओषतातिग्म हेते। योनोऽअरातिᳬं समिधानचक्रे नीचातन्धक्ष्य तसन्नशुष्कम् ॥ ओं ऊद्र्ध्वोभव प्रतिविद्ध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून्। अग्नेष्ट्वा तेजसा सादयामि ॥ रक्षोहणं ऽवलगहनं ऽवैष्णवीमिदमहन्तं ऽवलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं ऽवलगमुत्किरामि यम्मे समानोयमसमानो निचखानेदमहन्तं ऽवलगमुत्किरामि यम्मे सवन्धुर्य्यमसवन्धुर्निचखानेदमहन्तं ऽवलगमुत्किरामि यम्मे सजातोयमसजातो निचखानोत्कृत्याङ्किरामि ॥ रक्षोहणोवो ऽवलगहनः प्रोक्षामि ऽवैष्णवान्रक्षोहणोवो वलगहनोऽवनयामि ऽवैष्णवान्रक्षोहणोवो ऽवलगहनोऽवस्तृणामि ऽवैष्णवान्रक्षोहणौवां ऽवलगहनाऽउपदधामि ऽवैष्णवीरक्षोहणौवांऽवलगहनौपर्य्यूहामि वैष्णवी ऽवैष्णवमासि ऽवैष्णवास्थ। रक्षसाम्भागोऽसि निरस्तᳬं रक्षऽइदमहᳬं रक्षोऽभितिष्ठामीदमहᳬं रक्षो ऽवऽवाधइदमहᳬं रक्षोऽध-

मन्तमोनयामि । घृतेन द्यावापृथिवी प्प्रोर्णुवाथां व्वायोवेस्तोकानामग्निराज्यस्य व्वेतुस्वाहा स्वाहाकृतेऽ उर्द्ध्वेन भसम्मारुतङ्गच्छतम् ॥ रक्षोहाव्विश्वचर्षणि रभि-योनि मयोहते । द्रोणे सधस्थमासदत् ॥ अपसर्प्पन्तु ते भूता ये भूताभूमिसंस्थिताः । ये भूताविघ्नकर्तारस्ते नश्य-न्तु शिवाज्ञया । अपक्रामन्तु भूतानि पिशाचाः सर्वतो-दिशम् सर्व्वेषामविरोधेन यज्ञकर्मसमारभे । यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्व्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु । इति पठित्वा "ओंह्रींफट्" । इति त्रिर्भ्राम्य । ईशानादि सर्वादिक्षुविकिरेत् । देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेति रक्षां कुर्य्यात् ॥ इति रक्षाविधानम् ॥ तत एकस्मिन्पात्रे मण्डप-शोधनार्थं पूर्वोक्तविधिना पञ्चगव्यं कुर्य्यात् । ( गायत्र्या गोमूत्रम् । गन्धद्वारामिति गोमयं आप्यायस्वेति क्षीरं । दधिक्राव्णेति दधि । तेजोसीति आज्यम् । देवस्यत्वेति कुशोदकम् । सम्मिल्य प्रणवमुच्चार्य्य यज्ञकाष्ठेनालोड्य ) ओं आपोहिष्ठेत्यादि ऋग्भिः मण्डपं प्रोक्ष्य कृताञ्जलिः ॥ स्योनापृथिवी नोभवा नृक्षरा निवेशनि यच्छानः शर्म्म सप्प्रथाः ॥ महीद्यौः पृथिवीचन इमं यज्ञम्मिमिक्षताम् पिपृतान्नो भरीमभिः ॥ (इत्येताभ्यां भूमिं प्रार्थ्य) स्वस्ति-नऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाव्विश्ववेदाः । स्वस्तिनस्ता-र्क्ष्योऽ अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ इति मन्त्रं

वारत्रयं पठेत्। ततः स्वपुरतः "पृथ्वीकूर्म्मानन्तदेवेभ्यो-नमः"। इति षोडशोपचारैः सम्पूजयेत्। ततोगणेशस्मरणं पूजनञ्चाचारात्। ततः (एतद्देशीयाचारात् भैरवपूजनमपि कार्य्यम्) ततो वास्तुपूजां कुर्य्यात्। सामर्थ्ये वास्तुयागोक्त-मार्गेण असामर्थ्ये वास्तुमात्रस्य "ओं वास्तुपुरुषेभ्योनमः" इत्यनेन पूजां विधाय।* अग्निभ्योऽप्यथसर्वेभ्यो ये चान्ये समाश्रिताः। तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्। इत्यादिमन्त्रैश्चतुर्षुकोणेषु बलिं दद्यात्॥

## ॥ अथ वास्तुपूजनविधिः ॥

मण्डपनैर्ऋत्यकोणस्थवेदिकासमीपे उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अद्यामुककर्म्माणि वास्तु-पूजनमहं करिष्ये। (इति संकल्प्य) वास्तुमण्डलचतुष्को-णेषु शङ्कुचतुष्टयं ईशानादि प्रदक्षिणक्रमेण रोपयेत्॥

"तत्रमंत्रः" ओं विशन्तु भूतले नागालोकपालाश्च सर्व्वतः। मण्डपेऽत्रावतिष्ठन्तु आयुर्बलकराः सदा। इति मन्त्रेण चतुर्दिक्षु रोपणं ततः शङ्कूनां पार्श्वे रोपण-क्रमेण "माषभक्तदध्योदनेन" बलिदानं। तत्र मन्त्राः ओं रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः। वलि

*तर्कवाचस्पतिरीत्याग्नेय्यादिक्रमेण वलिदानम्।

तेभ्यः प्रयच्छामि गृह्णन्तु सततोत्सुकाः । १ । (इतीशाने) ओं अग्निभ्योऽप्यथ सर्व्वेभ्यो ये चान्ये तत्समाश्रिताः । वलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमं । ( इत्याग्नेय्यां ) । २ । नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः । वलिं तेभ्यः प्रयच्छामि सर्वे गृह्णन्तु मन्त्रितं । ३ । (इतिनैर्ऋते) ओं वायव्याधिपतिश्चैव वायव्यां ये च राक्षसाः वलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमं । ४ । (इति वायव्यां) ततो वास्तुपीठे कुङ्कुमादिना कनकशलाकया रत्नेन वा रजतफलपुष्पाणामन्यतमेन वा नवरेखाः कार्य्याः ॐ लक्ष्म्यैनमः । ॐ यशोवत्यैनमः । ॐ कान्तायैनमः ओं सुप्रियायैनमः । ओं विमलायैनमः । ओं श्रियैनमः । ओं सुभगायैनमः । ओं सुमत्यैनमः । ओं इडायैनमः । इत्येतैर्नामभिः पश्चादारम्भाः प्रागन्तानवरेखाः कृत्वा । ( पुनः ) ओं धान्यायैनमः । ओं प्राणायैनमः । ओं विशालायैनमः । ओं स्थिरायैनमः । ओं भद्रायैनमः ओं जयायैनमः । ओं निशायैनमः । ओं विरजायैनमः । ओं विभवायैनमः । इत्येतैर्नामभिः दक्षिणारम्भाउदगन्ताः रेखाः कृत्वा ताः सम्पूज्य ।( ईशानपदार्द्धे वास्तुशिरसि ) आवाहयामि त्वां देव शङ्करं शिखिरूपिणम् । स्रुक्स्रुवौ डमरुं शूलं चतुर्हस्तेषु बिभ्रतम् । नेत्रत्रयसमायुक्तं स्वाहोमा सहितं विभुम् ।आगच्छ त्वं शिखिन् देव क्षेत्रेऽस्मिन्सान्निधौभव । ओं नमः शिवाय ॥ ओं नमः शम्भवाय च मयो

भवाय च नमः शङ्कराय च मयस्क्कराय च नमः शिवाय च शिवतराय चेति वा। ओंभूर्भुवः स्वः शिखिने नमः शिखिनं आवाहयामि स्थापयामि। भो शिखिन् इहागच्छ इह तिष्ठ। (एवंसर्वत्र) तद्दक्षिणसार्द्धपदे दक्षिणनेत्रे (पर्ज्जन्यं) आवाहयामि पर्ज्जन्यं यादसां मुख्यनायकम्। कुम्भीरथसमारूढं पाशहस्तं वरप्रदम्। ओं शन्नोऽवातः पवताᳬं शन्नस्तपतु सूर्य्यः। शन्नः कनिक्रदद्देवः पर्ज्जन्न्यो अभिवर्षतु। ओं भूर्भुवः स्वः पर्जन्न्यम् आ० स्था० भो प० इ० इ०। तद्दक्षिणे वास्तोर्वामनेत्रे। ( जयन्तम् ) आवाहयामि तन्देवं महेन्द्रतनयं प्रभुम्। मुद्रिकाकंकणैर्युक्तं सर्व्वाभरणभूषितम्। वरदाभयहस्तं च जयन्तं पूजयाम्यहम्। ओं मर्म्माणि ते ऽवर्म्मणाच्छादयामि सोमस्त्वाराजामृतेनानुवस्ताम् उरोऽर्वरीयो ऽवरुणस्ते कृणोतु जयन्तन्त्वानुदेवामदन्तु। ॐ भू० जयन्तम्० तद्दक्षिणपदद्वये दक्षिणांसे ( कुलिशायुधम् ) एहि देव सहस्राक्ष देवारिबलसूदन। ऐरावतेश सर्वज्ञ शचीहृदय नन्दन। वज्रहस्त सुराध्यक्ष त्वामिन्द्रमावाहयाम्यहम्॥ ॐ आयात्विन्द्रोऽवसऽउपनइहस्तुतः सधमादस्तु शूरः। वावृधानस्तविषीर्य्यस्य पूर्वीर्द्यौर्न्नक्षत्रमभिभूतिपुष्यात्॥ ॐ भू० इन्द्रमा० स्था० भो० इ० इ० इ०। दक्षिणबाहौ ( सूर्य्यम् ) आवाहयामि देवेशं भास्करं तिग्मतेजसम्। कलिंगं काश्यपं रक्तं सप्ताश्वं सप्तरज्जुकम्। द्विभुजं पद्मह-

रेखानामानि शास्त्रेष्वन्यानि २ सन्ति परं पूजनपद्धतौ सर्वत्रैतान्येव सन्ति अत एतान्येव नामानि मयाऽप्यत्र प्रदर्शितानि।

स्तं च त्रैलोक्यातिमिरापहम् । सर्वसौख्यस्य दातारं कर्मसा-क्षिणमीश्वरम् । आगच्छ भगवन् सूर्य्य क्षेत्रेऽस्मिन्सान्निधौ भव॥ॐ वरमहाँ२॥ असि सूर्य्यवडादित्यमहाँ२॥असि । मह स्तेसतोमहिमापनस्यतेऽद्धा देवमहाँ२॥असि । ॐ भूर्भुवः स्वः सूर्य्यम् आ० स्था० तद्दक्षिणपदद्वये दक्षिणवाहौ (सत्यम्) आवाहयामि तं सत्यं पुण्ययुक्तमकल्मषम् । पद्महस्तं महा वाहुं त्ररदं निर्मलं शुभम् । ज्ञानमुद्राधरं देवं चिन्तितं ब्रह्म केवलम् । आगच्छ देव सत्यस्त्वं क्षेत्रेऽस्मिन्सान्निधौभव । ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षि णा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते । ॐ भूर्भुवः स्वः सत्यायनमः । सत्यं आ० स्था० ॥ तद्दक्षिणसार्द्धपदे दक्षि णकूर्परे ( भृशं ) आवाहयेत्तं भृशमादिदेवं संचारशीलं भुवनत्रयेऽपि । एकेन हस्तेन वरप्रदानं गदां दधानं च परेणतेन ॥ ॐ आत्वाहार्षमन्तरभूर्द्धुवास्तिष्ठाविचाचालिः विशस्त्वासर्व्वावाञ्छन्तु मात्वद्राष्ट्रमधिभ्रशत् ॥ ॐ भू० भृ० शम्० । आ० स्था० । तद्दक्षिणाग्नेयपदार्द्धे दक्षिणप्रवाहौ ( आकाशं ) आवाहयेत्तमाकाशं विष्णोपदमनन्तकम् । यत्र देवास्तथा यज्ञाः ग्रहाःसर्वे प्रतिष्ठिताः । आगच्छ त्वं महाकाश क्षेत्रेऽस्मिन्सान्निधौभव । ॐ यावाङ्कशामधुमत्य-श्विनासूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृही-तोस्यश्विभ्यान्त्वैषते योनिर्माद्ध्वीभ्यान्त्वा ॥ ॐ भूर्भुवः स्वः आकाशम् आ० स्था० भो० ना० इ० इ० तत्पश्चिमार्द्धे

दक्षिणप्रवाहौ ( वायुं ) आवाहयामि देवेशं भूतानां देहधारिणम्। आगच्छ भगवन् वायो क्षेत्रेऽस्मिन्सन्निधौ भव। ओं वायोयेते सहस्रिणोरथासस्तेभिरागहि। नियुत्वान्त्सोमपीतये॥ ॐ भूर्भुवः स्वः वायुमावाहयामि स्थापयामि भो! वायो! इहागच्छइहतिष्ठ वायवेनमः॥ तत्पश्चिमवास्तोर्दक्षिणमणिबन्धे पूषणमावाहयेत्। आवाहयामि देवेशं पद्महस्तं वरप्रदम्। रक्तवस्त्रपरीधानं विद्युद्वर्णं महाबलम्॥ आगच्छ भगवन् पूषन् क्षेत्रेस्मिन्सन्निधौभव॥ ॐ पूषन्तवव्रतेऽवयन्नरिष्येम कदाचन। स्तोतारस्तऽइहस्स्मसि॥ ॐ भूर्भुवः स्वः पूषणमावाहयामि स्थापयामि पूषन्निहागच्छइहतिष्ठ पूष्णेनमः॥ तत्पश्चिमेवास्तोर्दक्षिणपार्श्वे वितथमावाहयेत्॥ आवाहये त्वां वितथं पुराणं द्यावापृथिव्यन्तरचारिणं च। गृहाण पूजां चणकोदनाख्यं वलिं च गृहणन्भगवन्नमस्ते॥ ॐ तत्सूर्य्यस्य देवत्वन्तन्महित्वन्तम्मध्याकर्त्तोर्व्विततठ सञ्जभार। यदेदयुक्तहरितः सदस्स्थाद्रात्रीवासस्तनुतेसिमस्स्मै॥ ओं भूर्भुवः स्वर्व्वितथमावाहयामि स्था० ओं वितथ इहागच्छेहतिष्ठेमां पूजाङ्गृहाण। ओं वितथायनमः॥ तत्पश्चिमेवास्तोर्दक्षिणपार्श्वे गृहक्षतमावाहयेत्॥ आवाहयामि त्वां देव गृहक्षतसमाख्यक। पूजां गृहाणदेवेश ममस्वस्ति करोभव॥ अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत। अस्तोषतस्वभानवोव्विप्रानविष्ठयामती-योजान्विन्द्रतेहरी॥ ॐ भूर्भुवः स्वर्गृहक्षतमावा० स्था०

भो गृहत्क्षतेहागच्छेहतिष्ठ ॐ गृहत्क्षतायनमः ॥ तत्पश्चिमेवास्तोर्दक्षिणरोमे यममावाहयेत्। आवाहयामि देवेशं दक्षिणांदिशमाश्रितम्। महिषे च समारूढमञ्जनाद्रिसमप्रभम् ॥ चित्रगुप्तसहायं तं दण्डमुद्गरधारिणम्। सप्तर्षिभिः समायुक्तं धर्म्माधर्म्म प्रवर्तकम् ॥ लोकस्य यमनार्थाय किंकरैः परिवारितम्। आगच्छ भगवन् धर्म्म? क्षेत्रेस्मिन्सन्निधौ भव ॥ ॐ यमायत्वाङ्गिरस्वते पितृमतेस्वाहा स्वाहाघर्म्माय स्वाहाघर्म्मः पित्रे ॥ ओं भूर्भुवः स्वर्यममावा० स्था० ॥ ओं यम? इहागच्छेहतिष्ठ यमायनमः ॥ तत्पश्चिमेवास्तोर्दक्षिणजानौ गन्धर्वमावाहयेत् ॥ आवाहयामि देवेशं खड्गजादिज्ञानतत्परम्। वीणां गृहीत्वाहस्तेन तद्वादनरतं विभुम्। अप्सरोगणसंकीर्णं नानागन्धैश्च चर्चितम्। गन्धर्वत्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥ ओं गन्धर्वस्त्वाऽविश्वावसुः परिदधातु विश्वस्यारिष्टचै यजमानस्यपरिधिरस्यग्निरिडऽईरितः। इन्द्रस्यवाहुरासिदाक्षिणोऽविश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईरितः ॥ मित्रावरुणौत्वोत्तरतः परिधतान्ध्रुवेण धर्म्मणा विश्वस्यारिष्टयै यजमानस्य परिधिरस्यग्निरिडऽईरितः ॥ ओं भूर्भुवः स्व गंन्धर्वमावा० स्था० ओं गन्धर्व? इहागच्छेहतिष्ठ० ॥ ॐ गन्धर्वायनमः ॥ तत्पश्चिमेवास्तोर्दक्षिणजंघायाम् भृंगराजमावाहयेत। आवाहयामितं देवं भृंगराजं महाबलम्। षट्पदैःसेव्यमानं च कुसुमामोदसंरतम् ॥ आगच्छालिकुलत्वं हि

क्षेत्रेऽस्मिन्सन्निधौभव ॥ ॐ सौरीवलाकाशार्ग्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यैशारिः पुरुषवाक्श्वाविद्भौ-मीशार्दूलोऽवृकः पृदाकुस्तेमन्यवेसरस्वतेशुकः पुरुषवाक् ॥ ॐ भूर्भुवःस्वः भृगराजमावाहयामि स्था० ॐ भृंगराजइहाग-च्छेहतिष्ठ भृंगराजायनमः ॥ तत्पश्चिमेवास्तोर्दक्षिणस्फि-क्चि मृगमावाहयेत् । मृगमावाहयिष्यामि शशांककृताचिन्ह-कम् । कृष्णवर्णं चतुष्पादं श्वेतोदरविषाणकम् । आगच्छ भगवन्नेण क्षेत्रेऽस्मिन्सान्निधौभव ॥ ॐ प्रतद्विष्णुस्तवते वीर्य्येण मृगोनभीमः कुचरोगिरिष्ठाः यस्योरुषुत्रिषुविक्रम-णेष्वधिक्षियन्ति भुवनानि विश्वा ॥ ॐ भूर्भुवः स्वर्म्मृगमा वा० स्था० मृग! इहागच्छेहतिष्ठ ॐ मृगायनमः ॥ तदुत्त रार्द्धे वास्तोःपादयोः पितृनावाहयेत् ॥ पित्तृनावाहयिष्या-मि सोमपाद्यानानुक्रमात् । जटाकमण्डलुधरान् सितयज्ञोप वीतिनः ॐ उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि । उशन्नु-शतआवह पित्तृन्हविषे अत्तवे ॥ ॐ भूर्भुवः स्वः पित्तृना-वा० स्था० पितरः इहागच्छतेहतिष्ठत । ॐ पित्तृभ्योनमः तदुत्तरार्द्धे वास्तोर्वामस्फिचि दौवारिकमावाहयेत् ॥ एह्येहि दौवारिक रक्षणाय द्वारस्य सर्वस्य च मन्दिरस्य । पैष्टं वलिं वासितदन्तकाष्ठं गृहाण पूजां भगवन्नमस्ते ॥ ओं द्वारोदेवीरन्वस्य विश्वे व्रतादन्तेऽग्नेः ॥ उरुव्यचसो धाम्नापत्यमानाः ॥ अथवा ओं आब्रह्मन्ब्राह्मणोब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधीमहारथोजाय

तान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषाजिष्णू रथेष्ठाः सभेयोयुवास्य यजमानस्य व्वीरोजायतान्निकामे-निकामेनः पर्ज्जन्योवर्षतु फलवत्योनऽओषधयः पच्च्यन्तां योगक्षेमोनः कल्पताम् ॥ इति मंत्रेण वावाहयेत् ॥ ततः ओं भूर्भुवः स्वर्दौवारिकमावा० स्था० ओं भो दौवारिक! इहागच्छेहतिष्ठ० दौवारिकायनमः ॥ तदुत्तरेवास्तोर्वामजं-घायाम् सुग्रीवमावाहयेत् । आवाहयेत्वां कपिमध्यमुख्यं सुग्रीवराजंममगण्डलेस्मिन् ॥ पाषाणवृक्षौदधतं कराभ्यां गृहाणपूजां भगवन्नमस्ते ॥ ॐ नीलग्रीवाः शितिकण्ठादिवंᳫं रुद्राऽउपाश्रिताः । तेषाᳫं सहस्रयोजने वधन्वानितन्म-सि ॥ ॐ भूर्भुवः स्वः सुग्रीवमावा० स्था० सुग्रीव इहाग-च्छेहतिष्ठ ॐ सुग्रीवायनमः ॥ तदुत्तरेवास्तोर्वामजानुनि पुष्पदन्तमावाहयेत् आवाहयामिदेवेशं पुष्पदन्तंविनायकम् लम्बोदरं महाकायं गजवक्त्रं चतुर्भुजम् । सिद्धिबुद्धिसमायु-क्तं सर्वविघ्नाविनाशकम् ॥ पुष्पदन्तसमायुक्तं पूजेयंप्रातिगृह्य ताम् ॥ ॐ नमोगणेभ्यो गणपतिभ्यश्चवो नमो नमोव्रातेभ्यो व्रातपतिभ्यश्चवो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवो नमो नमो व्विरूपेभ्यो व्विश्वरूपेभ्यश्चवोनमः ॥ ॐ भूर्भुवः स्वः पुष्पदन्तं देवमावा० स्था० भो पुष्पदन्त इहाग-च्छेहतिष्ठ पुष्पदन्तायनमः ॥ तदुत्तरेवास्तोर्वामोरौ वरुण-मावाहयेत् । आवाहयामि देवेशं वरुणं जलनायकम् । कुम्भीरथसमायुक्तं श्वेताद्रिशिखिरोपमम् । पाशहस्तं महाबाहुं

यादोगण समान्वितम् ॥ आगच्छ वरुण त्वं हि चेत्रेऽस्मिन्स न्निधौ भव ॥ ओं इमम्मे ऽवरुणश्रुधी हवमद्या च मृडय। त्वाम-वस्युराचके ॥ ओं भूर्भुवः स्वः वरुणमावा०स्था०भो वरुण! इहागच्छेहतिष्ठ वरुणायनमः॥ तदुत्तरेवास्तोर्वामपार्श्वेऽसुर मावाहयेत् । असुरत्वमिहागच्छ रक्षोगणसमन्वित । शक्ति शूलधरो नित्यं रक्ताक्षश्चमहावल ॥ हिरण्यपाशभृद्देव पूजां स्वीकुरु मे विभो ॥ ओं यमश्विनानमुचेरासुरादधि-सरस्वत्यसुनोदिन्द्रियाय । इमन्तꣳ शुक्रम्मधुमन्तमिन्दुꣳ सोमꣳराजानमिहभक्षयामि ॥ ओं भूर्भुवः स्वरसुरमावाह-यामि० स्था० असुर! इहागच्छेहतिष्ठ । असुरायनमः॥तदु त्तरेवास्तोर्वामपार्श्वे एव शेषमावाहयेत् आवाहयामि देवेशं पातालतलवासिनं सहस्रशिरसं नागं फणामणि वि-राजितम् ॥ कर्पूरविशदं देवं नागराजं महावलम् परोपका-रनिरतमनन्तं विष्णुवाहनम् ॥ आगच्छ नागराज त्वं चेत्रेऽस्मिन्सान्निधौभव ॥ ॐ याइषवोयातुधानानां ये वा वनस्पतीं १ँ। रनु येवावटेषु शेरते तेभ्यः सर्प्पेभ्योनमः ॥ ओं भूर्भुवः स्वः शेषमावा० स्था० शेष ! इहागच्छेहतिष्ठ शेषाय नमः ॥ तदुत्तरेपापमावाहयेत् । आवाहयामि तं पापं नाम्ना यक्ष्मेति विश्रुतम् ॥ निर्मांसं निर्घृणं शक्ति पाशपाणिं महावलम् । आगच्छ भगवन् पाप ! पूजेयं प्रति गृह्यताम् ॥ ओं एतत्ते रुद्राऽवसन्तेन परोमूजवतो-तीहि । अवततधन्वापिनाकावसः कृत्तिवासाऽअहिꣳसन्नः

शिवोतीहि ॥ ओं भूर्भुवः स्वः पापमावा० स्था० पाप इहा गच्छहइतिष्ठ पापायनमः वास्तोर्वामवाहौ रोगमावाहयेत ॥ आवाहयामि तं रोगं वातादित्रिगुणात्मकम् । त्रिपादं त्रिशिखं रक्तनेत्रं भस्मविभूषितम् ॥ लोकानां च सुखं देहि वलिभिर्घृतमोदकैः । पूजां गृहाण भोरोग क्षेत्रेऽस्मिन्सन्निधौभव ॥ ओं द्रापेअन्धसस्पते दरिद्रनीललोहित । आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः किञ्चनाममत् ॥ ओं भूर्भुवः स्वः रोगमावाहयामि रोग ! इहागच्छेहतिष्ठ इमां पूजां गृहाण रोगायनमः ॥ तदुत्तरे अहिमावाहयेत् । अहिमावाहयिष्यामि त्रैलोक्यान्तर चारिणम् ॥ शेषस्य कुल संभूतं लसत्कर्णमहीश्वरम् । आगच्छ नागराज त्वं क्षेत्रेऽस्मिन्सान्निधौभव ॥ ओं अहिरिवभोगैः पर्य्येति वाहुञ्ज्याया हेतिम्परिवाधमानः हस्तघ्नोविश्वावयुनानि विद्वान् पुमान्पुमाᳫंसम्परिपातु विश्वतः ॥ ओं भूर्भुवः स्वरहिमावाहयामि स्था० पूजयामि अहे इहागच्छेहतिष्ठ अहयेनमः तत्प्राक्वास्तोर्वाम कूर्प्परे मुख्यमावाहयेत् । आवाहयामि तं शैवं गणानां मुख्यनायकम् । जटाजूटधरं सौम्यं शूलपट्टिशधारिणम् ॥ नमस्तेमुख्यदेवेश क्षेत्रेऽस्मिन्सन्निधौभव ॥ ओं अवतत्यधनुष्ट्वᳫंसहस्राक्षशतेषुधे । निशीर्य्यशल्यानाम्मुखा शिवोनः सुमनाभव ॥ ओं भूर्भुवः स्वः मुख्यमावाहयामि पूजयामि भोमुख्य इहागच्छेहतिष्ठ मुख्यायनमः ॥ तत्प्राक्वास्तोर्वामवाहावेव भल्लाटमावाहयेत् । आवाहयामि

देवेशं भल्लाटं विश्वरूपिणम् । भिल्लवेषधरं कृष्णं धनुर्बाणासिधारिणम् । भिल्लमोहनकर्त्तारं बर्हिपिच्छैस्त्वलंकृतम् ॥ आगच्छभगवन्देव क्षेत्रेस्मिन्सन्निधौभव ॥ ॐ इमा रुद्राय तवसेकपर्दिनेक्षयद्वीराय प्रभरामहेमतीः ॥ यथाशमसाद्विपदेचतुष्पदे विश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ओं भूर्भुवः स्वर्भल्लाटमावा० स्था० पू० भल्लाट! इहागच्छेहतिष्ठ भल्लाटायनमः ॥ तत्प्राक्पृथ्वामबाहावेव सोममावाहयेत् । आवाहयामि देवेशं शशाङ्कं रजनीपतिम् । क्षीरोदधिसमुद्भूतं हरमौलिविराजितम् ॥ सुधाकरं द्विजाधारं त्रैलोक्यप्रियकारकम् । औषध्याप्यायनकरं सोमं कन्दर्प्पवर्धनम् ॥ आगच्छभगवन् सोम क्षेत्रेस्मिन्सन्निधौभव ॥ ॐ आप्यायस्व समेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्य सङ्गथे ॥ ॐ भूर्भुवः स्वः सोममावा० स्था० पू० भगवन् सोम! इहागच्छेहतिष्ठ भगवते सोमायनमः ॥ तत्प्राक्पदे वास्तोर्वामांसे सर्प्पमावाहयेत् ॥ आवाहयेच्च तं नागं फणासप्तकसंयुतम् । आगच्छोरगराजत्वं क्षेत्रेस्मिन्सान्निधौभव ॥ ॐ विष्णोर्नुकं वीर्य्याणि प्रवोचंयः पार्थिवानि विममेरजाᳬसि ॥ यो अस्कभायदुत्तरᳬ सधस्थं विचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ ॐ भूर्भुवः स्वः सर्प्पमावा० स्था० पू० । सर्प इहागच्छेहतिष्ठ सर्प्पायनमः ॥ तत्प्राक्पदे वास्तोर्वामश्रोत्रे अदितिमावाहयेत् । आवाहयामि तां देवीमदितीं देवमातरम् । द्विभुजां पद्महस्तां

च सर्वाभरण भूषिताम् ॥ कस्यपस्य प्रियां भार्य्यां सुरूपां वामलोचनाम् ॥ आगच्छ ह्यदिते त्वं हि चेत्रेऽस्मिन्सान्निधौ भव ॥ ॐ इडऽएह्यदितऽएहिकाम्याऽएत मयिवः कामधरणम्भूयात् ॥ ॐ भूर्भुवः स्वरादितिमावाहया० स्था० पू० ॥ अदिते इहागच्छेहतिष्ठ अदितयेनमः ॥ तत्प्राक्पदे वास्तोर्वामनेत्रे दितिमावाहयेत् । दितिमावाहयिष्यामि दैत्यानां चैव मातरम् । शुक्लाङ्गीं द्विभुजां चैव शूल पट्टिशधारिणीम् । समागच्छ दिते त्वं हि चेत्रेऽस्मिन्सान्निधौ भव ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ ॐ भूर्भुवः स्वर्दितिमावा० स्था० पू० । दिते इहागच्छेहातिष्ठ दितयेनमः ॥ पुनरन्तरीशकोणगतद्वितीयपंक्तिस्थपदेवास्तोर्म्मुखे अप आवाहयेत् । अप आवाहयिष्यामि सर्व्वगाः वरदाः शिवाः । आपस्त्वायान्तु सततं पवित्रामंगलावहाः ॥ समागच्छत यूयं वै कुर्वन्त्यः पावनं जगत् ॥ ॐ आपोहिष्ठामयोभुवस्तानऽउर्ज्जेदधातन महेरणायचक्षसे ॥ ॐ भूर्भुवः स्वः अपआवाहयामि० आप इहागच्छतेहातिष्ठत अद्भ्योनमः ॥ तद्दक्षिणे वास्तोर्दक्षिण हस्ते आपवत्समावाहयेत् । आपवत्स त्वमेह्येहि कर्मस्कन्द वरप्रद । पूजां गृहाण देवेश कुंभहस्त नमोस्तुते ॥ ॐ आते वत्सोमनोयमत्परमाचित्सधस्थात् । अग्नेत्वाङ्कामयागिरा । ओं भूर्भुवः स्वरापवत्समावा० स्था० पू० ॥

आपवत्स ! इहागच्छेहतिष्ठ आपवत्सायनमः ॥ तद्दक्षिणे वास्तोर्दक्षिणहस्तेऽर्य्यमणमावाहयेत् । अर्य्यमन् कुरुमे भद्रं संज्ञया सह सर्वदा । गृहाणेमां मयादत्तां पूजां देव नमोस्तुते ॥ ओं यदद्यसूरऽउदितेनागामित्रोऽर्य्यमा । सुवातिसविताभगः ॥ ओं भूर्भुवः स्वरर्य्यमणमावाहयामि स्था० पू० अर्य्यमन् इहागच्छेहतिष्ठेमां पूजां गृहाणार्य्यम्णेनमः ॥ तद्दक्षिणेवास्तोर्दक्षिणहस्ते सवितारमावाहयेत् आवाहयेत्सवितृमण्डलमध्यसंस्थं सप्ताश्ववाहनयुतं धृतपंकजं त्वाम् । केयूरकुण्डलविधारक देहि सौख्यं पूजां गृहाण भगवन् सवितर्नमस्ते ॥ ओं विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रन्तन्नऽआसुव ॥ ओं भूर्भुवः स्वः सवितारमावा० स्था० पू० ॥ सवितरिहागच्छेहतिष्ठेमां पूजां गृहाण सवित्रेनमः ॥ तद्दक्षिणवास्तोर्दक्षिणहस्ते सावित्रमावाहयेत् । सावित्रत्त्वमिहागच्छ सर्वध्वांतनिवारक । पूजां गृहाण देवेश मया शक्त्या प्रकल्पितम् ॥ ओं हस्तऽआधाय सविताविभ्रदभ्रिं हिरण्ययीम् । अग्नेर्ज्ज्योतिर्निचाय्य पृथिव्याऽअध्याभरदानुष्टभेन छन्दसाङ्गिरस्वत् ॥ ओंभूर्भुवः स्वः सावित्रमावा० स्था० पू० सावित्र ! इहागच्छेहतिष्ठेमां पूजां गृहाण सावित्राय नमः ॥ तत्पश्चिमे वास्तोर्जठरदक्षिणभागे विवस्वन्तमावाहयेत् । एह्येहि देव त्रिगुणात्मकत्वं हयं समारुह्य तमोनुदन् वै ॥ हस्तद्वये वै धृतचक्रपद्म गृहाणपूजां भगवन्नमस्ते ॥ ॐ विवस्वन्नादित्यैषते सोम-

पीथस्तस्मिन्न्मस्त्व । अदस्मैनरोव्वचसे दधातन यदाशी-र्द्दादम्पतीव्वाममश्नुतः ॥ पुमान् पुत्रोजायते व्विन्दते व्वस्वधा विश्वाहारपऽएधते गृहे ॥ ॐ भूर्भुवः स्वार्व्विवस्वन्तमावा० स्था० पू० ॥ विवस्वन् इहागच्छेहतिष्ठेमां पूजां गृहाण विवस्वते नमः ॥ तत्पश्चिमे वास्तोर्वृषणदेशे विबुधाधिपमावाहयेत् । एह्येहि वास्तोर्व्विबुधाधिप त्वं गजाधिरूढो मम रक्षणाय वराप्सरोभिश्च विवीजमानो गृहाण पूजां भगवन्नमस्ते ॥ ॐ सवोधिसूरिर्म्मघवाव्वसुपते वसुदावन् युयोद्ध्यस्स्मद्द्वेषाꣳसि व्विश्वकर्मणे स्वाहा ॥ ॐ भूर्भुवः स्वार्व्विबुधाधिपमावाहयामि० स्था० पू० ॥ विबुधाधिप ! इहागच्छेहतिष्ठेमां पूजां० विबुधाधिपाय नमः ॥ तदुत्तरार्द्धे वास्तोर्मेढ्रदेशे जयमावाहयेत् । आवाहयामि तं देवं जयं यष्टिविधारकम् । जयत्वं हि समागच्छ क्षेत्रेस्मिन् सन्निधौ भव ॥ ॐ आषाढं युत्सुपृतनासुपप्रिꣳ स्वर्षामप्सां वृजनस्यगोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसञ्जयन्तन्त्वामनुमदेमसोम ॥ ओं भूर्भुवः स्वर्जयमावा० स्था०पू०भोजयन्त! इहागच्छेहतिष्ठेमां पूजां गृहाण जयन्ताय नमः तदुत्तरेवास्तोर्जठरवामभागे मित्रमावाहयेत् । मित्रत्वमह्येहितमोपशान्त्यै पद्मासनः पद्मकरोसि नित्यम् । गृहाण पूजां घृतमोदकादीर्मित्रानेमत्रैर्भगवन् नमस्ते ॥ ॥ ओं मित्रोनऽएहिसुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳस्योनः स्योनम् ॥ स्वानभ्राजाङ्घारेऽबम्भारेहस्तसुहस्तकृशानवेतेवः

सोमक्रयणास्तान्वृत्तद्ध्वम्मावोदभन् । ओं भूर्भुवः स्वर्मित्रमावा० स्था० पू० । मित्रेहागच्छेहतिष्ठेमां पूजां गृहाण मित्रायनमः ॥ तदुत्तरे वास्तोर्वामहस्ते राजयक्ष्माणमावाहयेत् । आवाहयामि तं देवं यक्ष्माणं राजसंज्ञकम् । नानाव्याधिसमाकीर्णं रोगैश्च परिशोभितम् । वामेन वरदं चैव दक्षिणेनाभयप्रदम् ॥ आगच्छ भगवन् यक्ष्मन् पूजेयं प्रतिगृह्यताम् ॥ ओं नाशयित्री बलासस्यार्शसउपचितामासि अथोशतस्ययक्ष्माणाम्पाकारोरसिनाशिनी ॥ ओं भूर्भुवः स्वः राजयक्ष्माणमावा० स्था० पू० राजयक्ष्मन् इहागच्छेह तिष्ठेमां पूजां गृहाण राजयक्ष्मणेनमः ॥ तदुत्तरे वास्तोर्वामहस्तेरुद्रमावाहयेत् । आवाहयामि तं रुद्रं सर्वदा शंकरं विभुम् उमाधिष्ठितवामाङ्गं वरदाभयहस्तकम् ॥ जटागंगाधरं सौम्य कर्पूरादिसमप्रभम् ॥ आगच्छ भगवन् रुद्र क्षेत्रेस्मिन्सन्निधौ भव ॥ ओं अवरुद्रमदीमह्यवदेवंत्र्यम्बकम् ॥ यथानोवस्यसस्करद्यथानः श्रेयसस्करद्यथानोव्यवसाययात् ॥ ॐ भूर्भुवः स्वः रुद्रमावाहयामि स्था० पू० । रुद्र! इहागच्छेहतिष्ठेमां पूजां गृहाण श्रीमद्भगवतेरुद्रायनमः ॥ तत्पूर्वपदेवामहस्ते पृथ्वीधरमावाहयेत् । पृथ्वीधरत्वं मम मण्डलेस्मिन् आधारभूतोजगतीतलस्य । स्थित्वा वरं देहि सुखप्रदस्त्वं गृहाण पूजां भगवन्नमस्ते ॥ ॐ स्योनापृथिवि नोभवानृक्षरानिवेशिनी यच्छानः शर्मसप्रथाः ॥ ॐ भूर्भुवः स्वः पृथ्वीधरमावा० स्था० पू० ॥

पृथ्वीधरेहागच्छेहतिष्ठेमां पूजां गृहाण पृथिवीधराय नमः ॥
मध्यपदचतुष्टये वास्तोर्हृदये ब्रह्माणमावाहयेत् । आवाहयामि देवेशमूर्ध्वभागे व्यवस्थितम् । हंसयुक्तरथारूढं कोटिसूर्यसमप्रभम् ॥ चतुर्म्मुखं चतुर्बाहुं चतुर्वेदसमान्वितम् । पुस्तकं चाक्षसूत्रादिदधानं च कमण्डलुम् । विश्वकर्मेति नामानं देवतागणपूजितं ॥ आगच्छ भगवन्न ब्रह्मन् क्षेत्रे स्मिन्न सान्निधौ भव ॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोऽवेन आवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ ॐ भूर्भुवः स्वः ब्रह्माणमावाहयामि स्था० पू० ब्रह्मन् इहागच्छेहातिष्ठ इमां पूजां गृहाण ब्रह्मणेनमः ॥ ततोमण्डलवहिर्भागे ईशानादिकोण क्रमेण चरक्यादीनावाह्य पूजयेत्॥तद्यथा अहमावाहयिष्यामि चरकीं नामराक्षसीम् । अंकुशं डमरुं शंखं कुण्डलं चापि विभ्रतीम् । आगच्छ चरकि त्वं हि पूजेयं प्रतिगृह्यताम् ॥ ओं यन्ते देवीनिर्ऋतिराववन्धपाशङ्ग्रीवास्वविचृत्यम तन्तेविष्याम्यायुषोनमध्यादथैताम्पितुमद्धिप्रसूतः । नमो भूत्यै येदञ्चकार ॥ ॐ भूर्भुवः स्वः चरकीमावा० स्था० पू० चराकि ! इहागच्छेहातिष्ठेमांपूजां गृहाण चरक्यै नमः। अथाग्नेयाम् विदारीमावाहयेत् ॥ आवाहयामितां दैत्यां विदालीसदृशाननाम्। विशालनखरोमाढ्यां चापवाणधरां वराम् ॥ विदारित्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥ ॐ अक्षराजाय कितवङ्कृतायादिनवदर्शन्त्रेतायै कल्पिन

न्द्धापराायाधिकल्पिनमास्कन्दाय सभास्थाणुम्मृत्यवे गोऽय-च्छमन्तकाय गोघातं क्षुधे योगाम्ऽिवकृन्तन्तम्भिक्षमाणऽ उपतिष्ठति दुष्कृताय चरकाचार्य्यम्पाप्मने सैलगम् ॥ ओं भूर्भुवः स्वः विदारीमावा० स्था० पू० विदारि ! इहागच्छे-हतिष्ठेमाम्पूजां गृहाण विदार्य्यै नमः ॥ ततो नैर्ऋत्यां पूतनामावाहयेत् ॥ पूतने त्वमिहागच्छ राक्षसीगणसंयुता। मयानिवेदिताम्पूजां गृहाण वरदाभव ॥ ॐ इन्द्रस्यक्रो-डोदित्यै पाजस्यन्दिशां जत्रवोदित्यै भसज्जीमुतान्हृद-यौपशेनान्तरिक्षम्पुरीततानभऽउदर्य्येण चक्रवाकौ मत-स्नाभ्यान्दिवम्वृक्काभ्याङ्गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्हृदान् कुक्षिभ्याᳬसमुद्रमुदरेण वैश्वानरम्भस्मना ॥ ॐ भूर्भुवः स्वः पूतनामावा० स्था० पू० पूतने ! इहागच्छेहतिष्ठेमां पूजां गृहाण पूतनायै नमः ॥ अथ वायव्ये पापराक्षसी-मावाहयेत् ॥ अहमावाहयिष्यामि राक्षसीम्पापपूर्विकाम् । रक्तानना धूम्रवस्त्रां राक्षसीगणसंयुताम् ॥ राक्षसि त्व-मिहागच्छ पूजेयं प्रतिगृह्यताम् ॥ ॐ यस्यास्ते घोरआसऽ ञ्जुहोम्येषाम्वन्धानामवसर्ज्जनाय । यान्त्वाजनोभूमिरितिप्र-मन्दते निर्ऋतिंत्वाहम्परिऽवेदाऽविश्वतः ॥ ॐ भूर्भुवः स्वः पापराक्षसीमावा० स्था० पू० पापराक्षसि ! इहागच्छेह तिष्ठेमां पूजां गृहाण पापराक्षस्यै नमः ॥ ततः पूर्वदक्षिण पश्चिमोत्तरदिक्षु क्रमेण स्कन्दम्, अर्य्यमणं जृंभकं, पिलि-

पिच्छं,चावाहयेत् ॥ तथा पूर्वे स्कन्दम् । आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम् । रुद्रतेजः समुद्भूतं देवसेनासमन्वितम् ॥ मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणम् । आगच्छ भगवन् स्कन्द क्षेत्रेऽस्मिन् सन्निधौ भव ॥ ॐ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव । तन्नऽ इन्द्रोबृहस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु ॥ ॐ भूर्भुवः स्वः स्कन्दमावा० स्था० पू० भोस्कन्देहागच्छेह तिष्ठेमां पूजां गृहाण स्कन्दाय नमः ॥ दक्षिणे अर्य्यमणं आवाहयामि देवेशमर्य्यमणं पितृनायकम् ॥ दिव्यं माहिषमारूढं दण्डपाणिं शुभेक्षणम् कर्म्मणां फलदातारं लोकानां कर्मसाक्षिणम् ॥ एहि त्वमर्य्यमन् देव क्षेत्रेऽस्मिन् सन्निधौ भव ॥ ॐ यदद्यसूरऽउदिते नागामित्रोअर्य्यमा । सुवाति सविताभगः ॥ ॐ भूर्भुवः स्वः अर्य्यमणमावा० स्था० पू० अर्यमन् ! इहागच्छेहातिष्ठेमां पूजां गृहाण अर्यमणे नमः ॥ पश्चिमे जृंभकम् । आवाहये त्वां प्रहरं च मुख्यं जृंभायमाणं वरखड्गहस्तम् । प्रत्यग्दिशारक्षणतत्परंच ह्यत्राधिवासं कुरु जृंभकत्वम् ॥ ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा ऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजतेस्वाहा प्रबुद्धाय स्वाहा विजृंभमाणाय स्वाहा

विच्चृताय स्वाहा सᳬहानाय स्वाहोपस्थिताय स्वाहाऽयनाय स्वाहा प्रायणाय स्वाहा ॥ ॐ भूर्भुवः स्वः जृंभकमावा० स्था० पू० जृंभकेहागच्छेहतिष्ठेमां पूजां गृहाण जृंभकाय नमः ॥ उत्तरे पिलिपिच्छम् । आवाहयेत्तं पिलिपिच्छकं च मयूरपिच्छानिविधारयन्तम् । वामे तु हस्ते धनुरादधानं वाणं दधानं त्वितरेतु हस्ते ॥ ॐ कास्विदासीत्पूर्वचित्तिः किᳬस्विदासीद् वृहद्वयः । कास्विदासीत्पिलिप्पिला-कास्विदासीत्पिशङ्गिला ॥ ॐ भर्भुवः स्वः पिलिपिच्छ-मावा० स्था० पू० । पिलिपिच्छेहागच्छेहतिष्ठेमां पूजां गृहाण पिलिपिच्छाय नमः । ततः प्रागाद्यष्टदिक्षु इन्द्रादि लोकपालानावाह्य पूजयेत् । तद्यथा पूर्वे इन्द्रमावाहयेत् । चतुर्दन्तगजारूढोवज्रपाणिः पुरन्दरः । प्राचीपतिस्तुध्या-तव्योनानाभरणभूषितः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्र-ᳬ हवेहवे सुहवᳬ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्र ᳬस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भूर्भुवः स्वरिन्द्रमावा० स्था० पू० भोइन्द्रेहागच्छेहतिष्ठेमां पूजां गृहाण इन्द्राय नमः । अग्निकोणेऽग्निमावाहयेत् ॥ पिशंगः श्मश्रुकेशाक्षः पिशंगाक्षोजटाधरः । छागस्थः साक्षसूत्रश्च सप्तार्चिः श-क्तिधारकः ॥ एवं ध्यात्वा सदा पूज्योऽध्वरेग्निः सर्वकाम-धुक् ॥ ॐ त्वन्नोऽग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवया सिसीष्ठाः यजिष्ठोवन्हितमः शोशुचानोविश्वाद्वेषाᳬसि प्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवः स्वराग्निमावा० स्था० पू०

अग्ने इहागच्छेहातिष्ठेमां पूजां गृहाण अग्नये नमः ॥ दक्षिणे यमम् । ईषत्पीतोयमोध्येयोदण्डहस्तोविजानता । ॐ यमायत्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ॐ यमायत्वा मखायत्वा सूर्यस्यत्वा तपसे । देवस्त्वा सविता मद्ध्वानक्तु पृथिव्याः सᳬस्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोसि ॥ॐ भूर्भुवः स्वर्यममावा०स्था० पू० भोयमइहागच्छेहतिष्ठेमाम्पूजां गृहाण यमायनमः ॥ नैर्ऋत्ये निर्ऋतिमावाहयेत् । रक्तदृक् पाशभृत्क्रुद्धोनिर्ऋतिर्विकृताननः ॥ पुंस्थितः खड्गहस्तश्च भूतवान् राक्षसप्रियः ॥ ॐ असुन्न्वन्तमयजमानामिच्छस्तेनस्येत्यामान्विहितस्क्करस्य । अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋते तुभ्यमस्तु ॥ ओं भूर्भुवः स्वः निर्ऋतिमावा० स्था० पू० । निर्ऋते ! इहागच्छेहतिष्ठेमम्पूजां गृहाण निर्ऋतये नमः पश्चिमे वरुणमावाहयेत् ॥ वरुणः पाशभृत्सौम्यः प्रतीच्यां मकराश्रयः ॥ आवाहयामि वरुण क्षेत्रेस्मिन्सन्निधौभव ॥ ओं तत्त्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानोहविर्भिः । अहेडमानोवरुणेहवोध्युरुशᳬस समानऽआयुः प्रमोषीः ॥ ओं भूर्भुवः स्ववरुणमावा० स्था० पू० ॥ वरुणेहागच्छेहतिष्ठेमां पूजां गृहाण वरुणायनमः ॥ वायव्ये वायुमावाहयेत् ॥ धावन्हरिणपृष्ठस्थो ध्वजधारी समीरणः । वरदानकरोधूम्रवर्णोध्येयोविजानता ॥ ओं आनो नियुद्भिः शतिनीभिरध्वरᳬ सहस्रिणीभिरुपयाहि यज्ञम् । वायो

अस्मिन्त्सवने मादयस्व यूयम्पातस्वस्तिभिः सदानः ॥ ॐभूर्भुवःस्वःवायुमावा०स्था०पू० वायो ! इहागच्छेहतिष्ठेमां पूजांगृहाणवायवे नमः ॥ उत्तरे कुवेरमावाहयेत् । ॐ वयꣳ सोमव्रते तवमनस्तनूषुविभ्रतः । प्रजावन्तः सचेमहि ॥ ॐ भूर्भुवःस्वः कुवेरमावाहयामि स्था०पू०कुवेर इहागच्छेहतिष्ठेमांपूजांगृहाण कुवेरायनमः॥ ईशानेईशानमावाहयेत्॥ ॐत-मीशानञ्जगतस्थुषस्पतिन्धियंञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथावेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥ ॐ भूर्भुवःस्वरीशानमावा०स्था०पू० भोईशान! इहाइच्छेहतिष्ठेमांपूजांगृहाणईशानायनमः ईशानपूर्वयोर्मध्येरुद्रमावाहयेत ॥ पंचवक्त्रंदशभुजंत्रिनेत्रंस्मितसुन्दरम् । कर्पूरगौरंच-न्द्रार्धशेखरंसुविभूषितम् ॥ नीलग्रीवमनाहारंव्याघ्रचर्म्माम्बरावृतम् । कमण्डल्वक्षसूत्रादिपाशशूलधरंहरम् । उद्दण्ड दण्डडमरुखट्वाङ्गाभयपात्रकम् ॥ आवाहयामिदेवेशंरुद्रंस-र्वसमृद्धिदम् ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौ सजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्ज्येष्ठाऽअस्माँ २॥ अवन्तुदेवाः ॥ ॐभूर्भुवःस्वःरुद्रमावा०स्था०पू०भोरुद्रेहागच्छेहतिष्ठेमांपूजांगृहाणरुद्रायनमः ॥ नैर्ऋत्यपश्चिमयो-र्मध्येभूमिमावाहयेत् । ससुवर्णामहीप्रोक्तादिव्याभरणभूषिता। चतुर्भुजासौम्यवपुश्चन्द्रांशुसदृशाम्बरा॥ रत्नपात्रस्थपात्राच पात्रौषधिसमन्विता ॥ पद्माकराचध्यातव्याभूमिर्यादवनन्दनी ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानः

शर्म्मसप्रथाः ॥ ओंभूर्भुवःस्वर्भूमिमावा०स्था०पू०भूमेइहाग-च्छेहतिष्ठेमांपूजांगृहाणभूम्यैनमः ॥ इति एवं सर्वान्पूज्यत-मान्देवानावाह्य ओंवास्तुपीठदेवताभ्योनमः इति प्रणम्य प्राणप्रतिष्ठांकुर्य्यात् तत्रमंत्रः ओंमनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंयज्ञ ᳪसमिमन्दधातु ॥ विश्वेदेवा सऽइहमादयन्तामो३म्प्रतिष्ठ॥ इतिप्रतिष्ठांकृत्वा॥ तत्रताम्र-कलशंपूर्वोक्तकलशस्थापनसप्तविंशति (२७) पृष्ठस्थविधिना स्थापयेत् । कलशंप्रतिष्ठाप्यतत्रवरुणंसम्पूज्यकलशंसम्प्रार्थ्य तदुपरिसुवर्णमयींकृकलासरूपांवास्तुप्रतिमामग्न्युत्तारणपूर्व-कंसन्निधायपट्टवस्त्राद्यैराच्छाद्यततस्तंसकलदेवताधिष्ठिताव-यवमुत्तानमीशानकोणस्थितशिरसं नैर्ऋत्यकोणस्थितपादंच यथाकारंवास्तुपुरुषंध्यायेत्। ध्यात्वाग्न्युत्तारणक्रियाकार्य्या। साचयथाप्रथमंदेशकालौसंकीर्त्यअस्यांमूर्तौअवघातादिदोषप-रिहारार्थं अग्न्युत्तारणं देवतासान्निध्यार्थं प्राणप्रतिष्ठां च करिष्ये। इति संकल्प्य मूर्तिं पात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारा जलधारां च पातयेत् ॥ अग्न्युत्तारण-सूक्तं च वारद्वयं पठेत् ॥ (सूक्तं तु षोडशोपचारपूजाप्रकरणे द्रष्टव्यम्) एवमग्न्युत्तारणं कृत्वा पंचामृतेन संस्नाप्य कल-शोपरि स्थापयेत्। ॐ भूः वास्तुपुरुषमावाहयामि । ॐ भुवः वास्तुपुरुष० ॐ स्वः वास्तुपुरुष० ॐ भूर्भुवः स्वः वास्तुपुरुषमहाबलपराक्रम सर्वदेवाश्रितशरीरब्रह्मपुत्रसकल-ब्रह्माण्डधारकभगवन्निहागच्छ। ॐ आगच्छ भगवन् वास्तो

सर्वदेवैराधिष्ठित । भगवन् कुरुकल्याणं यज्ञेस्मिन्सन्निधौ भव ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्धिपदेशंचतुष्पदे ॥ भो वास्तुपुरुषेहागच्छेहातिष्ठ इत्यावाह्य । ओं वास्तोष्पते नमः इतिपञ्चोपचारैः सम्पूज्य ओं वास्तोष्पते संकटेभ्योमां रक्षरक्ष स्वाहा इति सम्प्रार्थ्य । ततोङ्गदेवताः शिख्यादीन् प्रणवादिनमोन्तैर्नाममंत्रैर्गन्धादिभिर्मिलितोपचारैर्यथोक्तप्रकारेण प्रत्येकं वा एकत्र काण्डानुसमयेन पदार्थानुसमयेन वा पंचोपचारैः षोडशोपचारैर्वा पूजयेत् । तत्र क्रमः ओं शिखिने नमः इदं पाद्यं एषोऽर्घः इदमाचमनीयम् इदं स्नानं इत्यादि षोडशोपचाराः पञ्च वा । एवं सर्वत्र ज्ञेयम् ॥ १ ॥ ॐ पर्जन्याय नमः २ ओं जयन्ताय नमः ३ ओं कुलिशायुधाय नमः ४ ओं सूर्याय नमः ५ ओं सत्याय नमः ६ ॐ भृशाय नमः ७ ओं आकाशाय नमः ८ ओं वायवेनमः ९ ओं पूष्णेनमः १० ओंवितथाय० ११ ओंगृहक्षताय० १२ ओं यमायनमः १३ ओंगन्धर्वाय०१४ ओंभृंगराजाय० १५ ओंमृगाय० १६ ओंपितृभ्योन० १७ ओं दौवारिकाय० १८ ओंसुग्रीवाय० १९ ओंपुष्पदन्ताय० २० ओंवरुणाय० २१ ओंअसुराय० २२ ओंसर्पेभ्योन० ५३ ओंशेषाय० २४ ओंपापाय० २५ ओंरोगाय० २६ ओंअहयेन० २७ ओंमुख्याय०२८ ओंभल्लाटाय० २९ ओंसोमाय० ३० सर्पाय० ३१ ओंआदितये० ३२ दितये० ३२ ओंअद्-

म्योन० ३४ ओंआपवत्साय० ३५ ओंअर्यम्णे० ३६ ॐ सवित्रेनमः ३७ ॐ सावित्राय० ३८ ॐ विवस्वते० ३९ ॐ विबुधाधिपाय० ४० ॐ जयाय ० ४१ ॐ मित्राय० ४२ ॐ राजयक्ष्मणे० ४३ ॐरुद्राय० ४४ ॐपृथ्वीधराय० ४५ ॐब्रह्मणेनमः ४६ एवं शिखिप्रभृतिपंचचत्वारिंशद्देवान् नाममंत्रैः पूजयेत् ॥ ततोमण्डलवाह्ये ईशाने चरक्यैनमः एतानिपाद्यादीनिसमर्पयामि । आग्नेयाम् विदार्यैनमः एतानि० ॥ नैर्ऋत्यां पूतनायै नमः एतानि० । वायव्ये पापराक्षस्यै नमः एतानि० ॥ पूर्वे स्कन्दाय नमः एतानि० दक्षिणे अर्यम्णे नमः एतानि० ॥ पश्चिमे जृंभकाय नमः एतानि० उत्तरे पिलिपिच्छाय नमः एतानि० ॥ पूर्वे इन्द्राय नमः अग्निकोणे अग्नये नमः दक्षिणे यमायनमः नैर्ऋत्ये निर्ऋतये नमः । पश्चिमे वरुणाय नमः ॥ वायव्ये वायवे नमः ॥ उत्तरे कुवेराय नमः ईशाने ईशा-नायनमः ईशानपूर्वयोर्मध्ये रुद्राय नमः । निर्ऋतिपश्चि-मयोर्मध्ये भूम्यैनमः ॥ ततः सर्वपूजान्ते पूर्वे उग्रसेनायनमः दक्षिणे डामराय नमः ॥ पश्चिमे महावित्साय नमः । उत्तरे कुलिशायनमः ॥ इतिं सम्पूज्य वास्तोष्पतिं प्रार्थयेत् ओं यज्ञभागं प्रतीक्षस्व पूजां चैव वलिं मम । नमोनमस्ते देवेश मम स्वस्तिकरोभव ॥ एवं सर्वान्देवान् विधिवत्स-म्पूज्य पायसवलिं दद्यात् वलिद्रव्यन्तु सर्वासां वास्तुमण्ड-लदेवतानां आज्ययुक्तं पायसमेव वलिमन्त्रास्तु नाममंत्रा

एव । वलिदानानन्तरं होमस्तु वैकल्पिकः । प्रतिष्ठायान्तु रक्षोघ्नेन नवति(९०)पृष्टस्थ सूक्तेन रक्तत्रिसूत्र्या मण्डपमापिवेष्टयेत् । इति वास्तुपूजनविधिः ॥ सर्ववल्यन्ते वास्तुपुरुषस्य वलिंहरेत् यथा नानापक्वान्नसंयुक्तं नानागन्धसमन्वितम् । वलिं गृहाण देवेश वास्तुदोषप्रणाशक ॥ ओं वास्तु पुरुषाय एषवलिर्न मम । ततः प्रार्थना । ओं मंत्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितम् । यत्पूजितं मया देव परिपूर्णं तदस्तुमे ॥ १ ॥ नमस्ते वास्तुदेवेश सर्वविघ्नहरोभव । शांतिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥ इत्युक्त्वा वास्तुपुरुषाय नारिकेलं ससुवर्णं समर्प्य प्रणमेत् ॥ ततः पश्चात् एकस्मिन्पात्रे दध्योदनदीपरक्तचन्दनरक्तपुष्पाक्षतरूप्यसुवर्णसंयुक्तं वलिदानं कर्तव्यम् ॥ तत्र मंत्राः । स्वर्गपातालमर्त्येषु ये देवावास्तुसंभवाः । गृह्णन्त्विमं वलिं ह्वद्यं तुष्टायान्तु स्वमन्दिरम् ॥ मातरोभूतवेतालाः ये चान्ये वलिकांक्षिणः ॥ विष्णोः परिषदा ये च तेपि गृह्णन्त्विमं वलिम् ॥ पितृभ्यः क्षेत्रपालेभ्योये चान्ये भैरवादयः । ते सर्वे तृप्तिमायान्तु वास्तुदोषः प्रणश्यतु ॥ इति ॥

---

अत्र विशेषः प्रतिष्ठाप्रकाशे प्रथमं अङ्गदेवतानामावाहनप्राणप्रतिष्ठां विधाय पश्चात् वेदिकोत्तरभागे कलशे वास्तोष्पतिपूजनं कृत्वा ततोऽङ्गदेवतापूजनमुक्तम् । ग्रन्थान्तरेतु वास्तुमण्डले अङ्गदेवतापूजनं आवाहनादिसर्वोपचारं दत्वा वास्तुवेदिकामध्ये मण्डूकादिपरतत्वान्तदेवतापूजनं पीठोक्तं विधायं तत्र कलशं निधाय तस्योपरि वास्तोष्पतिपूजनं चोक्तं प्रकारद्वयमपि प्रामाण्यमेवेति । वलिविषयेतु ग्रन्थकारैर्वलिद्रव्याणि पृथक्मन्त्राश्चोक्ता ते च मन्त्रा स्तान्त्रिकवास्तुयागप्रकरणे षड्विंशति ( २६ ) पृष्ठे द्रष्टव्याः । परन्तद्विधानम् । वामपथानुयायिनाम्प्रीतिकर-

मिति । दक्षिणापथेतु सर्वेषां वास्तुदेवतानां प्रीतिकरं वलिद्रव्यं घृतमिश्रितपायसमेव । पूजनान्ते होमोप्युक्तोग्रन्थान्तरे ततोवलिरिति । परन्तु शान्तिसुधाकरे होमाशक्तौ वलिमात्रं दद्यादित्युक्तम् । शारदायामपि पायसाद्यैर्वलिंहरेदित्येवोक्तम् । ( अतएवात्र होमः कृताकृतएव । वल्यर्थंपायसाद्यभावे तु कुशपुष्पघृताक्षतैरपि-वलिरिति आदि शब्दार्थः ) ( वासिष्ठीशान्तौ ) वास्तुमण्डलदेवतामन्त्राश्च प्रतीकरूपेणोक्तास्तेचाप्यत्र प्रकाश्यन्ते ॥ वेदोक्तेनैव मन्त्रेण कुर्य्याद्वै वास्तु-पूजनम् । तमीशानेतिमन्त्रेण इशांचैव प्रपूजयेत् ॥ आब्रह्मन्निति मन्त्रेण पर्ज्जन्यं पूजयेत्ततः । योनःपिता जयं चैव महानिन्द्रोमहेन्द्रकम् । आदित्यंगर्भमादित्यं सत्यं सत्यश्चमे तथा । भायैदार्वा भृगुं चैव हृयंशश्चान्तरिक्षकम् ॥ अग्निस्तिग्मेन वह्निं च पूषन्तवेति पूषणम् । विदद्यदीतिमन्त्रेण वितथं हि प्रपूजयेत् ॥ अयमग्नि-गृ्हपतिर्गृहक्षतं प्रपूजयेत् । यमायत्वा यमं चैव गन्धर्वं गन्धवारिकम् ॥ अग्ने-ब्रह्मेति मन्त्रेण भृङ्गराजं प्रपूजयेत् । भगप्रणेतर्मन्त्रेण भृगुं चैव तु पूजनम् ॥ पितृभ्यः पितरः पूज्याः द्वारिकस्य तु वारुणम् । सुग्रीवस्य सुपर्णोसि पुष्पदंतं च श्रीश्चते ॥ वरुणं वारुणैर्मन्त्रैः हृद्यं हठं शश्शुचिस्तथा । सुसन्दृशेति मन्त्रेण शेषं च परिपूजयेत् ॥ प्रतिपदसीति मन्त्रेण पापयक्ष्माणमर्चयेत् । युञ्जन्ति रोगमुख्योसौ नागोनन्तोनयत्परः ॥ उद्वासमुद्र उद्वाणं भल्लाटोभद्रकर्णकः । सौमद्रेति मन्त्रेण सोमं चैव प्रपूजयेत् ॥ या इषवोरगश्चैव अदित्यैव्युन्दनं दितिः । अदितिर्द्यौः सुमन्त्रेण अदितिं च प्रपूजयेत् ॥ मध्ये ब्रह्मासमाख्यातः पूजयेद्ब्रह्मणस्पते । अर्यमा अर्यमणं चैव यमं वैवस्वतं तथा ॥ मित्रावरुणेति मैत्रस्तु महीद्यौः पृथिवी-धरे । आपोहिष्ठेतिमन्त्रेण रुद्रं कामं प्रपूजयेत् ॥ ते आचरन्ती चरकी वेद्यावेदी विदारिका । पूतना पुरुदस्मेति पापकानः पापराक्षसी ॥ अस्कन्नमद्यमन्त्रेण स्कन्नइन्द्रां प्रपूजयेत् । त्र्यामां चैव तु सम्पूज्य अर्य्यमणम्वृहस्पतिम् ॥ जृम्भकं वरुणं मन्त्रं सोमस्पतिवृक्षकः । हेतुकं तु हिमस्य धात्र्यम्बकं त्रिपुरांतिकम् ॥ अग्निश्चाग्नि वेतालं अग्निस्तिग्मेऽग्निजिह्वकम् । कालाक्षं कार्षिरसि कयानश्चित्र करालिनम् ॥ एकाच एकपादं तु भायैदा भीमरूपिणीम् । ज्वालामुखन्तु युञ्जानो गन्धर्वो गन्धमादिनम् ॥ अजागर इति मन्त्रेण चतुःषष्टिः प्रपूजयेत् । इति । (अथनामावलिरपि तत्रैव देवतानां स्थानानि च) ईशश्चैव तु पर्ज्जन्यो जयो माहेन्द्र एव च । आदित्यश्चैव सत्यश्च भृगुश्चैवान्तरिक्षकः ॥ एते पूर्वे समाख्याताः दक्षिणे कथयाम्यहम् । अग्निः पूषा च वितथो गृहक्षेत्रो यमस्तथा ॥ गन्धर्वोभृंगराजश्च भृगुश्चैव यथाक्रमम् । दक्षिणे कथिताह्येते पश्चिमे च निबोध हि ॥ पितरोद्वारि-कश्चैव सुग्रीवश्च यथाक्रमम् । पुष्पदन्तश्चवरुणोह्यसुरः शेष एव च ॥ पापोयक्ष्मा च विख्यातो वारुण्यां दिशि संस्थिताः । उत्तरस्याम्प्रवक्ष्यामि देवता मुनि पुङ्गव ॥ रोगोनाम तथाचोक्ता भल्लाटः सोम एव च । उरगश्चदितिर्विप्र अदितिश्च न संशयः ॥ मध्ये ब्रह्मा समाख्यातः सर्वलोकपितामहः । अर्य्यमादेवता पूर्वे वैवस्व-

# ॥ अथ योगिनीमण्डलपूजनम् ॥

ईशाने ओंजयायै नमः जयाम्० पूर्वे विजयायैनमः विजयाम्० अग्नि० ओंअजितायैनमः अ० दक्षिणे ओं अपराजितायै नमः अपरा० नैर्ऋ० ओं क्षेमकर्त्र्यैनमः क्षे० पश्चिमे लक्ष्म्यै नमः लक्ष्मी० वायव्ये ओं वैष्णव्यैनमः वैष्ण० उत्तरे ओं पार्वत्यै नमः पार्वती० ओं दिव्यायैनमः दिव्याम्० ओं महाशब्दायै नमः महाश० ओं सिद्धायैनमः सिद्धाम् ओं माहेश्वर्य्यै नमः माहेश्वरीम्० ओंप्रेताक्ष्यैनमः प्रेताक्षीम्० ओं दाहिन्यैनमः दाहिनीम्० ओं काल्यैनमः कालीम्० ओं कालरात्र्यै नमः कालरात्री० ओं निशाक-

---

तश्च दक्षिणे ॥ मैत्रस्तु पश्चिमे ज्ञेयः उत्तरे पृथिवोधरः। आपोवत्सश्च ईशान्ये वास्तुमध्ये प्रपूजयेत् ॥ सविता सावित्रआग्नेये जयोजयश्चनैर्ऋते। रुद्रश्च रुद्र-कामश्च वायव्यां च प्रकीर्तितौ ॥ ईशाने चरकादेवी ह्याग्नेये च विदारिका। पूतना नैर्ऋते पूज्या वायव्ये पापराक्षसी ॥ स्कन्नमर्च्चय ते पूर्वे दक्षिणेऽर्यमणं तथा। पश्चिमे जृम्भकः पूज्यः उतरं पिलिपिच्छकः ॥ हेतुकं पूर्वपीठे तु आग्नेये त्रिपुरान्तकम्। दक्षिणे ह्यग्निवेताल अग्निजिह्वन्तु नैर्ऋते ॥ कालाक्षं वारुणे पीठे वायव्यान्तु करालिनम्। उत्तरे ह्येकपादन्तु ईशाने भीमरूपिणीम् ॥ ज्वालामुखं तु पाताले आकाशं गन्धमादने। अजागर इति मन्त्रेण चतुःषष्टिः प्रपूजयेत् ॥ अस्मि-न्ग्रन्थे मया वास्तुपूजाविधानं तन्त्रोक्तं वेदोक्तं चानेकविधं प्रदर्शितम् एकाशोति-पदकं चतुःषष्ठिपदकं चापि। परन्तु कुत्र २ चित्स्थले देवताभेदोमन्त्रभेदश्च प्रकारद्वयेपि संभवति तत्र नहि वास्तवभेदोयतोदेवतायाः पर्य्यायभेदात् तत्तन्नाम-मन्त्राः पद्धतिकारैः स्वस्वपद्धतौ समुपन्यस्ताः। इति विद्वद्भिर्भृशं चिन्तनीयमिति। प्रार्थयामः ॥

र्य्यै नमः निशाकरी० ओं हुंकार्य्यै नमः हुंकारीम् ओं वैतालिकायैनमः वैतालिका० ओं ह्रींकार्य्यैनमः ह्रींकारीम्० ओं भूतडामरायै नमः भूतडा० ओं उर्द्धकेश्यै नमः उर्द्धके० ओं विरूपाक्ष्यै नमः विरूपा० ओंशुष्काङ्ग्यैनमः शुष्काङ्गी० ओं नरभोजिन्यै नमः नरभो० ओंफेत्कार्य्यै नमः फेत्कारीम्० ओंवीरभद्रायै नमः वीरभद्राम्० ओंधूम्राक्ष्यै नमः धूम्रा० ओं कलहप्रियायै नमः कल० ओं राक्षस्यै नमः राक्षसीम्० ओं घोररक्ताक्ष्यै नमः घोर० ओं विशालाक्ष्यै नमः विशा० ओ वीरायै नमः वीराम्० ओं भयङ्कर्य्यै नमः भयङ्करीम्० ओं कुमार्य्यैनमः कुमारीम्० ओ० ओं चण्ड्यै नमः चण्डीम्० आ० ओं वाराह्यैनमः वाराहीम्० ओं मुण्डधारिण्यैनमः मुण्डधा० ओं भैरव्यैनमः भैरवीम्० ओं वज्रधारिण्यैनमः वज्रधारि० ओं क्रोधायैनमः क्रोधाम्० ओं दुर्मुखायैनमः दुर्मुखाम्० ओं प्रेतवाहिन्यैनमः प्रेतवा० ओं कर्कायैनम- कर्काम्० ओं दीर्घलम्बोष्ठ्यैनमः दीर्घल० ओं मालिन्यैनमः मालिनीम्० ओं योगिन्यैनमः योगिनी० ओं कालाग्निमोहिन्यैनमः काला० ओं मोहिन्यैनमः मा० ॐ चक्रायैनमः चक्राम् ॐ कुण्डलिन्यैनमः कुण्ड० ओं वालुकायैनमः वालुकाम्० ओं कौवेर्य्यैनमः कौवेरीम्० ओं यमदूत्यैनमः यमदूती० ओं करालिन्यैनमः करालिनीम्० ओं कौशिकायैनमः कौशिकाम्० ओं यक्षिण्यैनमः याक्षि० ओं भक्षिण्यैनमः भक्षिणीम् ओं कौमार्य्यैनमः कौमारी०

ओं मन्त्रवाहिन्यैनमः मन्त्रवा० ओं विशालायैनमः विशा० ओं कार्मुक्यैनमः कार्मुकीम्० ओं व्याघ्र्यैनमः व्याघ्रीम्० ओं महाराक्षस्यैनमः महारा० ओं प्रेतभक्षिण्यैनमः प्रेतभ० ओ धूर्जट्यैनमः धूर्जटिम्० ओं विकटायनमः विकटाम्० ओं घोररूपायैनमः घोररूपाम् ओं कपालिकायै नमः क० ओं निष्कलायैनमः निष्क० ओं अमलायैनमः अम० ओं सिद्धिप्रदायैनमः सि०प्र० एभिर्मन्त्रैः आवाह्य संस्थाप्य उपचारैः सम्पूजयेत् ॥ अनया पूजया चतुःषष्टियोगिन्यः प्रीयन्ताम् इत्युत्सृज्य मण्डलाग्रे पायसवलिं दद्यात्। इति योगिनीपूजा।

---

एभिर्मन्त्रैरिति। ङेन्तं नमोन्तं तन्नामपूजनादौ प्रयोजयेत्। इति तन्त्रवचनात् चतुर्थ्यन्तनाम्नैव योगिनीपूजा कार्य्या। योगिनीपूजा तन्त्रशास्त्रेष्वेव प्रसिद्धा। यत्तु केनापि स्वकीयपद्धतौ वेदमन्त्राः प्रदर्शिताः नैते योगिनीमन्त्राः देवद्रव्याद्यनुस्मारकाभावात्। नचान्यासु पद्धतिषु दृष्टिपथं गताः। अन्वर्थानामपिमन्त्राणां वचनात्वयथार्थमैन्द्रोस्यादितिन्यायेन मन्त्राणां विनियोग इति ( सं० चिन्तामणौ ) तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान्समाहितः इति ( आग्नेये ) ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम्। अन्यांश्चाभिमतान्देवान् तल्लिङ्गैरर्चयेन्नरः इति च ( कौर्म्मे ) स्नानसूत्रे कात्यायनोऽपि ब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणैस्तल्लिङ्गैरर्चयेत्। इत्यादिवचनप्रामाण्यात्। येषां लिङ्गमेव विनियोजकं ते मन्त्राग्राह्याः। यदि च क्लिष्टपरिकल्पनया एतदपि मन्यामहे। तत्तल्लिङ्गमन्त्रपदेन यथाकथञ्चिदपि तत्तद्देवताद्रव्याद्यनुस्मारकपदघटितमन्त्रपरिग्रहः कार्य्यः। तथापि नैते योगिनीद्रव्याद्यनुस्मारकाः। ते च मन्त्राः प्रतीकरूपेण प्रदर्शयामः॥ तमीशानम् १ आब्रह्मन् ॥ २ ॥ महांइन्द्रः ॥ ३ ॥ सद्योजातः ॥ ४ ॥ आदित्यङ्गर्भम् ॥ ५ ॥ स्वर्णघर्मः ॥ ६ ॥ सत्यञ्च ॥ ७ ॥ भायैदार्व्वाहारम् ॥ ८ ॥ जिह्वामे ॥ ६ ॥ हिङ्कारायस्वाहा ॥ १० ॥ अग्निश्चमे ॥ ११ ॥ पूषन्तव ॥ १२ ॥ वेद्यावेदिः ॥ १३ ॥ अयमग्निः

# ॥ अथ क्षेत्रपालपूजनम् ॥

ॐ अजरायनमः अजरमावाहयामि स्थापयामि एवं सर्वत्र ॐ इन्द्रचौरायनमः इन्द्रचौर० ॐ व्यापकायनमः व्यापक० ॐ इन्द्रमूर्तयेनमः इन्द्रमूर्ति० ॐ उच्चाणायनमः उच्चाणमा० ॐ कूष्माण्डायनमः कूष्माण्ड० ॐ वरुणाय-नमः वरुणमा० ॐ विमुक्तायनमः विमुक्त० ॐ वामकायनमः वामकमा० ॐ सप्तकायनमः सप्तकमा० ॐ लीलालोलुपा-यनमः ली० ॐ एकदंष्ट्रायनमः एकदंष्ट्र० ॐ ऐरावताय-

१४ ॥ इमम्मे० ॥ १५ ॥ यमायत्वा ॥ १६ ॥ गन्धर्व्वस्त्वा ॥ १७ ॥ मित्रस्यचर्ष-णीः ॥१८॥ अग्नेब्रह्म ॥१९॥ ऋगप्रणेतः ॥ २० ॥ सुपर्णोऽसि० ॥ २१ ॥ पितृभ्यः स्वधायिभ्यः ॥२२॥ वरुणस्योत्तम्भनम् ॥२३॥ वरुणःप्राविता ॥२४॥ हंठ सः शुचिषत् ॥ २५ ॥ सुसन्दृशन्त्वा ॥ २६ ॥ प्रतिपदसि ॥ २७ ॥ देवीरापः ॥ २८ ॥देवस्यत्वा ॥२९॥ देवस्यत्वा॥३०॥भुवोयज्ञस्य ॥३१॥ कदाचनस्तरीरसि ॥३२॥ भद्रङ्कर्णेभिः॥ ३३ ॥ इषेत्वोर्ज्जेत्वा ॥ ३४ ॥ देवीद्यावापृथिवी ॥ ३५ ॥ विश्वानिदेव ॥ ३६ ॥ अ-सुन्वन्तमयजमानम् ॥ ३७ ॥ अग्निश्चमे ॥ ३८ ॥ वह्वीनाम्पिता ॥ ३९ ॥ नमस्तेरुद्र ॥ ४० ॥ ऋतञ्चमे ॥ ४१ ॥ तेआचरन्ती ॥ ४२ ॥ वेद्यावेदिः ॥ ४३ ॥ पावकानः सर०ः ॥ ४४ ॥ अस्कन्नमद्य ॥ ४५ ॥ तेआचरन्ती ॥ ४६ ॥ महीद्यौः ॥ ४७ ॥ उपयामगृहीतोसिसाविऽसित्रो ॥ ४८ ॥ आप्यायस्वसमेतुते ॥४९॥ काण्डिरसि॥५०॥ त्र्यम्बकंयजामहे ॥ ५१ ॥ श्रीश्चते ॥ ५२ ॥ विष्णोरराटमसि ॥ ५३ ॥ ब्राह्मणमद्य ५४ ॥ भद्रङ्कर्णेभिः ॥ ५५ ॥ एकाचमे ॥ ५६ ॥ ब्रह्माणिमेमतयः ॥ ५७ ॥ असङ्ख्या-तासहस्राणि ॥ ५८ ॥ सुपर्णोसि ॥ ५९ ॥ यातेरुद्र ॥ ६० ॥ देवीद्यावापृथिवी ॥ ६१ ॥ इदम्विष्णुः ॥ ६२ ॥ वृष्णऽऊर्मिरसि ॥ ६३ ॥ भायैदार्व्वाहारम् ॥ ६४ ॥ इति ॥

नमः ऐरावत० ॐ औषधीघ्नायनमः औषधीघ्न० ओं वन्धनायनमः वन्धनमा० ओं दिव्याकारायनमः दिव्याकार० ओं कम्वलायनमः कम्वलमा० ओं क्षोभणायनमः क्षोभ० ओं अगवायनमः अगव० ओं कालायनमः कालमा० ओं बलधरायनमः बलधर० ओं अणवेनमः अणुमा० ओं चन्द्रवारणायनमः चन्द्र० ओं फटाटोपायनमः फटा० ओं जटिलायनमः जटिलमा० ओं ऋतवेनमः ऋतुमा० ओं घण्टेश्वरायनमः घण्टे० ओं विकटायनमः विकटमा० ओं मणिभायनमः मणिभम्० ओं गुणवन्धायनमः गुणव० ओं डामरायनमः डामरमा० ओं ठंठफणायनमः ठंठफण० ओं स्थविलायनमः स्थविल० ओं दन्तुरायनमः दन्तुरमा० ओं धनदायनमः धनदमा० ओं नागकर्णायनमः नागक० ओं फोत्कारायनमः फोत्का० ॐ महादलायनमः महाद० ओं चीरकायनमः चीरकमा० ओं सिंहायनमः सिंहम्० ओं मृगाय नमः मृगम्० ओं पक्षायनमः पक्षम्० ओंमेघवाहनायनमः मेघवा० ओं तीक्ष्णोष्ठायनमः तीक्ष्णो० ओं अनलायनमः अनलम्० ओं सुकृतवेनमः सुकृतुमा० ओं पुंधापायनमः पुंधाप० ओं वक्रकायनमः वक्रकम्० ओं वातायनमः वातम्० ओं यापनायनमः यापन० (सर्वभक्षायनमः) (सर्वसाक्षिण्यै नमः) एवमावाह्य संस्थाप्य उपचारैः सम्पूजयेत् ॥ ततः प्रार्थना कार्य्या ।

भ्राजच्चन्द्रजटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं दोर्दण्डात्तगदाकपालमरुणस्रग्गन्धवस्त्रोज्ज्वलम् । घण्टामेखलघर्घरध्वनिलसज्झङ्कारभीमं विभुं वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥ इति प्रार्थ्य । माषभक्तवलिं दद्यात् । इति क्षे०पू०

# अथ मण्डपपूजाप्रकरणम्

यजमानः प्राङ्मुखः उपविश्य आचम्य प्राणानायम्य देशकालौसंकीर्त्य श्री अमुकदेवताप्रीतये मण्डपस्तंभदेवानां द्वारतोरणत्रिशूलपताकाध्वजसहितानां दिक्पतीनां च पूजनमहं करिष्ये इतिसंकल्प्य ॥ ( १ ) मध्यवेद्या ईशानकोणस्तम्भे ॐ एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ त्रिदशैकवन्द्य । श्वेतोत्पलाभास कुशाम्बुहस्त गृहाण पूजां भगवन्नमस्ते ॥ हंसपृष्ठसमारूढ देवतागणपूजित । ईशकोणस्थितं स्तम्भमलङ्कुरु जगत्पते ॥ आवाहयाम्यहं देवं देवेशं च प्रजापतिम् । अनेकव्रतकर्तारं सर्वेषां च पितामहम् ॥ विश्वरूपं निराधारं निरालम्वं निरामयम् ।

---

( १ ) ईशानस्तंभपूजनन्तु देवीयज्ञे ( शान्तिसुधाकरे ) एह्येहि पद्मोद्भववल्लभे त्वं हंसाधिरूढे कमलायताक्षि । संमोहितोदैत्यगुरुश्चयक्षः स्थिराभव त्वं मम यज्ञकार्ये ॥ आगच्छ ब्रह्मपत्नि त्वं यज्ञेस्मिन्सन्निधिं कुरु ॥ ॐ भूर्भुवः स्वर्ब्रह्माणीमावा० स्था० पू० ब्रह्माणि इहागच्छेहतिष्ठेमाम्पूजां गृहाण ब्रह्मपत्न्यै नमः ॥अत्रैव दध्योदनमाषवलिमप्यर्प्पयेत् । इति। शेषंदेवमण्डपवत्

षोडशस्तम्भदेवताः (विधानपारिजाते ) अथातः सम्प्रवक्ष्यामि षोडशस्तंभदेवताः । ईशानादिक्रमेणैव पूजनीयाः प्रयत्नतः ॥ ब्रह्माविष्णुश्चरुद्रश्चशक्रभानुजनार्दनाः । पितरः सर्प्पसेनान्यः पृषदश्वोविशांपतिः ॥ प्रचेतावसुसीरी च वाक्पतिस्त्वष्ट्रनन्दनः । एते देवाः समाख्याताः स्तंभकर्म्मणि सूरिभिः ॥ इति ॥

आगच्छ देव देवेश यज्ञेऽस्मिन्सन्निधिंकुरु॥ ओं भूर्भुवः स्वर्ब्रह्मन् इहागच्छेहतिष्ठेमां पूजांगृहाणेत्यावाह्य ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनआवः सबुध्न्याउपमाअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ इत्यनेन सम्पूज्य ओं वेदाधारायवेद्याय ज्ञानगम्यायसूरये । कमण्डल्वक्षमाला स्रुक् स्रुवहस्ताय ते नमः इति नत्वा कृष्णाजिनाम्बरधर पद्मासन चतुर्मुख । जटाधरजगद्धातः प्रसीद कमलोद्भव॥ इति प्रार्थयेत् । ततः ओं सावित्र्यैनमः ओं वास्तुदेवतायनमः ओं ब्राह्म्यैनमः ओं गंगायैनमः इति तत्रैवसम्पूज्य ओं ऊर्द्ध्वऊषुणऽऊतये तिष्ठादेवोनसविता । ऊर्द्ध्वोभव बाजस्य सनिता यदञ्जिभिर्व्वाघद्भिर्विह्वयामहे इत्यनेन स्तम्भमालभ्य स्तम्भशिरसि नागमात्रेनमः इति सम्पूज्य ओं आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः पितरञ्चप्रयन्तस्वः इत्यनेन शाखाद्यनुमन्त्रयेत इति॥ ( २ ) ततोवेद्यावन्हिकोणस्थस्तम्भे- ओं आवाहये तं गरुडोपरिस्थितं रमार्द्धदेहं सुरराजवन्दितम् । कंसान्तकं चक्रगदाब्जहस्तं भजामिदेवं वसुदेव सूनुम् ॥ ओं पद्मनाभ हृषीकेश कंसचाणूरमर्द्दन । आगच्छ भगवान्विष्णो स्तम्भेऽस्मिन्सन्निधिं कुरु ॥ ओं भूर्भुवः स्वर्विष्णोरिहागच्छेत्यावाह्य । ओं इदं विष्णुर्व्विचक्रमेत्रेधानिदधे पदम् । समूढमस्यपांसुरे विष्णवेनमः इति विष्णुंसम्पूज्य । ओं नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम नमस्ते सर्व लोकात्मन् विष्णवे ते नमो नमः ॥ इति

नत्वा ओं देवदेव जगन्नाथ विष्णो यज्ञपते विभो । पाहिदुःखाम्बुधेरस्मान् भक्तानुग्रहकारक ॥ इति प्रार्थयेत् ततः ॐ लक्ष्म्यैनमः आदित्यायैनमः वैष्णव्यैनमः इति गन्धाक्षतैः सम्पूज्य स्तंभालंभनादि चूडावन्धनं पूर्ववत कुर्य्यात् ॥ ( ३ ) ततोवेद्यानैर्ऋतस्तम्भे गौरीशंरुद्रम्पूजयेत् यथाएह्येहि गौरीश पिनाकपाणे शशांकमौले वृषभाधिरूढ । देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ गङ्गाधर महादेव ! पार्वतीप्राणवल्लभ ! आगच्छभगवन्नीश स्तम्भेस्मिन् सन्निधिं कुरु ॥ ओं भूर्भुवः स्वः शंकर इहागच्छेहतिष्ठेमां पूजां गृहाण । श्रीशंकराय नमः इत्यावाह्य ॥ ओं नमःशंभवाय च मयोभवाय च नमः शङ्करायच

---

( २ ) वन्हिकोणस्थस्तम्भे । देवीमण्डपे तु एह्येहि देवि गरुड़ाधिरूढे विष्णुप्रिये पूर्णशशांकवक्त्रे । विश्वस्यबीजे जलदस्वरूपे विश्वस्ययज्ञे भुविमुक्तिदे त्वं ॥ आवाहयामि तान्देवीं गरुडोपरिसंस्थिताम् । शङ्खचक्रगदाशार्ङ्गखड्गहस्ताम्वरप्रदाम् ॥ चतुर्भुजां स्मेरमुखीं प्रसन्नमनसां सदा । आगच्छ वैष्णवि देवि यज्ञेस्मिन्सन्निधिं कुरु ॥ "ॐ ह्रीं श्रीं वैष्णव्यैनमः" वैष्णवीं आवा० स्था० पू० देवि ! वैष्णवि ! इहागच्छेहतिष्ठेमाम्पूजांगृहाण "श्रीवैष्णव्यैनमः" इति गन्धपुष्पादिभिः । यथालाभोपचारैर्वैष्णवीं सम्पूज्य तदग्रे दध्योदनमाषवलिं निवेदयेत यथा ॐ मातः श्रीवैष्णवि ! एतं वलिं समर्पयामि न मम ॥ इति ततः प्रार्थयेत् । नमस्ते देवदेवेशि विष्णुपत्नि नमोस्तुते । चण्डमुण्डवधे तुभ्यं नमस्ते लोकपावनि ॥ धूम्रासुरवधे देवि ! पीतवर्णे चतुर्भुजे । देवदेवजगन्नाथे वाञ्छितार्थप्रदायिनि ॥ इति ॥ शेषं देव मण्डपवत्

मयस्कराय च नमः शिवाय च शिवतराय च ॥ इति मंत्रेण पूजयेत् । ततः ॐ वृषवाहाय देवाय पार्वतीपतये नमः वरदायार्द्धकायाय नमश्चन्द्रार्धमौलिने ॥ इति नत्वा ओं पञ्चवक्त्र वृषारूढ़ त्रिलोचन सदाशिव ॥ चन्द्रमौले महादेव ! ममस्वस्ति करोभव ॥ इतिप्रार्थयेत् ॥ ततः ओं गौर्य्यैनमः माहेश्वर्यैनमः शोभनायैनमः इति तत्रैव सम्पूज्य पूर्ववत्स्तम्भालंभनादि कुर्यात् इति ॥ ( ४ ) वेद्यावायव्यस्तंभे शक्रमावाह्य पूजयेत तद्यथा ओं एह्येहि वृत्रघ्न गजाधिरूढ़ सहस्रनेत्र त्रिदशैकराज । शचीपते शक्रसुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ ओं शचीपते महाबाहो सर्वाभरणभूषित । आगच्छ भगवन्निन्द्र स्तम्भेस्मिन्सन्निधिं कुरु ॥ ओं भूर्भुवः स्वरिन्द्रेहागच्छेह-

---

( ३ ) देवीमण्डपे तु तत्रैव गौरीं पूजयेत् । तद्यथा एह्येहि गौरि नगराजकन्ये वृषाधिरूढे हरवल्लभे त्वम् । आधारभूते जगताम्मनोज्ञे पाहि त्वमस्मान्विश यज्ञभूमौ ॥ आवाहयामि तान्देवीं हिमाद्रितनयां शुभाम् । माहेश्वरीं वृषारूढ़ां शुक्लवस्त्रां त्रिलोचनाम् ॥ आगच्छ शांभवि ! देवि ! यज्ञेस्मिन्सन्निधिं कुरु । ॐ शांभवि ! इहागच्छेहतिष्ठ "ॐ ह्रींऐंशांभव्यैनमः" इति गन्धादिभिः पूजयेत् । ततः हरकान्ते नमस्तुभ्यं शर्वशक्तिनमोस्तुते । महाहिवलये तुभ्यं दुर्गेदेवि नमोस्तुते ॥ इति नत्वा रक्ताक्षिमध्यमेदेवि रक्तसंहारकारिके । माहेश्वरि ! वृषारूढे वाञ्छितं पूरयाशु मे ॥ इति प्रार्थयेत् ततोदध्योदनमाषवलिं गृहीत्वा एतं वलिं समर्प्पयामि गौर्य्यै नमः । शेष पूजनं देव मण्डपवत्

तिष्ठेमांपूजांगृहाणेतिआवाह्य । ओं त्रातारमिन्द्रमविता-रमिन्द्रꣳहवे हवेसुहवꣳशूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूत-मिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ अनेन सम्पूज्य ओं शचीपते नमस्तुभ्यं नमस्ते मेघवाहन । वज्रहस्तनमस्तेस्तु पुरन्दर नमोस्तुते ॥ इति नत्वा ओं देवराज गजारूढ पुरन्दर शतक्रतो । वज्रहस्तमहावाहो वाञ्छितार्थ फलप्रद इति प्रार्थयेत् ॥ ततः इन्द्राण्यैनमः आनन्दायैनमः विभूत्यै नमः इति तत्रैव सम्पूज्य स्तंभालंभनचूडावन्धनादिकं पूर्ववत कुर्य्यात् ॥ इति ॥ ततोवाह्यद्वादशस्तंभेषु ईशान-कोणादारभ्य द्वादशदेवताः पूजयेत् । (९) तद्यथा ईशान कोणस्तंभे वाह्यश्रेण्यां ॐ आवाहयेतं द्विभुजं दिनेशं सप्ता-

---

(४) देवीमण्डपेऽत्रैवेन्द्राणीम्पूजयेत्तद्यथा । एह्येहि देवि ! गजराजसंस्थे प्रतप्तजाम्बूनदतुल्यवर्णे । सहस्रनेत्रे सुरराजकान्ते पूजाङ्गृहीतुं मम यज्ञकार्ये ॥ आवाहयामि तान्देवीम्वज्रहस्तां सुलोचनाम् । ऐरावतसमारूढां सहस्रनयनैर्युताम् ॥ पुलोमजां कामरूपां पीनोन्नतपयोधराम् । आगच्छ शक्रपत्नि त्वं यज्ञेस्मिन् सन्निधिं कुरु ॥ ॐ भूर्भुवःस्वः इन्द्राणीमावाहयामि स्था० पू० भोइन्द्राणि इहागच्छेहतिष्ठेमाम्पूजांगृहाण । "ॐ ह्रीँ क्लीँ इन्द्राण्यैनमः इति सम्पूज्य एतं दध्योदनमाषवलिंसमर्प्पयामिइन्द्राण्यैनमः ॥ ततोनमस्कारः । पुलोमजे नमस्तुभ्यं नमस्ते गजवाहने । शक्रपत्नि नमस्तुभ्यं वज्रहस्ते नमोस्तुते ॥ इतिनत्वा । सर्वभूतात्मिके देवि सर्वसंहारकारिके । गजराजसमारूढे सर्वदोषहरा भव ॥ इति प्रार्थयेत् ॥ शेषन्देवमण्डपवत् ॥

श्ववाहं द्युमणिं ग्रहेशम् । सिन्दूरवर्णप्रतिमावभासं भजामि सूर्यं कुलवृद्धिहेतोः ॥ ॐ भूर्भुवः स्वः भानुमावाहयामि स्था० पू० भानोरिहागच्छेहतिष्ठेमाम्पूजां गृहाण भानवे नमः ॥ ॐ आकृष्णेन रजसा वर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवोयाति भुवनानि पश्यन् ॥ इत्यनेनाभ्यर्च्य । ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरंचिनारायणशङ्करात्मने ॥ इति नत्वा । ॐ पद्महस्त रथारूढ पद्मासन सुमङ्गल । क्षमां कुरु दयालो त्वं ग्रहराजनमोस्तुते ॥ इत्यभ्यर्च्चयेत् ॥ ततः ओं सूर्य्यायैनमः भूत्यैनमः सावित्र्यै

---

( ५ ) देवीपक्षे तु तत्रैव सूर्यकान्तां पूजयेत् यथा । एह्येहि त्वष्ट्रि वरदे वरेण्ये श्रीसूर्यकान्ते कमनीयरूपे । रथाधिरूढे धृतपद्महस्ते वालार्कवर्णे मृगलोलनेत्रे ॥ आवाहयामि तान्देवीं ससाश्वरथसंयुताम् । पद्महस्तां चतुर्वक्त्रां त्रैलोक्यतिमिरापहाम् । सूर्यकान्तां लोकधात्रीं विश्वसंहारकारिणीम । आगच्छ सूर्यकान्ते त्वं यज्ञेस्मिन्सन्निधिं कुरु ॥ ॐ भूर्भुवः स्वः त्वष्ट्रीमावा० स्था० पू० ॐ सूर्यकान्ते त्वष्ट्रि इहागच्छेहतिष्ठेमाम्पूजाङ्गृहाण ॐ ह्रीँ घृँ सूर्यकान्तायै नमः इति संपूज्य तत एतं माषोदनदधिमिश्रितं वलिं सूर्यकान्तायैसमर्पयामि न मम [परमण्डपेतु सूर्य्यायेतिवलिं समर्पयामि । एवं सर्वत्रस्तम्भाधिष्ठातृदेवाय वलिर्देया ] ततोनमस्कारः । सूर्यकान्ते नमस्तुभ्यं वेदाधारे नमोस्तुते । रथारूढे नमस्तुभ्यं नमस्ते तिमिरापहे ॥ इति नत्वा सर्वस्य बुद्धिरूपे त्वं पद्महस्ते वरप्रदे । स्वर्गापवर्गदे देवि क्षमस्व परमेश्वरि ॥ इति प्रार्थयेत् ॥ शेषन्देवमण्डपवत् ॥

नमः मंगलायैनमः इति सम्पूज्य स्तंभालंभनादिकं पूर्ववत् कुर्य्यादिति । (६) ततः ईशानपूर्वयोर्मध्यस्तंभे गणराजं पूजयेत् । ॐ आवाहयेतं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यम् । विघ्नान्तकं विघ्नहरं गणेशं नमामि रौद्रं सहितं च सिद्ध्या ॥ ॐ लम्बोदरमहाकाय गजवक्त्रचतुर्भुज । आगच्छ गणनाथ त्वं स्तंभेऽस्मिन् सान्निधिं कुरु ॥ ॐ भूर्भुवः स्वः गणपतिं आवा० स्था० पू० गणराज ! इहागच्छेहतिष्ठेमाम्पूजां गृहाण "गणराजाय नमः" ॐ गणानान्त्वागणपतिर्ठं हवामहे प्रियाणान्त्वा प्रियपतिर्ठं हवामहे निधीनान्त्वा निधिपतिर्ठं हवामहेऽवसोमम । आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ इत्यनेनाभ्यर्च्य नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः इति नत्वा ॥ ॐ लम्बोदर महाकाय सतत-

---

(६) देवीपक्षे तत्रैव गणराजपत्नीम्पूजयेत् । ॐ एह्येहि लम्बोदरि दीर्घवक्त्रे नितम्बिनि घूर्णितदीर्घनेत्रे । सिद्धिप्रदे विघ्नविनाशदक्षे पूजाङ्गृहीतुं मम यज्ञकार्यें ॥ आवाहयामि तान्देवीं गजवक्त्रांत्रिलोचनाम् । सिद्धिबुद्धिसमायुक्तां सर्व विघ्नविनाशिनीम् ॥ आगच्छ विघ्नकान्ते त्वं यज्ञेस्मिन्संनिधौ भव॥ॐगणेशकान्ते इहागच्छेहतिष्ठेमाम्पूजाङ् गृहाण । गणेशकान्तां आवा०स्था० पू० "ॐ ह्रीँ गाँ गणेशकान्तायैनमः" ॥ इति सम्पूज्य माषादिवलिं समर्प्पयेत् ततोनमस्कारः । ॐ नमस्ते ब्रह्मरूपिण्यै विष्णुरूपे नमोस्तुते । नमस्ते रुद्ररूपिण्यै महामाये नमोस्तुते ॥ इति नत्वा प्रार्थना कार्य्या । सिद्धिबुद्धिसमायुक्ते देवतागणसेविते । लम्बोदरि महाकाये शिवरूपे नमोस्तुते ॥ इति शेषन्देवमण्डपवत् ॥

म्मोदकप्रिय । गौरीसुत गणेश त्वं विघ्नाद्रक्ष प्रसीद मे ॥
इति प्रार्थयेत् ॥ सरस्वत्यैनमः विघ्नहारिण्यैनमः जयायै
नमः विजयायैनमः इति तत्रैव पूजयेत् ततःस्तंभालंभनादि
पूर्ववत् इति ॥ (७) ततः पूर्वाग्नेययोरन्तरालस्तंभे सप्तमे
पितरं धर्मराजं पूजयेत् ॥ ॐएह्येहि दण्डायुध धर्मराज का-
लांजनाभासविशालनेत्र । विशालवक्षः स्थलरौद्ररूप गृहाण
पूजाम्भगवन्नमस्ते ॥ ॐ चित्रगुप्तादिसंयुक्त दण्डमुद्गर-
धारक । आगच्छ भगवन्धर्म स्तंभेस्मिन् सान्निधिं कुरु ॥
ॐ भूर्भुवः स्वः धर्मराज ! इहागच्छेहतिष्ठेमां पूजां गृहाण
"धर्मराजाय नमः" धर्मराजं आवा० स्था० पू० ॐ यमा-
यत्वाङ्गिरसे पितृमते स्वाहा स्वाहा घर्म्माय स्वाहा घर्मः पित्रे
इत्यनेनाभ्यर्च्य ईषत्पीननमस्तेस्तु दण्डहस्तनमोस्तु ते ।

---

(७) देवीमण्डपे तु तत्रैव यमशक्तिम्पूजयेत् तद्यथा एह्येहि
देवि महिषाधिरूढे धर्मस्यकान्ते धृतदण्डहस्ते । नीलाम्बुदाभास-
विशालनेत्रे पूर्णेन्दुवक्त्रे विश यज्ञभूमौ ॥ आवाहयामि तान्देवीं
चित्रगुप्तादिसेविताम् । आगच्छ धर्मपत्नि त्वं यज्ञेस्मिन्सन्निधौ
भव ॥ ॐ भूर्भुवः स्वः यमकान्तामावाहया० स्था० पू० यमकान्ते !
इहागच्छेहतिष्ठेमाम्पूजाङ्गृहाण "यमकान्तायै नमः" ॥ इति
सम्पूज्य "ॐ ह्रीँ हूँ यमकान्तायैनमः" एतं माषादिवलिं सम-
र्पयामि । ततोनमेत् तत्र मन्त्रः ॥ ॐ धर्मकान्ते नमस्तुभ्यं दण्ड-
हस्ते नमोस्तुते । दिव्यमाहिषमारूढे धर्मरूपे नमोस्तुते ॥ इति
नत्वा ॐ धर्मराज्ञि महाकाये दण्डहस्ते वरप्रदे । रक्तनेत्रे महा-
घोरे लोकसाक्षिजगन्मये ॥ इति संप्रार्थयेत् शेषन्देवमण्डपवत् ।

महिषस्थ नमस्तेस्तु धर्मराजनमोस्तु ते ॥ इति नत्वा ॐ धर्मराज महाकाय दक्षिणाधिपते मम । रक्तेक्षणमहावाहोमम पीडान्निवारय ॥ इतिप्रार्थयेत् ॥ ॐ पूर्वसन्ध्यायैनमः अञ्जन्यै नमः क्रूरायैनमः नियंत्र्यैनमः इति तत्रैव सम्पूज्य स्तंभादि-संस्कारः पूर्ववत् कार्यः ॥ इति । (८) ततोवाह्याग्निकोणे ष्टमेस्तंभे सर्प्पं पूजयेत । ॐ एह्येहि नागेन्द्रधरामरेश सर्वामरैर्वन्दितपादपद्म । नानाफणामण्डलराजमान गृहाण पूजाम्भगवन्नमस्ते ॥ ओं आशीविषसमोपेत नागकन्या-विराजित । आगच्छ नागराजेन्द्र स्तंभेस्मिन् सन्निधिं कुरु ॥ ओं भूर्भुवः स्वर्नागराजेन्द्रमावा० स्था० पू० नाग-राजेन्द्र ! इहागच्छेहतिष्ठेमाम्पूजां गृहाण नागराजायनमः ततः॥ ओं नमोस्तुसर्प्पेभ्योयेके च पृथिवीमनु । येन्तरिक्षे

(८) देवीमण्डपे तु नागपत्नीं पूजयेत् तद्यथा एह्येहि देवि फणिराजकान्ते शिरःसहस्रे धृतखड्गहस्ते विशालवक्षःस्थलदीर्घ-रूपे नानाफणालंकृतदिव्यदेहे ॥ आवाहयामि तान्देवीं पद्मिनीं कामरूपिणीम् कर्पूरधवलां नागकान्तां चैव महाबलाम् ॥ आगच्छ नागराज्ञि त्वं यज्ञेस्मिन्सन्निधौ भव ॐ भूर्भुवः स्वः नागपत्नी-मावा० स्था० पू० नागपत्नि ! इहागच्छेहतिष्ठेमाम्पूजाङ्गृहाण "ॐ ह्रीँ नागपत्न्यैनमः" इति सम्पूज्य शेषपत्नि नमस्तुभ्यं खड्गहस्ते नमोस्तुते विषगर्भे नमस्तुभ्यं शुक्लवर्णे नमोस्तुते ॥ इति नत्वा आशीविषसमोपेते नागपुत्रैर्विराजिते खड्गखेटधरे देवि वरदाभव सुव्रते ॥ इति प्रार्थयेत् ॥ ततः दध्योदनमाषादिवलिं समर्पयामि "ॐ ह्रीँ नागपत्न्यैनमः" इति वलिं समर्प्पयेत् । शेषन्देव-मण्डपवत् ।

ये दिवितेभ्यः सर्प्पेभ्योनमः ॥ इति मन्त्रेण समर्च्य ततः नमः खेटकहस्तेभ्यस्त्रिभोगेभ्योनमोनमः । नमोभीषणदेहेभ्यः खड्गधृग्भ्योनमोनमः ॥ इति नत्वा । खड्गखेटधराः सर्पाः फणामण्डलमण्डिताः । एकभोगाः साक्षसूत्राः वरदाः सन्तु मे सदा ॥ इति प्रार्थयेत् ॥ मध्यमसंध्यायैनमः धरायैनमः पद्मायै नमः महापद्मायै नमः इति तत्रैव पूजयेत् । ततः-स्तंभालंभनादि कुर्य्यात् ॥ इति । (६) आग्नेयदक्षिणयोरन्तरालस्तंभे नवमे षण्मुखं पूजयेत् । यथा ॐआवाहयामि देवेशं षण्मुखं कृत्तिकासुतम् । रुद्रतेजः समुद्भूतं देवसेना-समन्वितम् ॥ मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणम् ॥ आगच्छ भगवन्स्कन्द स्तंभेस्मिन्सान्निधिं कुरु ॥ ओं भूर्भुवः स्वः स्कन्दमावा० स्था० पू० भगवन् स्कन्द ! इहागच्छेह

---

६—देवीमण्डपे तु तत्रैव कौमारकान्तां पूजयेत् । यथा एह्येहि देविधृतशक्तिहस्ते मयूरसंस्थे वरदेनघे त्वम् । कौमारकान्ते करुणार्द्रचित्ते पूजाङ्गृहीतुं मम यज्ञकार्ये ॥ आवाहयामि तान्देवीम्मयूरासनसंस्थिताम् । कौमारीरूपसम्पन्नां शक्तिहस्ताम्बरप्रदाम् ॥ आगच्छ स्कन्दशक्ति त्वं यज्ञेस्मिन्सन्निधिं कुरु । ॐ भूर्भुवः स्वः स्कन्दकान्तामावाहयामि स्था० पू० स्कन्दकान्ते इहागच्छेहतिष्ठेमाम्पूजाङ् गृहाण "ओं ऐँ स्कन्दकान्तायैनमः" इति पूजयेत् । ततएतं माषभक्तवलिं दधिमिश्रितं समर्प्पयामि स्कन्दकान्तायैनमः इति वलिं समर्प्पयेत ततः स्कन्दकान्ते शिवे शुभ्रे घंटाकुक्कुटधारिणि । पताकाशक्तिहस्ते च चतुर्वर्गप्रदा भव ॥ इति प्रार्थयेत् शेषं देव मण्डपवत् ॥

तिष्ठेमांपूजां गृहाण ओं भगवते स्कन्दायनमः । ओं यदक्रन्दः प्रथमञ्जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यम्महिजातन्ते अर्व्वन्॥ इत्यभ्यर्च्य ओं नमः स्कंदाय शैवाय घण्टा कुक्कुटधारिणे । पताकाशक्तिहस्ताय षण्मुखाय च ते नमः इति नत्वा ॐ मयूरवाहनस्कन्द गौरीसुत षडानन कार्तिकेय महाभाग दयाङ्कुरु दयानिधे इति प्रार्थयेत् ॥ पश्चिमसन्ध्यायैनमः कौमार्य्यैनमः इति तत्रैव सम्पूज्य प्राग्वत् स्तंभालंभनादिकं कार्य्यम् ॥ (१०) दक्षिणनैर्ऋतान्तरालस्तंभे दशमे वायुं पूजयेत् ॥ आवाहयामि देवेशं भूतानान्देहधारिणम् । सर्वाधारम्महावेगं मेघवाहनमीश्वरम् ॥ गन्धर्वैः सह गन्तारं त्रैलोक्यान्तरचारिणम् । आगच्छ भगवन्

१०—शक्तिमण्डपे त्वत्रैव वायुशक्तिम्पूजयेत् यथा एह्येहि देवि ! पवनस्वरूपेमृगाधिरूढेपवनस्यकान्ते । ध्वजन्धृते गन्धवहेऽनघे त्वं विशस्व यज्ञे मम रक्षणाय ॥ आवाहयामि तान्देवीं भूतानान्देहधारिणीम् । धूम्रवर्णां मृगारूढां दण्डहस्ताम्वरप्रदाम् ॥ आगच्छ वायुकान्ते त्वं यज्ञेस्मिन्सन्निधिं कुरु । ओं भूर्भुवः स्वः वायुकान्तामावाहयामि स्थापयामि पूजयामि वायुकान्ते इहागच्छेहतिष्ठेमाम्पूजाङ् गृहाण " ओं ह्रीँ वाँ वायुकान्तायैनमः" । इति सम्पूज्य एतं माषभक्तवलिं समर्प्पयामि वायुकान्तायैनमः । इति वलिमर्प्पयेत् । ततः वायुकान्ते नमस्तुभ्यं धूम्रवर्णे नमोस्तुते । ध्वजहस्ते नमस्तुभ्यं सर्वाधारे नमोस्तुते ॥ इति नत्वा धावन्हरिणपृष्ठस्थे वायुकान्ते महाबले । घोररूपे [illegible] वरं देहि नमोस्तुते ॥ इति प्रार्थयेत् शेषदेवमण्डपवत् ॥

वायो स्तंभेस्मिन् सन्निधौ भव ॥ ओं भूर्भुवः स्वः वायुं आवा० स्था० पू० वायोरिहागच्छेहतिष्ठेमां पूजां गृहाण वायवेनमः ॥ ॐ वायो येते सहस्रिणोरथासस्तेभिरागहि । नियुत्वान् सोमपीतये ॥ इत्यनेनाभ्यर्च्य ॥ तव वायो वृहस्पते त्वष्टुर्जामातरद्भूत । अवांस्यावृणीमहे ॥ इत्यनेन वा समभ्यर्च्य "वायवेनमः" इति पूजयेत् ततः नमोहरिणपृष्ठस्थ समीरणनमोस्तु ते । धूम्रवर्ण नमस्तेस्तु शीघ्रगामिन् नमोस्तु ते ॥ इति नमस्कारः । धावद्धरिणपृष्ठस्थ ध्वजहस्त समीरण । दण्डहस्तमृगारूढ वरन्देहि वरप्रद । इति प्रार्थयेत् ॥ अत्रैव वायव्यैनमः गायत्र्यैनमः मध्यसन्ध्यायै नमः इति सम्पूज्य स्तंभालंभनादिपूर्ववत् कार्य्यम् ।(११) ततोनिर्ऋतिस्तंभे एकादशे सोममावाह्य पूजयेद्यथा आवा-

---

११—अत्रैव शक्तिमण्डपे । रजनीशकान्तामावाह्य पूजयेद्यथाएह्येहिदेवि ! रजनीशकान्ते प्रदीप्तवर्णे मृगलोलचित्ते । श्वेताम्बरे दीर्घविशालरूपे श्रीदण्डहस्ते कमलायताक्षि ॥ आवाहयामि तान्देवीं रोहिणीं कामचारिणीम् । श्वेताम्बरान्दण्डहस्तां चारुनूपुरमण्डिताम् ॥ आगच्छ सोमपत्नि त्वं यज्ञेस्मिन्सन्निधिं कुरु ॐ भूर्भुवः स्वः सोमकान्तामावाहयामि स्था० पू० ॥ ओमकान्ते! इहागच्छेहतिष्ठ मांपूजाङ्गृहाण । "ॐश्रीँ सोमकान्तायैनमः" इति सम्पूज्य ततः एतं माषादिवलिं समर्प्पयामि सोमकान्तायै नमः इति वलिमर्प्ययेत् । ( श्वेताम्बरे नमस्तुभ्यं किरीटिनि नमोस्तुते । सोमकान्ते नमस्तुभ्यं दण्डहस्ते नमोस्तुते ॥ इति नत्वा । रोहिणि त्वं महाभागे रत्नसिंहासनस्थिते । शुक्लवस्त्रपरीधाने ग्रहदोषहरा भव ॥ इति प्रार्थयेत् ॥ ) शेषन्देवमण्डपवत् ॥

हयामि देवेशं शशांकं रजनीपतिम् । क्षीरोदाधिसमुद्भूतं हरमौलिविभूषणम् ॥ सुधाकरं द्विजाधीशं त्रैलोक्यहिमकारकम् । औषध्याप्यायनकरं सोमकन्दर्पवर्द्धनम् ॥ आगच्छ भगवन् सोम स्तंभेस्मिन् सान्निधिं कुरु । ॐ भूर्भुवः स्वः सोममावा० स्था० पू० भगवन् सोम इहागच्छेहतिष्ठेमां पूजां गृहाण भगवते सोमायनमः ॥ ॐ आप्यायस्व समेतुते ठिवश्वतः सोमवृष्ण्यम् । भवाठवाजस्य सङ्गथे ॥ ॐ इमन्देवा असपत्नठं सुवद्ध्वम्महते क्षत्राय महतेज्ज्यैष्ठयाय महते जानराज्ज्यायेन्द्रियस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यैठविश एषवोमीराजा सोमोस्माकम्ब्राह्मणानाꣳ राजा ॥ ॐ सोमायनमः इति पूजयेत् ॥ ततः अत्रिपुत्र निशानाथ द्विजराज निशाकर । सोमत्वं सौम्यभावेन ग्रहपीडां निवारय ॥ इति प्रार्थयेत नमेच्च । अत्रैव ॐ सावित्र्यैनमः अमृतकलायै नमः विजयायैनमः पश्चिमसन्ध्यायै नमः इति सम्पूज्य स्तंभालंभनादिसंस्कारं कुर्यादिति (१२) ततोनैर्ऋतिपश्चिमयोर्म्मध्ये द्वादशस्तंभे वरु-

१२—शक्तिमण्डपे तु अत्रैव वरुणकान्ताम्वक्ष्यमाणमंत्रेणावाह्यपूजयेद्यथा एह्येहि देवि ! वरुणस्य कान्ते ! पतिप्रिये पाशधरे रतिस्थे । यादोगणैः सेवितपादपद्मे गृहाण पूजाम्फलपुष्पयुक्ताम् ॥ आवाहयामि तान्देवीं पाशहस्तां महाबलाम् । कुटिलाङ्गीम्महावेगां महामोहप्रदायिनीम् ॥ आगच्छ वारुणीशक्ति यज्ञेस्मिन्सन्निधिं कुरु । ॐ भूर्भुवः स्ववारुणीमावा० स्था० पू० वरुणकान्ते ! इहा-

णमावाह्य पूजयेद्यथा आवाहयामि देवेशं सलिलस्याधिपं प्रभुम् । शंखपाशधरं सौम्यं वरुणं यादसाम्पतिम् ॥ गंत्री-रथसमारूढं मणिरत्नसमन्वितम् । आगच्छ देव वरुण स्तंभेस्मिन् सन्निधिं कुरु ॥ ॐ भूर्भुवः स्वः वरुणमावाह० स्था० पू० वरुण इहागच्छेहतिष्ठेमां पूजां गृहाण वरुणा-यनमः ॥ ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय त्वामव-स्युराचके । ॥ तत्वायामि०ब्रह्मणा ०वन्दमानस्ते यजमानो हविर्भिः ॥ अहेडमानो०वरुणेहवोध्युरुशꣳ समानऽआयुः प्रमोषीः ॥ इति मंत्रेण संस्थाप्य "ॐ वरुणायनमः" इति पूजनम् ॥ ततः ओं वरुणाय नमस्तेस्तु नमः स्फ-टिकदीप्तये । नमस्ते श्वेतहाराय जलेशाय नमोनमः ॥ इति नत्वा शंखस्फटिकवर्णाभ श्वेतहाराम्वरावृत । पाशह-स्तमहावाहोदयाङ्कुरु दयानिधे ॥ इति प्रार्थयेत् ॥ ॐ वारु-ण्यैनमः पाशधारिण्यैनमः वृहत्यैनमः इति तत्रैव गन्धा-द्यैः सम्पूज्य स्तंभालंभनादिकम्पूर्ववत्कुर्यात् ॥ इति ।

---

गच्छेहतिष्ठ मां पूजाङ्गृहाण "ॐ ह्रीँ वां वारुण्यैनमः" इति सम्पूज्य एत माषादिवलिं समर्प्पयामि "वारुण्यैनमः" इति वलिं समर्प्पयेत् पाशहस्ते नमस्तुभ्यं श्वेतहारे नमोस्तुते । जलेश्वरि नमस्तुभ्यं श्वेतवस्त्रे नमोस्तुते ॥ इति नत्वा ॥ शुद्धस्फटिकवर्णाभे मुक्ताहारविभूषिते । पाशहस्ते महाघोरे दयाङ् कुरु दयामयि॥ इति संप्रार्थयेत् शेषन्देवमण्डपवत् ।

(१३) पश्चिमवायव्यान्तरालस्तंभेत्रयोदशे अष्टवसून् आवाह्य पूजयेत्तद्यथा आवाहयामि देवेशान् वसूनष्टौ महाबलान् । सौम्यमूर्तिधरान् देवान् दिव्यायुधकरान्वितान् । शुद्धस्फाटिकसंकाशान् नानावसुविराजितान् ॥ अश्वारूढान् दिव्यवस्त्रान् सर्वालंकारभूषितान् । आवाहयामि स्तंभेस्मिन् वसूनष्टौ सुखावहान् ॥ ॐ भूर्भुवः स्वर्वसूना॰ वा॰ स्था॰ पू॰ वसवः इहागच्छतेहतिष्ठतेमाम्पूजां गृह्णत "वसुभ्योनमः" ॥ ॐ वसवस्त्वाकृण्वन्तु गायत्रेण छन्दसाङ्गिरस्व द्ध्रुवासि पृथिव्यसि धारयामयि प्रजाꣳराय-स्पोषङ्गौपत्यꣳ सुवीर्य्यꣳ सजातान्न्यजमानाय रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धार-

१३—देवीमण्डपे त्वत्रैव वसुशक्तिं पूजयेत् तद्यथा । एह्येहि देवि हयसंस्थिते त्वं मुखश्रियालज्जितपूर्णचन्द्रे । कारुण्यरूपे करुणार्द्रचित्ते पूजाङ्गृहीतुं मम यज्ञकार्यें ॥ आवाहयामि तान्देवीं वासवीं सर्वकामदाम् । कामरूपां कृपापूर्णां सुरूपां वसुवल्लभाम् ॥ अश्वारूढां दिव्यवस्त्रां महामांगल्यदायिनीम् । आगच्छ वसुपत्नि त्वं यज्ञेस्मिन्सन्निधिं कुरु ॥ ओं भूर्भुवः स्ववासवीमा॰ वा॰ स्था॰ पूज॰ वासवि ! इहागच्छेहतिष्ठेमाम्पूजाङ्गृ॰ वासव्यैनमः ॥ एतं माषभक्तबलिं च समर्पयामि "वसुपत्न्यैनमः" ततः अश्वारूढे नमस्तुभ्यं सौम्यरूपे नमोस्तुते । वसुपत्नि नमस्तुभ्यं दिव्यवस्त्रे नमोस्तुते ॥ इति नत्वा दिव्यवस्त्रे दिव्यदेहे पुष्पमालाविभूषिते । अश्वारूढे महाभागे मोहरूपे नमोस्तुते ॥ इति प्रार्थयेत् । शेषन्देवमण्डपवत् ॥

यामयि प्रजाꣳ रायस्पोषङ्गौपत्यꣳ सुवीर्य्यꣳ सजातान्न्य-
जमानायादित्यास्त्वाकृण्वन्तु जागतेन छन्दसाङ्गिरस्वद्
ध्रुवासि द्यौरासि धारयामयि प्रजाꣳ रायस्पोषङ्गौपत्यꣳ
सुवीर्य्यꣳ सजातान्न्यजमानायाऽविश्वेत्वादेवाऽवैश्वानराःकृ-
ण्वन्त्वानुष्टुभेनछन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधारयामयिप्र-
जाꣳरायस्पोषङ्गौपत्यꣳसुवीर्य्यꣳसजातान्न्यजमानाय ॥
इत्यावाह्य ॥ वसोःपवित्रमसिशतधारंऽवसोःपवित्रमसिसहस्र
धारम् । देवस्त्वासविता पुनातुऽवसोःपवित्रेणशतधारेणसुप्वा
कामधुक्षः ॥ इति मंत्रेण संस्थाप्य ॐ वसुभ्योनमः इति
मंत्रेण पूजयेत् ततोमाषभक्तादिवलिं गृहीत्वा एतं माषादि-
वलिं समर्प्पयामि वसुभ्योनमः इति वलिमर्प्पयेत् ततोनमेत्
तत्रमंत्रः । नमस्करोमि देवेशान् नानावसुविराजितान् ।
शुद्धस्फटिकसंकाशान् दिव्यायुधकरान् वसून् ॥ ततः प्रार्थ-
येत् प्रार्थनामंत्रः । दिव्यवस्त्रादिव्यदेहाः पुष्पमालाविभू-
षिताः । वसवोष्टौमहाभागाः वरदाःसन्तु मे सदा ॥ इति ।
ॐ विनतायैनमः अणिमायैनमः भूत्यैनमः गरिमायैनमः ॥
इति तत्रैव सम्पूज्य स्तंभालम्भनादिसंस्कारः पूर्ववत्कार्य्यः ॥
इति । (१४) ततोवायव्यस्तंभे चतुर्दशे कुवेरं पूजयेत् । 15
यथा आवाहयामि देवेशं धनदं पदपूजितम् । महामलं दि-
व्यदेहं नरयानगतं विभुम् ॥ दिव्यमाल्याम्वरधरम् गदा-
हस्तं महाभुजम् । आगच्छ यच्छराजत्वं स्तंभेस्मिन् सान्नि-
धिं कुरु ॥ ॐ भूर्भुवः स्वर्धनदमा० स्था पू० धनद इहाग-

च्छेहतिष्ठेमाम्पूजां गृ० 'धनदायनमः'' ॥ ॐ सोमोधेनुꣳ सोमोअर्वन्तमाशुꣳ सोमोवीरङ्कर्म्मण्यन्ददाति । सादन्यं विदथ्यꣳसभेयं पितृश्रवणं योददाशदस्मै ॥ इत्यावाहनम् ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुविभ्रतः प्रजावन्तः सचेमहि ॥ इति स्थापनम् ॥ ॐ यक्षराज नमस्तेस्तु नमस्ते नरयानग । पीताम्बर नमस्तेस्तु गदापाणे नमोस्तु ते ॥ इति नत्वा । दिव्यदेहधनाध्यक्ष पीताम्बर गदाधर । उत्तरेश महावाहोवांछितार्थफलप्रद ॥ इति प्रार्थयेत् ॥ ॐ आदित्यैनमः लघिमायैनमः सिनीवाल्यैनमः इति सम्पूज्य स्तंभालंभनादिकं कार्य्यम् इति । (१९) ततः उत्तरवायव्यान्तरालस्तंभे पञ्चदशे गुरुम्पूजयेत । यथा ॐ आवाहयामि देवेशं गुरुं त्रिदशपूजितम् । हेमगोरोचनावर्णं पीनस्कन्धं सुवक्षसम् ॥ शंखं च कमलं चैव पाणिभ्यामिहविभ्रतम् ।

---

(१४) देवीमण्डपेतु एह्येहि यक्षेश्वरि यक्षकान्ते पीताम्बरे कामवरे वरेण्ये । कुवेरकान्ते नरमध्यसेव्ये चकोरनेत्रे पलमद्यसेव्ये आवाहयामि तान्देवीं धनदां यक्षरूपिणीम् । आगच्छ यक्षकान्ते त्वं यज्ञेस्मिन्सन्निधिं कुरु ॥ ॐ भूर्भुवः स्वर्धनदामावा० स्था० पू० धनदे इहागच्छेहतिष्ठेमांपूजां गृहाण "धनदायैनमः" इति संपूज्य एतं माषभक्तबलिं समर्पयामि धनदायैनमः इतिबलिं समर्प्य ततः यक्षकान्ते नमस्तुभ्यं नमस्ते नरगामिनि । पीताम्बरे नमस्तुभ्यं गदाहस्ते नमोस्तुते । इति नत्वा दिव्यदेहधरेऽध्यक्षे पीताम्बरगदाधरे । यक्षकान्ते महाघोरे मायारूपे नमोस्तुते ॥ इतिप्रार्थयेत् शेषन्देवमण्डपवत् ।

वृहस्पते समागच्छ स्तंभेस्मिन्सान्निधिं कुरु ॥ ॐ भूर्भुवः स्वः वृहस्पतिमावा० स्था० पू० वृहस्पते ! इहागच्छेहतिष्ठे-माम्पूजां गृहाण "वृहस्पतयेनमः" ॥ ॐ वृहस्पते ! अति-अदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु॰ यदीदयच्छवसऋ-तप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ इत्यनेनाभ्यर्च्य ॐ ब्र-ह्मपुत्रनमस्तेस्तु पीतध्वज नमोस्तु ते त्रिदशार्चितदेवेश ! सिन्धूद्भवनमोस्तु ते ॥ इति नत्वा ॐ पूजितोऽसि यथा शक्त्या दण्डहस्त वृहस्पते । क्रूरग्रहाभिभूतस्य शान्तिं देवगुरो कुरु ॥ इति प्रार्थयेत् ॥ अत्रैव ॐ पूर्णमास्यैनमः सावित्र्यैनमः इत्यर्चयित्वा स्तंभालंभनादिसंस्कारः कार्यः ॥ इति (१६) ततः उत्तरेशानयोरन्तरालस्तंभे विश्वकर्माण-

---

१५—देवीमण्डपे तु अत्रैव गुरुशक्तिं तारां पूजयेत् । एह्येहि तारे तरणिप्रकाशे वालेन्दुभाले कमलायताक्षि । इन्द्रादिदेवैः परिसेव्यमाने दुस्तारसंसारतरेऽनघे त्वम् ॥ आवाहयामि तां तारां तरुणीं कामचारिणीम् ॥ गुरुप्रियां वसुमतीं दिव्यालंकार-शोभिताम् ॥ आगच्छ गुरुकान्ते च यज्ञेस्मिन्सन्निधिं कुरु । ओं भूर्भुवः स्वः गुरुकान्तामावा० स्था० पू० गुरुकान्त इहागच्छेहति-ष्ठेमाम्पूजाङ्गृहाण गुरुकान्तायै नमः । इति संपूज्य ततः एतं माषभक्तादिवलिं समर्पयामि "गुरुकान्तायै नमः" इति वलिं समर्प्पयेत्ततोनमस्कारः गुरुकान्ते नमस्तुभ्यं कामरूपे नमोस्तुते । पीतवस्त्रे नमस्तुभ्यं तारे देवि नमोस्तुते ॥ इति नत्वा वरदे सर्वलोकानां भुक्तिमुक्तिवरप्रदे । पावनि सर्ववर्णानां वाञ्छितं कुरु मे सदा ॥ इति प्रार्थयेत् शेषन्देवमण्डपवत् ॥

मावाह्य पूजयेत् । ॐ आवाहयामि देवेशं विश्वकर्माणमीश्वरम् । मर्तामूर्तकरन्देवं सर्वकर्तारमीश्वरम् ॥ त्रैलोक्यसूत्रकर्तारं द्विभुजं सर्वदर्शिनम् । आगच्छ विश्वकर्मंस्त्वं स्तम्भेस्मिन् सन्निधिं कुरु ॥ ॐ भूर्भुवः स्वर्विश्वकर्माणमावा० स्था० पू० । विश्वकर्मन् ! इहागच्छेहतिष्ठेमाम्पूजां गृहाण विश्वकर्मणेनमः ॥ इत्यावाह्य संस्थाप्य ॥ ओं विश्वकर्मन् हविषावावृधानःस्वयंयजस्वपृथिवीमुतद्याम् । मुह्यन्त्वन्येऽअभितःसपत्नाइहास्माकम्मघवासूरिरस्तु ॥ ओं ऽविश्वकर्मन् हविषाऽवर्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् । तस्मैविशः समनमन्तपूऽर्वीरयमुग्रोऽविहऽयोयथासत् ॥ उपयामगृहीतोसीन्द्रायत्वाऽविश्वकर्मणऽएषतेयोनिरिन्द्रायत्वा विश्वकर्मणे ॥ "ऽविश्वकर्मणे नमः" अनेन वा समभ्यर्च्य ततः

(१६) देवीमण्डपेत्वत्रैव तच्छक्तिं विश्वकर्मां पूजयेद्यथा ॐ एह्येहि देवि वरदे भुवनस्यमातः सिंहासनस्थे सुभगे शरण्ये पीताम्वरे चन्द्रनिभे वरेण्ये पूजाङ्गृहीतुं मम यज्ञकार्ये ॥ आवाहयामि तान्देवीं सृष्टिरूपां परात्पराम् । सर्वतेजः समुत्पन्नां सर्वायुधसमन्वितताम् ॥ आगच्छ देवि कल्याणि यज्ञेस्मिन्सन्निधिं कुरु । ॐ भूर्भुवः स्वः विश्वकर्म्मामावा० स्था पू० विश्वकर्मे ! इहागच्छेहतिष्ठेमाम्पूजाङ्गृहाण "विश्वकर्मायै नमः" इतिसमभ्यर्च्य ततः एतं दध्योदनमाषभक्तवलिं समर्प्पयामि "विश्वकर्मायै नमः" इति वलिन्दत्वा ततोनमेत् यथा ॐ शतरूपे नमस्तुभ्यं विश्वस्रष्टे नमोस्तुते । इष्टप्रदे नमस्तूभ्यं दिव्यरूपे नमोस्तुते ॥ इतिनत्वाजगद्रूपे जगद्योने चतुर्वर्गफलप्रदे । वरेण्ये सर्वलोकानां नानाकामफलप्रदे ॥ इति प्रार्थयेत् शेषन्देवमण्डपवत् ।

ॐ नमामिविश्वकर्माणं द्विभुजं विश्वदर्शिनम् । त्रैलोक्य-सूत्रकर्तारं महाबलपराक्रमम् ॥ इतिनत्वा ॐ प्रसीदवि-श्वकर्मंस्त्वं शिल्पिशास्त्रविशारद । सद्दण्डपाणे द्विभुज तेजोमूर्तिधरप्रभो ॥ इतिप्रार्थयेत् । सिनीवाल्यैनमः वास्तु देवतायै सावित्र्यैनमः इतिसम्पूज्य स्तंभालंभनादिसंस्कारः कार्य्यः इतिस्तम्भपूजनम् । एवंयथोक्तांषोडशस्तम्भपूजां विधायपुष्पाञ्जलिंगृहीत्वा ओं अघोरेभ्योऽथघोरेभ्योघोर-घोरतरेभ्यः सर्वेभ्यः सर्वसर्वेभ्योनमस्तेऽअस्तुरुद्रेभ्यः इति पठित्वा पुष्पाञ्जलिं मण्डपेक्षिपेत् । इति ॥

## ❀ अथ तोरणपूजा ❀

ततः मण्डपाद्बहिः पूर्वादिक्प्रभृतिद्वारतोरणपूजामार-भेत् ॥ यथा तोरणसमीपे स्वासने समुपविश्य हस्ते जला-क्षतं गृहीत्वा ॐ अद्येत्यादिदेशकालौ संकीर्त्य द्वारतो-रणपूजाङ्करिष्ये इति सङ्कल्प्य मण्डपस्य पुरोहस्तमात्रमिते

अत्र तु देवीमण्डपे-स्तम्भस्थदेवशक्ति पूजनं यत्कल्पितम् तत्प्रकाशिकाकारिका नकुत्रापिदृष्टाशान्तिसुधाकरादिग्रन्थोक्त पद्धतिमवलम्ब्यैवात्रप्रकाशितम् । वस्तु-तस्तु सर्वस्मिन्मण्डपेस्तम्भोक्तदेवानामेव पूजनं इति सर्वसम्प्रदायसिद्धमिति ॥

दिक्षुतोरणकाष्ठनिर्णयः । न्यग्रोधतोरणंपूर्वेयाम्येत्वौदुम्बरंमतम् । पश्चिमेऽश्व-त्थसंभूतमुत्तरेप्लक्षतोरणम् ॥ गोभिलीयगृह्यसूत्रे । वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षंदक्षिणत-स्तथा । न्यग्रोधमपरादेशादुत्तराच्चाप्युदुम्बरम् ॥ अश्वत्थाग्निभयंविद्यात् प्लक्षा-द्ब्रूयात्प्रमायुकम् । न्यग्रोधाच्छस्त्रसंपीडामक्ष्यामयमुदुम्बरात् ॥ कलशनियमः । द्वारे द्वौ द्वौ कोणेष्वेकैकम् । मण्डपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् । प्रति

देशे विन्न्यस्तस्य पूर्वद्वारोङ्गकाष्ठनिर्मिततोरणस्योभयपार्श्वे कलशस्थापनाविधिना कलशद्वयं संस्थाप्य मध्ये वा एकमेव संस्थाप्य तत्र ध्रुवपूजा कार्य्या । (प्रतितोरणमेकैकः कलशः स्थाप्यः इति पुरश्चर्य्यार्णववचनात्) तत्रैकस्मिन् राहुं द्वितीये वृहस्पतिमावाहयेत् यथा ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता ॐ भूर्भुवः स्वः राहवेनमः राहुमावाहयामि स्था० पू० राहो ! अत्रागच्छेहतिष्ठेमाम्पूजां गृहाण० इति पाद्यार्घ्याचमनस्नानगन्धपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणान्तोपचारैः पूजयेत् ॥ एवं सर्वत्र कलशे पूजनविधिः । ततः नमस्कारप्रार्थने च कुर्य्यात् ॥ ततोद्वितीये कलशे ॐ वृहस्पतेऽअतियदर्य्योऽअर्हाद्युमाद्विभातिक्रतुमज्जनेषु यदीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धाहिचित्रम् । उपयामगृहीतोसिवृहस्पतयेत्वैषतेयोनिर्वृहस्पतयेत्वा ॥ वृहस्पतयेनमः ॐ भूर्भुवः स्वर्वृहस्पतिमावा० स्था० पू० वृहस्पते ! इहागच्छेत्यादिनावाहनादिनमस्का-

---

कोणं तथैकैकंस्थापयेत्कलशं शुभम् ॥ इति । अकालान्कलशानष्टौ चतुर्द्वारेषुस्थापयेत् अन्तः काञ्चनसंयुक्तान्फलपुष्पैरलङ्कृतान् । अहतैयुगलैर्वस्त्रैर्ग्रीवायांतुनिवेशितैः चन्दनागुरुतोयेन पूरयित्वायथाक्रमम् । राहुमिति । प्रतिकलशेसूर्यादिग्रहमपिकेचन अर्च्चयन्तिकेचिन्न । अत्रके पूजनीयास्तदर्थम् ध्रुवंधरां वाक्पतिश्च विघ्नेशं तेषुपूजयेत् । मण्डपस्यतुकोणेषु कलशेषुक्रमादमी ॥ अमृतोदुर्जयश्चैव सिद्धार्थोमङ्गलस्तथा । पूज्याद्वारस्थकुंभेषु शक्राद्यास्तान्मनूत्तमैः ॥ पूर्वेऋग्वेदिनौविप्रौ पठेतांनियमात्ततः । ततस्तोरणपूजनमन्त्राः । सुशोभनंनाम पूर्वेअग्निमीले

रान्तं सर्वोपचारैः सम्पूजयेत् ॥ ततोध्रुवं पूजयेत् । ॐ ध्रुवासिध्रुवोयंयजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् । घृतेन द्यावापृथिवीपूर्य्येथामिन्द्रस्यच्छदिरसिविश्वजनस्यच्छाया । इति ध्रुवमावाह्य ॐ ध्रुवायनमः ॐ भूर्भुवः स्वः ध्रुवमावा॰ स्था॰ पू॰ ध्रुव ! इहागच्छेहतिष्ठेत्यादिसर्वोपचारैः ध्रुवम्पूजयेत् । "ध्यानम्" पूर्वस्यान्दिशि यज्ञस्य सुदृढंनाम तोरणम् । शुक्लवस्त्रपरिच्छिन्नं शुक्लमाल्यविभूषितम् । महावीर्य्यं महाकायं सिन्दूरसमप्रभम् । "इति ध्यात्वा" ॥ आवाहयेत्॥ ॐप्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइयानाः । ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीयमाणाः । विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोः क्रान्तमसि ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनि । यच्छानः शर्म्मसप्रथाः ॥ एह्येहि नैयग्रोधऋग्वेदाधिष्ठित इन्द्रदैवतमहातोरण एनं यज्ञं रक्ष सर्वविघ्नान्निवारय । इत्यावाह्य । ओं "सुदृढतोरणायनमः" इति पूजयेत् । ततः ओं अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारंरत्नधातमम् ॥ इति ऋग्वेदमावाह्य पूजयेत् । ऋग्वेदः पद्मपत्राक्षोगायत्र्य-

तिमंत्रितम् । इषेत्वेति च मंत्रेण सुभद्राख्यन्तुदक्षिणे ॥ सुकर्माख्यन्तु वारुण्यामग्नआयाहिमंत्रतः । शन्नोदेवीतिमंत्रेण सुहोत्रंतूत्तरेन्यसेत् ॥ इति ॥ अथवा–सुदृढ़ंनामपूर्वस्थं याम्यंविकटतोरणम् । सुशोभंनामपाश्चात्यं उदग्द्वारेच सुप्रभम् ॥ ( महाकपिलपंचरात्रे ) देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे । विघ्नविध्वंसनार्थं च रक्षार्थे अध्वरस्य च ।

सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव। इति ध्यात्वा । "ऋग्वेदायनमः" इति पूजयेत्॥ ततोद्वारपालसूक्तपाठकान्वृणुयात्॥ वृताश्चेत् पूजयेत् । द्वारपूजासमये वा पूजयेत । दक्षिणशाखायां धात्रेनमः उत्तरशाखायां विधात्रेनमः । ऊर्ध्वं गणेशायनमः । अधः द्वारश्रियैनमः । मध्यभूमौ वास्तुपुरुषायनमः इत्यावाह्य पूजयेत् । ततः ओं त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् । ह्वयामिशक्रंपुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ओं इन्द्रायनमः इन्द्रमावाह्य । कृतयुगायनमः । कृतयुगं चावाह्य पूजयेत् । "तोरणोपरि" मङ्गलाभिधात्रिशूलायनमः ॥ ओं इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाꣳसुरे ॥ गरुडस्कन्धसमारूढ शंखचक्रगदाधर । यज्ञघ्नान्वारयाशुत्वं पूजितोसि मया प्रभो । ॐ विष्णवेनमः इति पूजयेत् । ततस्त्रिशूलशृंगेषु प्रदक्षिणाक्रमेणादित्यान्न्यसेत । प्रथमशृंगे । इन्द्रायनमः । द्वितीये । धात्रेनमः । तृतीये । भगायनमः। इत्येवं सम्पूज्य प्रार्थयेत् । पूजयामीहदेवेश शिवोभव वरप्रद । रिपून्निवारयाशुत्वं यज्ञरक्षा करोभव । (चण्डीयागे । सुदृढं तोरणं पूर्वे न्यग्रोधं काञ्चनप्रभम् । रक्षार्थं चैववध्नीयाच्चण्डीपूजाख्यकर्म्मणि) एवं सर्वेषु तोरणेषु "ज्ञातव्यम्"

॥ अथ दक्षिणतोरणपूजा ॥

तत्रस्तम्भयोः पार्श्वे यथाविधिकलशद्वयं "मध्ये एकम्वा" संस्थाप्य ॥ ओं स्योनापृथिविनोभवानृक्षरानिवेश-

नी। यच्छानःशर्म्मसप्रथाः॥ इत्यावाह्य "पृथिव्यैनमः" इति पूजयेत्। ततस्तोरणध्यानम्। दक्षिणांदिशमाश्रित्य सुभद्रंनाम तोरणम् (विकटं वा) महावीर्य्यं महाकायं भिन्नांजनसमप्रभम् इति ध्यात्वावाहयेत्। एह्येह्यौदुम्बर यजुर्वेदाधिष्ठित सवितृदैवत अस्मिन्महोत्सवे यज्ञे सर्वान् विघ्नान्निवारय।ॐप्रपवर्तस्थ०। स्योनापृथिवि०। "ॐसुभद्रतोरणायनमः" इति पूजयेत। तत्र सूर्य्यमङ्गारकञ्चावाह्य पूजयेत। ॐ आकृष्णेनरजसा०......पश्यन्। ॐ सूर्य्यायनमः। ॐ अग्निर्मूर्द्धादिवः...जिन्वति। ॐ भौमायनमः। ततः ओं इषेत्वोर्ज्जेत्वा वायवस्थदेवोवः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोद्ध्रुवाऽअस्मिन्गोपतौस्यातवह्वीर्य्यजमानस्य पशून्पाहि॥ यजुर्वेदःकातराक्षस्त्रैष्टुभोविष्णुदैवतः। काश्यपेयस्तुविप्रेन्द्रऋत्विक्त्वं मे मखे भव। इति पूजयेत्। ॐ यजुर्वेदायनमः। ॐ तत्सवितुरितिसवितारमावाह्य "ओं सवित्रेनमः इति पूजयेत्। विंध्याद्रयेनमः त्रेतायुगायनमः आवाह्य पूजयेत्। ओं यमायत्वामखायत्वा०... स्पृशस्पाहि ओं यमायनमः इत्यावाह्य पूजयेत्। पूर्ववत् धात्रेनमः इत्यादीन्नपि पूजयेत्। शत्रुघ्ननाम्नेरुद्रदैवताय त्रिशूलायनमः। ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः। मानोव्वीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वा हवामहे॥ वृषस्कन्धसमारूढशू-

लहस्तवरप्रद । यज्ञघ्नान्वारयाशु त्वं पूजितोसि मया प्रभो। इत्यावाह्य । "ॐ नमः शिवाय" इति पूजयेत् । ततस्त्रि-शूलश्रृंगेषु दक्षिणक्रमेणादित्यान्न्यसेत् ॥ ॐ पूष्णेनमः । ॐ मित्रायनमः ॐ वरुणायनमः । इति न्यस्यसम्पूजयेत् । ("चण्डीयागे" औदुम्बरं विकटं याम्ये तोरणमुत्तमम् । रक्षार्थं चैव वध्नामि चण्डीपूजाख्यकर्मणि) ।

## ❀ अथ पश्चिमतोरणपूजा ❀

स्तंम्भयोः पार्श्वे यथाविधिकलशद्वयं मध्ये एकम्वा संस्थाप्य ॥ ॐ वृहस्पतेअति०...चित्रम् ॥ इत्यावाह्य "वाक्पतयेनमः" इति पूजयेत । ततोध्यानम् कुर्य्यात् । प्रतीचींदिशमाश्रित्य सुकर्म्माभिध (सुभीमं वा) तोरणम् । महावीर्य्यं महाकायं मौक्तिकैः सदृशं प्रभम् । इति ध्यात्वा आवाहयेत् । एह्येहि सामवेदाधिष्ठितवरुणदैवत अस्मिम्म-होत्सवे यज्ञे सर्वान्विघ्नान्निवारय । इत्यावाह्य । ओं प्रपवर्त-स्य० । ओं स्योनापृथिवि० । "ओं सुकर्मतोरणायनमः" इति पू०। तत्र शुक्रं बुधंचावाह्यार्चयेत । ओं अन्नात्परिस्रुतो-रसं...मधु । "ओं शुक्रायनमः" । ॐ उद्बुध्यस्वाग्ने... सीदत । "ओं बुधायनमः" इति पू०। ततः ओं अग्नऽआ-याहिवीतयेगृणानो हव्यदातये । निहोतासत्सिवर्हिषि ॥ सामवेदस्तु पिंगाक्षोजाग्रद्वैशुक्रदैवतः । भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वम्मे मखे भव । इति । "ॐ सामवेदायनमः ।

हेमकूटाचलाय नमः द्वापरयुगायनमः आवाह्य पूजयेत् ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्ते०...प्रमोषीः ॥ ओं वरुणायनमः इति पूजयेत् ततः पूर्ववत धात्रेनमः इत्यादीन् ॥ पुत्रदाभिधाय ब्रह्मदैवताय त्रिशूलायनमः । पू० । त्रिशूलशृंगेषु आदित्यान् पू० ॥ ओं अर्य्यम्णेनमः १ । ओं विवस्वतेनमः २ । ओं अंशवेनमः ३ ॥ ततः ओं ब्रह्मजज्ञानम्०··· विवः । इति सम्पूज्य प्रार्थयेत । हंसपृष्ठ-समारूढ कमण्डलुधरप्रभो । यज्ञघ्नान्वारयाशुत्वं पूजितोसि मया प्रभो । इति ॥ (चण्डीयागे । अश्वत्थं पश्चिमे भीमं (सुकर्माणं) तोरणं रत्नसन्निभम् । रक्षार्थं चैव वध्नामि चण्डीपूजाख्यकर्माणि) ।

## उत्तरतोरणपूजा

स्तम्भयोः पार्श्वे यथाविधिकलशद्वयम्मध्ये एकम्वा संस्थाप्य तत्र ॥ गणानान्त्वा०...गर्भधम् ॥ "ओंविघ्नेशाय नमः" इति अर्चयेत् । ततोध्यानम् । उत्तरान्दिशमाश्रित्य सुप्रभं नामतोरणम् । महावीर्य्यं महाकायं सुवर्णसदृश प्रभम् । इति ध्यात्वावाह० ॥ एह्येहि प्लाक्ष अथर्वाधि-ष्ठित सोमदैवत अस्मिन्महोत्सवे यज्ञे सर्वविघ्नान्निवारय इत्यावाह्य । ॐ प्रपर्वतस्य० । ओं स्योनापृथिवि० । "ओं सुप्रभ (सुहोत्र) तोरणायनमः पू० । तत्र सोमंशानिञ्चावा-ह्यार्चयेत् । ( अत्र केतूनपिपूजयन्ति केचित् ) ओं इमन्देवा० राज्ञा । ओं सोमायनमः । ओं शन्नोदेवी-

रभि॰ तुनः ॥ ओं शनैश्चरायनमः । इत्यर्च्चयेत् ॥ अथर्ववेद वृहन्नेत्रानुष्टुब्भो रुद्रदैवत । वैशम्पायन विप्रेन्द्र ऋत्विक्त्वम्मे मखेभव। ओं अथर्ववेदायनमः इति पू॰ ।ततः ओं कलियुगायनमः इति सम्पूज्य ॥ ओं सोमोधेनुꣳसोमोऽअर्व्वन्तमाशुꣳसोमोवीरङ्कर्म्मण्यन्ददाति । सादन्न्यंविदथ्यꣳसभेयम्पितृश्रवणंयोददाशदस्मै। इत्यावाह्य ओं सोमाय नमः इति । पूर्ववत् धात्रेनमः इत्या॰ ओं उत्तमनाम्ने सोमदैवतत्रिशूलायनमः ॥ ओं सोमानꣳस्वरणङ्कृणुहिब्रह्मणस्पते कक्षीवन्तंयऽऔशिजः॥ नरयानसमारूढ गदाहस्तवरप्रद । यज्ञघ्नान्वा॰ प्रभो । ओं सोमाय नमः इति सम्पूज्य । त्रिशूलशृंगेषु । ओं अहर्पतये नमः । ओं सहस्रांशुकाय नमः ओंतपनाय नमः । इति सम्पूजयेत् ।चण्डीपूजने। सुप्रभं तोरणं प्लाक्षमुत्तरेच शशिप्रभम् । रक्षार्थं चैव वध्नामि चण्डीपूजाख्यकर्म्मणि । इति तोरणपूजा ।

## ॥ १ अथ पूर्वद्वारपूजनं ॥

आचार्य्येणसहितोयजमानः पूर्वद्वारे गत्वा द्वारशाखाद्वयमूले कलसद्वयं यथाविधिसंस्थाप्य तत्र कलशद्वये "ओं ऐरावताय नमः" इत्यावाह्य पूजयेत् । ततोवामस्थकुम्भे "गङ्गायै नमः" दक्षिणस्थे "ओं यमुनायै नमः । द्वारशाखयोः । चण्डायनमः प्रचण्डायनमः । ध्रुवाय नमः ओं अध्वराय नमः । ओं पद्मनिधये नमः, ओं

शंखनिधयेनमः, ॐ भूर्लोकायनमः ॐ भुवर्लोकायनमः ( ओं आदित्यायनमः, ॐ शुक्रायनमः ) दक्षिणांसे । ( आवाहयाम्यहं धात्रे निधीनाम्पतये प्रभो । इहैवागत्य वलिं गृह्य यज्ञविघ्नान्निवारय ) । ओं धात्रेनमः, वामांसे ओं विधात्रेनमः । ॐ द्वारश्रियैनमः । इत्यूर्ध्वम् । देहल्यै नमः । इत्यधः । वामस्तम्भे गणेशायनमः । दक्षिणे स्कन्दायनमः । देहलीमध्ये वास्तुपुरुषायनमः । (मायाशक्त्यैनमः

---

( १ ) चण्डीयागे द्वारदक्षिणांसे । ओं ब्राह्म्यै नमः । दण्डं कमण्डलुं पश्चादक्षसूत्रमथाभयाम् । बिभ्रतीं कतकच्छायां ब्राह्मीं बालां च कृष्णभाम् इति । ओं माहेश्वर्य्यै नमः ओं चिच्छक्त्यैनमः । मायाशक्त्यै नमः । ( दक्षिणभागे ) पानपात्रं च खड्गं च अक्षमालाकमण्डलुम् । त्रिनेत्रवरदं शान्तं कुमारं च दिगम्बरम् । कुमारायनमः । ( उत्तरभागे ) ब्रह्माणिशक्तिसंयुक्तं हंसवाहनभूषितम् । श्वेतवर्णमहं वन्दे असिताङ्गं च भैरवम् । ओं असिताङ्गभैरवाय नमः । इति । (केचनाधुनिकाः दिक्पालपूजनेऽपि दिक्पालशक्तिपूजनमेवेच्छन्ति । ते च दिक्पालशक्तिमन्त्राः स्तम्भपूजनप्रकरणे अवलोकनीयाः ) दक्षिणवामशाखयोर्ध्वजपताकं उच्छ्रयामि स्थापयामि नमः । धनुः प्रभापताकां च सिन्दूरारुणप्रभं ध्वजम् । स्थापयामि महेन्द्राय शक्तियुक्ताय वज्रिणे ॥ वलिदानम् । एह्येहि कादम्बरि कामरूपे ऐरावते वासिनीदीर्घरूपे । विघ्नाटवीत्रोटनदक्षरूपे तद्वज्रहस्ते कमनीयरूपे । ओं कादम्बर्य्यै गजारूढायै वज्रहस्तायै । एह्येह्यागच्छ गन्धाक्षतादियुतमिमं क्षीरान्नवलिं गृह्य २ मम ईप्सितं कुरु २ स्वाहा । "द्वारदक्षिणांसे" ह्रीँ ऐँ ब्राह्मि एह्येह्याग० स्वाहा । "द्वारवामांसे" ह्रीँ ऐँ माहेश्वरी एह्येह्याग० स्वाहा । इति शेषन्देवमण्डपवत् ।

चिच्छक्त्यैनमः ) इति सर्वान् पूजयेत् ॥ ततोपूर्वद्वारे सूक्त-जपार्थत्वेन प्रत्येकं समुदितान् वा वृणुयात । पूर्वं वृताश्चेत् अधुनापि गन्धादिभिः पूज्याः। ततः सहस्राक्षं मत्तैरावत-संस्थितं पीतकिरीटिनं कुण्डलधरं दक्षिणवामकरस्थवज्रो-त्पलामिन्द्रं ध्यात्वा । एह्येहि सर्वामरसिद्धसंघैरभिष्टुतोवज्रध-रामरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरन्नोभगव-न्नमस्ते । भो इन्द्र इहागच्छेत्यादिना इन्द्रमावाह्य ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः। इत्यने-न सम्पूज्य । पीताम्पताकां पीतध्वजं च उच्छ्रयेत् ॥ सर्वत्र दण्डोच्छ्रायमंत्रः ॥ योमे दण्डः परापत द्वैहायसोऽधिभू-

---

गङ्गायै इति । "शारदातिलके" गणपं क्षेत्रपालं च शङ्खपद्मनिधी क्रमात् । माया-शक्तिं चिच्छक्तिं गंगां च यमुनां तथा। धातारं च विधातारमूर्द्ध्वादिक्रमतोयजेत् अधश्च देहलीमिष्ट्वा द्वारपालौ समर्चयेत्। ( प्रतिद्वारमितिक्रमादित्युक्तेर्विघ्नादि देहल्यन्तं प्रतिद्वारं सम्पूज्य तत्तद्द्वारपालार्चनं कुर्य्यादिति ( सिंहसिद्धान्ते ) "विष्णुयागे" एतेऽपि पूजनीयाः। कुमुदः कुमुदाख्यश्च पुण्डरीकोऽथवामनः। शङ्कु-कर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः। इत्येते विष्णुलोकस्य दिक्पालगणनायकाः कोटिसंख्यागणैर्युक्ताः पूजनीयादिशास्विमे ( इति हयशीर्षे ) "सूक्तजपार्थत्वेनेति" पूर्वद्वारे च संस्थाप्य वह्वृचं वेदपारगम् । याजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनं अथर्ववेदिनं तद्वदुत्तरेस्थापयेद्बुधः। ऋत्विजोयुग्मशः स्थाप्या ऋग्वेदादिविदः क्रमात्। पूर्वादिषु चतुर्द्वारेषु अष्टौते द्वारपालकाः ( सूक्तपाठनियमः सूक्तप्रकरणे अवलोकनीयः ) "ध्वजाः कुत्र स्थापनीयाः" ( हयशीर्षे ) वाह्यदेशे मण्डपस्य तोर-णाभ्यन्तरे तथा। अष्टौध्वजाः स्थापनीयाः पूर्वादिक्रमयोगतः । इति । "ध्वजा-रोपणफलम् ( वि० पारिजाते" ) अथातः सम्प्रवक्ष्यामि ध्वजारोपणमुत्तमम् ।

भ्याम् तमहंपुनराददे। आयुषेब्रह्मणेब्रह्मवर्चसाय ॥ इति। दण्डोच्छ्रायं कृत्वा ॥ ॐ आशुःशिशानोवृषभोनभीमो०… साकमिन्द्रः ॥ इति मंत्रेण पताकां दद्यात्। ॐ त्रातारमिन्द्र०……इति ध्वजां च दद्यात्। ततः पीतध्वजे कुमुदायनमः (पताकायाम्) ओं हेतुकायनमः तत्रैव ब्रह्मणेनमः, रुद्रायनमः, देवेभ्योनमः, सिद्धेभ्योनमः, विद्याधरेभ्योनमः,

---

यत्कृत्वापुरुषःसम्यक् समस्तफलमाप्नुयात्। यातुधानागुह्यकाश्चकूष्माण्डाः खेचरास्तथा। चिन्तयन्त्यसुरश्रेष्ठाः ध्वजहीनं सुरालयम्। ध्वजेनरहितेब्रह्मन् मण्डपं तु वृथा भवेत्। पूजा होमादिकं सर्वं पायं यत्कृतं बुधैः। रक्षणेन विनायद्वत् क्षेत्रं नश्यति वीजिनः। ध्वजं विनादेवगृहं तद्वत् तथा (नश्यति) नश्येत सर्वथा। विष्णुपारिषदाः क्रूराः कूष्माण्डास्तु ग्रहाः स्मृताः। पूजादिकन्न गृह्णन्ति देवं दृष्ट्वा न (त्व) रक्षितम्। दृष्ट्वा ध्वजांस्तु देवस्य मण्डपे ज्वलनप्रभान्। नश्यन्ति सर्वतश्चार्क (सर्वेतेचार्क) रश्मिक्षीणं यथातमः (ध्वजादिलक्षणं च मण्डपप्रकरणेलिखितम्।) "सम्पूज्येति" एवमावाह्य गन्धाद्यैः परिपूज्य ततोगुरुः। पताकापोतवर्णाभा आशुः शिशानमन्त्रतः। त्रातारमिति मन्त्रेण ध्वजं तत्रैव विन्यसेत्। इति (वि० पा०)। (कुण्डमण्डपे) प्राच्यामाशुः शिशानाद्याम् इन्द्रायेन्द्रायुधप्रभम्। इति। "वलिदानमिति" (मात्स्ये) गन्धपुष्पादिकं कुर्यात्स्वैः स्वैर्मन्त्रैरनुक्रमात्। वलिं च लोकपालेभ्यः स्वस्वमन्त्रैर्निवेदयेत्। ऊर्ध्वं तु ब्रह्मणे देयमधस्ताच्छेषवासुकेः। संहितायां तु ये मन्त्रास्तत्तद्दैवत्याः श्रुतौ स्मृताः। तैः पूजा लोकपालानां कर्तव्या हि समन्ततः इति। अग्निन्दूतमिति। अग्निन्दूतं समुच्चार्य पताकां तत्र विन्यसेत्। त्वन्नोऽअग्नऋचा भूयो ध्वजं तत्रैव रोपयेत्। कृष्णवर्णा पताकाश्च आयङ्गौरिति मंत्रतः। दक्षिणस्यां ध्वजंदद्यात् सुगन्नुमनुनात्रतु। पताकां कृष्णवर्णाभां असुन्वन्तेतिमन्त्रतः। दद्याद्ध्वजश्चतत्रैवएषतेनिर्ऋतेति च। पताकांश्वेतवर्णाभां इमम्मेवरुणेति च। ध्वजंसम्पूज्य वै दद्यात् तत्वायामीति मन्त्रतः। आप्यायस्वेति मन्त्रेण पताकां धवलां न्यसेत्। सोमोराजेति मंत्रेणध्वजंदद्यात्तथोत्तरे। पताकां शुभ्रवर्णाभां तमीशानेति मंत्रतः। तत्रैव च ध्वजंदद्यात अभित्वेति

पन्नगेभ्योनमः, (द्वारशाखयोः) । नान्दिनेनमः महाकालायनमः ॥ ततो वलिदानम् ॥ ओं इन्द्रः सुरपतिः श्रेष्ठो-वज्रहस्तोमहावलः। शतयज्ञाधिपोदेवस्तस्मै नित्यं नमोनमः। इति नत्वा । ओं भूर्भुवः स्वः महेन्द्राय ऐरावतसहिताय इदं गन्धाद्युपचारसहितं क्षीरान्नयुतमाषभक्तवलिं समर्प्पयामि । कलसाग्रतोवलिंदद्यात् । भोमहेन्द्र अस्य यजमानस्य सकुटुम्वस्य सपरिवारस्य आयुः कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव । ततः ओं भू० सूर्य्य एह्ये० इमं वलिं स्वाहा । ओं भू० शुक्र० एह्ये० इमं वलिं स्वाहा । ओं भू० दिगम्वर एह्ये० इमं वलिं स्वाहा । ओं असिताङ्गभैरव० एह्ये० इमं वलिं स्वाहा । ऋग्वेदाय इमं० स्वाहा । ओं भू० धात्रे० इमं० स्वाहा । विधात्रे० इमं० व० स्वाहा एवं अन्येभ्यः ॥ (२) अथाग्नेये गत्वा पूर्ववत्यथाविधिना एकं कलशं संस्थाप्य । तत्र (पुण्डरीकम्) अमृतं सम्पूज्य । अग्निमावाहयेत् । एह्येहि सर्वामरहव्यवाह मुनिप्रवर्य्यैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते । भो अग्ने इहागच्छेहतिष्ठेत्यावाह्य ॥ ओं अग्निस्तिग्मेनशोचिषायासद्विश्वन्न्यात्रिणम् । अग्निर्न्नो-

---

ऋचा द्विजः । पताकां गौरवर्णाभां नमोस्तु सर्पमन्त्रतः । चित्रावाऽस्त्विवति यमश्चित्रेति ध्वजम् ॥ पताकामरुणां तत्र दद्यात् ब्रह्मेतिमन्त्रतः पाशिनैर्ऋतयोर्मध्ये ईशानपूर्वयोर्मध्ये पञ्चवर्णध्वजं तथा । इन्द्रस्यवृष्णोमन्त्रेण दद्याज्जलदसन्निभम् । किङ्किणीजालसंयुक्तं मण्डपोपरिमध्यतः । त्रिहस्तविस्तृतं कुर्याद्दशहस्तायतं पुनः । एवं ध्वजविधिः प्रोक्तः समासेन मयानघ । इति ध्वजविधिः ॥

ठवनयतेरयिम् ॥ इति सम्पूज्य । दण्डालम्भोयोमेदण्ड इति मन्त्रेण दण्डालम्भं कृत्वा ॥ ओं अग्निन्दूतम्पुरोदधे-हव्यवाहमुपब्रुवे । देवाँ२॥आसादयादिह ॥ इत्यनेन पताकां संस्थाप्य ॥ ओं त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्न्व-श्चवन्द्य । त्रातातोकस्यतनयेगवामस्यानिमेषठंरक्षमाणस्तव-व्रते ॥ इति ध्वजां दद्यात् । ततोध्वजे "कुमुदायनमः" पताकायां हेतुकायनमः । इति सम्पूज्य नमेत् । सर्वदेवमयो-देवोरक्षोवन्हिर्महावलः । सप्तजिह्वोमहावीर्य्यस्तस्मै नित्यं नमोनमः । इति नत्वा ॥ वलिं दद्यात् । अग्नये साङ्गाय स० इमं वलिं सर्म्पयामि । इति कुम्भस्थाग्रे निवेदयेत् । भो अग्ने दिशं रक्ष०······वरदाभव । पुण्डरीकाय, रुरुभै-रैवाय, अनेनैवक्रमेण वलिं दद्यात् । इति आग्नेयकृत्यम ॥

---

( २ ) "चण्डीयागे" पताकामाग्नेये रक्तां ध्वजं चैत्राग्निस-न्निभम् । स्वाहायुक्ताय देवाय स्थापयामि हविर्भुजे । इति ध्वजप-ताकां । त्रिपुरघ्नाय क्षेत्रपालाय नमः । नमस्ते त्वग्निरूपाय पिङ्ग-लाय महात्मने । चण्डाय चण्डरूपाय रक्ष त्वं हव्यवाहन । एह्येह्युल्के सुविशालनेत्रे मेषाधिरूढे धृतशक्तिहस्ते वालार्कवर्ये शशितुल्यवक्त्रेगृहाण पूजां मम यज्ञ कार्य्ये । परश्वायुधधर्तारं खड्गपात्रधरं तथा । त्रिनेत्रं वरदं शान्तं कुमारं च दिगम्वरम् । माहेशीशक्तिसंयुक्तं वृषवाहनभूषितम् । शुद्धस्फटिकसङ्काशं वन्देहं रुरुभैरवम् ॥ इति ॥ उं उल्के अजारूढे शक्तिहस्ते एह्ये-ह्यागत्य० इमं वलिं० स्वाहा इति । कौमारीशक्तिसंयुक्तं शिखिवा-हनभूषितम् । गौरवर्णधरन्देवं श्रीचण्डभैरवम् । चण्डभैरवाय नमः । शेषन्देवमण्डपवत् ।

## (३) अथ दक्षिणद्वारपूजा ।

ततोदक्षिणद्वारशाखद्वयमूले कलशद्वयं (पर्जन्याशोकनामानं) यथाविधि संस्थाप्य । "वामनायनमः" इति दिग्गजमावाह्यार्चयेत् । द्वारस्थवामकलशे "गोदायैनमः" दक्षिणे कृष्णायैनमः । ओं पुष्पदन्तायनमः । ॐ कपर्दिनेनमः। इत्युभयतः श्रीधात्र्यधिष्ठिताय दक्षिणद्वारायनमः । स्वर्लोकायनमः । ओंमहर्लोकायनमः, ऊर्ध्वं द्वारश्रियैनमः । देहल्यै नमः अध०मध्ये वास्तुपुरुषायनमः गणेशायनमः दक्षि० वृषभायनमः वामे धात्रेनमः विधात्रेनमः (गायत्र्यैनमः श्रियैनमः सरस्वत्यैनमः ) स्वक्षेत्रपालायनमः इत्यावाह्य सर्वान्पूजयेत ॥ ( ततः सूक्तपाठकर्तॄन्वृणुयात् ) वृताश्चेत् प्रार्थनीयाः । एवं द्वारं सम्पूज्य । यममावाहयेत् । एह्येहि वैवस्वतधर्मराज सर्वामरैरर्चितधर्म्ममूर्ते । शुभाशुभानन्दशुचामधीश शिवाय

---

(३) "चण्डीयागे" द० द्वा० पार्श्वे । एह्येहिनीलोत्पलवर्णरूपे करालरूपे महिषाधिरूढे । चतुर्भुजे दण्डधरेऽनघे त्वं पूजां ग्रहीतुं मम यज्ञकार्य्ये । ओं कौमार्य्यै नमः । वैष्णव्यै नमः चिच्छक्त्यै नमः मायाशक्त्यै नमः ॥ ध्वजमन्त्रः । धूम्रवर्णपताकां च कृष्णवर्णध्वजंतथा । यमाय स्थापयामीति निहन्त्रे कर्म्मसाक्षिणे । बलिदा० । ओंकंकरालि महिषारूढे दण्डहस्ते एह्येहि इमं०स्वाहा । द्वारद० अं० । ओं ह्रीँ क्लीँ कौमारि एह्येहि० स्वाहा । दिगम्बर एह्येहि० इमं० स्वाहा । चण्डभैरव एह्येहि इमं क्षीरान्न- बलिं० स्वाहा इति । शेषन्देवमावाहयेत् ।

नः पाहि मखं नमस्ते । भो यम इहाग० तिष्ठेत्यावाह्य ॥ ओं यमाय त्वाङ्गिरस्वते पितृमते स्वाहा स्वाहा घर्म्मायस्वाहाघर्म्मः पित्रे ॥ इति सर्वोपचारैरर्चयेत् ॥ ततो योमेदण्ड इत्यनेन दण्डालम्भः ॥ ओ० आयङ्गौः पृश्निरक्र मीदसदन्मातरम्पुरः । पितरञ्चप्रयन्त्स्वः ॥ इति पताकां दत्वा ॥ सुगन्नुपन्थाम्प्रदिशन्नएहिज्योतिष्मद्ध्येह्यजरन्नऽ आयुः । अपैतुमृत्युरमृतम्मऽआगाद्वैवस्वतोनोऽअभयङ्कृ-णोतु ॥ इति ध्वजं दद्यात् । ततो ध्वजेकुमुदायनमः । पताकायाम् हेतुकायनमः । इति सम्पूज्य । वलिंदद्यात् । ततो यमं ध्यात्वा वैवस्वतमहादेव नमस्ते धर्मसाक्षिक । शिवाज्ञापितोदेव दिशंरक्षभवानिह । इति नत्वा । यमाय साङ्गाय सपरि० समर्पयामीति वलिं दद्यात् । पूजितेभ्योऽन्येभ्योपि वलयोदेयाः । ( इति दक्षिणद्वारपू० ) ( ४ ) ततो नैर्ऋत्यां गत्वा तत्रैकं कलशं यथाविधिना संस्थाप्य । तत्र

---

( ४ ) "चण्डीयागे" पताकां निर्ऋतीशाय ( कृष्णनीलमयं ) ध्वजम् स्थापयामि सदारक्षोगणाधीशाय चैव हि॥एह्येहि यक्षेश्वर-राजकान्ते प्रेताधिरूढे धृतखड्गहस्ते । विशालरूपे पिशिताशने त्वं रक्षाक्षिरूपे विशयज्ञभूमिम् । इत्यावाह्य । रक्षाक्ष्यै नमः । दिग-म्बराय नमः । वैष्णवीशक्तिसंयुक्तं गरुडासनभूषितम् । नीलवर्ण-धरं देवं वन्दे श्रीक्रोधभैरवम् । क्रोधभैरवाय नमः । वलिदानम् रक्षाक्षिप्रेतारूढे खड्गहस्ते एह्येहि० स्वाहा । कुमारदिगम्बर० एह्येहि० स्वाहा क्रोधभैरव० एह्येहि० स्वाहा । भैरवः प्रीयताम् इति ॥ शेषन्देवमण्डपवत् ।

कुमुदं दुर्जयञ्चावाह्य । ( ॐ कुमुदायनमः ) ॐ दुर्जयायनमः इति सम्पूज्य । नरारूढं खड्गहस्तं निर्ऋतिमावाहयेत् । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः । ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते । भो निर्ऋते इहागच्छेहतिष्ठ । इत्यावाह्य ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्न्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ इति सम्पूज्य । योमेदण्डइति मन्त्रेण दण्डालम्भं कृत्वा ॥ असुन्वन्तेतिमन्त्रेण । अथवा ॥ यन्तेदेवीनिर्ऋतिराबवन्धपाशंग्रीवास्वविचृत्यम् । तन्तेविष्याम्यायुषोनमद्ध्यादथैतम्पितुमद्धिप्रसूतः । नमो भूत्यैयेदञ्चकार ॥ इत्यनेन पताकां संस्थाप्य ॥ ॐ एषतेनिर्ऋतेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहायमनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यः स्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्यो देवेभ्यऽउपरिसद्भ्योदुवसद्भ्यःस्वाहा ॥ इति ध्वजां दद्यात् ॥ ततोध्वजे वामनायनमः ( कुमुदायनमः ) पता० हेतुकाय नमःक्षेत्रपालायनमः इति सम्पूज्य नमेत् । सर्वप्रेताधिपोदेवोनिर्ऋतिर्नीललोहितः करेखड्गधरोनित्यं नैर्ऋतायनमोनमः । इति नत्वा वलिं दद्यात । कृष्णव्रीह्यन्नं घृतसहितं ॥ मोषूणइन्द्रात्रपृत्सुदेवैरस्तिहिष्मातेशुष्मिन्नवयाः । महश्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोवन्दतेगीः ॥ इति मंत्रं-

पठित्वा। निर्ऋतये साङ्गाय॰ इमं वलिं समर्पयामि । भो निर्ऋतेदिशं॰ वरदोभव। ( बृहस्पतयेनमः । राहवेनमः ) इति नैर्ऋत्यादिक्कृत्यम् ॥

( ९ ) अथ पश्चिमद्वारपूजा।

ततः पश्चिमद्वारशाखाद्वयमूले सञ्जीवनामृतनामानौ कलशौ यथा विधि संस्थाप्य। तत्राञ्जनं दिग्गजमावाह्यार्चयेत् ॥ द्वारस्थवामकलशे ॐ रेवायैनमः । दक्षिणे ताप्त्यैनमः । इति सम्पूज्य द्वारशाखयोः अनिलायनमः । अनलायनमः धात्रेनमः । विधात्रेनमः । किरीटिनेनमः । स्कन्दायनमः । ॐ जनलोकायनमः। ॐ तपोलोकायनमः विष्णवेनमः । ( सामवेदायनमः ) द्वारश्रियैनमः। देहल्यै-

(५)"चण्डीयागे" हेमवर्णधरन्देवं तथा महिषवाहनम्। वाराहीशक्तिसंयुक्तं वन्दे उन्मत्त भैरवम् उन्मत्तभैरवाय नमः। एह्येहि शङ्खस्फटिकावभासे श्वेताम्बरे पाशधरे कुमारि। सुश्वेतहस्ते वरदे वरेण्ये श्वेतस्वरूपे विश यज्ञभूमौ॥ कौवेर्य्यै नमः। द्वारदक्षिणांसे। ओं मूसलं करवालं खेटकं दधतीहलम्। करैश्चतुर्भिर्वाराहीध्येया कालघनच्छविः। ओं वाराह्यै नमः । इन्द्राण्यै नमः । चिच्छक्त्यै नमः। मायाशक्त्यै नमः। इति द्वारं सम्पूज्य। श्वेतवर्णपताकां च ध्वजं पीतमयं तथा। वरुणायै जलेशायै स्थापयामि-शुभाय मे। कौवेरि श्वेताश्वरूढे पाशहस्ते एह्येहि॰ इमं॰ क्षीरान्नवलिं स्वाहा। ह्रीँ हूँ वाराहि एह्येहि इमं क्षीरान्नवलिं स्वाहा। कुमारदिगम्वर एह्येहि॰ स्वाहा। उन्मत्तभैरव एह्येहि॰ स्वाहा। इति वलिदानम्॥ शेषन्देवमण्डपवत्।

नमः। दे०मध्ये वास्तुपुरुषायनमः। इत्यावाह्यसर्वान् ऋत्विजः प्रार्थनीयाः। एवं द्वारं सम्पूज्य। वरुणमावाहयेत्। एह्येहि यादोगणवारिधीनां गणेन पर्ज्जन्यसहाप्सरोभिः। विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते। भो वरुण इहागच्छेहातिष्ठ इत्यावाह्य ॥ तत्वायामिब्रह्मणावन्दमानस्तदाशास्ते यजमानोहाविर्भिः। अहेडमानोठवरुणेहवोध्युरुशठं समानऽआयुः प्रमोषीः ॥ इति सर्वोपचारैरर्चयेत् ॥ ततो योमदण्डइत्यनेन दण्डालम्भः ॥ इमम्मेवरुणश्रुधी हवमद्याचमृडय। त्वामवस्युराचके ॥ इति पताकां दत्वा ॥ तत्वायामिति ध्वजं दद्यात् ॥ ध्वजे शङ्कुकर्णायनमः कालायक्षेत्रपालायनमः। इति सम्पूज्य वलिं दद्यात्। त्वन्नोऽअग्ने०प्रमुमुग्ध्यस्मत्। इति मन्त्रेण नवनीतौदनवलिंदद्यात्। वरुणाय साङ्गाय० समर्पयामि। भो वरुण दिशं० वरदोभव। पाशहस्तात्मकोदेवोजलराश्यधिपोमहान्। निम्नगामीतिविख्यातोवरुणाय नमोनमः। पूजितेभ्योऽन्येभ्योपि वलयोदेयाः ॥ इति पश्चिमद्वारपूजा ॥

(६) ततो वायव्यां गत्वा यथाविधिना तत्रैकं कलशं

---

( ६ ) "चण्डीयागे" पताकां वायवे धूम्रं ध्वजं पीतं भयं तथा स्थापयाम्यनुच क्षुद्र प्राणदायै सदैव हि ॥ हं हरित मृगवाहिनि अङ्कुशहस्ते एह्ये० स्वाहा। कुमारदिगम्बर एह्येहि स्वाहा। कपालभैरव एह्येहि० स्वाहा। इति वलिदानम् ॥ शेषन्देवमण्डपवत्।

संस्थाप्य। तत्र पुष्पदन्तं सिद्धार्थञ्चावाह्य। ओं पुष्पदन्तायनमः। सिद्धार्थायनमः। इतिसम्पूज्य। मृगाधिरूढं धूम्रवर्णं वायुमावाहयेत्। एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसङ्घैः। प्रणाधिपः कालकवेः सहायः गृहाण पूजां भगवन्नमस्ते। भोवायो इहागच्छेहातिष्ठ। इत्यावाह्य ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम्। ऽवायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः॥ इति सम्पूज्य योमेदण्ड इति मन्त्रेण दण्डालम्भं कृत्वा॥ प्राणदाऽपानदाऽव्यानदाऽवर्चोदाऽवरिवोदाः अन्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ इत्यनेन पताकां संस्थाप्य॥ ॐ वायोयेतसहस्रिणोरथासस्तेभिरागहिनियुत्वान्त्सोमपीतये। इतिध्वजंदद्यात्। दिगम्बरायनमः कपालभैरवायनमः। इति सम्पूज्य नमेत्। सर्वप्राणात्मकोनित्यं सर्वप्राणायुरुच्यते। ध्वजहस्तोमहाप्राणस्तस्मै प्राणात्मने नमः॥ इति नत्वा वलिं दद्यात्। यवोदनेन वलिं। वायवे साङ्गाय० इमं वलिं समर्प्पयामि। भो वायोदिशंरक्ष० वरदोभव। इति माषभक्तवलिंवा दद्यात्। इति वायव्यकु०।

## (७) ॥ उत्तरद्वारपूजा ॥

ततः उत्तरद्वारे द्वारशाखायां मूले धान्यपुञ्जोपरि धनद श्रीप्रद नामानौ कलशौ यथाविधि संस्थापयेत् ॥ (कल्याणाभिधायोत्तरद्वारायनमः इति सम्पूज्य ) सार्वभौमं

दिग्गजम् तयोरावाह्य पूजयेत् ॥ ततोवामकुम्भे वारुण्यै नमः दक्षिणकु० वैरण्यैनमः । इत्यर्चयेत् ॥ ॐ प्रद्युम्नाय नमः । "द्वारशाखयोः" प्रत्यूषायनमः प्रभासायनमः, धनदायनमः, श्रीप्रदायनमः, धात्रेनमः, विधात्रेनमः, सत्यलोकायनमः ध्रुवलोकायनमः । अथर्ववेदायनमः । गणेशाय नमः । द्वारश्रियैनमः वास्तुपुरुषायनमः । पार्वतीशायनमः चण्डेश्वरायनमः "द्वारदेशे" सोमायनमः । इत्यावाह्य सर्वान्पूजयेत् । ततः ऋत्विजः प्रार्थनीयाः । एवं द्वारं सम्पूज्य सोममावाहयेत् ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्वनक्षत्रगणेन सार्द्धम् ॥ सर्वौषधीभिः पितृभिः सहैव गृहाणपूजां भगवन्नमस्ते ॥ इति सोममावाह्य ॥ ओं आप्यायस्व समेतुतेविश्वतःसोमवृष्ण्यम् । भवाऽवाजस्यसङ्गथे ॥ इति

---

(७) "चण्डीयागे" द्वारपार्श्वे यं यक्षिण्यै नमः दक्षिणांसे । अक्षस्रजं वीजपरे कपालं पङ्कजं करैः । वहन्तीं हेमसङ्काशां महालक्ष्मीं समींसमाम् महालक्ष्म्यै नमः । नारसिंह्यै नमः । चामुण्डायै नमः श्रियै नमः । चामुण्डाशक्तिसंयुक्तं प्रेतवाहनभूषितम् । रक्तवर्णधरं देवं वन्दे भीषणभैरवम् । भीषणभैरवाय-नमः । मायाशक्त्यै नमः चिच्छक्त्यै नमः । "एवं द्वारं सम्पूज्य" श्वेतवर्णपताकां च पद्माभवद्ध्वजं तथा । सोमायस्थापयाम्येवं धनधान्यसमृद्धये ॥ यं यक्षिणिसिंहवाहिनि गदाहस्ते एह्ये० स्वाहा । ओं ह्रीँ क्ष्मौ नारसिंहि एह्ये० स्वाहा । ह्रीँ क्ष्रेँ चामुण्डे एह्ये० स्वा दिगम्बर एह्येहि० स्वाहा । भीषणभैरव-एह्ये० स्वाहा इति । शेषन्देवमण्डपवत् ।

सर्वोपचारैरर्चयेत् ॥ ततो थोमेदण्ड इत्यनेन दण्डालम्भः ॐ आप्यायस्वेत्यनेन पताकां दत्वा सोमोराजा। अथवा सोमोधेनुठं॰ सोमोऽअर्वन्तमाशुठं॰ सोमोऽवीरङ्कर्मण्यन्ददाति सादन्यंविदथ्यठं॰ सभेयम्पितृश्रवणंयोददाशदस्मै ॥ इति ध्वजन्दद्यात् ॥ ध्वजे सुमुखायनमः। एकपादाय क्षेत्रपाला यनमः इति सम्पूज्य वलिं दद्यात् ॥ ॐ सर्वनक्षत्र मध्ये तु सोमोराजाऽव्यवस्थितः। तस्मै सोमाय देवाय नक्षत्रपतये नमः। इति नत्वा हैयङ्गवयुक्तं वलिं माषभक्त वलिं वा दद्यात। सोमायसाङ्गाय॰ इमं वलिं समर्पयामि। भो सोम दिशं रक्ष॰ वरदोभव ॥ पूजितेभ्योऽन्येभ्योपिवलयो देयाः इति ॥

( ८ ) ततः ईशान्यां गत्वा तत्रैकं कलशं संस्थाप्य - सुप्रतीकं दिग्गजं मङ्गलञ्चावाह्य। सुप्रतीकायनमः मङ्गलाय नमः इति। सम्पूज्य ईशानमावाहयेत् ॥ एह्येहि विश्वेश्वर

---

( ८ ) "चण्डीयागे" कङ्काल्यै नमः। शूलं डमरुगं चैव शङ्खं चक्रं गदाधरम्। खड्गपात्रं च खट्वाङ्ग पाशाङ्कुशधरं तथा ॥ ग॰ ॥ दिगम्वरं कुमारं च सिंहवाहनभूषितम्। दंष्ट्राकरालवद-नमष्टैश्वर्य्यसुखप्रदम्। दिगम्वराय नमः। धारयन्तं मदोन्मत्तं वडवानलभैरवम्। चण्डिकाशक्तिसंयुक्तं वन्दे संहारभैरवम्। संहारभैरवाय नमः। ईशानाय ध्वजं श्वेतं पताकां चैव वैतथा। स्थापयामि महेशाय वृषारूढाय शूलिने ॥ कङ्कालिवृषभारूढे शूल हस्ते एह्ये॰ स्वाहा ॥ दिगम्वरकुमार एह्ये॰ स्वाहा। संहारभैरव एह्ये॰ स्वाहा ॥ इति शेषन्देवमण्डपवत्।

नस्त्रिशूलकपालखट्वाङ्गधरेणसार्द्धम् ॥ लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते । ईशान इहागच्छेह तिष्ठेत्यावाह्य। तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम । पूषानोयथाऽवेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ इति सम्पूज्य । योमेदण्डइति दण्डालम्भः । तमीशानेतिमंत्रेण पताकां संस्थाप्य ॥ अभित्वाशूरनोनुमोदुग्धाइवधेनवः। ईशानमस्यजगतः स्वर्द्दृशमीशानमिन्द्रतस्थुषः ॥ इति ध्वजं दद्यात्। पताकायां पुष्ट्यैनमः। ध्वजे सुमुखायनमः। सुप्रतिष्ठितायनमः क्षेमायक्षेत्रपालायनमः। इति सम्पूजयेत् ततोनमस्कारः। रक्षणं कुरु मे देव त्रिनेत्राय त्रिशूलिने। वृषध्वजाय यज्ञाय नमस्तुभ्यमुमापते। इति नत्वा वलिं दद्यात ॥ ईशानाय साङ्गाय० इमं (गोधूम) वलिं समर्पयामि । भोईशान दिशं० वरदोभव। इति वलिं दद्यात ॥ इति ईशानकृत्यम ॥ (६) ततः नैर्ऋतपश्चिमयोर्मध्ये अध उद्दिश्य कलसं विनैव । अनन्तमावाहयेत्। एह्येहिपातालधरामरेश नागाङ्गनाकिन्नरगीयमान । यक्षोरगेन्द्रामरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम। भोअनन्तेहागच्छेहतिष्ठेत्यावाह्य ॥ आयङ्गौःपृश्निरक्रमीदसदन्न्मातरम्पुरः पितरञ्च प्रयन्त्स्वः ॥ ॐ अनन्तायनयः

(६) "चण्डीयागेऽपि" अनन्तायध्वजं श्वेतं पताकां चैवतथा स्थापयामि अनन्ताय पातालाधिपनमोस्तुते। इति। शेषन्देवमण्डपवत।

इति सर्वोपचारैः पूजयेत् । योमेदण्ड इति दण्डमालभ्य ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिविते- भ्यः सर्पेभ्योनमः ॥ इति पताकां संस्थाप्य ॥ चित्रावोऽस्तु यमश्चित्रऽऊतीसुदानवः । मरुतोअहिभानवः ॥ ध्वजं दद्यात् । भैरवाय क्षेत्रपालायनमः । इति ध्वजे पूजनम् ॥ ततोवलिदानम् । अनन्तत्वादनन्तस्त्वं फणीन्द्राधिपते हरे । त्वयात्ररक्षणं कार्य्यं कृष्णनेत्राय ते नमः । योसा- वनन्तरूपेण ब्रह्माण्डं सचराचरम् । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमोनमः । इति नत्वा । अनन्ताय साङ्गायस० समर्प्पयामि । भो अनन्तदिशंर० वरदोभव इति ( १० ) ईशानपूर्वयोर्मध्ये कलशस्थापनं विनैवोर्द्ध्वमुद्दिश्य ब्रह्माण- मावाहयेत् । एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृ- देवताभिः । सर्वस्यधातास्यमितप्रभावोविशाध्वरं नः सततं शिवाय । इत्यावाह्य । ब्रह्मयज्ञानमति मंत्रेण पूजयेत् । अनेनैवमंत्रेण पताकां ध्वजं च दद्यात् । गायत्र्यैनमः भूत- नाथायक्षेत्रपालायनमः इति पूजयेत् ॥ ततोवलिदानम् ॥ पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः । यज्ञाध्यक्षश्चतुर्व- क्त्रस्तस्मै नित्यं नमोनमः । इति नत्वा । ब्रह्मणेसा० सम-

---

( १० ) "चण्डीयागे" स्थापयाम्यन्तरिक्षाय पताकां रक्तव- र्णिकां । कनकाकाररूपाय निराकाराय च ध्वजम् सं० सर्वराज्य- चक्रहस्त एह्ये० स्वा० । विष्णुप्रिये जगद्धंसवाहने एह्ये० स्वाहा । इति ॥ शेषन्देवमण्डपवत् ।

र्पयामि । भो ब्रह्मन् दिशं॰ वरदोभव । इति । इमं मंत्रं पठेत् ॥ सनोभुवनस्यपते प्रजापतेयस्यन उपरिगृहायस्य-वेह । अस्मै ब्रह्मणेस्मै क्षत्रायमहिशर्म्मयच्छस्वाहा ॥ ततो-मण्डपमध्येऽत्युच्चदण्डं दशहस्तदीर्घं त्रिहस्तविस्तारम् । पञ्चहस्तदीर्घं हस्तविस्तारं वा महाध्वजं विचित्रवर्णं चामर-किङ्किण्यादियुतं ॥ गृहीत्वा यजमानः सबान्धवः मण्डप-प्रदक्षिणं कृत्वा ॥ ॐ मुञ्चन्तुमाशपथ्यादथोऽवरुण्यादुत । अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्विषात् इत्यनेन ध्वजं विमुच्य इन्द्रस्येत्यनेन स्थापयेत् ॥ इन्द्रस्यवृष्णोऽवरुणस्य राज्ञऽआदित्यानाम्मरुता॰शर्द्धऽउग्रम् । महामनसाम्भुवन-च्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ इति ध्वजं संस्था-प्य "ब्रह्मयज्ञानामितिमंत्रेण पूजयेत् । इति वंशेषु किन्नरे-भ्योनमः पृष्ठे पन्नगेभ्योनमः इत्यर्चयेत् ॥ ततोमण्डपात्पू-

---

कलशं संस्थाप्य वैष्णवाः यथाविधिसंपूज्य महाध्वजं स्थाप-यान्ति । कलशोपरि । ओं सहस्रारं हुंफट् स्वाहा । इत्यनेन द्वाद-शारं चक्रं स्थापयन्ति । आरेषु प्रदक्षिणक्रमेण । अचक्राय नमः विचक्रायनमः । सुचक्रायनमः त्रैलोक्यचक्रायनमः सहा-चक्राय नमः असुरान्तचक्रायनमः । महाज्वालाचक्रायनमः आधारकालचक्रायनमः ओं सुदर्शनायनमः रथाङ्गायनमः ओं विष्णुशस्त्रायनमः भक्तरक्षकायनमः इति गन्धादिभिःप्रपूज्य तन्मध्ये "ओं नृसिंहायनमः" इत्यनेन नृसिंहमपि स्थापयन्ति पूजयन्ति च । ततः प्राच्यां गणपतिपूजनं कृत्वा ॥ ईशाने । सर्वभूतेभ्यो वलिं दद्यात् ॥ अथश्चैवतु ये लोका असुराश्चैवपन्नगाः

र्वस्यां दिशि किञ्चिद् भूमिमुपलिप्य तत्समीपे उपविश्य त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुरु तानि मे। देवदानवगन्धर्वायक्षराक्षसपन्नगाः। ऋषयोमुनयोगावोदेवमातर एव च। सर्वे ममाध्वरेरक्षां प्रकुर्वन्तु मुदान्विताः। ब्रह्माविष्णुश्चरुद्रश्च क्षेत्रपालोगणैः सह। रक्षन्तु मण्डपंसर्वेघ्नन्तु रक्षांसि सर्वतः। एवंसम्प्रार्थ्यनाममन्त्रैस्तस्यामेवभूमौ गन्धादिभिःसम्पूज्यतस्या मवनाममन्त्रैर्वलिं दद्यात्। त्रैलोक्यस्थेभ्यःस्थावरेभ्योभूतेभ्यः इमं वलिं समर्पयामि। ब्रह्मणे, विष्णवे, रुद्राय, देवेभ्यः, दानवेभ्यः, गन्धर्वेभ्यः, यक्षेभ्यः, राक्षसेभ्यः, पन्नगेभ्यः ऋषिभ्यः, मुनिभ्यः, गोभ्यः देवमातृभ्योनमः। इमं वलिं समर्पयामि॥ वलिं दत्वा पाणिपादं प्रक्षाल्य। परिपू

---

सपत्नीपरिवाराश्च प्रतिगृह्णन्त्विमं वलिम्। नक्षत्राधिपतिश्चोद्र्ध्वं नक्षत्रैः परिवारितः स्थानं चैव पितॄणान्तु सर्वे गृह्णन्त्विमं वलिम्॥ ईशानोत्तरयोर्मध्ये क्षेत्रपालोमहावलः भीमनामा महादंष्ट्रः सर्वे गृह्णन्त्विमं वलिम्। येकेचिदिह लोके तु ह्यागतावलिकाङ्क्षिणः। तेभ्योवलिं प्रयच्छामि नमस्कृत्य पुनः पुनः। वलिं गृह्णन्त्विमे देवा आदित्यावसवस्तथा। मरुतोप्यश्विनौ रुद्राः सुपर्णाः पन्नगाग्रहाः। असुरायातुधानाश्च पिशाचामातरोनगाः। शाकिन्योयक्षवेतालयोगिन्यः पूतनाः शिवाः। जृम्भकासिद्धगन्धर्वाआलाविद्याधरानराः। दिक्पालालोकपालाश्चये च विघ्नविनायकाः। सौम्याभवन्तु ते तृप्ताः देवासुरगणास्तथा। इति ईशानभागेदद्यात्॥

र्णतां प्रार्थयेत् । कृतस्य पूजनविधेर्यन्न्यूनमतिरिक्तं तत्सर्वं सन्निधिस्थानां ब्राह्मणानां प्रसादात्परिपूर्णमस्तु ॥ ततः प्राग्द्वारेण सर्त्विग्यजमानः मण्डपंप्रविशेत् ।

इति श्रीभाष्याचार्य पं० हरिनामदत्तशास्त्रितनय वि · वा०
पं० देवीप्रसादशास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य
प्रथमखण्डेमण्डपपूजाप्रकरणम् ॥

केचन नाममात्रेण स्थूणादिपूजामपि कुर्वन्ति ॥ यथा । वेदिकाग्नेयकोणे प्रथमां स्थूणां । ओं वसुदायैनमः भद्रायैनमः । अदित्यैनमः नन्दायैनमः । ( मण्डपाग्नेयकोणे ) भूत्यैनमः सरस्वत्यैनमः पूर्वसंध्यायैनमः । मध्यमसंध्यायैनमः पश्चिमसंध्यायैनमः । गायत्र्यैनमः सावित्र्यैनमः बृहत्यैनमः दित्यै नमः विनतायैनमः पौर्णमास्यैनमः सिनीवाल्यैनमः इति स्थूणां प्रपूज्य । वन्धनादिषु गन्धपुष्पाक्षतादीनि दत्वा नागान् पूजयेत् ॥

## ॥ अथ कुण्डपूजा ॥

मण्डपपूजनान्तरं यजमानः प्रक्षालितपादपाणिः स्वाचान्तः सर्वैराचार्यादिभिः (ऋत्विग्भिः) सहितः प्राग्द्वारेण" मण्डपान्तः प्रविश्य । अग्न्यायतनाद्दक्षिणतो

---

केचन तोरणपूजां कृत्वा द्वारपूजां कुर्वन्ति । केचन द्वारपूजां० ॥ पद्धतिकारैरन्यामन्यांपरीपाटीमवलम्ब्य मण्डपार्चना प्रदर्शिता । विनिगमनाविरहात् यथा सौकर्यं तथा कार्यम् । नात्र क्वापि विचारणा । ( परशुरामः ) ततः श्वेतघटं दद्यान्मण्डपोपरि सत्तमः । दक्षिणां विधिवद्दद्यात् सूर्यायार्घ्यं निवेदयेत् । घटे गणेशं वरदं वरं कृत्वा समुत्सृजेत् । मण्डपोपरि संस्थाप्य कलशं मन्त्रमुच्चरेदिति । ( हरिभक्ति विलासे ) अथ वाद्यादिभिर्दिव्यैर्विचित्रैर्मङ्गलस्वनैः । कृत्वा महोत्सवं न्यसेत्पताका विधिवद्गुरुः । शुभम् ।

ब्रह्मासनस्थानात् पश्चात् यजमानः स्वासने उदङ्मुखउप-विशेत्। भो गुर्वादयो यथाविहितं कर्मकुरुध्वम् इति सवि-नयं प्रार्थयेत्। "यथायोग्यं करवाम" इति प्रति वचनम्। "जापकान् जपत द्वारपालान् पठध्वम्" इति शान्ति-सूक्तानां" जपे पाठे च नियोजयेत्। ते च कर्मसमा-प्तिपर्य्यन्तं स्वस्वशाखीयसूक्तादि "जपपाठौ" कुर्युः ("सूक्तादीनि" अग्रेनिर्देक्ष्यामः) ॥ आचार्य्यः कुण्डप-श्चिमत उपविश्याचम्य प्राणानायम्य ॥ ॐ अपसर्प्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया। इति सर्षपान्विकीर्य्य यथाविधि पंचगव्यं निर्माय तेन कुण्डं प्रोक्ष्य। ॐ गुरुभ्योनमः ॐ गणपतयेनमः। इति नत्वा हस्ते गन्धाक्षतपुष्पजला-दीनि गृहीत्वा। देशकालौ सङ्कीर्त्य अमुकयज्ञकर्म्मण्यग्नि प्रतिष्ठां करिष्ये। तदङ्गतया सम्मार्जनमेखलायोनिदेव-तास्थापनपूजनादिकं करिष्ये। इति संकल्प्य। अग्न्याय-तनं सम्मृज्य कुशोदकेनाभ्युक्षेत् ॥ अञ्जलौ पुष्पाण्यादाय कुण्डमावाहयेत् ॥ आवाहयामि तत्कुण्डं विश्वकर्म्मविनि-र्म्मितं। शारीरंयच्चते दिव्यमग्न्यधिष्ठानमद्भुतं ॥ इत्या-वाह्य सम्पूज्य प्रार्थयेत् ॥ ये च कुण्डे स्थितादेवाः कुण्डा-ङ्गे याश्चदेवताः। ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदा-

गन्धपुष्पैरलङ्कृत्य द्वारपालान् समन्ततः। कुरुध्वमितितान्ब्रूयादाचार्योऽभिपूज-येत्। यजध्वमिति तान् ब्रूयाद्धोतृकान् पूज्य एव तु। उत्सृष्टं मन्त्रजाप्यं तु। तिष्ठध्वमिति जापकान्। इति।

न्विताः। हे कुण्ड तव निर्म्माणं रचितं विश्वकर्म्मणा। अस्माकंवाञ्छितां सिद्धिंयज्ञसिद्धिं ददातु भोः। इतिसम्प्रार्थ्य। कुण्डमध्ये विश्वकर्म्माणंपूजयेत्। ॐ विश्वकर्म्मन्हविषाऽवर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम्। तस्मैऽविशः समनमन्तपूर्वीरयमुग्रोऽविहव्ययोयथासत्। उपयामगृहीतोसीन्द्रायत्वाऽविश्वकर्मणऽएषतेयोनिरिन्द्रायत्वाऽविश्श्वकर्मणे। ॐ विश्वकर्म्मणेनमः॥ गन्धादिभिः सम्पूज्य प्रार्थयेत्। अज्ञानाद्ज्ञानतोवापि दोषाः स्युः खननोद्भवाः। नाशय त्वं हि तान्सर्वान् विश्वकर्मन्नमोस्तुते॥ इति सम्प्रार्थ्य। उपरिगतमेखलायां श्वेतवर्णालङ्कृतायां विष्णुमावाहयेत्॥ ओं विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन। विभोयज्ञस्य रक्षार्थं कुण्डेसन्निहितोभव॥ ओं इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम्। समूढमस्यपाꣳसुरेइत्यर्चयेत्॥ प्रथममेखलायै विष्णुदैवत्यैश्वेतवर्णालिङ्कृतायै इति मेखलां च पूजयेत्। ततोमध्यमेखलायां रक्तरागरञ्जितायां ब्रह्माणं। ॐ हंसपृष्ठसमारूढ देवदेवगणावृत। रक्षार्थं मम यज्ञस्य कुण्डेस्मिन्सन्निधौ भव। इत्यावाह्य॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोऽवेनआवः। सवुध्न्याऽउपमाऽअस्यऽविष्ठाः सतश्चयोनिमसतश्चविवः॥ इत्यनेन ब्रह्माणं सम्पूज्य। मध्यममेखलायै ब्रह्मदैवत्यै रक्तवर्णालंकृतायै नमः इति मेखलां च पूजयेत्॥ ततोऽधोमेखलायां कृष्णवर्णालङ्कृतायां रुद्रं। ओं गङ्गाधरमहादेव वृषारूढमहेश्वर।

आगच्छ भगवन् रुद्र कुण्डेस्मिन् सन्निधौ भव । इत्यावाह्य ॐरुद्राःसꣳसृज्यपृथिवीम्बृहज्ज्योतिः समीधिरे । तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते ॥ इति "रुद्रं" सम्पूज्य । तृतीयायैरुद्रदैवत्यैकृष्णवर्णालङ्कृतायै मेखलायैनमः इति मेखलां च पूजयेत् ॥ इति । ( ओ अम्बेऽअम्बिकेऽअम्बालिके नमानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासीनीम् ॥ इत्यनेन रक्तवर्णालङ्कृतायां गौरीमावाह्यार्चयेत् ॥ ( इत्यपिपाठः )

## ॥ योनिपूजा ॥

ओं क्षत्रस्य योनिरसि क्षत्रस्यनाभिरसि । मात्वाहिꣳसीन्मामाहिꣳसीः॥जगदुत्पत्तिहेतुकायै मनोभवयुतायै योन्यै नमोनमः । इति सम्पूज्य प्रार्थयेत् । सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः । चतुरशीति लक्षाणि पन्नगाद्याः सरीसृपाः । पशवः पक्षिणः सर्वे संसरान्ति यतोभुवि । योनिरित्येव विख्याता जगदुत्पत्तिहेतुकाः ॥ मनोभवयुतादेवी रतिसौख्यप्रदायिनी । मोहयन्ति सुरान्सर्वान् जगद्धात्रीनमोनमः ॥ योने त्वं विश्वरूपासि प्रकृतिर्विश्वधारिणी । कामस्था कामरूपा च विश्वयोन्यै नमोनमः ॥ इति योनिपूजा ॥

## ॥ ततः कण्ठपूजा ॥

जीवनं सर्वभूतानां सृगादिस्थानमुत्तमं । उत्तमांगस्य चाधारं कण्ठमावाहयाम्यहम् ॥ इत्यावाह्य ॥ ओं नीलग्री-

वाःशितिकण्ठादिवꣳ रुद्रा ऽउपश्रिताः । तेषाꣳ सहस्रयोजने वधन्वानितन्मसि । इत्यनेन सम्पूज्य प्रार्थयेत् ।। कण्ठमङ्गलरूपेण सर्वकुण्डेप्रतिष्ठितः परितोमेखलास्त्वत्तोरचिताविश्वकर्म्मणा ।।

## ।। ततोनाभिपूजा ।।

पद्माकाराऽथवा कुण्डसदृशाकृती विभूती । आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ।। इत्यावाह्य ।। ॐ नाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेपचितिर्भसत् । आनन्दनन्दावाण्डौमेभगः सौभाग्यम्पसः । जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मिठिवशिराजाप्रतिष्ठितः ।। इत्यनेन सम्पूज्य प्रार्थयेत् ।। नाभे त्वं कुण्डमध्ये तु देवैः सह प्रतिष्ठिता । अतस्त्वं पूजिता देवि शुभदा ऋद्धिदा भव ।। इति प्रार्थ्य । आचारात । नैर्ऋतिकोणे कुण्डमध्ये वास्तुपुरुषं पूजयेत् पुष्पाण्यादाय । आवाहयामिदेवेशं पुरुषंचमहाबलं । देवदेवं गणाध्यक्षं पातालतल वासिनं । इत्यावाह्य ।। ॐ वास्तोष्पते-प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः । यत्त्वेमहे प्रतितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्पदे ।। वास्तुपुरुषाय नमः इतिसम्पूज्य । ॐ वास्तुपुरुषायनमः इमं बलिं समर्पयामि इति बलिं दत्वा प्रार्थयेत् ।। यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमण्डलं । व्यापिनं भीमरूपं च सुरूपं विश्वरूपिणं । पितामहसुतोमुख्य तुभ्यं वास्तुपते नमः । इति सम्प्रार्थ्य अग्निं स्थापयेत् ।।

## अथ संक्षेपतोऽग्निस्थापनप्रकारः

तुषकेशशर्करादिरहिते कुण्डे ( स्थण्डिले ) भूमिं कुशैः परिसमूह्य तान्कुशानीशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवमूलेन वा प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणैवानामिकाङ्गुष्ठाभ्यांमृदमुद्धृत्य जलेनाभ्युक्ष्य । कांस्यादिपात्रेण मृण्मयेन वानीय कुण्डाद्बहिराग्नेय्यां स्थापिते आचार्य्यः "ॐ हुँ फट् स्वाहा" इति क्रव्यादांशं नैर्ऋत्यां दिशि निरस्य सम्पूज्य योनिमार्गेण ( आग्नेयकोणमार्गेण ) वा कुण्डमध्ये नीत्वा ॥ ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे देवाँ॥आ सादयादिह ॥ इतिमंत्रेण "शतमङ्गल" नामानम् तत्तत्कर्मानुसारेण अमुकनामानं ) अग्निकुण्डे स्वात्माभिमुखमुप समादध्यात् ॥ तद्रक्षार्थं किञ्चिन्नियुज्य । आनीताग्निपात्रयोर्जलादिद्रव्यप्रक्षेपः । ततः अग्नेर्ध्यानं कुर्य्यात् ॥

---

मण्डप पूजनान्तरं गुरुर्महावेद्यां सर्वतोभद्रदेवता आवाह्य सम्पूज्य स्वकुण्डेऽग्निं स्थापयेत् । ततः सर्वेऽपि होतारस्तमेवाग्निं स्वस्वकुण्डे प्रणयेयुः । ततः शिख्यादिदेवता आवाह्य सम्पूज्य तेभ्योवलिं दत्वा वास्तुहवनं कुर्यात् । इत्थं वास्तु पूजां विधाय ईशानभागे ग्रहान् अधिदेवतान् प्रत्यधिदेवतान् पूजयेत् इति प्रतिष्ठामयूखे । ( वास्तुपूजनात्प्राक् मण्डपपूजनमितिपक्षेप्रतिष्ठामयूखोक्तपाठः इतिध्येयम् ) मण्डपाकरणपक्षे कुण्डस्थाने स्थण्डिलं कुर्यादिति ( प्रतिष्ठामयूखप्रयोगपारिजाते च । त्र्यस्रं चतुरस्रं वितस्त्युछ्रायसंमितम् । सिकताद्यैर्विधातव्यं स्थण्डिलं हस्तमात्रकम् । ( इतिचन्द्रपाठे ) ।

चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधावद्धोवृषभोरोरवीति महोदेवो मर्त्यां २ऽआविवेश ॥ अग्ने-मम सम्मुखोभव । आवाह्य ॥ ओंमनोजूतिर्जुषतामाज्यस्य वृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु । ॅविश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठ ॥ इति प्रतिष्ठाप्य "ॐ अग्नयेनमः" इति गन्धादिभिः संपूजयेत् । इति संक्षिप्ताग्निस्थापनं ॥ विस्तृतप्रकारस्तु तृतीयखण्डे दर्शितोद्रष्टव्यः ।

# ॥ अथ सूर्य्यादिग्रहस्थापनम् ॥

दिवाकरं सहस्रांशुं सुरासुरनमस्कृतम् । लोकनाथं विश्वनेत्रं सूर्य्यमावाहयाम्यहम् ॥ ओं आकृष्णेन रजसा वर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसवितारथेनदेवोयातिभुवनानि पश्यन् ॥ ॐ भूर्भुवः स्वः कलिंगदेशोद्भव काश्यपगोत्रस सूर्य्य इहागच्छ इह तिष्ठ ॥ त्रैलोक्य दीपकं देवं

ग्रहाधीनानरेन्द्राणामुच्छ्रयाः पतनानिच । भावाभावौ च जगतस्तस्मात्पूज्यतमाग्रहाः । ( याज्ञवल्क्यः ) श्रीकामः शान्तिकामोवा ग्रहपूजां समाचरेत् । वृष्ट्यायुःपुष्टिकामोवा तथैवाभिचरन्नपि ॥ ( देशोद्भवेति ) । जन्मभूर्गोत्रमग्निश्चवर्णस्थानमुखानि च । योऽज्ञात्वा कुरुतेशान्तिं ग्रहास्तेनावमानिताः ॥ उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः । अङ्गारस्त्ववन्त्यां च मगधायांहिमांशुजः । सैंधवेषु गुरुर्जातः शुक्रोभोजकटेतथा । शनैश्चरस्तु सौराष्ट्रे राहुर्वैराठिनेपुरे । अन्तर्वेद्यां तथाकेतुरित्येताग्रहभूमयः । ( काश्यपइति ) यस्ययस्ययद्गोत्रंतत्तद्वद्याम्यतः परम् । आदित्यः काश्यपोगोत्र आत्रेयश्चन्द्रमा भवेत् । भारद्वाजोभवेद्भौमस्तथा-

गुणरूपं त्रयीमयम् । स्थापयामि महा भक्त्या भास्करं ग्रहनायकम् ॥ १ ॥ आग्नेय्यामर्धचन्द्राकारे श्वेतपुष्पाक्षतैः चन्द्रमावाहयेत् ॥ हिमरश्मिं निशानाथं तारकाभिः समन्वितम् । औषधीनां तु राजानं सोममावाहयाम्यहम् ॥ ॐ इमन्देवाऽअसपत्नꣳ सुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यैपुत्रमस्यैविशऽ एषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥ ॐ भूर्भुवः स्वः यमुनातीरदेशोद्भव आत्रेयस गोत्र चन्द्र

---

त्रेयश्चसोमजः । शक्रपूज्योङ्गिरोगोत्रः शुक्रोवैभार्गवस्तथा । शनिः काश्यपएवाथ राहुः पैठिनसस्तथा । केतवोजैमिनीयाश्च ग्रहाग्निस्तदनन्तरम् ॥ आदित्येकपिलोनाम पिंगलः सोमउच्यते । धूमकेतुस्तथाभौमे जाठराग्निर्बुधःस्मृतः । गुरोश्चैवशिखोनाम शुक्रेभवतिपाचकः । शनैश्चरेमहातेजाः राहुकेत्वोर्हुताशनः । ( गोत्रस इति ) सकारेणतु वक्तव्यं गोत्रं सर्वत्रधीमता । सकारः कुतुपोज्ञेयो तस्माद्यत्नेनतंवदेत् इति । आकृष्णेनेति ( मात्स्ये ) आकृष्णेनसहस्रांशोरिमन्देवातथेन्दवे । अग्निर्मूर्द्धेति भौमाय उद्बुध्यस्वबुधाय च बृहस्पतेतिगुरोः शुक्रस्यान्नात्परिश्रुतः । शनैश्चरस्यमन्त्रोयं शन्नोदेवीरुदाहृतः । कयान इति राहोश्च केतुं कृण्वंस्तुकेतवे इति । ( मदनस्त्वावाहनस्थापनयोर्भेदाद् ) व्याहृतिभिरावाहनं एतैर्मन्त्रैः स्थापनमित्यूचे । प्रणवंत्वादितः कृत्वाभूर्भुवः स्वस्ततः परम् । चतुर्थ्यानामसंयुक्तं नमस्कारान्तयोजितं । एषमंत्रःसमाख्यातोग्रहपूजा विधायकः । अनेनैवावाहनंकुर्यादनेनैव विसर्जनम् । इतिपारिजातेवामनोक्तिः सातान्त्रिकपूजनविषया । अतः परं प्रवक्ष्यामियोदेवोयोग्रहः स्मृतः । अग्निरर्कः स्मृतः सोमोवरुणः परिकीर्तितः । अङ्गारकः कुमारश्च बुधश्च भगवान्हरिः । बृहस्पतिः स्मृतः शक्रः शुक्रोदेवो च पार्वती । प्रजापतिः शनिश्चैव राहुर्ज्ञेयोगणाधिपः । विश्वकर्मास्मृतः केतुर्येग्रहास्तेसुराः स्मृताः(इतिविष्णुधर्मोत्तरे)एषां सुरत्वंमतवैवस्कान्दे अग्न्यादिलिङ्गकाः स्थापने मन्त्राउक्ताः । (स्कान्दे) "अग्निन्दूतं" दिनेशाय चन्द्रायाप्स्वन्तइत्यपि "स्योना-

इहागच्छ इहतिष्ठ ॥ शान्तं नक्षत्रनाथं च रोहिणीवल्लभं विभुम् । कुन्दपुष्पोज्वलाकारं स्थापयामि निशाकरं (याम्यां) त्रिकोणे चक्रे रक्तपुष्पाक्षतैः भौममावाहयेत् ॥ धरणीगर्भसम्भूतं लोहिताङ्गं सुवर्चसम् । कुमारं क्रूरकर्माणं भौममावाहयाम्यहम् ॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्याऽअयम् । अपाᳪरेताᳪसिजिन्न्वाति ॥ ॐ भूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र भौम इहा० ॥ रक्तस्रग्म्बरालेपं गदाशक्त्यसि शूलिनम् ॥ चतुर्भुजं मेषगमं भारद्वाजं धरासुतम् । रक्तकाञ्चनसङ्काशं रक्तकिञ्जल्कसन्निभम् । स्थापयामि महारौद्रं रुद्रमूर्तिं महाबलम् ॥ (ईशान्यां) पीतपुष्पाक्षतैर्बुधमावाहयेत् । बुधं बुद्धिप्रदातारं सोमवंशविवर्द्धनम् । स्वकुटुम्बहितार्थाय बुधमावाहयाम्यहं । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसᳪसृजेथामयञ्च । अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्च सीदत ॥ ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र बुध इहा० ॥ चाम्पेयपुष्पसङ्काशं विशुद्धकनकप्रभम् । स्थापयामि महासौम्यं बुधं सोमात्मजं प्रभुम् ॥ उत्तरे पीतपुष्पाक्षतैः गुरुमावाहयेत् ॥ बुद्धिश्रेष्ठोऽङ्गिरः पुत्रोदेवानां योगुरुः स्मृतः । तामिन्द्रमन्त्रिणं भक्त्या गुरुमावाहयाम्यहम् ॥ ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् । उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा । ओं भूर्भुवः

स्वः सिन्धुदेशोद्भव आंगिरसगोत्र बृहस्पते इहागच्छ इ० कुन्दपुष्पसमानाभं तप्तकाञ्चनसन्निभम् । स्थापयामि महाभक्त्या प्रसन्नवदनं गुरुम् ॥ पूर्वे श्वेतपुष्पाक्षतैः भृगुमावाहयेत् । प्रविष्ठः जठरे शम्भोर्निसृतः पुनरेवयः । तं सुरारिगुरुं भक्त्या शुक्रमावाहयाम्यहम् ॥ ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाऽव्यपिवत्क्षत्रम्पयः सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियम्विपानꣳ शुक्रमन्धसऽ इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवगोत्रस शुक्र इहा० ॥ कुन्दपुष्पसमानाभं मुक्ताफलसमप्रभम् । स्थापयामि महाशान्तं भृगुं दैत्यगुरुं प्रभुम् ॥ पश्चिमे कृष्णपुष्पाक्षतैः शनिमावाहयेत् । धर्मराजानुजं देवं भिन्नाञ्जनचयोपमम् । छायामार्तण्डसम्भूतं शनिमावाहयाम्यहम् ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये । शंय्योरभिस्रवन्तुनः । इन्द्रनीलसमानाभं नीलोत्पलसमप्रभम् । स्थापयामि महारौद्रं सूर्य्यपुत्रं शनैश्चरम् । ओं भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शने इहागच्छ इहतिष्ठ । नैर्ऋत्यां धूम्रपुष्पाक्षतैः राहुमावाहयेत । चक्रेणछिन्नमूर्द्धानं विष्णुना च निरीक्षितम् । सैंहिकेयं महाकायं राहुमावाहयाम्यहम् ॥ ओं कयानश्चित्रऽआभुवदूतीसदावृधः सखा । कयाशचिष्ठयावृता ॥ ओं भूर्भुवः स्वः राठिनदेशोद्भव पैठिनसगोत्र राहो इहागच्छ इ० । नीलाञ्जनसमानाभं नीलमेघसमप्रभम् । स्थापयामि महावक्त्रं राहुं चन्द्रार्कवै-

रिणम् ॥ वायव्यां धूम्रपुष्पाक्षतैः केतुमावाहयेत् ॥ अञ्ज-नाभं महारौद्रं वहुरूपं महाग्रहम् । महाकायं क्रूरकर्म्माणं केतुमावाहयाम्यहम् ॥ ओं केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे । समुषद्भिरजायथाः ॥ ओंभूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिगोत्रस केतोइहा० ॥ नीलमेघसमानाभं चित्र-वर्णं महावलम् । स्थापयामि महारौद्रं केतुं सर्वफलप्रदम् ॥ ततः काण्डा० पदार्थ० वा अनुकीर्तनरीत्या षोडशोपचारैः सम्पूजयेत् । सम्पूज्य प्रार्थना कार्या ।

## ॥ प्रार्थनाश्लोकाः ॥

वन्दे रविं द्युमणिमम्वुरुहे निषण्णं दोर्भ्यांदधानमरुणाम्वुरुहं ग्रहेन्द्रम् । माणिक्यभूषणमरुणांशुकगन्धमाल्यैर्भ्राजन्तममितद्युतिमब्जमित्रम् ॥ १ ॥ श्वेताम्वरस्रगनुलेपनमत्रि-नेत्रजातं दशाश्वरथवाहनमौषधीशम् । दोर्भ्यां धृताभयगदं भव-तिं सुधांशुं श्रीमत्सुमौक्तिकधरं प्रणमामि चन्द्रम् ॥ २ ॥ महेश्वरस्याननस्वेदविन्दोर्भूमौ जातं रक्तमाल्याम्वराढ्यम् सुदीधितिं लोहिताङ्गं कुमारमङ्गारकमहं शरणं प्रपद्ये ॥ ३ ॥ वन्दे बुधं मरकतोज्ज्वलदेहकान्ति पीताम्वरस्रगनुलेपनभूषिताङ्गम् । शक्तिं च दोर्भिरसिचर्मगदादधानं सिंहध्वजं शशिसुतं बुधमत्रिवंशम् ॥ ४ ॥ पीताम्वरं तनुलसद्धृतपुष्परागं केयूरहारमणिकुण्डल-मण्डिताङ्गम् । दण्डं वराक्षगुणकुण्डिवतां दधानं आङ्गिरसं सुरगुरुं हयगं नमामि ॥ ५ ॥ वन्दे विराजितसितांशुकगन्ध-माल्यमच्छाश्वगं तनुविराजितवज्ररत्नम् । दोर्भिस्सदण्डगुण-कुण्डितमक्षसूत्रं विभ्राणमासुरगुरुं भृगुपुत्रमीड्यम् ॥ ६ ॥ दोर्भिर्धनुर्विशिखचर्मधरं त्रिशूलं भास्वत्किरीटमुकुटोज्ज्वलि-

तेन्द्रनीलम् । नीलातपत्रकुसुमांशुकगन्धभूषं गृध्रस्थितं रविसुतं प्रणतोऽस्मि मन्दम् ॥ ७ ॥ राहुं कराग्रपरिमण्डितचर्म्मखड्गं भीमं तपोमयतनुस्तमसिन्द्विनारिम् । कौण्डिन्यसूनुमसितांशुकगन्धभूषं गोमेदभूषिततनुं हरिगं नमामि ॥ ८ ॥ गृध्रस्थितान् जलजयोगिसमानवक्त्रान् धूम्रान्तराभयकरान् सुभुजान् कुमारान् वैदूर्य्यभूषिततनून् वरजैमिनेयान् केतून्भयानकमुखान् द्विभुजान्नमामि ॥ अधिदेवताप्रत्यधिदेवतासहितानामेवपूजनम् । इति केचित् । तन्मते । अधिदेवताः प्रत्यधिदेवताआवाह्य सम्पूज्य ततः प्रार्थना कार्य्या । ग्रहपूजने मत्स्यादावादित्यक्रमः ( बौधायने तु ) रविभौमशुक्र, सोम, बुध, गुरु, मन्दादिक्रमः । केचित् नवग्रहमण्डले शक्तीरपिपूजयन्ति ( आदित्यमण्डले ) दीप्तायैनमः । जयायैनमः । भद्रायैनमः । विभूत्यैनमः । विमलायैनमः । अमोघायैनमः । विद्युतायैनमः । सर्वतोमुख्यैनमः । (सोममण्डले) । राकायैनमः । कुमुद्धत्यैनमः । नन्दायैनमः । सुधायैनमः । संजीविन्यैनमः । क्षमायैनमः । ज्योत्स्नायैनमः । नित्यायैनमः । प्रभायै नमः (कुजमण्डले) लोहितायैनमः । ज्वालिन्यैनमः । रौद्र्यैनमः । तीक्ष्णायैनमः । सूक्ष्मायैनमः । जयायैनमः । क्षुधायैनमः । सारायै नमः । निर्मलायैनमः ( बुधमण्डले ) चन्द्रिकायैनमः । कौमुद्यैनमः ज्योत्स्नायैनमः । सन्ध्यायैनमः । विद्यायैनमः । सरस्वत्यैनमः । मेधायैनमः । प्रज्ञायैनमः । (गुरुमण्डले) प्रभायैनमः । धृत्यैनमः । कान्त्यैनमः । दयायैनमः । मेधायैनमः । प्रज्ञायैनमः । विद्यायैनमः यशस्विन्यैनमः । स्थिरायैनमः । सुप्रभायैनमः ॥ ( शुक्रमण्डले ) शान्तायैनमः । नन्दायैनमः । स्मृत्यैनमः । कान्त्यैनमः । लक्ष्म्यैनमः । प्रीत्यैनमः । कलायैनमः । अमलायैनमः । सर्वसत्वकार्य्यैनमः ॥ शनिमण्डले । भयायैनमः । तन्द्रायैनमः । क्षुधायैनमः । मृत्यवेनमः । जरायैनमः । मायायैनमः । मनोमय्यैनमः । कामिकायैनमः । वरदायैनमः ( राहुमण्डले ) उग्रायैनमः । यमदूत्यैनमः । करालयैनमः । विकरालिकायैनमः । धूम्रायैनमः । तीव्रायै-

नमः । अजितायैनमः । रक्तायैनमः । क्रूरायैनमः (केतुमण्डले) निम्नायैनमः । अभयायैनमः । प्रकीर्णायैनमः । क्लिन्नायैनमः । भेदायैनमः । उत्कटायैनमः । यज्ञायैनमः । प्रतिज्ञायैनमः । घोरायैनमः । इति ।

## ॥ अथाधिदेवतास्थापनम् ॥

मध्ये रविदक्षिणपार्श्वे श्वेतपुष्पाक्षतैः रुद्रमावाहयेत । ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव-वन्धनान्मृत्योर्म्मुक्षीयमामृतात् । त्र्यम्बकं यजामहे सुगन्धि-म्पतिवेदनम् । उर्व्वारुकमिववन्धनादितोमुक्षीयमामुतः ॥

---

पृथिवी" भौमाय "इदम्विष्णु" बुधाय च । "इन्द्रऽआसां" सुरेज्याय "शुक्र-ज्योति" सिताय च । "प्रजापते" इति सौराय "आयङ्गौः" इति राहवे । केतवे "ब्रह्मजज्ञानं" स्वैः स्वैर्मन्त्रैःप्रतिष्ठिताः । इति । ( प्रायशः ) आवाहन स्थापनयोर्भेद एवसर्वत्र दरीदृश्यते अतो मदनमतमवलम्ब्य व्याहृतिभिरावाह्यतत्तन्मंत्रेण अग्न्या-दिलिङ्गकमन्त्रेणवास्थापनंकार्य्यम् ॥(वौधायनगृह्येतु)आवाहनवाक्यम् विस्तृततया-प्रदर्शितम् ॥ ( तद्यथा । ) किरीटिनं पद्मासनं पद्मकरं पद्मगर्भसमद्युतिं सप्ताश्वं सप्तरज्जुं कलिङ्गदेशजं काश्यपगोत्रजं विश्वामित्रर्षैत्रिष्टुप्छन्दसं रक्ताम्बरधरंरक्ता-भरणभूषितं रक्तगन्धानुलेपनं रक्तध्वजापताकिनं मुकुटकेयूरशोभितमारुह्यरथंदिव्यं मेरुप्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताग्निसहितं प्रत्यधिदेवतेश्वरसहितं रक्तवृत्तमण्डले पूर्वाभिमुखमादित्यमावाहयामि । अनयापरिपाट्यासर्वेषामावाहन-प्रकारः प्रदर्शितः । सचप्रकारः माध्यन्दिनशाखाध्यायिनामुपेक्षणीयः । भास्करा-ङ्गारकौरक्तौशुक्लौशुक्रनिशाकरौ । सोमपुत्रोगुरुश्चैव तावुभौपीतकौस्मृतौ । कृष्णंशनै-श्चरंविद्याद्राहुं चित्राश्चकेतवः । ( स्थानानिआकाराणिचंदर्शितानि । मण्डपरचना प्रकरणे । शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः सोमः शेषादक्षिणतोमुखाः । प्रत्यङ्मुखावूर्ध्वदृष्टी उदङ्मुखौवामदृष्टी ( प्रत्यङ्मुखा-वधोदृष्टीदक्षिणतोमुखाः दक्षिणदृष्टयः ) आदित्याभिमुखाः सर्वे इति हेमाद्रिः ।

शिव इहागच्छ इहातिष्ठ ॥ आग्नेय्यां चन्द्रस्य दक्षिणे रक्त-पुष्पाक्षतैः उमामावाहयेत् ॥ ॐ श्रीश्चते लक्ष्मीश्चपत्न्या वहोरात्रे पार्श्वे नक्षत्राणिरूपमश्विनौ व्यात्तम् । इष्णन्नि-षाणामुम्मइषाणसर्वलोकम्मऽइषाण ॥ उमे इहा० याम्यां भौमस्य दक्षिणे पीतपुष्पाक्षतैः स्कन्दमावाहयेत् ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् । श्येनस्यपक्षाहरिणस्यव्वाहूउपस्तुत्यम्महिजातन्तेऽअर्व्वन् ॥ स्कन्द इहा० ईशान्यां बुधदक्षिणे पीतपुष्पाक्षतैः विष्णु-मावाहयेत् ॥ ॐ व्विष्णोररराटमसिव्विष्णोःश्नप्त्रेस्थो-व्विष्णोः स्यूरसिव्विष्णोर्द्ध्रुवोसि ॥ व्वैष्णवमसिव्विष्णवे-त्वा ॥ विष्णो इहाग० । उत्तरे गुरुदक्षिणे रक्तपुष्पाक्षतैः ब्रह्माणमावाहयेत् ॥ ॐ आब्रह्मन्ब्राह्मणोव्ब्रह्मवर्चसीजायता-माराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्री धेनुव्वोंढानड्वानाशुः सप्तिः पुरन्धिर्य्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनः प-

---

विकल्पपरिजिहीर्षया प्राङ्मुखावूद्र्ध्वदृष्टी इति हेमाद्रिर्व्याचष्टे । तत्रमूलंचिन्त्यं । काण्डानु० इति । एकैकस्यावाहनादिपुष्पाञ्जल्यन्तपूजनंसमाप्य च ततोऽन्यस्य इतिकाण्डानुकीर्तितः सर्वेषामेकतन्त्रेण रव्यादीनांयथाविधिपूजनं तुप्रकर्तव्यंपदार्थोऽनुप्रकीर्तितः इति हेमाद्रौ । ( स्कान्दे ) सूर्य्यस्यचोत्तरेशम्भुमित्यादिनास्थानमुल्लिख्यतत्रैवस्थापनमन्त्रादर्शिताः । ईश्वरं "त्र्यम्बकं" चेति "श्रीश्चते" चेति पार्वतीम् ,"यदक्रन्द" इति च स्कन्दं विष्णुं "विष्णोरराडिति" "आब्रह्मन्निति" ब्रह्माणं "सजोषेन्द्रेति" वासवं "यमायत्वेति" यमंकालं "कार्षिरसीति" च । चित्रा वस्विति मन्त्रेण चित्रगुप्तं निधापयेत् इति ।

र्ज्जन्न्योऽवर्षतुफलवत्योनऽओषधयः पच्च्यन्तां योगक्षेमोनः कल्पताम् ॥ ब्रह्मन् इहा० ॥ पूर्वे शुक्रदक्षिणे पीतपुष्पाक्षतैः इन्द्रमावाहयेत् ॥ ओं सजोषाऽइन्द्रसगणोमरुद्भिः सोमम्पिववृत्रहाशूरऽविद्वान् जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिऽविश्वतोनः । उपयामगृहीतोसि इन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरुत्वने ॥ इन्द्रइहा० पश्चिमे शनिदक्षिणे कृष्णपुष्पाक्षतैः यममावाहयेत् ॥ ओं यमायत्वामखायत्वासूर्य्यस्यत्वातपसे । देवस्त्वासवितामद्ध्वानक्तुपृथिव्व्याःसꣳस्पृशस्पाहि । अर्चिरसिशोचिरसितपोसि ॥ यमइहाग० ॥ नैर्ऋत्यांराहुदक्षिणेधूम्रपुष्पाक्षतैः कालमा-

---

दक्षिणे इति । ( मदनरत्नसंग्रहे ) ग्रहस्य दक्षिणेभागे स्थापयेदधिदेवताः ग्रहस्य वामपार्श्वे तु स्थाप्याः प्रत्यधिदेवताः ॥ स्थापनमन्त्राः ( स्कान्दे ) अग्निन्दूतमितित्वग्नेर्वरुणस्य उदुत्तमम् । स्योनापृथिवि मेदिन्याइदंविष्णुस्तु विष्णवे । इन्द्रायेन्दु इतीन्द्रस्योत्तानपर्णे शचीस्थितौ प्रजापते प्रजेशस्य एषब्रह्मेति वै विधेः । मन्त्रोनमोस्तु सर्पेभ्यः सर्पाणां स्थापनेमतः ॥ एतेऽत्रविनायकाद्याः पञ्चग्रहेभ्य उत्तरतः स्थाप्याः । इति ( साम्प्रदायिकाः ) दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये । पद्मप्राग्दलमारभ्य दलाग्रेषु क्रमान्न्यसेत् इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः प्रपूजयेत् । (इति पारिजाते) उत्तरे क्षेत्राधिपतिं वास्तोष्पतिंचावाहयेदित्येके । ग्रहमखे अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् । इति वचनात् । अग्निस्थापनान्तरमेव ग्रहमखे अग्निस्थापनं परं ( दुर्गोपासनकल्पद्रुमे शान्तिसुधाकरे च ) मण्डलप्रवेशानन्तरमेव ग्रहपूजाप्रदर्शिता । सर्वत्रैव शतचण्डीप्रयोगे । महाजागरणोपेतं होमंस्यात्पञ्चमेहनि इति वाक्यात् पञ्चमदिवसे होमः । तस्मादग्निप्रणयनमपि तद्दिने । श० प्र० अग्निस्थापनानन्तरं ग्रहस्थापनं पूर्वं वा इति विचारयन्तु विज्ञाः । इति ।

वाहयेत् ।। ॐ कार्षिरमिसमुद्रस्यत्वाक्षित्याऽउन्नयामि । समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ।। "काल" इहा- ग० । वायव्यां केतुदक्षिणे रक्तपुष्पाक्षतैः "चित्रगुप्त" मावाहयेत् ।। ओं इन्धानास्त्वाशतꣳ हिमाद्युमन्तꣳ समि- धीमहि । व्वयस्वन्तोव्वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्नेसपत्नदम्भनमदव्धासोऽअदाव्भ्यम् । "चित्रावसोस्व- स्तितेपारमशीय" । "चित्रगुप्त" इहागच्छ इ० । इत्यावाह्य प्रतिष्ठाप्य च षोडशोपचारैरेकतन्त्रेण पृथक् २ वा पूजयेत् ।

## ।। अथ प्रत्यधिदेवतास्थापनम् ।।

मध्ये सूर्य्यस्य वामे रक्तपुष्पाक्षतैः अग्निमावाहयेत् ।। ओं अग्निन्दूतम्पुरोदधे हव्ययवाहमुपब्रुवे । देवाँ २ आ- सादयादिह । "अग्ने" इहा० ।। आग्नेय्यां "चन्द्रस्य" वामपार्श्वे श्वेतपुष्पाक्षतैः जलमावाहयेत् ।। ओं उदुत्तमम्व- रुणपाशमस्मदवाधमं विमद्ध्यमꣳश्रथाय । अथावयमा- दित्यव्व्रते तवानागसोऽअदितयेस्याम ।।"आप"इहागच्छत इहातिष्ठत ।। दक्षिणे "भौमस्य" वामपार्श्वे रक्तपुष्पाक्षतैः भूमिमावाहयेत् ।।ओं स्योनापृथिवि नोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्रथाः ।। "पृथिवी" इहा० ईशान्यां "बुधस्य" वामे पीतपुष्पाक्षतैः विष्णुमावाहयेत् ।। ओं इदम्विष्णुर्व्विचक्रमे त्रेधानिदधेपदम् ।। समूढमस्यपाꣳसुरे ।। "विष्णो" इहा० उत्तरे "गुरोर्वामे" पीतपुष्पाक्षतैः इन्द्रमा-

वाहयेत्॥ ओं इन्द्रायेन्दुठं सरस्वती नराशठं सेनननग्नहुम्। अधातामश्विना मधुभेषजम्भिषजासुते ॥ "इन्द्र" इहा०। पूर्वे "शुक्रस्य" वामे पीतपुष्पाक्षतैः इन्द्राणीमावाहयेत्॥ (अन्यशाखीयं मंत्रं परित्यज्य स्वशाखीयं लिखामः)॥ ओं अदित्यैरास्नासीन्द्राण्याऽउष्णीषः । पूषासिघर्म्मायदीष्व ॥ "इन्द्राणि" इहाग०। पश्चिमे "शने" वामे श्वेतपुष्पाक्षतैः प्रजापतिमावाहयेत्॥ ओं प्रजापते न त्वदेतान्न्यन्न्योविश्वारूपाणिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽ अस्तुव्वयठंस्यामपतयोरयीणाम् ॥ "प्रजापते" इहागच्छ इ०। नैर्ऋत्यां राहोर्वामे कृष्णपुष्पाक्षतैः नागमावाहयेत्॥ ॐ नमोऽस्तुसर्प्पेभ्योयेकेचपृथिवीमनु । येअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः ॥ "अष्टकुलीनागा" इहागच्छत इहातिष्ठत। केतोर्वामे श्वेतरक्तपुष्पाक्षतैः ब्रह्माणमावाहयेत्॥ ओं ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः। सवुध्न्याऽउपमाऽअस्यव्विष्ठाःसतश्चयोनिमसतश्चव्विवः ॥ ब्रह्मन् इहागच्छ० ॥ आवाह्य प्रतिष्ठाप्य च : "ओं अधिदेवताभ्योनमः। ओं प्रत्यधिदेवताभ्योनमः अधिदेवताप्रत्यधिदेवतासहितसूर्य्यादिग्रहेभ्योनमः। ओं सूर्य्यायनमः ओं चन्द्रमसेनमः इत्यादि। इत्येतेपूजनमंत्राः। शास्त्रेव्यवस्थिताः।एषु कमपिमंत्रमुररीकृत्य षोडशोपचारैः पूजा कार्य्या ॥

॥ अथ पञ्चलोकपालावाहनमंत्राः ॥

नैर्ऋत्यांराहोरुत्तरभागे पीत (रक्त) पुष्पाक्षतैः गणप-

तिमावाहयेत् ॥ ओं गणानान्त्वा०...गर्ब्भधम्॥ "गणेश" इहाग० । पश्चिमे शनेः उत्तरे रक्तपुष्पाक्षतैर्दुर्गामावाहयेत्॥ ॐ जातवेदसे सुनवामसोममरातीयतोनिदहातिव्वेदः । स नः पर्षदतिदुर्गाणि व्विश्वानावेवसिन्धुन्दुरितात्यग्निः ॥ "दुर्गे" इहा० । मध्ये सूर्य्योत्तरे पीतपुष्पाक्षतैः वायुमावाहयेत् ॥ ॐ व्वातोवामनोवागन्धर्व्वाःसप्तविꣳशतिः तेऽअग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः॥ "वायो" इहाग० ॥ पूर्वे राहोर्दक्षिणे नीलपुष्पाक्षतैः आकाशमावाहयेत् ॥ ॐ घृतङ्घृतपावानः पिवतव्वसांव्वसापावानः पिवतान्तरिक्षस्यहविरसि स्वाहा ॥ दिशःप्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ "आकाश" इहागच्छ इ० । केतोर्दक्षिणे श्वेतपुष्पाक्षतैः अश्विनौ आवाहयेत् ॥ ओं यावाङ्कशामधुमत्यश्विनासूनृतावती । तयायज्ञम्मिमिक्षताम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा ।"अश्विनौ" इहागच्छतामिहातिष्ठताम् ॥

## ॥ अथ दिक्पालावाहनमंत्राः ॥

'पूर्वे' ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ "इन्द्र" इहागच्छ इ० । आग्नेय्याम् ॥ ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोव्वन्हितमः शोशुचानोव्विश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥

॥ अग्ने इ० । याम्ये ॥ ॐ यमायत्वामखायत्वासूर्य्यस्यत्वा-तपसे । देवस्त्वासवितामद्ध्वानक्तुपृथिव्याःसᳬस्पृशस्पाहि। अर्चिरसिशोचिरसितपोसि ॥ 'यम' इहाग० । "नैर्ऋत्यां० ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामान्विहितस्क्करस्य। अन्न्यमस्मादिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ नि-र्ऋते" इहा० । "पश्चिमे" ओं व्वरुणस्योत्तम्भनमसि व्वरुणस्यस्क्कम्भसर्ज्जनीस्त्थोव्वरुणस्यऽ ऋतसदन्न्यसिव्वरु-णस्यऽऋतसदनमसिव्वरुणस्यऋतसदनमासीद ॥ "वरुण" इहाग० । वायव्ये ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरᳬ सहस्रिणीभिरुपयाहियज्ञम् वायोऽअस्मिन्त्सवनेमादयस्वयू-यम्पातस्वस्तिभिः सदानः ॥ "वायो" इहागच्छ० । उत्तरे ॐ व्वयᳬसोमव्व्रतेतवमनस्तनूषुविभ्रतः । प्रजावन्तःसचेम-हि । "कुवेर" इहागच्छ इहातिष्ठ ॥ ईशान्याम् ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम्। पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ईशान इ० । 'ईशानपूर्वयो'र्मध्ये ब्रह्माणम् ॥ ॐ ब्रह्मणस्प तेत्वमस्ययन्तासूक्तस्यव्वोधितनयञ्चजिन्न्व । व्विश्वन्तद्-भद्रंयदवन्तिवृहद्वदेमव्विदथेसुवीराः । यऽइमाव्विश्वाव्वि-श्वकर्म्मायोनःपितान्नपतेऽन्नस्यनोदेहि ॥ "ब्रह्मन्" इहा० । नैर्ऋत्यवरुणयोर्मध्ये अनन्तम् ॥ ओं स्योनापृथिविनोभवा-नृक्षरानिवेशनि । यच्छानः शर्म्मसप्रथाः ॥ "अन-न्त" इहा० । एवं आवाह्य संस्थाप्य षोडशोपचारैः पूजयेत् ।

ॐ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोऽविप्रायमतिम् तेषांऽविप्रियाणां-ऽवोहमिषमूर्ज्जꣳसमग्रभमुपयामगृहितोसीन्द्रात्वाजुष्टङ्गृह-णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ सम्पृचौस्थः सम्माभद्रेणपृङ्क्तंविपृचोस्थोऽविमापाप्मनापृङ्क्तम् ॥ इति सर्व्वग्रह-मन्त्रः ॥ तत ईशान्यां अव्रणं ताम्रादिधातुनिर्मितं मृण्मयं व्वा वहिरक्षतचन्दनभूषितं वस्त्राच्छन्नं कलशपात्रं धान्यो-परि स्थापयेत् ॥

## ❀ अथ कलशस्थापनमन्त्राः ❀

ओं भूरसिभूमिरस्यदितिरसिऽविश्वधायाऽविश्वस्यभुव-नस्यधर्त्री। पृथिवींयच्छपृथिवीन्दृꣳहपृथिवीम्माहिꣳसीः ॥ इति ॥ भूमिं सम्प्रार्थ्य ॥ ओं धान्यमसिधिनुहिदेवान्प्रा-णायत्वोदानायत्वाऽव्यानायत्वा ॥ दीर्ग्घामनुप्रसितिमायुषे-धान्देवोवः सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण-

---

(ईशान्यामिति) ग्रहाणां शम्भुकोणे वा सौम्ये वा पद्ममालिखेत्। तन्मध्येवा-रुणं कुम्भं पुण्यतोयप्रपूरितम्। अव्रणं सुदृढंरम्यं धान्यस्योपरि विन्यसेदिति ॥ ( निर्मितमिति ॥ ) हेमराजतताम्रावा मृन्मया लक्षणान्विताः। यात्रोद्वाहप्रतिष्ठादौ कुम्भाः स्युरभिषेचने पञ्चषाङ्गुलिवैपुल्यमुत्सेधात्षोडशाङ्गुलः। द्वादशाङ्गुलिकम्मूलं मुखमष्टाङ्गुलं तथा। इति ( विष्णुधर्मोत्तरे ) [ "पञ्चाशा" इति पाठोपि दृश्यते पुस्तकेषु ॥ आशादिशः ताश्च दशसंख्यात्वेन प्रसिद्धाः पञ्च च आशाश्च पञ्चाशाः तावत्यंगुलानि वैपुल्यम्। मध्यदेशे तिर्य्यङ्मानेन पंचदशाङ्गुलम् वाह्यप्रदेशवलया-कृतिना सूत्रेण मीयमानमध्यस्थाने पंचदशाङ्गुलम् ] इत्यर्थः ॥ ( प्रतिद्वारस्थापन-समयेकलशलक्षणं कुण्डकल्पद्रुमे)हेम्नः सुकुम्भारजतोद्भवा वा ताम्रोद्भवा वायदि मृण्मयावा। दृढाः सुपक्वाः स्वसितांकरन्ध्रैर्हीनाश्च रक्तानिजलक्षणाढ्याः। मूले पतङ्गै

पाणिना चक्षुषेत्वामहीनाम्पयोसि ॥ श्लो० यवोसि धान्य-राजस्त्वं सर्वोत्पत्तिकरः शुभः । प्राणिनां जीवनोपायः कलशाधः क्षिपाम्यहम् ॥ इति । अनेन प्रस्थधान्यपुञ्जं प्रतिष्ठाप्य तस्योपरि अष्टदलं विलिख्य कलशं स्थापयेत् । तत्र मंत्रः ॥ ॐ आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः । पुनरूर्ज्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्मा-विशताद्रयिः ॥ श्लो० । कलाः कलाहि देवानां दानवानां कलाः कलाः । आदाय निर्मितोयस्मात्कलशस्तेन कथ्यते। इति कलशं संस्थाप्य । जलेनापूरयेत् । ॐ वरुणस्योत्तम्भ-नमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऋतसदन्न्यसि-वरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ आपः स्थ यूयं देवेशा ज्योतिषाम्पतयस्तथा । भूतानां जीवनोपाया अतः कुम्भे क्षिपाम्यहम् ॥ इति जलेन परिपूर्य्य । ॐ श्रीखण्डचन्दनंदिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुगन्धाय कलशे संक्षिपाम्यहम् ॥ इति गंधं प्रक्षिपेत् ॥ ॐ

---

श्च मुखेमतङ्गैस्त्वोच्चैर्नृपैः पुष्करकेऽत्तचन्द्रैः। तुल्याङ्गुलैर्यै कलशाःसमास्युस्तएव सर्वेषु शुभेषु योज्याः ॥ इति ॥ कलशस्थापनप्रकारः (परशुरामोक्तः) कलशस्थापनं कार्यं कमलेष्टदलेऽमले । उदकुम्भं समानीय पूर्णविधिनार्चयेत् । भूमिं भूरसिरुस्प्राश्यं आजिघ्रेत्यम्बुजे न्यसेत्। महीद्यौर्वारिणापूर्य्य [ वरुणस्येत्यनेनेतिजललिङ्गात् ] याओषधीरौषधीः क्षिपेत्। हिरण्यगर्भइति द्रव्यमश्वत्थेवस्तु पल्लवान्। पूर्णादर्वि पूर्णपात्रं धान्यं धान्यमसीति च। याः फलिनीः फलं तस्मिन्नुपरिष्टा-न्निधापयेत्। सुजातोज्योतिषावासोयुग्मेन परिवेष्टयेत्। पंचरत्नानि मध्येऽस्य परिवाजपतीत्यनेन क्षिपेत् ॥ प्रस्थधान्यमिति (स्मृतिसंग्रहे) प्रस्थपरिमाणं।

या ओषधीः पूर्वाजाता देवेभ्यस्त्रियुगम्पुरा । मनैनुबभ्रूणामहँ शतन्धामानिसप्त च ॥ इति "सर्वौषधीः" प्रक्षेपः । सर्वौषध्यः सुगन्धाढ्या दिव्यवृष्टिसमुद्भवाः । कलशाप्यायनकरामङ्गलाय क्षिपाम्यहम् । इति च पठेत् ॥ (केचनात्र "आब्रह्मन्" इति मंत्रेण कुशब्राह्मणमपि प्र० ) ॥ ॐ काण्डात्काण्डात् प्ररोहन्ति परुषः परुषस्परि । एवानोदूर्वे प्रतनुसहस्रेण शतेन च ॥ इति "दूर्वा" प्रक्षेपः । दूर्वे ह्यमृतसम्पन्ने शतमूले शताङ्कुरे । शतम्मे हर पापानि शतमायुर्विवर्द्धिनी । ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता। गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ इति पञ्चपल्लवान्" यज्ञवृक्षसमुद्भूतान् पल्लवान् सरसान् शुभान् । अलङ्काराय पञ्चैतान् कलशे सङ्क्षिपाम्यहम् ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्रथाः ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना । दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥ इति सप्तमृदः । ॐ याः फलिनीर्य्याऽअ-

---

पलं च कुडवः प्रस्थआढकोद्रोणएव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमीचतुर्गुणाः । "पलपरिमाणं" ( भविष्यपुराणे ) पलद्वयं तु प्रसृतं मुष्टिरेकं पलं स्मृतम् ॥ ( स्कान्देतु ) पंच कृष्णलकोमाषस्तैश्चतुः षष्टिभिः पलम् । ( कृष्णलोगुञ्जा तैर्माषैः) धान्यशब्देन सतुषं द्रव्यम् । कश्चित् धान्यमसिधिनुहीत्यत्र तण्डुलेष्वपि धान्यशब्दप्रयोगात्तस्यैव निधानम् इति ॥ सप्तधान्यानि निधेयानीत्याधुनिकाः । यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च । श्यामाकं देवधान्यं च सप्तधान्यमुदाहृतम् । सर्वौषधीः इति ( सर्वौषध्यश्छन्दोगपरिशिष्टे ) कुष्ठं मांसी हरिद्रे द्वे मुरा ( मुरई )

फलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्च-न्त्वꣳहसः ॥ इदं फलं मया सम्यक् प्रक्षिप्तं कलशे यतः । तेनायं कलशः सम्यक् फलवानस्तु सर्वदा ॥ इति पूगीफलं ओं परिवाजपतिः कविरग्निर्हव्यान्न्यक्रमीत् । दधद्रत्ना-निदाशुषे ॥ रत्नगर्भाभवद्भूमी रत्नगर्भाश्च भूधराः । क-लशोरत्नगर्भः स्यात्तस्माद्रत्नान्यहं क्षिपे । इति "पञ्चरत्ना-नि" ओं हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः कलशे प्रक्षिपाम्यहम् ॥ इति "हिर-ण्यं" ॥ ओं सुजातोज्ज्योतिषा सह शर्म्मवरूथमासद-त्स्वः । त्वासोऽअग्नेविश्वरूपꣳ संव्ययस्वविभावसो ॥ शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेशकारकं वस्त्रं कलशे वेष्टयाम्यहम् ॥ इति "वस्त्रयुग्मेन" वेष्टयेत् ॥ ओं पूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाऽ

---

शैलेय चन्दने । सटीचम्पकमुस्ताश्च सर्वौषधीगणः स्मृतः ( अन्यत्रसटीस्थाने "वचः" । सर्वौषध्योदशस्मृता इति च पाठः ) "पञ्चपल्लवा०" । (शब्दचंद्रिकायाम्) अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चपल्लवमित्युक्तं सर्वकर्मणि शोभनम् ॥ "पंचपल्लवास्त्वचश्च ( ब्रह्माण्डपुराणे ) न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः । पल्लवाः पंचविज्ञेयास्त्वक् चैतेषामपीष्यते । ( भविष्यपुराणे जम्बूस्थाने प्लक्ष इति पाठः ) "पचपल्लवप्रक्षेपान्तरं त्वक् प्रक्षेपणमपि कर्त्तव्यम् अश्वत्थेव इत्यनेनैव ॥ सप्तमृद इति । अश्वस्थानाद्गजस्थानात् वल्मीकात्संगमाद्ध्रदात् राजद्वारात् गो-कुलाच्च मृदमानीय निक्षिपेत । इति (साम्बः) पचरत्नानि ( विष्णुधर्मोत्तरे ) सुवर्णं

इषमूर्ज्जꣳशतक्रतो ॥ इति पूर्णपात्रम् । धान्यपूर्णमिदं पात्रं स्थापितं कलशे यतः । तेनायं कलशः पूर्णः पूर्णाः सन्तु मनोरथाः । "श्रीश्चते" इत्यनेन (अथवा) याः फलिनी-रिति श्रीफलं ॥ ततः कलशे वरुणावाहनम् ॥ ओं तत्त्वा-यामि ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहे-डमानोवरुणेहवोद्ध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ मक-रस्थं पाशहस्तमर्णसां पतिमीश्वरम् । आवाहये प्रतीचीशं वरुणं यादसाम्पतिम ॥ अस्मिन्कलशे वरुणं साङ्गं सपरि-वारं सायुधं सशक्तिकमावाहयामि ॥ इत्यावाह्य । ॐ असङ्-ख्यातासहस्राणियेरुद्राऽअधिभूम्याम् । तेषाꣳसहस्रयोजनेव-धन्वानितन्न्मसि ॥ इति मंत्रेण "अथवा" ॐ वरुणाय नमः इति उपचारैः सम्पूज्य । कलशे तीर्थान्यावाहयेत् ॥

---

रजतं मुक्ता माणिक्यं च प्रवालकम् । पंचरत्नमितिख्यातं समस्तसुरवल्लभम् इति । (कालिकापुराणे) कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पंचरत्नानि रत्नशास्त्रविदोविदुः । (धन्वन्तरिनिघण्टौ) नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पंचरत्नं मनीषिभिः । एषु अन्यतमंवचनमवलम्ब्यपञ्च-रत्नप्रक्षेपः कार्य्यः । अथवा । अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् । इति आदित्यपौराणीयवचनात् । हेमप्रक्षेपः । मन्त्रस्त्वयमेव । नहि द्रव्यान्तरबुद्ध्या तदुपादीयते द्रव्यान्तरबुद्ध्या तदुपादानेकर्मान्तरताबुद्धिः स्यात् सा च नेष्यते इति (स्मार्तप्रभुकारः) मन्त्रयेदिति । स्पृशन्त्वनामिकाग्रेण क्वचिदालोकयन्नपि । अनु-मन्त्रणं सर्वत्रसदैवमनुमन्त्रयेत् इति देवयाज्ञिकः ॥ अयंरुद्रकलशोयजमानस्य स्ना-नार्थमिति (कमलाकरः) अन्ये तु पूजनार्थमेवेति । ब्रह्मजज्ञानमित्यादिमन्त्रैस्तास्ता-सु देवताः । गन्धपुष्पादिभिः पूज्याथ द्वयादीपांश्च सर्वतः । आग्नेयां गणपतिं

सर्वे समुद्राः सरितस्तीर्थानि जलदानदाः । आयान्तु [ मम-शान्त्यर्थं इत्यपि कुत्रचित्] यजमानस्य दुरितक्षयकारकाः । काशी कुशस्थली मायाऽवन्त्ययोध्यामधोःपुरी । शालिग्रामं सगोकर्णं नर्मदा च सरस्वती । तीर्थान्येतानि कुम्भेऽस्मिन् विशन्तु ब्रह्म-शासनात् । झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा । आगच्छतु सरिज्ज्येष्ठा गङ्गा पापप्रणाशिनी । नीलोत्पलदलश्यामा पद्महस्ता-म्बुजेक्षणा । आयातु यमुना देवी कूर्म्मयानस्थिता सदा । प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा । चर्मिला चन्द्र-भागा च सरयूर्गण्डकी तथा । जम्बुका च शतद्रुश्च कालिका सुप्रभा तथा । एतानन्याश्च तीर्थानि गुह्यक्षेत्राणि सर्व्वशः । तानि सर्वाणि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात् । कलशे तीर्थान्यावाह्य देवता आवाहयेत् । कलशस्य मुखे विष्णुः कण्ठेरुद्रः समाश्रितः । मूलेतस्यस्थितोब्रह्मामध्येमातृगणःस्मृताः । कुक्षौतुसागराः सर्वेसप्त-द्वीपावसुन्धरा । ऋग्वेदोऽथयजुर्वेदः सामवेदोह्यथर्व्वणः । अङ्गैश्च-सहिताः सर्वेकलशन्तुसमाश्रितः । अथप्रार्थना । देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि यदा कुम्भविधृतोविष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिता । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्यावसवोरुद्राविश्वेदेवाः सपै-तृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसा-दादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नोभव सर्व्वदा ॥ नमोनमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय सुपाशहस्ताय झषासनाय जलाधिनाथाय नमोनमस्ते ।

# सर्वतोभद्रमण्डलदेवतास्थापनम्

पूर्वोक्तप्रकारेण मण्डलं विलिख्य ( यजमानान्वित ) आचार्य्यः सर्वतोभद्रे मण्डलदेवताः स्थापयेत् ॥ ( पृथक्२ सङ्कल्प इति पत्ते ) देशकालौ सङ्कीर्त्य । सर्वतोभद्रमण्डल-देवतास्थापनं करिष्ये इति संकल्पं कृत्वा अत्ततपुञ्जेषु स्थापयेत् । तद्यथा । आग्नेय्यां । ॐ गणानान्त्वा० । ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमा० स्था० ॥ भो गणपते इ० इ० । ईशान्यां । श्रीश्चते० । भूर्भुवः स्वः लक्ष्म्यैनमः लक्ष्मीमा० । मध्यस्थाने । ओं ब्रह्मजज्ञानम्प्रथम-म्पुरस्ताद्विसीमतः सुरुचोऽवेनऽआवः । सवुध्न्याऽउपमाऽ अस्यऽविष्ठाः सतश्चयोनिमसतश्चऽविवः ॥ इति ब्रह्माण-मा० स्था० ॥ ( उदीचीमारभ्य वायव्यकोणपर्यन्तं कुवेरा-दीन् वायुपर्यन्तान् अष्टौलोकपालान् स्थापयेत् ) उत्तरे ।

---

न्यस्य ईशान्यामम्बिकां न्यसेत् । मध्यस्थाने तु ब्रह्माणम् ततोलोकपालपूजनम् ॥ ( अष्टौवसून्निति ॥ ) ध्रुवोऽध्वरश्चसोमश्चापश्चैवानिलोनलः । प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः । "वसोः पवित्रेति" मन्त्रेण कुर्यादेषां प्रपूजनम् ॥ ( रुद्रा-इति ) अजैकपादहिर्वुध्न्योविरूपाक्षोऽथरैवतः । हरश्च वहुरूपश्च त्र्यम्वकश्च सुरेश्वरः । सावित्रश्च जयन्तश्च पिनाकी रुद्रइत्यपि । "नमस्ते" रुद्रमन्त्रेण रुद्रांश्चैव प्रपूजयेत् ॥ ( द्वादशादित्येति ॥ ) धातामित्रोयमोरुद्रोव्वरुणः सूर्यएव च भगोविवस्वान् पूषा च सविता दशमस्तथा । एकादशस्तथात्वष्टा विष्णुर्द्वादश उच्यते ॥ "अदितिर्द्यौः" इति मन्त्रेण द्वादशादित्यान्प्रपूजयेत् ॥ ( विश्वान्देवा-निति ) क्रतुदक्षौ सत्यवसू कालकामौ धूरिलोचनौ । पुरूरवामार्द्रवसौ विश्वेदेवाश्च-

वयर्ठ॰ सोमव्रते तवमनस्तनूषुविभ्रतः । प्रजावन्तःसचेमहि ॥ "कुवेर" मा॰ स्था॰ । ईशान्यां ओं तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् । पूषानोयथाऽवेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ "ईशानम्" आवाहयामि स्था॰ ॥ पूर्वस्यां ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रर्ठ॰हवेहवेसुहवर्ठ॰शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रर्ठ॰स्वस्तिनोमघवाधात्विन्द्रः ॥"इन्द्रम्" आ॰ स्था॰ । आग्नेय्यां ॥ ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्न्वश्चवन्द्य । त्रातातोकस्यतनयेगवामस्यनिमेषर्ठ॰रक्षमाणस्तवव्रते ॥ "अग्निम्" आ॰ स्था॰ ॥ याम्यां ॥ ॐ सुगन्नुपन्थाम्प्रदिशन्नऽएहि ज्ज्योतिष्मद्ध्येह्यजरन्नऽआयुः । अपैतु मृत्युरमृतन्नऽ आगाद्वैवस्वतोनोऽ अभयङ्कृणोतु स्वाहा ॥

---

योदश। अग्निष्वात्ता वर्हिषदः सोमपाश्च सुकालिनः। एकश्शृंगोऽशुधश्चैव द्वितीयस्सोमपास्तथा। "विश्वेदेवास" इत्येवं विश्वान्देवान्प्रपूजयेत्। ( सप्तऋषीन्निति।) गौतमोऽत्रिर्भरद्वाजोविश्वामित्रोऽथ कश्यपः। जामदग्निर्व्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। "सप्तऋषयः" इति मन्त्रेण ऋषीन्सप्तप्रपूजयेत् ॥ ( भूतानीति।) पिशाचोगुह्यकः सिद्धोभूतोऽमीदेवयोनयः। ( नागान्निति ) अनन्तोवासुकिः शेषोनागः कर्कोटकस्तथा। पद्मकश्च महापद्मः शङ्खः कम्वलएव च ॥ ( गन्धर्वाप्सरस इति ) विश्वावसूश्च गन्धर्वौ हाहाहूहूस्तथैव च। घृताची मेनकारम्भा ऊर्वशीच तिलोत्तमा। सुकेशी मञ्जूघोषाद्याःकथ्यन्तेऽप्सरसोवुधैः। अयम्पुरोहरिकेशो गन्धर्वस्त्वेति मन्त्रतः। "गन्धर्वस्त्वे" ति तौ पूज्यौ सर्वकामार्थसिद्धये ॥ ( शुक्रज्योति इति ) शुक्रज्ज्योतिश्चेतिषड्वाक्येन षड्रश्मीन् प्रपूजयेत्। यद्यपि शुक्रश्चेत्यारभ्य ऋतपाश्चात्यन्तेनैवषड्वाक्यानि भुवनानि परे अन्येषां मन्त्राणामुच्चरणं सम्प्रदायानुरोधेन। ( वसुविघ्नौ इति ) यद्यप्यत्र तयोर्मध्ये वसुविघ्नौ तु पूजयेत्। गण-

"यमम्" आ० स्था० ॥ निर्ऋतौ ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्न्यमस्मदिच्छसानऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु॥ "निर्ऋतिं" आ० स्था० । प्रतीच्यां ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ "वरुणम्" आ० स्था० । वायव्यां॥ ॐ आनोनियुद्भिः शतिनीभिरद्ध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् । वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ "वायुम्" आ० स्था० वायुसोममध्ये । ॐ वसोःपवित्रमसिशतधारं वसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोः । पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ इति । अथवा ॥ ॐ सुगावोदेवाः सदना अकर्म्मयऽआजग्मेदꣳसवनञ्जुषाणाः । भरमाणावहमानाहवीꣳष्यस्मैधत्तवसवोवसूनिस्वाहा ॥ "अष्टौवसून्" आ०

नान्त्रेति मन्त्रेण पूज्यावेतौ पृथक् २ । इति वाक्यात् वसुम् विघ्नम् । इत्येव समीचीनः पाठः । वसुविघ्नौ इति सम्प्रदायानुरोधेनैव । (अप इति) ब्रह्मवरुणयोर्मध्ये अपांस्थानं विधीयते । अपो अपेति मन्त्रेण अपश्चैव प्रपूजयेत् ॥ (मरुद्गणमिति) ब्रह्मवाय्वोरन्तराले मरुतां सप्तकोगणः समीरमारुतमरुज्जगत्प्राण समीरणाः । इमे च सप्त मरुतो सप्तमरुतो मातारिश्वा तथानिलः । बृहदिन्द्राय मन्त्रेण पूज्यास्त्वेते सुखावहाः ( पृथिवीमिति ) ॥ ब्रह्मणः पादमूले तु मेदिनी लोकधारिणी । महीद्यौरितिमन्त्रेण पृथ्वीपूज्याप्रयत्नतः । गङ्गादिनदीः इति ॥ गङ्गा च यमुना चैव सरयूश्च सरस्वती । कौशी वेत्रवती गङ्गा तापी रेवा पयोष्णिका । कृष्णा भीमरथी तुंगभद्रा क्षुद्रनदी तथा । नदीभ्यइति मन्त्रेण पूज्याश्चोत्तरतस्त्वमूः । (सागरानिति) लवणेक्षुसुरासर्पिर्[illegible]जलाः । समुद्रोसीति मन्त्रेणाब्धयः पूज्यास्तथोत्तरे

स्था० । सोमेशानमध्ये ॥ ॐ नमस्तेरुद्रमन्न्यवऽउतोतइष-वेनमः । ळवाहुभ्यामुततेनमः ॥ अथवा ॥ रुद्राःसꣳसृज्य-पृथिवीम्बृहज्ज्योतिःसमीधिरे । तेषाम्भानुरजस्रऽइच्छुक्रोदेवे-षुरोचते ॥"एकादशरुद्रान्" आ० स्था० ॥ ईशानेन्द्रयोर्म-ध्ये ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः । विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदिति र्ज्जनित्वम् ॥ ॐ यज्ञोदेवानाम्प्रत्येतिसुम्नमादित्यासोभवता मृडयन्तः । आवोऽर्वाचीसुमतिर्ववृत्यादꣳहोश्चित्याळवरिवो-ळवित्तरासदादित्येभ्यस्त्वा ॥ "द्वादशादित्यान्" आ० स्था० इन्द्राग्निर्मध्ये । ॐ अश्विनातेजसाचक्षुः प्राणेणसरस्वती ळवीर्य्यम् । ळवाचेन्द्रोऽवलेनेन्द्रायदधुरिन्द्रियम् ॥ अथवा ॥ यावाङ्कशा । "अश्विनौ" आ० स्था० । आग्नियममध्ये ॥ ॐ ळविश्वेदेवासऽआगतशृणुतामऽइमꣳहवम् । एदम्बर्हिर्न्नि-षीदत । उपयामगृहीतोसिळविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनि-ळविश्वेभ्यस्त्वादेवेभ्यः ॥ "सपैतृकान् विश्वदेवान्" आ०

आदित्यश्चन्द्रमाभौमोवुधजीवसितार्कजाः । सर्व्वे ग्रहास्तु सम्पूज्या राहु केतू क्रमेण च । अथाग्निन्दूतमित्यादिमन्त्रैस्तान्प्रपूजयेत् ॥ ( मातृरिति ) समकल्पइति मन्त्रेण पूजयेत्सप्तमातरः । दुर्गापूज्या ततोवाह्यो वज्रादीन्यायुधानिच । वज्रं शक्तिं च दण्डं च खड्गं पाशाङ्कुशौ तथा । गदां त्रिशूलं चक्रं च पद्मंचैति क्रमादश । इति सर्वतोभद्रमण्डलदेवतास्थापनम् । ( पाशाङ्कुशयोर्व्युत्पत्तिः ) धातूद्यौस्तोरक्षणव्याप-कार्थौपाद्यो श्वाद्यस्तत्प्रभावस्तयोश्च सर्वसंरक्ष्याथ सर्वात्मनायोव्याप्नोत्यंशः स्या दशौपाशवाची । अंस्यादात्माकुर्धराकुस्तनुर्वाभागार्थः स्याच्छोथवावृत्तिवाची । भूश्चेन्द्रतान्यन्यथाचे ळक्षरोराणाकृष्य समन्याहरेदङ्कुशाख्यः ।

स्था० ॥ यमनिर्ऋतिमध्ये ॥ ओं सप्तऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदमप्रमादम् । सप्तापः स्वपतोलोकमीयुस्तत्रजागृतोऽस्वप्नजौसत्रसदौ च देवौ ॥ "सप्तऋषीन्" आ० स्था० ॥ निर्ऋतिवरुणमध्ये ॥ ओं भूतायत्वा नारातयेस्वरभिविक्ख्येषन्दृꣳहन्तान्दुर्य्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वानाभौसादयाम्यदित्याऽ उपस्थेग्नेहव्यꣳरक्ष ॥ "भूतानि" निर्ऋतिवरुणमध्ये । ओं नमोऽस्तुसर्प्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः ॥ "सर्प्पान्" वरुणवायुमध्ये । ओंऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसोमुदोनाम । सन इदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहाव्वाट्ताभ्यः स्वाहा ॥ अथवा ओं अयम्पुरोहरिकेशःसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसोदङ्क्ष्णवः पशवोहेतिः पौरुषेयोव्वधःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ओं गन्धर्व्वस्त्वाव्विश्वावसुः परिदधातु व्विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽ ईडितः ॥ इन्द्रस्यव्वाहुरसिदक्षिणोव्विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः । मित्राव्वरुणौत्वोत्तरतःपरिधत्तान्ध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः । "गन्धर्वाप्सरसः" आ० स्था० ॥ ब्रह्मेन्द्रयोर्मध्ये ॥ ॐ अम्बेऽअम्बिकेऽअम्बालिके नमानयतिकश्चन । सस-

स्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ "दुर्गाम्" आ० स्था० । तत्रैव स्कन्दं नन्दीश्वरं शूलं महाकालञ्च नाममंत्रेण । स्कन्दायनमः "स्कन्दम्" आ० स्था० । नन्दीश्वरायनमः "नन्दीश्वरं" आ० स्था० । शूलायनमः । "शूलम्" आ० स्था० । ओं महाकालायनमः । "महाकालम्" आ० स्था० ॥ तत्रैवरुद्रम् ॥ ओं अत्ररुद्रमदीमह्यवदेवन्त्र्यम्बकम् । यथानोऽवस्यसस्करद्यथानःश्रेयसस्करद्यथानोऽव्यवसाययात् ॥ "रुद्रम्" आ० स्था० । ब्रह्मेशानयोर्मध्ये ॥ ओं सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम् । सनिम्मेधामयासिषं स्वाहा ॥ ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोऽसि । वैष्णवमसिविष्णवेत्वा ॥ "श्रियासहितविष्णुम्" आ० स्था० । ब्रह्मेन्द्रयोर्मध्ये । ॐ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्माँश्च । शुक्रश्चऋतपाश्चात्यंहाः । ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च । मितश्चसम्मितश्चसभराः । ऋतश्चसत्यश्चध्रुवश्चधरुणश्च । धर्ता च विधर्ता चविधारयः । ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च । अन्तिमित्रश्चदूरेऽअमित्रश्चगणः । ईदृक्षासऽएतादृक्षासऊषुणः सदृक्षासःप्रीतसदृक्षासऽएतन मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् । स्वतवाँश्चप्रघासीचसान्तपनश्चगृहमेधीच । क्रीडीचशाकीचोज्जेषी । "षड्रश्मीन्"

आ० स्था० । ब्रह्मेशानयोर्मध्ये । ॐ स्वैर्द्दक्षैर्दक्षपितेहसीद-
देवानाᳩसुम्नेबृहतेरणाय । पितेवैधिसूनवऽआशुषेवास्वावे-
शातन्वासंविशस्वाशिवनाद्ध्वर्य्यूसादयतामिहत्वा । "दक्षा-
दीन्" आ० स्था० । ब्रह्माग्निमध्ये । ओं अग्नेव्वाजजि-
द्वाजन्त्वासरिष्यन्तंव्वाजजितᳬसम्मार्ज्मि । नमोदेवेभ्यः
स्वधापितृभ्यः सूयमेमेभूयास्तम् ॥ "स्वधाम्" आ० स्था० ।
। ब्रह्मयाम्ययोर्मध्ये । ॐ अन्यवापोर्द्धमासानामृश्योमयूरः
सुपर्णस्तेगन्धर्व्वाणामपामुद्रोमासाङ्कश्यपोरोहित्कुण्डणाची
गोलतिकातेप्सरसांमृत्यवेसितः । "मृत्युम्" आ० स्था० ।
ब्रह्मयममध्ये । ओं ककुभᳬ रूपंवृषभस्यरोचतेबृहच्छुक्रःशुक्र-
स्यपुरोगाः सोमः सोमस्यपुरोगाः । यत्तेसोमादाव्भ्यन्नामजा-
गृवितस्मैत्वागृह्णामितस्मैतेसोमसोमाय स्वाहा ॥ "रोगान्"
आ० स्था० । ब्रह्मनिर्ऋतिमध्ये । ओं गणानान्त्वा०.......
धम् ॥ "वसुविघ्नौ" ( वसुम् विघ्नम् ) आ० स्था० ॥
ब्रह्मवरुणमध्ये ओं अपोअद्यान्वचारिषᳬ रसेनसमसृक्ष्महि ।
पयस्वानग्नऽआगमन्तम्मासᳬ सृजव्वर्च्चसाप्प्रजयाचधनेनच ।
"अपः" आ० स्था० ब्रह्मवाय्वोरन्तराले ओं बृहदिन्द्राय-
गायतमरुतोवृत्रहन्तमम् । येनज्ज्योतिरजनयन्नृतावृधोदेव-
न्देवायजागृवि ॥ ब्रह्मणः पादमूले ॥ ओं महीद्यौः पृथि-
वीचनऽइमंयज्ञम्मिमिक्षताम् । पिपृतान्नोभरीमाभिः ॥ "पृ-
थ्वीम्" आ० स्था० । उत्तरे तत्रैव ॥ ओं नदीभ्यः
पौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्व्याघ्रायदुर्म्मदङ्गन्धर्वा-

प्सरोभ्यो०व्रात्यम्प्रयुग्भ्य ऽउन्मत्तᳬ सर्प्पदेवजनेभ्योऽप्रतिपदम-येभ्यः कितवमीर्य्यताया ऽ अकितवम्पिशाचेभ्योविदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥ "गङ्गादिनदीः" आ० स्था० । तत्रैव ॥ ॐ समुद्रोऽसिनभस्वानार्द्रदानुःशम्भूर्म्मयो-भूरसिमा०वाहिस्वाहामारुतोऽसिमरुताङ्गणःशम्भूर्म्मयोभूर-भिमा०वाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमा०वा हिस्वाहा ॥ "सप्तसागरान्" आ०-स्था० मेरवेनमः मेरुम् आ० स्था० । ततः आदित्यादिग्रहान् । ओं अग्निन्दूतम् । इति "सूर्य्यं" ओं अप्स्वग्ने इति "चन्द्रं" स्योनापृथि-वि० । इति "भौमं" इदम्विष्णुरिति "बुधं" महाइन्द्रेति "गुरुं" शुक्रज्ज्योतिश्चेति "शुक्रं" प्रजापतेनत्वेति "शनिं" आयङ्गौरिति "राहुं" ओं ब्रह्मजज्ञानम् इति "केतुं" आ-कृष्णेनेत्यादिभिर्मंत्रैर्वा । ग्रहानावाह्य संस्थाप्य । सप्तमातृ-रावाहयेत् ॥ ओं समख्ये देव्याधियासन्दक्षिणयोरुचक्ष सा । मामऽआयुःप्रमोषीर्म्मोऽअहन्तव०वीरंविदेयतवदेवि सन्दृशि ॥ "सप्तमातृः" आ० स्था० । वाह्ये सोमादिक्रमे-ण । ओं वज्रायनमः । ओं शक्त्यैनमः । ओं दण्डायनमः ओं खड्गायनमः । ॐ पाशायनमः । ॐ अङ्कुशायनमः । ओं गदायैनमः । त्रिशूलायनमः । ॐ चक्रायनमः । ॐ पद्मायैनमः । तद्वाह्ये सोमतः । गौतमं, भरद्वाजं, विश्वामित्रं, कश्यपं, जमदग्निम्, वसिष्ठम् । अत्रिम्, अरुन्धतीम्,

तद्बाह्ये । प्रागादिक्रमेण । ऐन्द्रीं, कौमारीम्, ब्राह्मीं, वाराहीं, चामुण्डां, वैष्णवीं, माहेश्वरीम्, वैनायकीम् । अष्टौशक्तीः प्रतिष्ठाप्य मनोजूतिरितिमन्त्रमुच्चार्य्य । ततः उपचारान् समर्प्य । अस्मिन् कर्म्मणि यथासम्पादितसामग्र्याकृतेनाने-नपूजनेन सर्वतोभद्रमण्डलस्थापितदेवताः सुप्रीतावरदा भवन्तु ते देवाः आयुष्कर्तारः क्षेमकर्तारः शुभकर्तारः क-ल्याणकर्तारोभवन्तु । इति सर्वतोभद्रमण्डलदेवतास्थापनम् ॥

# ॥ अथ गौरीतिलकमण्डलपूजनं ॥

मध्ये कलशम् ॥ कलशसमीपे । पीतकोष्ठेषु चतुरो देवान् पूजयेत् । तद्यथा–महाविष्णवे नमः इति ऐशान्याम् । ओं महा-लक्ष्म्यैनमः । आग्नेय्याम् । ओं महेश्वरायनमः । नैर्ऋत्याम् । ओं महामायायैनमः । वायव्याम् । प्रथमषडङ्गमध्ये चतुर्षुकोष्ठेषु चतुर्वेदान् । ओं ऋग्वेदायनमः । पूर्वे । ओं यजुर्वेदायनमः । दक्षि-णे । ओं सामवेदाय नमः । पश्चिमे । ओं अथर्ववेदायनमः । उत्तरे ।

## ॥ अथ पूजोपयोगिन्यः कारिकाः ॥

अथ प्रकृतमाचक्षे यत्सन्ध्यानन्तरं भवत् । विशुद्धात्माविमलधीर्हृदिविद्यां विभावयन् । अवहिर्मानसोधीमान् यागभूमिमथाविशेत् तत्रार्चयेदिष्टदेवं यथाविधि यथाक्रमम् । क्रमज्ञानाय तत्पूर्वं वक्ष्ये श्लोकचतुष्टयं । मार्तण्डं पूजयेदादौ प्रत्यक्षं लोकसाक्षिणम् । गन्धादिभिश्चोपचारैस्ततः पूजां समाचरेत् । घण्टावादनकृत्तथा-सनगतोगुर्वर्च्चनापूर्वकं । दिग्बन्धादिकभूतशोधनमथोप्राणप्रतिष्ठांसुधीः । प्राणाया-ममवाह्यवाह्यकलितां नानाविधां मातृकां । तत्वन्यासमपित्रिशोऽसुयमनं कृत्वा

ततोपूर्वादीशानपर्य्यन्तं श्वेतकोष्ठेषु अष्टदेवान् पूजयेत् ॥ प्रथम पूर्वे। ओं अद्भ्योनमः। ओं जलोद्भवायनमः। ओं ब्रह्मणेनमः। ओं प्रजापतयेनमः। ओं शिवायनमः। ततः अग्निकोणे श्वेतकोष्ठयोः। ओं अनन्तायनमः। ओं परमेष्ठिनेनमः। पुनरग्निकोणे चतुष्कोष्ठेषु। ओं धात्रेनमः। ओं विधात्रेनमः। ओं अर्य्यम्णेनमः।

---

यथा शास्त्रतः। आधारादिचतुष्कभावनमतोमूलानुमन्वादिकं। न्यस्यारुद्धमरुत्कराङ्गजनिजन्यासं स्मरेद्देवतां। संस्कृत्यार्घ्यजलं तथात्मनिचरेत्पीठार्चनं पूर्ववत्स्वात्मार्च्चाजपवैश्वदेवहवनन्यासार्पणं मन्त्रतः। अर्चाशोधनपीठपूजनविधी कृत्वातमावाहयेन्मुद्रादर्शनमासनाद्युपहृतीः पुष्पान्तमप्यर्पयेत्। सम्पाद्यावरणार्च्चनं च विधिवद्धूपादिकं च र्प्ययेन्नैवेद्यंनिजवेद्यपूर्ववदथोतद्वैश्वदेवादिकं। गण्डूषाचमदन्तशोधनमथोभूयः प्रसन्नार्चनं। कृत्वारात्रिकवन्दनं क्रमुकयुक्ताम्बूलमप्यर्पयेत्। चण्डार्चावहुवर्तियुक्तरजनीकान्तादिनीराजनं। साष्टाङ्गवनतिं स्तुतिं विरचयेद्विश्राप्य तं संहरेत्। इति ॥

## ॥ अथोपचाराः ॥

स्यादासनं स्वागतमेव पाद्यमर्घ्यस्तथैवाचमनद्वयं च। मध्ये तयोः स्यान्मधुपर्कपकः स्नानं च वासश्च विभूषणं च। गन्धंपुष्पंधूपदीपौ निवेद्यं कार्पण्योक्त्या वन्दनं देवताग्रे। ज्ञेया एते षोडशैवोपचारास्तेषांभेदान् बालवोधाय वक्ष्ये। आवेशनस्वपनभोजनवन्दनार्थं स्यादासनं खलु चतुर्विधमर्चनासु। देवस्य तत्परिकरस्य च यात्रयैव स्यात्स्वागतं द्विविधमेव शुभानुयोगात्। पाद्यं चापित्रिकृत्वः पदयुगलपरिक्षालनात्तत्त्रिधा स्यादूर्ध्वाधोमध्यमाङ्गेषु पृथगथपयः सेचनास्यात्त्रिधार्घ्यः। आचम्यौ च द्विधास्तः सकृदथमधुपर्काशनादेक एव। स्नानं चाभ्यङ्गमिष्टामलकनिकषणक्षालनाद्यैश्चतुर्धा। वस्त्रं प्रोञ्छनमन्तरीयमुपसंव्यानं कटिप्रच्छदश्चोष्णीषं त्विति पञ्चधा तदुचितं यज्ञोपवीतं पुनः। सौवर्णं मणिनिर्म्मितं तदुभयव्याघट्टितं च त्रिधा। भूषास्यादथशुद्धमिश्रभिदया गन्धोद्विधास्यात्तयोः। शुद्धश्चन्दनदारुचारुजनितोमिश्रोपि च स्यात् त्रिधा। चातुर्गन्धकयक्षकर्दमहरिश्रीखण्डभेदैः क्रमात्। मालागर्भककेलिकन्दुकसमुत्कीर्णप्रसूनाञ्जलिः। क्षेपैः स्यात्कुसुमं चतुर्विधमथोधूपो द्विधास्यात्ततः। एकोवस्त्रगतोऽधिवासितः॰रो घ्राणाग्रदेयोऽपरोदीपोऽपिद्विविधो-

ओं मित्रायनमः । ततोदक्षिणेश्वेतेषु । ओं वरुणायनमः । ओं अंशुमतेनमः । ओं भगायनमः । ओं इन्द्रायनमः । ओं विवस्वते नमः । नैर्ऋत्यकोणयोः । ओं पूष्णेनमः । ओं पर्ज्जन्यायनमः । नैर्ऋत्यकोणेश्वेतेषु । ओं त्वष्ट्रेनमः । ओं दक्षयज्ञायनमः । ओं देववसवेनमः । ओं महासुतायनमः । पश्चिमेश्वेतेषु ५ ओं सुधर्मणेनमः । ओं शङ्खपदेनमः । ओं महावाहवेनमः । ओं वपुष्मतेनमः । ओं अनन्तायनमः । वायौश्वेतयोः । ओं महेरणायनमः । ओं विश्वावसवेनमः । वायौश्वेतेषु । ओं सुपर्वणे नमः । ओं विष्टरायनमः । ओं रुरुदेवतायनमः । ओं ध्रुवायनमः । उत्तरेश्वेतेषु ( ५ ) ओं धरायनमः ( १ ) ओं सोमायनमः ( २ ) ओं आपवत्सायनमः ( ३ ) ओं नलायनमः । ( ४ ) ओं अनिलायनमः ( ५ ) ईशानेश्वेतयोः । ओं प्रत्यूषायनमः । ओं

---

गृहोदरगतोद्धर्त्यात्मनाचार्पितः । नैवेद्यं खलु षड्विधं सुरसयुग्भक्ष्यादिभेदैस्तथा । द्वेधा वन्दनमामनन्ति च नतिर्विज्ञप्तिरित्थं बुधाः । नतिस्त्रिधास्याद्वपुषा नमस्कृतिः प्रश्वाङ्गिकाष्टाङ्गवतीति च क्रमात् । तथैव विज्ञप्तिरपि द्विधाभवेत्स्वदैन्य बोधिन्यथ-लालसामयी ॥ एते मुख्याः पञ्चपञ्चाशदुक्ताभेदाभोग्योपायनानां विचिन्त्य । द्वाविं-शत्या चोपभेदैः सहेमे सम्भूय स्युः सप्ततिः सप्तयुक्ता । सकृदाचमनानि चाष्टधाः स्युः प्रतिपाद्यस्नपनांशुकोपवीते । अथ धूपदीपदानशेषे विनिवेद्यास्यपुरश्च पश्चिमे च । अन्यत्राष्टौ स्युस्तदा वारिधारास्ताम्बूलान्ते भोजनान्ते द्विधा स्यात् । गण्डू-षाम्भोदन्तशुद्धेः शलाका हस्तामृष्टिः प्रोञ्छनं वक्त्रवासः । एते द्वाविंशतः स्युर्नि-खिलसुरसपर्य्यासु गौणोपचारभूयास्ताम्बूलमालाविमलमलयजालेपनैस्तैस्त्रिभिश्च । स्युः पूर्वोक्तैरशीतिस्तदनुपदमथोराजराजोपचारान् । वक्ष्ये यैः संप्रसीदत्यखिल शुभकरो देवतापूजनान्ते । आदर्शछत्रबालव्यजनजलधराडम्बरत्रासपिच्छभृङ्गालस्ता लवृन्तव्यजनमपिपतद्ग्राहकाहालघोषाः । वाद्यं गीतंच नृत्यं जयमननवचः स्वर्ण-दण्डः पताकाः पल्यङ्कश्चातुरङ्गः पटुमधुरतरंवन्दिनांवाक्यमुच्चैः । राजोपचाराः इति विंशतिः स्युः पूर्वैरशीत्यासहिताः शतंस्युः । एभिः कृतंपूजनमच्युतस्यपूर्वैरि-दानीं दशभिश्चषड्भिः । इति ।

प्रभासायनमः। ईशानकोणेश्वेतेषु। ओं आवर्तायनमः। ओं सांवर्तायनमः। ओं द्रोणायनमः। ओं पुष्करायनमः। इति हृदयाङ्गपूजां शिरोङ्गशक्तिपूजयेत् प्रथममीशाने। हरित्कोष्ठेषु ११ ओं ह्रीँ काल्यैँ नमः। ओं ह्रियैनमः। ओं कात्यायन्यैनमः। ओं चामुण्डायैनमः। ओं महादिव्यायैनमः। ओं महाशब्दायै नमः। ओं सिद्धिदायैनमः। ओं ह्रीँ काल्यैँ नमः। ओं ऐँ नमः। ओं श्रीँ श्रियैनमः ओं ह्रीँ ह्रियैनमः। ईशानकोणेपीतकोष्ठेषु। ८ ओं लक्ष्म्यैनमः। ओं श्रियैनमः। ओंसुधनायैनमः। ओं मेधायैनमः। ओं प्रज्ञायैनमः। ओं मत्यैनमः। ओं स्वाहायैनमः। ओं सरस्वत्यै नमः। अग्निकोणेहरित्कोष्ठेषु। ११ ओं गौर्य्यैं नमः। ॐ पद्मायै नमः। ॐ शच्यैनमः। ॐ सुमेधायैनमः। ॐ सावित्र्यैनमः। ओं विजयायैनमः। ॐ देवसेनायैनमः। ॐ स्वाहायैनमः। ॐ स्वधायैनमः। ॐ मात्रेनमः। ॐ गायत्र्यैनमः। अग्निकोणेपीत-कोष्ठेषु। ८ ॐ लोकमात्रेनमः। ॐ धृत्यैनमः। ॐ पुष्ट्यै नमः। ओं तुष्ट्यै नमः। ओं आत्मदेवतायैनमः। ओं गणेश्वर्य्यैनमः। ओं कुलमात्रे नमः। ओं शान्त्यैनमः। पूर्वार्द्धभागेपीतकोष्ठेषु१० ओं जयन्त्यैनमः। ओं मङ्गलायैनमः। ओं काल्यैनमः। ओं भद्रकाल्यैनमः। ओं कपालिन्यैनमः। ओं दुर्गायैनमः। ओं क्षमायैनमः। ओं शिवायैनमः। ओं धात्र्यैनमः। ओं स्वाहा-स्वधाभ्यांनमः। इतिशिरोङ्गपूजनम्। अथशिखाङ्गदेवपूजनम्। नैर्ऋत्यकोणेहरित्कोष्ठेषु ११ ओं दीप्यमानायैनमः। ओं दी-प्तायैनमः। ओं सूक्ष्मायैनमः। ओं विभूत्यैनमः। ओं विम-लायैनमः। ओं परायैनमः। ओं अमोघायैनमः। ओं वैद्युतायै नमः। ओं सर्व्वतोमुख्यैनमः। ओं आनन्दायैनमः। ओं नन्दिन्यैनमः। नैर्ऋत्यकोणेपीतकोष्ठेषु ८ ओं शक्त्यैनमः। ओं महासूक्ष्मायैनमः। ओं करालिन्यैनमः। ओं भारत्यैनमः। ओं ज्योतिष्मत्यैनमः। ओं ब्राह्म्यैनमः। ओं माहेश्वर्य्यैनमः। ओं कौमार्य्यैं नमः। वायुकोणेहरित्कोष्ठेषु। ११ ओं वैष्णव्यैनमः।

ओं वाराह्यैनमः । ओं इन्द्राण्यैनमः । ओं चण्डिकायैनमः ।
ओं वृद्ध्यैनमः । ओं लज्जायैनमः । ओं वपुष्मत्यैनमः । ओं
शान्त्यैनमः । ओं कान्त्यैनमः । ओं रत्यैनमः । ओं प्रीत्यैनमः ।
वायुकोणेपीतकोष्ठेषु ८ ओं कीर्त्यैनमः । ओं प्रभायैनमः । ओं
काम्यायैनमः । ओं कान्तायैनमः । ओं ऋद्ध्यैनमः । ओं
दयायैनमः । ओं शिवदूत्यैनमः । ओं श्रद्धायैनमः । पश्चिमा-
र्द्धपीतकोष्ठेषु १० ओं क्षमायैनमः । ओं क्रियायैनमः । ओं
विद्यायैनमः । ओं मोहिन्यैनमः । ओं यशोवत्यैनमः । ओं

## अथ विश्वसारतन्त्रीयः पात्रासादनप्रकारः ।

शङ्खस्योत्तरदेशेतु देवाग्रे प्राक्परायतं । निपात्यतत्र पात्राणि स्थापयेदङ्गुलान्तरं । नैवेद्यं पुरतो न्यस्य देवता दृष्टिगोचरे । वस्त्रोपर्यन्यपात्राणि द्विपङ्क्तया स्थापयेद्बुधः । आसनं चाचमौद्धौच स्नानं वस्त्रमलङ्कृतिः । एषा च प्रथमापङ्क्तिः पात्रसंस्थापनेमता । स्वागतंपाद्यमर्घ्यंच गन्धपुष्पे च चन्दनं । द्वितीयापङ्क्तिरेषा हि कथिता पात्रकोविदैः ॥ तस्माद्दूरे च कतिचित्स्थापयेन्मधुपर्ककं । त्रयोदश तु पात्राणि द्विपङ्क्तौ विनिवेशयेत् । वहिः कचिन्न्यसेद्धूपदीपपात्रद्वयं ततः । आत्मार्चनान्ते पात्रे च तत्तद्द्रव्याणि कल्पयेत् । आसने पञ्चपुष्पाणि स्वागते पुष्पषट्ककं । पाद्ये श्यामाकदूर्वाब्ज विष्णुक्रान्ताथकुङ्कुमं । चन्दनोशीरसिद्धार्थान् क्षिपेदष्टपलाम्भसि । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपान् । सदूर्वान्निक्षिपेन्मंत्री ततश्चार्घ्यस्य भाजने । उशीरं जातिकर्पूरं हिमगन्धलवङ्गकं । मुरैसवोदकोपेतं श्रेष्ठमाचमनीयकम् । क्षीरं च मधुसंयुक्तं शर्करादधिमिश्रितं । कल्पयेन्मधुपर्कं तु कांस्यपात्रे विशेषतः । शुद्धाभिरद्भिर्विहितं पुनराचमनीयकं । अर्घ्यैचैवाचमद्वन्द्वे क्षिपेन्नीरं पलद्वयं । वासिताम्भः शतपलं स्नानमुक्तं सुरार्चने । पट्टकौशेयनेत्रादिक्षौमं कार्पासनिर्मितं । इत्यादिक्षालितं वासो विकेशं विरजोनवं । हारकेयूरकटकमुद्रिकाकङ्कणादिकं । हेमरत्नादिघटितं दद्यादाभरणं शुभं । चन्दनागुरुकर्पूरैः पङ्कोगन्धइहोच्यते । चतुः समादिभेदेन स चापि वहुधोदितः । नानाविधानि पुष्पाणि तत्तत्कालोद्भवानि च । सुगन्धीनि सुरूपाणि यथालाभंनिवेदयेत् । सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः । मुस्ताकुन्दरुह्रीवेरैर्दशाङ्गोधूपइष्यते ।

कृपावत्यैनमः। ओं सुशीलायैनमः। ओं ईश्वर्य्यैनमः। ओं सिद्धेश्वर्य्यैनमः। इति शिखाङ्गपूजा। कवचाङ्गेषुऋषीन्पूजयेत्प्रथमंपूर्वेअरुणकोष्ठयोः। ॐ द्वैपायनायनमः। २ ओं भारद्वाजायनमः। दक्षिणेऽरुणकोष्ठयोः२ ओं गौतमायनमः। ओं सुमन्तवेनमः। पश्चिमेऽरुणकोष्ठयोः। २ ओं देवलायनमः। ओं व्यासायनमः। उत्तरेऽरुणकोष्ठयोः२ ओं वसिष्ठायनमः। ओं च्यवनायनमः। ईशानेकृष्णकोष्ठे। १ ओं कण्वायनमः। अग्निकोणे कृ० को० ओं मैत्रेयायनमः। नैर्ऋत्यकोणे कृ० को० ओं कवयेनमः। वा० को० कृ० कोष्ठे। ओं विश्वामित्रायनमः। मध्येपीतकोष्ठेषु ८। ॐ वामदेवायनमः। ॐ सुमन्तायनमः। जैमिनयेनमः। ॐ ऋतवेनमः। ओं पिप्पलादायनमः। ओं पराशरायनमः। गर्गायनमः। ओं वैशम्पायनायनमः। मध्येकृष्णकोष्ठेषुईशानतः १२ ओं दक्षायनमः। ओं मार्कण्डेयायनमः। ॐ मृकण्डायनमः। ॐ लोमशायनमः। ओं पलहायनमः। ओं पुलस्त्यायनमः। ओं बृहस्पतयेनमः। ओं जमदग्नयेनमः। ओ जामदग्न्यायनमः। ओं दाल्भ्यायनमः। ओं शिलोञ्छनायनमः। ओं गालवायनमः। मध्येहरित्सुईशा-

---

विनामृगमदं धूपे जीवजातं विवर्जयेत्। इति वाक्येन धूपे तु कस्तूरीमपि निक्षिपेत्। लवङ्गकलिकाकारा चतुर्दलमुखान्विता। कर्पूरगर्भिणीवर्तिः कार्य्यादीपे युगाङ्गुला। यावच्छक्यं तु नैवेद्यं प्रस्थादूनं न शस्यते। नैवेद्याचमनं कार्य्यं प्रस्थमात्रेण वारिणा। आरात्रिकं तथाकार्यं मङ्गलार्थं मुरद्विषः। दीपेन वर्तिनैकेन घृतसिक्तेन मांत्रिकः। पुष्पाञ्जलित्रयं दद्याद्वन्दने परमेश्वरे। विज्ञप्तिं च नमस्कारं प्रणामं चापिकल्पयेत्। नीराजनायां कथिताः सप्तवावर्तयोनव। संविकीर्णा गवाज्येन सर्पिषा माहिषेण वा। गवाज्यं शस्यते ह्यत्र अधमेति न माहिषं। इत्युक्तिक्रमतः पूजां कृत्वा जपमथाचरेत्। स्वेष्टष्ट्येष्टदेवं च जपेदितिप्राहागमोदितं॥ इति।

हविस्तु त्रिविधं प्रोक्तं कृतं चैव कृताकृतम्। अकृतं च क्रमादेषां लक्षणं सम्यगुच्यते। कृतमोदन सक्त्वादि तण्डुलादिकृताकृतम्। व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधाबुधैः। शालिश्यामाकनीवारव्रीहिगोधूमयावकाः। एतेषां तण्डु-

नतः १६ । ओं याज्ञवल्क्यायनमः । ओं दुर्वाससेनमः । ओं सौभरयेनमः । ओं जाबालयेनमः । ॐ वाल्मीकयेनमः । ॐ ॐ बह्वृचायनमः । ॐ इन्द्रप्रमीतयेनमः । ॐ देवमित्रायनमः । शाकल्यायनमः । ओं मुद्गलायनमः । ओं जातुकर्ण्यायनमः । ओं बलाकायनमः । ओं कृपाचार्य्यायनमः । ओं सुकर्मणेनमः । ओं कौसल्यायनमः । इति वचाङ्गपूजाअथनेत्राङ्गपूजा । ईशान-कोणेऽरुणकोष्ठेषु । १२ ओं ब्रह्माग्नयेनमः । ओं गार्हपत्याग्नये नमः । ओं ईश्वराग्नयेनमः । ओं दक्षिणाग्नयेनमः । ओं वैष्ण-वाग्नयेनमः । ओं आहवनीयाग्नयेनमः । ओं सप्तजिह्वाग्नयेनमः । ओं इध्मजिह्वाग्नयेनमः । ओं प्रवर्ग्याग्नयेनमः । ओं वडवाग्नये नमः । ओं जाठराग्नयेनमः । ओं लौकिकाग्नयेनमः । ओं अग्नि-कोणेऽरुणकोष्ठेषु । १२ ओं सूर्य्यायनमः । ओं वेदाङ्गायनमः । ओं भानवेनमः । ओं इन्द्रायनमः । ओं खगायनमः । ओं गभस्तिनेनमः । ओं यमायनमः । ओं अंशुमतेनमः । ओं हिरण्य-रेतशेनमः । ओं दिवाकरायनमः । ओं मित्रायनमः । ओं विष्णवे नमः । नैर्ऋत्यकोणेऽणकोष्ठेषु । १२ ओं शम्भवेनमः । ओं गिरीशायनमः । ओं अजैकपदेनमः । ओं अहिर्बुध्न्यायनमः । ओं पिनाकपाणयेनमः । ओं अपराजितायनमः । ओं भुवनाधी-श्वरायनमः । ओं कपालिनेनमः । ओं विशाम्पतयनमः । ओं

---

ला होम्या यावनालाः प्रियंगवः । नीवाराः शालयश्चापि गोधूमा व्रीहयोयवाः । स्वरूपेणैव होम्याः स्युः स्वरूपेणैव ते तिलाः । यवाभावे तु गोधूमास्ततो वेणुयवा-दयः । छन्दोगवचनाच्चैव जुहुयाद्धविरत्यये । फलं वा यज्ञवृक्षस्य तत्पत्रमथवा जलम् । रुपे कालोऽनुनिर्वापोदेवताअर्पणं तथा । आदौ ये विधृताः पक्षास्तएव स्युः सदैवहिं ॥ प्रस्थधान्यं चतुः षष्टिराहुते परिकीर्तितम् । तिलानां च तदर्धं तु तण्डुला व्रीहयः समाः । पलं च कुडवः प्रस्थ आढकोद्रोण एव च धान्यमानेषु बोद्धव्या क्रमशोऽमीचतुर्गुणाः । पलद्वयं तु प्रसृतं मुष्टिरेकपलं स्मृतम् । व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते । द्रवद्रव्यस्यमानं स्याद्धारागोकर्णदीर्घिका ।

रुद्रायनमः। ओं वीरभद्रायनमः। ओं अश्विनीकुमाराभ्यांनमः। वायुकोणेऽरुणकोष्ठेषु १२ ॐ आवहायनमः। ॐ प्रवहायनमः। ॐ उद्वहायनमः। ॐ सम्वहायनमः। ॐ विवहायनमः। ॐ ॐ परिवहायनमः। ॐ परीवहायनमः। ॐ धरायैनमः। ॐ अद्भ्योनमः। ॐ अग्नयेनमः। ॐ वायवेनमः। ओं आकाशाय नमः। इतिनेत्राङ्गपूजा। अथास्त्राङ्गऋषीन्पूजयेत्॥ ईशानात् ईशपर्य्यन्तंवाह्यपङ्क्तौकृष्णकोष्ठेषु। ओं हिरण्यनाभायनमः। ओं पुष्पंजयायनमः। ओं द्रोणायनमः। ओं शृङ्गिणेनमः। ओं वादरायणायनमः। ओं अगस्त्यायनमः। ओं मनवेनमः। ओं कश्यपायनमः। ओं धौम्यायनमः। ओं भृगवेनमः। ओं वीतिहोत्रायनमः। ओं मधुछन्दसेनमः। ओं वीरसेनायनमः। ओं कृतवृष्णयेनमः। ओं अत्रयेनमः। ओं मेधातिथयेनमः। ओं अरिष्टनेमयेनमः। ओं आङ्गिरसायनमः। ओं इन्द्रप्रमदाय नमः। इध्मवाहवेनमः। ओं पिप्पलादायनमः। ओं नारदाय-नमः। ओं अरिष्टसेनायनमः। ओं अरुणायनमः। ओं सनकायनमः। ओं सनन्दनायनमः। ओं सनातनायनमः। ओं सनत्कुमारायनमः। ओं कपिलाय

---

धान्याहुतिर्द्वादशपर्वपूरिका घृतादिनाचेत्स्रुववक्त्रपूरिका। दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तत्र पावके। अङ्गुल्यग्रैर्न होतव्यं कृत्वाङ्गुलिभेदनम्। अङ्गुल्युत्तरपार्श्वेन होतव्यमिति स्मृतिः॥ न मुक्तकेशोजुहुयान्नानिपातितजानुकः। अनिपातितजानोऽस्तु राक्षसैर्ह्रियते हविः। ऋत्विक्पुत्रोगुरुर्भ्राता भागीनेयोऽथ विट्पतिः। एतैरेव हुतं तत्तु तद्धुतं स्वयमेव हि॥ (विट्पतिर्जामाता) अन्यैः शताहुताद्धोमादेकः शिष्यहुतोवरम्। पुत्रैः शतहुताद्धोमादेकोह्यात्महुतोवरम्। नातिवृद्धोभवेद्धोता नाल्पविद्यो न वालिशः। नार्तोनासंस्कृतश्चैव अग्निहोत्रादिक-र्मसु। नरकं हि पतन्त्येते जुह्वतः सचयस्यतत्। तस्माद्वैतानकुशलोहोतास्याद्वेद-पारगः। असमर्थं तु होतव्यं दम्पत्योर्नर्त्विगादिभिः। द्वयोरप्यसमर्थं चेद्धवेद्ध त-मनर्थकम्। संनिधौ यजमानः स्यादुद्देशत्यागकारकः। तदभावे तु पत्नी स्यादुद्देश

नमः। ओं कर्दमायनमः। ओं मरीचयेनमः। ओं क्रतवेनमः। ओं प्रचेतसेनमः। ओं उत्तमायनमः। ओं दधीचेनमः। ओं श्राद्धदेवताभ्योनमः। ओं गणदेवेभ्योनमः। ओं विद्याधरेभ्योनमः। ओं अप्सरोभ्योनमः। ओं यक्षेभ्योनमः ओं रक्षोभ्योनमः ओं गन्धर्वेभ्योनमः ओं पिशाचेभ्योनमः। ओं गुह्यकेभ्योनमः ओं सिद्धदेवताभ्योनमः ओं औषधीभ्योनमः। ओं भूतग्रामाय नमः। ओं चतुर्विधभूतग्रामायनमः। इत्यस्त्राङ्गपूजा ॥ गौरीतिलकमण्डले ये देवास्तान् सर्वानावाहयामि स्थापयामि। इत्यावाह्य संस्थाप्य उपचारैः सम्पूजयेत्। इति हेमाद्रिलिखितगौरीतिलकपूजनम्।

---

त्यागकारिणी। तदभावे तु पुत्रः स्यादुद्देशत्यागकारकः। ऋत्विक्पुत्रोऽथवा पत्नी शिष्योवापि सहोदरः। प्राप्यानुज्ञां विशेषेण जुहुयात्तु यथाविधिः। संख्यापूर्तौ निजैर्द्रव्यैर्जपसंख्यादशांशतः। अथवा प्रत्यहं जप्त्वा वा जुहुयात्तु दशांशतः। मूलान्ते तु पदं देयं सिञ्चामीत्यभिषेचने। ततोनानाविधैरत्नैस्तर्पयेद्द्विजसत्तमान्। इष्टरूपान्समाराध्यतेभ्योदद्याच्च दक्षिणाम्। न्यूनं सम्पूर्णतामेति ब्राह्मणाराधनाद्नृणाम्। देवताश्च प्रसीदन्ति संपद्यन्ते मनोरथाः ॥

॥ शुभम् ॥



# —अर्पणार्पणमस्तु—

श्रीगौड़वंशकमलांशुमतोमुरारेः
सूनुः सतां शिरसि लब्धपदप्रतिष्ठः ।
आसीत्सराखिलोत्तमतेजसां सद्-
भाष्यार्थसिद्धधिषणोहरिनामदत्तः ॥
श्रुतिस्मृतिव्याकरणादिशास्त्र—
प्रौढिः प्रसादात् गुरुदेवतायाः ।
तदात्मजोनिर्णयति स्म देवी—
प्रसादनामा प्रथमं हि कल्पम् ॥
वीकानेरनराधिपाश्रितपरीवारः सुतारस्वरैः ।
नित्यं तद्धितकाम्यया विमलया सम्प्रार्थितश्रीहरिः ॥
सोहं श्रीशतचण्डिकाविधिमिमं तत् पूर्वखण्डात्मकम् ।
गङ्गासिंहनरेश्वराय सजयारावं समभ्यर्पये ॥

इति श्रीभाष्याचार्यपं०हरिनामदत्तशास्त्रितनयविद्यावाचस्पति पण्डित देवीप्रसादशास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य प्रथमखण्डः ॥

## समाप्तश्चायं प्रथमखण्डः

# विषयानुक्रमणिका

## ॥ स्थूलाक्षराणां शुद्धाशुद्धपत्रम् ॥

| अशुद्ध | शुद्ध | पृ० | पं० | अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| ज्ञ | ज्ञ | १ | ५ | षाडे | षोड | ९५ | १२ |
| (ताज्ञ ) | (याज्ञ ) | | | वयश्चद्वि | यश्चव्रयं | ९१ | ८ |
| गनि | राणि | ४ | १ | भिः | भि | ९२ | १० |
| कर्षं | कर्षण | १३ | ३ | क | कादि | ११६ | २० |
| प्रासा | प्रसा | २५ | २ | कं | क्त | ११८ | ४ |
| पेन | पेण | २५ | १२ | गौचे | गौश्चे | १२३ | ३ |
| मित्या | भित्या | २९ | ७ | ये रौद्रा | येरुद्ररौ | १३३ | १४ |
| नामो | नाम्नो | ३१ | ७ | पु | पू | १५४ | १ |
| ध्य | ध्या | ३१ | ८ | वण | वरू | १५४ | १२ |
| के | कै | ३५ | ११ | घो | धी | १५४ | १२ |
| नने | नेन | ३५ | १४ | पया | कारया | १५५ | १३ |
| हिः | न्हि | ३६ | ६ | कृत | कुरु | १५९ | ७ |
| गौरि | गैरि | ४१ | १३ | सायि | साहि | १७३ | ३ |
| ईयं | इयं | ४४ | २ | तादा | ताप | १७३ | ८ |
| म्ना | म्नी | ४४ | ४ | तादर्यों | तात्तो | १५८ | ४ |
| म | भँ | ४७ | ६ | | | | |
| योगींन्यो | योगिन्यो | ५५ | ५ | | | | |

# पूजनोपयोगीसामग्री लिख्यते ।

चन्दनम्, रक्तचन्दनम्, अगुरुः, कर्पूरः, उशीरम्, कुष्ठम्, वालकम्, कंकोलम्; जातीफलम्, जटामांसी, मुरा, ग्रन्थिकं, गोरोचनम्, जातीपत्रम्, अश्वत्थत्वक्, विल्वत्वक्, पृष्ठपर्णी, चित्रकम्, कत्तृणम्, गुञ्जा, कट्फलम्, उदुम्बरत्वक्, काश्मरी, पद्मकाष्ठम्, शङ्खपुष्पी, मयूरशिखा, प्लक्षत्वक्, अग्निमन्थ, मुद्गपर्णी, कुश, पाषाणभेद; कृष्णशङ्खपुष्पी, रोहिणी, स्योनाकः बृहती, पाटली, मूषककर्णिका, तुलसी, शिखरी, इन्द्रवल्ली, भृङ्गराजः, अपराजिता, तालमूली, कृताञ्जलिः, दूर्वा, मार्गी, भद्रमुस्तकम्, पञ्चकषायः । शतावरी, ऋद्धिः वृद्धिः सूर्य्यावर्त्ता, विष्णुक्रान्ता, एताः अन्याश्चमहौषध्यः । कुङ्कुमम्, केशरम्, कस्तूरिः । देशकालोद्भवानिनानाविधानिपुष्पाणि, पुष्पमालाः, तुलसीपत्राणि, विल्वपत्राणि, धूपः, धूपपात्रम्, दीपः, दीपपात्रम्, दीपपात्राणि, सामान्यार्घं, विशेषार्घं, पाद्यपात्रम्, आचमनपात्र० पुनराच० पात्र०; मधुपर्कपात्रम्, स्नानपा० कलशः, शङ्खः, आरार्तिक्यम्, घण्टा, पादुका, दर्पणम्, छत्रम्, चामरम्. नैवेद्यम्, भक्ष्यभोज्यानि पूंगीफलानि, ताम्बूलानि, एलालवंगादि, वृहत्ताम्रपात्रम्, शिल्पिदेयानिवस्त्राणि, सूक्ष्मवस्त्रम्, देवालङ्करणार्थंविचित्राणिवस्त्राभूषणप्रभृतीनि । मण्डपार्थं वस्त्राणि आचार्यादिवरणसामग्री, पीठार्थं वस्तूनि । सर्वतोभद्ररचनाय पञ्चवर्णकाः स्वदेशोद्भवाः । रत्नाष्टकम्, धात्वष्टकम्, वीजाष्टकम्, पञ्चरत्नानि, सप्तमृदः, पञ्चपल्लवाः, सप्तधान्यानि, उद्वर्तनद्रव्यम्, गोघृतम्, गङ्गोदकम्, सुगन्धितैलम् । सिन्दूरम्, सुवर्णखण्डानि, स्वर्णशलाका, नारिकेलफलानि, ऋतुफलानि, यज्ञोपवीतानि, कार्पासवर्तिकाः । रक्तवस्त्रं, पीतवस्त्रम्, कौशेयवस्त्रम, श्वेतवस्त्रम्. ताम्रकलशाः मृन्मयकलशाः । पञ्चामृतद्रव्याणि, गोमयादिपञ्चगव्यम्, यक्षकर्दमद्रव्याणि, अष्टगन्धम्, गुडम्, तैलम्, कार्पासम्, गुलालम्, सर्षपाः । लाजाः । लोहशङ्कवश्चत्वारः; आमलकफलानि, द्राक्षा, आर्द्रकम्, ध्वजाः, पताकाः, महाध्वजाः, पायसादिवलिसामग्री, दक्षिणार्थंद्रव्यम्, पात्राधारः

## होम सामग्री ।

तिल, यव, तण्डुल, शर्करा, गुग्गुलु गव्याज्यम्, फलादीनि, अर्कं, पलाश, खदिरापामार्गपिप्पल, उदुम्बर शमी दूर्वादर्भसमिधां प्रत्येकमष्टशतम्, माषभक्तापूपपूरिकावटकपायसादिवलिसामग्री, प्रतिकुण्डं, स्रुक्स्रुवप्रणीता प्रोक्षणी आज्यस्थाली चरुस्थाली प्रभृतियज्ञपात्राणि, आसनानि, यज्ञियवृक्षसमिधः, ब्रह्मासनं, छायापात्रम्, कांस्यचषकम्, पत्रावली, सोपस्कराधेनुः पयस्विनीदक्षिणा, कदलीस्तम्भाः, वेणुदण्डाः । अर्वीरकम् । इति संक्षिप्तसामग्री ॥

* श्रीगणेशाय नमः * श्रीसीतारामाय नमः * श्रीजगदम्बिकायै नमः *

* अथ मङ्गलाचरणम् *

यत्पादपङ्कजमनुस्मरतां जगत्यां दूरीकरोति दुरितं सकलं जनानाम् । भक्तार्तिहृद्विमलबुद्धिविकाशिनी सा सन्मङ्गलं वितनुताज्जगदम्बिका मे ॥

---

अथ च प्रथमं निर्विघ्नग्रन्थसमाप्त्यर्थं स्वेष्टदेवीं जगदम्बिकां स्मृत्वा ततः शतचण्डीविधानस्य पद्धतिर्निरूप्यते ।

---

शतचण्डीविधाने यज्ञस्य मुख्यत्वं तस्य च वेदिकुण्डस्थण्डिलादिसापेक्षत्वं वेद्यादेश्च मण्डपसापेक्षत्वं मण्डपश्च भूमिशुद्धिमन्तरेण न सम्भवतीति प्रथमन्तावद्भूमिशोधनप्रकारो निरूप्यते ।

तत्र तावत्स्थाननिर्णयो यथा :—

ध्रुवस्थानं च गम्भीरं दीर्घतोयाश्रयाश्रयः । अग्निशालाग्निहोतॄणां पुण्यस्थानं परिश्रुतम् ॥ द्विजानां सव्रतानां च आश्रयः स्वाश्रयोऽपि वा । यज्ञार्थमतिशस्तानि स्थानान्येतानि पार्वति ॥

तथाच :—

महानदीनां तीराणि गङ्गासागरसङ्गमः । प्रशस्तानि च तीर्थानि क्षेत्राणि चाश्रमा अपि ॥ अरण्यानि च सर्वाणि

## शतचण्डीविधाने प्रथमं स्थानस्यावश्यकत्वन्तदर्थं स्थाननिरूपणं कुर्य्यात् ।

पर्वताः सकला अपि । सनिर्झराण्यपगिरिर्देवतायतनानि च ॥

दीक्षायज्ञे- अरण्यादिस्थानं न गृह्यते उक्तं यथा :—

न दीक्षायां प्रकुर्वीत निकुञ्जे गहने वने । द्वित्रीस्मिन च महारण्ये मात्सर्य मृगसेविते ॥ इति ॥

भूमिपरीक्षा ( महाकपिलपंचरात्रे ) यथा :—

तत्र भूमिम्परीक्षेत वास्तुज्ञानविशारदः । स्फुटिता च सशल्या च वल्मीका रोहणी तथा ॥ दूरतः परिवर्ज्ज्या भूः कर्तुरायुर्धनापहा । स्फुटितामरणं कुर्याद्रूषराधननाशिनी ॥ सशल्या क्लेशदा नित्यं विषमा शत्रुतोभयम् । ईशकोणप्लवा सा च कर्तुः श्रीदाऽऽशु निश्चितम् ॥ पूर्वप्लवा वृद्धिकरी वरदातूत्तरप्लवा । दक्षिणप्लवा या भूमिर्नित्यं मृत्युभयप्रदा ॥ गृहक्षयकरी साच भूमिर्यानैर्ऋतप्लवा । धनहानिकरी पृथ्वी कीर्तिता वरुणप्लवा ॥ वायुप्लवा तथा भूमिर्नित्यमुद्वेग कारिणी । अग्निकोणप्लवा याच पुत्रायुर्धननाशिनी ॥

गौतमीये :—

भूमेः परिग्रहं कुर्य्याद्यावदायतनं भवेत् । शुक्लमृत्स्ना च या भूमिर्ब्राह्मी सा परिकीर्तिता ॥ क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्या प्रकीर्तिता । कृष्णाभूमिर्भवेच्छूद्रा चतुर्धा परिकीर्तिता ॥

महाकपिल पञ्चरात्रे :—

ब्राह्मणी भूः कुशोपेता क्षत्रियास्याच्छराकुला । कुशकाशाकुला वैश्या शूद्रासर्वतृणाकुला ॥

गौतमीयतंत्रे :--

## स्थानानितुअग्निशाला आचारविशिष्टब्राह्मणाश्रमः

ब्राह्मी सर्वार्थसिद्ध्यर्थं स्यात्क्षत्रियाराज्यदा तथा । धन धान्यकरी वैश्या शूद्रा तु निन्दिता मुने ॥

वासिष्ठ्याम् :—

खन्यमाने यदा कुण्डे पाषाणः प्राप्यते भुवि । तदापमृत्यवे चास्थिकेशाङ्गारैर्धनक्षयः ॥ भस्मनाग्निभयं प्रोक्तं तुषैः प्रोक्ता दरिद्रता ।

शल्यज्ञानार्थमहिवलचक्रमाह ( आदियामले )

अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् । द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः ॥ निधिर्निवर्त्तनैकस्थः संभ्रान्तो यत्र भूतले । तत्रचक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् । अहिगत्या च नक्षत्रं तत्काले यत्र चन्द्रमाः । द्रव्यशल्यं भवेत्तत्र चन्द्रभास्करसादजम् ॥ ऊर्ध्वरेखाष्टकं लेख्यं तिर्य्यक् पञ्चतथैवच । अहिचक्रे भवन्त्येवमष्टाविंशति कोष्ठकाः ॥ तत्र पौष्णाश्विनी याम्य कृत्तिकामघभाग्यकम् । उत्तराफाल्गुनी लेख्या पङ्क्तौ तत्सप्तके ध्रुवम् ॥ अहिर्बुध्न्याजपादर्क्षं शतभं ब्राह्मचसार्प्पभम् ॥ पुष्यं हस्तं समालेख्यं द्वितीयपंक्तिसंस्थितम् ॥ अभिजिद्विष्णुधनिष्ठाः सौम्यं रौद्रं पुनर्वसुम् ॥ चित्रभं च तृतीयायां पङ्क्तौ धिष्ण्यादिसप्तके ॥ विश्वर्क्षं तोयभं मूलं ज्येष्ठां मैत्रं विशाखभम् । स्वातिं पङ्क्तौ चतुर्थ्यान्तु कृत्वा चक्रं विलोकयेत् ॥

तीर्थाणि स्वकीयाश्रमः महानदीनां तीरानि अरण्यस्थानम् -पर्वतस्थानम् जलनिर्झरप्रदेशः देवतायतनं च एष्वन्यतमं

## आहिवल चक्रम् ।

| रे० २८ चं० | अ० १ चं० | भ० २ चं० | कृ० ३ चं० | म० १० चं० | पू० ११ | उ० १२ |
|---|---|---|---|---|---|---|
| उ० २७ | पू० २६ चं० | श० २५ | रो० ४ | श्ले० ९ चं० | पु० ८ चं० | ह० १३ |
| अभि० २२ | श्र० २३ चं० | ध० २४ चं० | मृ० ५ | आ० ६ चं० | पु० ७ चं० | चि० १४ |
| उ० २१ चं० | पू० २० चं० | मू० १९ | ज्ये० १८ | अ० १७ | वि० १६ | स्वा० १५ |

एवम्प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः । द्वारशाखे प्रचायास्ये द्वाररुया कृत्तिका मता ॥ अश्वीशपूर्वाषाढादि त्रिक पंच चतुष्टयम् । रेवती पूर्वभाद्रेन्दोर्भानिशेषाणि भास्वतः ॥ उदयादिगता नाड्यो भघ्नाः षष्ठ्याप्तशेषके । दिनेन्दुभुक्त-युक्तोसौ भवेत्तत्कालचन्द्रमाः ॥ षष्ठिघ्नं तं निशानाथं शर-वेदात्मकं पुनः । युगैः शेषं भवेद्यत्तत्भोगादिचक्रवक्रगम् ॥ चन्द्रवत्साधयेत्सूर्यमृक्षस्थं चेष्टकालिकम् । पश्चाद्विलोकयेत्तौ च स्वकक्षेऽथान्यभेस्थितौ ॥ चन्द्रकक्षे यदार्केन्दू तत्रस्याद्वि-श्चितोनिधिः । भानुकक्षेस्थितौ तौ चेत्तदा शल्यं नचान्यथा ॥

## स्थानं ईशप्लवं पूर्वप्लवं वा यज्ञार्थमुपकल्पयेत् ।

स्वस्वभेद्वितयं ज्ञेयं नास्ति किञ्चिद्विपर्यये । स्थितं न लभ्यते द्रव्यं चन्द्रेऽक्रूरग्रहान्विते ॥ हेमतारञ्च ताम्रारं रत्नं ताम्रायसं त्रपुः । नागचन्द्रे विजानीयाद्भास्करादिगृहे स्थिते ॥ मिश्रैर्मिश्रं भवेद्द्रव्यं शून्यदृष्टिविपर्यये । सर्वग्रहस्थिते चन्द्रे निर्दिष्टोसौ महानिधिः ॥ शुभक्षेत्रगते चन्द्रे लाभोभवति निश्चितम् । पापक्षेत्रे न लाभः स्याज्ज्ञातव्यं स्वरवेदिभिः ॥ पुष्टे चन्द्रे भवेन्मुद्रा क्षीणे चन्द्रेऽल्पकोनिधिः । ग्रहदृष्टिवशात्सोपि विज्ञेयो नवधा बुधैः ॥ हेमतारं च ताम्रारं पाषाणं मृन्मयायसम् । सूर्यादिगृहगे चन्द्रे द्रव्यभाण्डं प्रजायते ॥ भुक्तराश्यंशमानेन भूमानं कांविकैः करैरिति ।

तद्यथा :—

चन्द्रस्थाने निधिर्ज्ञेयः सूर्यस्थाने च शल्यकम् ।

निवर्त्तनं परिमितभूमावेकमेव कुर्यात् निवर्त्तनस्वरूपं च ।

दण्डस्तु दशहस्तः स्यात्त्रिंशद्दण्डैर्निवर्तनम् । इति ।

भास्कराचार्यास्तु :—

तथाकराणां दशकेन वंशः निवर्तनं विंशति वंशसंख्यैरित्यूचुः । इति ।

एवंशल्योद्धारे बहुप्रयासः । अतः सुलभोपायो महाकपिलपञ्चरात्रोक्तो यथा—

मासाद्यारंभकाले च यदङ्गं स्पृशते पुमान् । वास्तुदेहे तूर्ढं तत्र शल्यं विद्याद्विचक्षणः ॥ कण्डूयति शिरः पुंसः शिरश्शल्यं समुद्धरेत् । शल्यं तत्रास्ति विज्ञेयं खन्यमाने करत्रये ॥ अग्निदाहश्च रोगश्च धनहानिश्च जायते । यत्नेनोत्पाटयेच्छल्यं यदीच्छेत्सिद्धिमात्मनः ॥ बाहौ कण्डूयमाने तु निर्दिशेल्लोह-

एवं यागार्थमुपकल्पिते स्थाने स्वाभीष्टदात्रीं ब्राह्मणाः

शृङ्खलम् । हस्तद्वयेन संतिष्ठेल्लक्षणं कथितं तव ॥ स्वामिनो मरणं विद्याद्विदेशगमनन्तथा । यत्नेनोत्पाटये- च्छल्यं यदीच्छेद्भद्रमात्मनः ॥ कुक्षौ कण्डूयमाने तु कांस्यशल्यं विनिर्दिशेत् । हस्तेनैकेन संतिष्ठेल्लक्षणं कथितं तव ॥ असती च भवेद्भार्या यशो हानिश्च जायते । यत्नेनोत्पाटये- च्छल्यं यदीच्छेद्भद्रमात्मनः ॥ हस्ते कण्डूयमाने तु कङ्कालं च विनिर्दिशेत् । त्रिहस्तेन च संतिष्ठेत् खन्यमानेन चान्यथा ॥ अग्निदाहश्च रोगश्च सशल्यं मरणं ध्रुवम् । यत्नेनोत्पाटयेच्छल्यं यदीच्छेद्भद्रमात्मनः ॥ पृष्ठे कण्डूयमाने तु बाहुशल्यं विनिर्दिशेत् । हस्तेनैकेन संतिष्ठेत् नात्र कार्या विचारणा ॥ स्वामिनाशोभवेत्तत्र भार्या वा जायतेऽसती । पादे कण्डूयमाने तु हस्तशल्यं विनिर्दिशेत् ॥ सार्धहस्तेन संतिष्ठेल्लक्षणं कथितं तव । गोनाशो राजदण्डश्च सस्यहानिश्च जायते ॥ यत्नेनोत्पाटयेच्छल्यं यदीच्छेद्भद्रमात्मनः । कुक्षौ कंडूयमाने तु पाषाणं तत्र निर्दिशेत् ॥ हस्तद्वितयमानेन लक्षणं कथितं तव । भुजङ्गदंशस्तत्रस्यात्तस्माच्छल्यं समुद्धरेत् ॥ जानौ कंडूयमाने तु भस्मतत्र विनिर्दिशेत् । हस्तद्वयेन संतिष्ठेद्- लक्षणं कथितं तव । अग्निदाहो मनस्तापः क्लेशदुःखभयानिच । करोत्येवं विधं कर्म तस्मात्तं वै समुद्धरेत् ॥ गोशृंगं पीत- मंडूकः शङ्खं शुक्तिश्च मंडपः । शम्बूकश्च प्रशस्तास्स्युर्याश्चा- न्यारत्नजातयः ॥ अंगारं वै तुषं केशमस्थिशल्यं विवर्जयेत् । इति ।

अथवा ब्रह्मयामलोक्तविधिना शल्यं ज्ञात्वा तदुद्धारः कर्त्तव्यः । तत्र शल्यज्ञानं यथा :—

द्विजातिविशिष्टां भूमिं ज्ञात्वा तत्र स्वाभिमतं भूमिपरिग्रहं कृत्वा तत्र दहनखननपूरणप्लवनादिना परीक्षां च कृत्वा शल्यो-

नवकोष्ठे कृते चक्रे पूर्वादिषु च दिक्षु च । ब क च त ए ह स प श वर्णा लेख्या अनुक्रमात् ।

## ब्रह्मयामलोक्तशल्योद्धारचक्रम्

| | | |
|---|---|---|
| प | ब | क |
| स | य | च |
| ह | ए | त |

गन्धपुष्पादिनैवेद्य धूपदीपादिभिर्गृहे । शिशुमानीय सुस्नातं प्रष्टव्यं फलपुष्पकैः ॥ पूर्वार्धे पुष्पनाम्ना च शेषार्धे फलनामतः । दिनस्य शल्यं नास्त्यस्ति फलपुष्पाद्यवर्णतः ॥ कोष्ठारे पुष्पफलयोर्भवेदाद्यक्षरं यदि । तदा शल्यं च तत्कोष्ठे यदि तत्रास्ति नास्ति तत् ॥ सपादहस्तभूमिस्थं नृशल्यं नरनाशनम् । खरशल्यं सर्पशल्यं भीतिदं सार्धहस्ततः ॥ हस्तद्वये वाजिशल्यं गृहिणां मृत्युदुःखदम् । सार्धद्विहस्ते हस्तिशल्यं गृहशून्यप्रवासदम् ॥ श्वशल्ये महिषे मृत्युः सपाद-द्वयहस्तके । बिडालशल्यं हस्तेन त्रिहस्ते मित्रनाशनम् ॥ सार्धत्रये कपेः शल्यं दुःस्वप्नं धननाशनम् । वास्तुमात्रे चाखु-शल्यं कुलवित्तविनाशनम् ॥ नरादिशल्यं ज्ञातव्यं बकारादा-

द्धारविधिनाभूमिशोधनं विधाय मण्डपरचनार्थं दिक्शोधनं कुर्य्यात् ॥ १ ॥

अनुक्रमात् । यदङ्गं स्पृशते द्रुतस्तदङ्गोद्भवशल्यकम् ॥ नवभागं गृहं कृत्वा तद्भागं च पुनः पुनः । यद्भागे पुष्पफलयोराद्यवर्णं च तत्फलम् ॥

(तत्त्वकौमुद्यां) तु

गृहारम्भे कण्डूतिश्च स्वाम्यङ्गे यत्र जायते । शल्यमस्तीति वक्तव्यं प्रासादे भवनेपि वा ॥

कचचतहसपयाः शल्याक्षराणि नरखरोष्ट्र शिशुमार्जारगोकपि पुरुषद्विजास्थीनि नदीपुष्पफलदेवतानामानि

शिशुसीमन्तिनी सूर्खवक्त्रात् तत्क्षणमागतम् । अक्षरं द्विगुणं कृत्वा मात्रां चैव चतुर्गुणाम् । नवभिश्च हरेद्भागं विषमे शल्यं समेनहि ।

धरणी धारणी करणभूत्यै नमः,

इति शल्योद्धारण मंत्रः इति विशेष उक्तः अन्यत्सर्वं ब्रह्मयामलोक्तम् । इति अथान्यप्रकारेण शल्योद्धारः तत्र शल्योद्धारस्यावश्यकतामाह विश्वकर्मा ।

मनसश्चक्षुषोर्यत्र सन्तोषोजायते भुवि । तस्यां कार्यं गृहं सर्वैर्निः शल्यं सर्वसम्मतम् ॥

तथा च मार्कण्डेयः ।

जलान्तं प्रस्तरान्तं वा पुरुषान्तमथापि वा । क्षेत्रं संशोध्य चोद्धृत्य शल्यं सदनमारभेत् ॥

शल्यज्ञानमुकम् (ज्योतिर्निबन्धे)

गृहभूमिं च नवधा विभज्य क्रमशो बुधः । वर्णान्विन्यस्य जानीयाच्छुभाशुभमतः परम् ॥ स्मृत्वेष्टदेवतां प्रष्टुर्वचनस्याद्यमक्षरम् । गृहीत्वा तु ततः शल्याशल्यं सम्यग्विचारयेत् ॥ अकचटतपहयलक्षाः वर्णाः पूर्वादिमध्यगाः । शल्यकरा इह नान्ये शल्यगृहे निवसतां नाशः ॥ विप्रात्पुष्पाणि सम्पृच्छेत्क्षत्रियान्निम्नगास्तथा । वैश्याद्देवगणाँस्तद्वच्छूद्रात्फलगणानथ ॥ पूगीफलाक्षतादींश्च गृहीत्वा मन्त्रमंत्रितान् । प्रक्षिपेत् कोष्ठमध्येषु स्वेष्टकोष्ठे विचक्षणः ॥ प्रणवं चरणीतद्वदन्ते स्याच्चविदारिणी । भूत्यै स्वाहेति मंत्रोयं प्रोक्तः पूगाभिमन्त्रणे ॥

ओं चरणी विदारिणी भूत्यै स्वाहेति द्वादशाक्षरोमन्त्रः ।

अनेन पूगीफलाक्षतपुष्पेष्वन्यतमं वामहस्ते धृत्वा दक्षिणपाणिनाच्छाद्याष्टोत्तरशतवारमभिमन्त्र्यपूर्वोक्तकचटादिन्यस्तकोष्ठेषु स्वविवक्षितकोष्ठे प्रक्षेपणार्थं प्रष्टुर्हस्ते निदध्यात् ।

ततः प्रष्टानिक्षिप्तकोष्ठकस्थकचटादिवर्णमवलोक्य शल्यनिर्णयं तत्स्थानं च वक्ष्यमाणविधिना निर्णयेत् ।

पृच्छायां यदि अः प्राच्यां नरशल्यं तदा भवेत् । सार्द्धहस्तप्रमाणेन तच्च मानुषमृत्युकृत् ॥ आग्नेय्यांदिशि कः प्रश्ने खरशल्यं करद्भुवे । राजदण्डोभवेत्तत्र भयं नैव निवर्तते ॥ याम्यायांदिशि चःप्रश्ने कुर्य्यादाकटिसंस्थितम् नरशल्यं गृहेशस्य मरणं चिररोगतः ॥ नैर्ऋत्यां दिशि टः प्रश्ने सार्धहस्तादधः स्थले । शुनोस्थि जायते तत्र बालानां जनयेन्मृतिम् ॥ तः प्रश्ने पश्चिमायान्तु शिशोः शल्यम्प्रजायते । सार्द्धहस्ते गृहस्वामी न तिष्ठति तदा गृहे ॥ वायव्यां दिशि

पः प्रश्ने तुषाङ्गाराश्चतुष्करे । कुर्वन्ति मित्रनाशं च दुःस्वप्न दर्शनं सदा ॥ उदीच्यां दिशि यः प्रश्ने विप्रशल्यं कटेरधः । तच्छीघ्रं निर्धनत्वाय कुवेरसदृशस्यहि ॥ ऐशान्यां दिशि शः प्रश्ने गोशल्यं सार्धहस्ततः । तद्गोधनस्य नाशाय जायते गृहमेधिनः । हलक्षाः मध्यमे कोष्ठे वक्षोमात्रे भवेदधः । नृकपालमथो भस्म लोहं तत्कुलनाशकृत् ॥ इति

एवं शल्योद्धारस्य पंचप्रकाराः प्रदर्शिताः एतेष्वन्यतमं सुगमं पन्थानमवलम्ब्य भूमिशोधनं कृत्वा भूमिपरीक्षां कुर्यात् यथा—

खातं निशादावुत्खन्य हस्तं पूर्य जलेन तत् । प्रातर्दृष्टजले वृद्धिः समं पंके क्षये क्षयः ॥

वालुकापरिपूर्णदेशेऽनुपयुक्तोयम्प्रकारः इति ।

अतस्तादृशे देशे सद्योविचारः कर्तव्यः स च ( वास्तुप्रदीपे )

स्थिरे जले वै स्थिरता गृहस्य स्याद्दक्षिणावर्तजलेन सौख्यम् । क्षिप्रं जलं शोषयतीह खातो मृत्युर्हि वामेन जलेन कर्तुः ॥

अथवा

वितस्तिमात्र विस्तारं निर्माय विवरं भुवि । निःक्षिपेत्ताः मृदस्तस्मिंस्तासु शिष्टासु शोभनम् ॥ समासु मध्यमं विद्यान्न्यूनास्वधममुच्यते ।

अयं प्रकारः वालुकामये देशे उपयुक्त इति । प्रयोगसारे ।

एवं भूमिपरीक्षणं कुर्यात् अस्यावश्यकत्वं ( गौत्तमीये तंत्रे )

ततो भूमिं परीक्षेत वास्तुज्ञानविशारदः शल्यदिक्शोधनं

तद्यथा जलवत्समीकृतायां भूमौ अभीष्टव्यासार्द्धमितेन कर्कटकेन वृत्तं विधाय तत्केन्द्रस्थितस्य शंकोर्द्वादशाङ्गुलस्य छायाग्रं दिनस्य पूर्वार्द्धे यत्र वृत्ते विशति सा पश्चिमादिक् यत्रापैति दिनस्य परार्द्धे सा पूर्वादिक् । एवं परपूर्वविन्दू ज्ञात्वा ताभ्यां मत्स्योत्पादनं कृत्वा मत्स्यस्य मुखपुच्छगता रेखा कार्या । सा च याम्योत्तरा रेखा । तथा पूर्वापराविन्द्वो र्मध्ये कृतारेखा पूर्वापरा भवति । परन्त्वेवं दिक्शोधनं तदैव तथ्यं भवति यदा वृत्तकेन्द्रस्थितस्य शङ्कोश्छायाप्रवेशनिर्गमकालयोः कान्ती समे स्याताम् अन्यथा प्रकारान्तरेण दिक्शोधनं कार्यं ॥

---

कुर्यात् तुषाराङ्गादिदूरयेत् । एतस्याकरणे मन्त्री न किञ्चित्फलमाप्नुयात् ॥

( महाकपिलपंचरात्रे ।

खन्यमाने जलं यावत् शल्यदोषो विनश्यति । दूरनीचस्थितं वारि खनितुं नैव शक्यते ॥ पंचहस्तं प्रखातव्यं शल्यदोषोपशान्तये । शल्योद्धारं ततः कृत्वा पूरयेत्सुसमं यथा ॥इति ।

दिक्शोधनं कदाकार्य्यमित्याह विट्ठलदीक्षितः ।

ज्ञात्वा पूर्वं धरित्रीं दहनखनन संप्लावनैः संविशोध्य पश्चात्कृत्वा समानां मुकुरजठरवद्वाचयित्वा द्विजेन्द्रैः पुण्याहं कूर्मशेषौ क्षितिमपिकुसुमाद्यैः समाराध्य शुद्धे वारे तिथ्यांच कुर्य्यात्सुरपतिककुभः साधनं मण्डपार्थम् । तन्नगणेश दैवज्ञः ।

वृत्तेसमभूगते तु केन्द्रस्थितशङ्कोः क्रमशोविशत्यपैति ।

छायाग्रमिहापरा च पूर्वा ताभ्यां सिद्ध्यति सैरदिक् च याम्या ।

भास्कराचार्यः ।

तत्कालापमजीवयोश्तु विवराद्भाकर्णसिन्याहताल्लम्बज्याप्तिमिताङ्गुलैरयनदिक्यैन्द्रीस्फुटा चालिता ॥

श्रीपतिः ।

छायानिर्गमन प्रवेश समयार्क क्रान्ति जीवान्तरंक्षुण्णं स्वश्रवणेन लम्बकहतं स्याङ्गुलाद्यं फलम् । पश्चाद्बिन्दुमनेन रव्ययनतः संचालयेद्व्यत्ययात्स्पष्टा प्राच्यपराथवायनवशात्प्राग्बिन्दुमुत्सारयेत् ॥

भास्कराचार्यः

तन्मत्स्यादयथास्यसौम्यककुभौ सौम्याध्रुवे वा भवेदेकस्मादपिभाग्रतोभुजमितां कोटिमितां शंकुनः । न्यस्येद्यष्टिमृजुं तथा भुवि यथा यष्ट्यग्रयोः संयुतिः कोटिः प्राच्यपराभवेदिति कृते वाहुश्चयाम्योत्तरा ॥

अथवा ।

दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्रपूर्वापरसूत्रमध्यम् । दोर्दोःप्रभावर्गवियोगमूलं कोटिर्नरात्प्रागपरातत: स्यात् ॥ अथवा स्वल्पान्तरात् प्राचीज्ञानम् यथा । यां काष्ठां रविरेति तत्र चलनं पूर्वादयोजूकयाकीटे कर्कटके वृषेपिमकरे नोचालनं कार्मुके । युग्मेऽन्यासु तु चालनं परिमितं यूकाद्वयेनोत्तमम् प्राक्चिह्नस्य ततः स्थिराम्बुपदिशः सूत्रस्य पातोङ्कतः ॥ इति ॥

अथवाधुनिक विज्ञानयंत्रीय ध्रुवसूत्रतः दक्षिणोत्तरां रेखामुत्पाद्य तन्मत्स्यतः पूर्वापरं साध्यमिति ।

ततो यज्ञार्थमुपकल्पितभूमौ सर्षपादि वपनेनोर्वरां भूमिम्परीक्षयेत् दहनन्तु सर्वप्रथममेव कुर्य्यात् । अत्र दहनहलाकर्णवीजवपनादिक्रिया ग्रन्थविस्तृतिभयान्नविहिता तदर्थंवास्तुशास्त्राणि विलोक्यानि इतिभूमिशोधनम्। एवं सर्वथानिर्दोषां भूमिं ज्ञात्वा तत्र मण्डपरचनार्थम्पूर्वं वास्तुयागं विधाय ततोमण्डपरचनान्तत्तत्कलाकुशलैः शिल्पिभिरारभेत् ।

---

एवं रात्रावपि दिक्शोधनं नक्षत्रवशाद्यथा :—

निशि वा श्रवणोदये दिगैन्द्री गुरुभस्योदयनेऽथवाह्निभात् ।
ध्रुवाद्धं किवायुभान्तराले ऽप्यसुतः साधय पूर्ववच्चयाम्यास् ॥
चित्रास्विद्धं कया स्वातीमन्ययापिशलाकया ।

तिर्य्यक्स्थानान्तर चिन्हांस्तु द्विमूलेऽन्या स्फुटेन्द्रदिक् ॥ इति

एवं मध्यान्हच्छायातोपि प्राचीसाधनं भवति तद्ग्रन्थान्तराज्ज्ञेयमिति ।

दिक् परिभाषा चोक्ता भास्कराचार्य्यैः ।

यत्रोदितोर्कः खलु तत्र पूर्वा सात्रापरायत्रगतः प्रतिष्ठाम् ।
निरक्षदेशादितरत्रसंस्थे प्राचीप्रतीच्यौच भिन्नसंस्थेति ॥
इति दिक्शोधनम् ।

वास्तुयागस्यावश्यकत्वं ( महाकपिलपंचरात्रे )

वास्तुयागं ततः कुर्य्यात्सर्वविघ्नोपशान्तये ।

ततः दिक्शोधनानन्तरमित्यर्थः :—

वास्तुयज्ञस्यावश्यकत्वं यमोप्याह :—

गृहादिकरणे यत्र नार्चितोवास्तुदैवतः तत्र शून्यं भवेत्सर्वं रक्षोविघ्नादिभिर्हतम् ॥ तस्माद्वास्त्वर्चनम् सम्यक् कार्य्यं स पदभीप्सुभिः ।

( महाकपिलपञ्चरात्रे )

भूमेः परिग्रहे पूर्वं शिलानां स्थापने तथा । जलाधारगृहार्थं च यतेद्वास्तु विशेषतः ॥ अपरेष्वपिकार्य्येषु यागहोमादिकेषु च । वास्तुमण्डलकं कुर्य्यात् सूत्रयित्वा समं गुरुः ॥

वास्तुयागोत्पत्तिमाह ( मेरुतंत्रे )

वास्तुनामा पुरा कश्चिदसुरोभून्महाबलः । त्रैलोक्यं निर्जितं तेन त्रिपञ्चाशन्चदेवताः ॥ ये रणे सम्मुखे यातास्तेनते विनिपीडिताः । पुनः पुनर्जिता युद्धे स एवासीत् प्रजापतिः दिव्यवर्षसहस्रान्ते देवाः शरणमागताः । विष्णोर्मम च पार्वत्यादैत्येन्द्रेणापितच्छ्रुतम् ॥ योद्धु कामः सोप्यधावन्नारदेन प्रचोदितः । कृतं युद्धं तेन सार्द्धं अस्माभिर्वर्षपञ्चकम् ॥ ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः । उवाच वचनं तुष्टोऽस्म्यहं प्रियतामिति ॥ नेन्द्रेण न कुवेरेण ममतोषकरं कृतम् ससैन्येनापितद्युद्धं त्वया तु जटिलेन हि ॥ कृतं विष्णुसहायेन पार्वत्यर्द्धार्धधारिणा । तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वरः ॥ अदेयं नास्ति मे किंचिद्या च यत्तु त्रयोपिच । इत्याकर्ण्य वचस्तस्यशिवयोर्भ्रू प्रचोदितः ॥ हरिः प्राह महाधन्य दैत्येन्द्र त्वत्समोस्ति कः ॥ सत्यं त्रिवारं कुरुषे तदा वाच्योमया वरः ॥ शिवेनापि च पार्वत्या एक एवापरो नहि । त्रिरुवाच तदा दैत्यस्ततोविष्णुर्व्यजिज्ञपत् ॥ यया ते त्वरितं मृत्युः स उपायः प्रदृश्यताम् । विष्णोश्छलमिति ज्ञात्वा

दैत्येन्द्रः समभाषत ॥ अवश्यमेव गन्तव्यं सर्वैः कालमुखे हरे। तथापि स्व प्रतिज्ञार्थं योगच्छति सजीवति ॥ परन्त्वेकं न मे वंशे यैश्चमत्सेवनं कृतम्। तस्य मार्गं दर्शयित्वा देहोयं विनिपात्यताम् ॥ काले तस्मिंश्च भोदेवावागुवाचाशरीरिणी। दैत्येन्द्र कुरु माशोकं भूमेर्जन्म तथाभवत् ॥ तत्रैव त्वं लयं याहि त्वत्तोषार्थं वरं शृणु। ये वर्णाः स्वस्य भोगार्थं करिष्यन्ति नवं गृहम्। तत्र त्वदुत्सवसृते नानादुःखैरुपद्रुताः। काल-वर्णादिकादाख्यो विनाथकसुखाश्च ते ॥ सेवकाः पीडयिष्यन्ति इत्याज्ञापारमेश्वरी। इत्याकर्ण्य वचः सोपि गर्तं गत्वा महाविलम् ॥ प्रविवेश ततोदेवैर्मृत्पाषाणैः प्रपूरितम्। तेन ये निर्जितादेवाः पुनरुद्गमशंकया ॥ तस्यार्थं च त्रिपञ्चाश-न्निवासंचक्रुरुद्यताः। तस्मादवश्यं ते पूज्याः गृहवाससुखेच्छया॥

अथवास्तुयागविधिस्तत्रैव :—

शृण्वन्तु तद्विधिं देवा वामदक्षिणमार्गतः। पाषाणे प्रतिमायां वा वास्तोष्पते प्रतिज्ञाति ॥ इति वैदिकमंत्रेण तस्यावाहनपूजनम्। नाममंत्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ॥ नैर्ऋत्यकोणे गेहस्य चतुरस्राकृतिशुभाम्। कृत्वा समतलां भूमिं वितस्त्युच्चां च वेदिकाम् ॥ विस्तारायामतोहस्तमात्रां तत्र लिखेद्बुधः।

(महाकपिलपञ्चरात्रे) तु विशेषः :—

गृहप्रासादकूपानां मण्डपस्य जलस्य च वास्तुमण्डलकं कार्यं अष्टहस्तं तु नापरम् ॥ भद्रभूमिं प्रशोध्यैत दशदण्डं समालिखेत्। अधोऽधस्तिर्यगादौ च तेनैकाशीतिकोष्ठकम् ॥

तत्र तावद्वास्तुयागः । वैदिकमार्गेणैकाशीति पदात्मकः । प्रथमं मण्डपार्थं परिगृहीतायांभूमौनैर्ऋत्यकोणे चतुरस्राकृतिं वितस्त्युच्चां हस्तमात्रविस्तारायामां समतलां शुभाम्वेदिकां कृत्वा तत्रैकाशीतिपदं चक्रमविषमं समसूत्रपातेन रचयेत् । तत्र वैदिकान् देवान् स्थापयेत् यथा मध्यकोष्ठेषु नवसु च ब्रह्माणं स्थापयेत् तदीशाने कोष्ठे आपवत्संस्थापयेत् । ब्रह्मणः प्राग्देशे कोष्ठत्रये अर्य्यमणं स्थापयेत् आग्नेये कोष्ठे च सवितारं स्थापयेत् । अवाकत्रिषु कोष्ठकेषु विवस्वन्तं स्थापयेत् नैर्ऋत्यकोष्ठके इन्द्रं० पश्चिमे कोष्ठत्रये मित्रं० वायव्ये कोष्ठके राजयक्ष्माणं० उत्तरेत्रये सुमेरुं० ईशान्यां कोणचतुष्टये ईशदिशमारभ्य शिखिनं पर्ज्जन्यं आपं दितिं स्थापयेत् यथा ईशे शिखिनं तत्पश्चिमे पर्ज्जन्यं तद्दाक्षिणे कोष्ठे दितिं तदग्रे आपमिति । प्राक्कोष्ठयोः द्वयोः जयन्तं, इन्द्रं, सूर्यं, सत्यं, भृशं, दशसु कोष्ठकेषु

---

मेरौ :—

एकाशीतिपदं चक्रं वैदिकास्तत्र देवताः । मध्यकोष्ठेषु नवसु चादौ ब्रह्माणमर्चयेत् ॥ आपवत्सं तदीशाने प्रागर्य्यम्णं त्रिकोष्ठके । आग्नेये सवितारं च विवस्वन्तमवाक्त्रिषु ॥ इन्द्रं नैर्ऋतिदिग्भागे मित्रं पश्चिमगंत्रिषु । वायव्ये राजयक्ष्माणं सुमेरुं चोत्तरे त्रये ॥ वेदकोष्ठेषु चैशान्यामीशकोणाच्च देवताः । शिखी, पर्ज्जन्य, आपश्च दितिः, प्राक्, कोष्ठयोर्द्वयोः ॥ क्रमादेते पञ्चदेवा ज्ञातव्याः सव्यमार्गतः । जयन्तेन्द्रौ

स्थापयेत् । आग्नेयकोणे चतुष्के कोष्ठे ईशतः अन्तरिक्षं वातं, पूषाणं, सावित्रं, च स्थापयेत् । दक्षिणे पञ्चके कोष्ठे युग्मक्रमात् वितथं, बृहत्क्षेत्रं यमं, गन्धर्वं भृङ्गराजं, च स्थापयेत् । नैर्ऋत्यां च चतुष्टये ईशानीतः जयं, मृगं, पितरं, दौवारिकं, च स्थापयेत् । ततः पश्चिमे द्विके सुग्रीव, पुष्पदन्त, वरुणाऽसुर, शोषान् पंचदेवान् स्थापयेत् वायव्य-कोणे ईशतः अहि, रुद्र, पापयक्ष्मन् रोगांश्च स्थापयेत् । उत्तरे पंचसु द्वितयेषु मुख्यं भल्लाटं, सोमं, भुजगं, अदितिं, च स्थापयेत् । एवमेकाशीतिपदके एतान् पंचचत्वारिंशद्देवान् वैदिकमंत्रेण नाममंत्रेण ङेन्तेन वा षोडशोपचार-विधिना भक्त्या समर्चयेत् । ततः वक्ष्यमाणविधिना कलशं संस्थाप्य तत्र पाषाण प्रतिमां सुवर्णप्रतिमां वा वास्तुपुरुषस्य निर्माय तस्य अग्न्युत्तारणप्राणप्रतिष्ठा-दिकं कृत्वा संस्थाप्य वक्ष्यमाणषोडशोपचारविधिना

---

सूर्यसत्यौ भृश आग्नेयकोणके । अन्तरिक्षं तथा वातः पूषा सावित्र एवच । चतुष्क ईशतोदेवास्ततोदक्षिणपञ्चके ॥ युग्मक्रमाच्च वितथोबृहत्क्षेत्रयमौ तथा । गन्धर्वो-विघ्नराजश्च नैर्ऋताख्यचतुष्टके ॥ ईशानीतोयजमृगौ पितृदौ-वारिकौ तथा । ततः पाश्चाद्द्विके पञ्च सुग्रीवः पुष्पदन्तकः ॥ वरुणासुरशेषाश्च वायव्ये ईशतस्त्वहि । रुद्रश्च पापयक्ष्मा चरोगश्चोत्तर पञ्चसु ॥ मुख्योभल्लाटसोमौ चभुजगश्चादितिस्तथा । देवाएतेपञ्चचत्वारिंशदर्च्यास्तुभक्तितः ॥ इदमेकाशीतिपदं वैदिकं वास्तुमण्डलम् । इति

वास्तोष्पते इति मंत्रेण पूजयेत् । पूजनाविस्तारस्तु मण्डप-पूजायां वास्तुशान्तौ लेखिष्यामि तन्मार्गेण वा अत्रापि पूजनं विधेयमिति वास्तुयागोवैदिकः ।

---

अथ तांत्रिकोवास्तुयागः तत्र प्रथमं हस्तमात्रां पूर्वापरायां दक्षिणोत्तरायतां वितस्त्युच्चां हस्तमात्रोच्चां वासम-चतुरस्रां समचतुःषष्टिपदात्मिकां पूर्ववन्नैर्ऋतेकोणे वास्तु-वेदिकां रचयेततां पञ्चवर्णैः वास्तुशास्त्रोक्तविधिना रंजयेद्दाक्षतपुञ्जैः पूरयेत् तत्राधोलिखितान्देवान् स्थाप-येत् अत्रापि पुण्याहवाचनगणेश, मातृकादिपूजनं, वास्तु-यज्ञात्प्राक्पूर्ववदेव कारयेत् ततः वास्तुवेदिकासमीपे आगत्य यजमानः प्राङ्मुख उदङ्मुखोवोपविश्यशुद्धासने

---

अथ तान्त्रिकमार्गेणापिचतुष्षष्टिपदं मण्डलं मेरावुक्तम् :—

अयतान्त्रिकमार्गे तु चतुःषष्टिपदे तथा । कोणयोः सूत्रयुगलं मध्ये ब्रह्माणमर्चयेत् ।

गौतमीयतंत्रे ।

विप्राशिषावेदघोषैः मङ्गलाचारपूर्वकैः । वास्तोर्मण्डलकं कुर्य्याद्यथाशोभंयथाविधि ॥

शारदायाम् :—

पूर्वापरायतंसूत्रं विन्यसेद्धस्तमानतः । तन्मध्येकिञ्चिदा-लम्ब्य मत्स्यौद्वौपरितोलिखेत् ॥ तयोर्म्मध्येस्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम् । द्वाभ्यां द्वाभ्यां तथाग्राभ्यां कोणेषु

आचम्य प्राणान् आयम्य देशकालादिकमुच्चार्यममामुक-कामनासिद्ध्यर्थं निष्कामनार्थम्वा कर्तव्यश्रीशतचण्डी-यज्ञाङ्गभूतमण्डपकुण्डवेदिकासु निर्विघ्नताप्राप्त्यर्थं तान्त्रिक मार्गेण वास्तुयागं करिष्ये। इतिसंकल्प्यततो वेदिका-कोष्ठेषु चतुष्षष्ठिषु मध्यचतुष्कोष्ठादारभ्यदेवान् संस्थापयेद्यथा।

प्रथमं मध्यकोष्ठचतुष्टये ब्रह्माणं तन्नाममंत्रेण प्रणव-सहितेनावाहयेत् अत्रावाहनादिसर्वं तान्त्रिकाविधिनैव कुर्यात्। आवाहनादिसर्वामुद्राश्चाग्रे वक्ष्यमाणाः प्रदर्शनीयाः ततः दिक्चतुष्के पूर्वादितः अर्य्यम्णं, विवस्वन्तं, मित्रं, महीधरमावाहयेत्। कोणार्धकोष्ठद्वन्द्वेषु, अग्निकोणात् आरभ्य, परितः सावित्रं, सवितारं, शक्रं, इन्द्रं, जयं, रुद्रं, रुद्रजयं, आपं, आपवत्सं यजेत्। पूर्वादिदिक्क्रमेण, शर्वम् पिलापिच्छिकाम्, पूर्वे गुहं, चरकीञ्च दक्षिणे अर्यमाणं,

---

संकरांल्लिखेत् ॥ मत्स्यमध्येस्थिताग्राणि तत्र सूत्राणि पातयेत्। चतुरस्रं भवेत्तत्र चतुःकोष्ठसमन्वितम् ॥ तत्पुनर्विभजेन्मंत्री चतुःषष्टिपदं यथा। ईशानाद्राक्षसंयावद्यावदग्नेःप्रभञ्जनम् ॥ एवं सूत्रद्वयंदद्यात्कर्णसूत्रं समाहितः।

इतिचतुष्षष्टिपदवास्तुमण्डलरचना प्रकारः :—

ब्रह्माणं पूजयेदादौ मध्यकोष्ठचतुष्टये। दिक्चतुष्के तु पूर्वादि यजेदार्य्यमनन्तरम् ॥ विवस्वन्तं ततो मित्रंमहीधर-

विदारीं च, पश्चिमे जृम्भकं पूतनां च, उत्तरे चतुष्षष्टिपदाद्बहिः परिधौ पूजयेत्। पूर्वादिकोष्ठार्द्धादारभ्यचतुर्दिक्षुअधोलिखितान् देवान् क्रमेण पूर्वान्त्यार्द्धकोष्ठपर्यन्तं यजेत् यथा प्राच्याम्, ईशानं पर्जन्यं जयन्तं, शक्रं, भास्करं, सत्यं वृषं, अन्तरिक्षम्, आवाहयेत्। दक्षिणे अग्निकोणार्द्धकोष्ठकार्द्धमारभ्य नैर्ऋत्यकोणगतकर्णसूत्रादर्द्धीकृत दक्षिणपार्श्व कोष्ठकेष्वष्टसु क्रमात् अग्निं पूषाणं, वितथं, यमं गृहरक्षकं, गन्धर्वं, भृङ्गराजं, मृगं च यजेत्।

---

मनन्तरम्। कोणार्द्धकोष्ठद्वन्द्वेषु ब्रह्मादि परितः पुनः॥ सावित्रं सवितारंच शक्रमिन्द्रजयं पुनः। रुद्रं रुद्रजयं विद्वानापंचापापवत्सकम्॥ तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु दैशिकः। शर्वं, गुहं, चार्यमाणं, जृंभकं, पिलपिञ्छिकाम्॥ चरकीं च विदारीं च पूतनामर्चयेत् क्रमात्। पूजयेद्दिक्षु पूर्वादि सार्धाद्यन्तपदेष्विमान्॥ अष्टावष्टविभागेन दैवतान् दैशिकोत्तमः। क्रमादीशान पर्जन्य जयन्ताः शक्रभास्करौ॥ सत्यो वृषान्तरिक्षौ च, दिशि प्राच्यां व्यवस्थिताः। अग्निः पूषा च वितथो यमश्चगृहरक्षकः। गन्धर्वोभृङ्गराजश्च मृगोदक्षिणदिग्गताः।

हयशीर्षपञ्चरात्रे :—

एकाशीतिपदं वास्तु गृहकर्मणि शस्यते। चतुष्षष्टिपदं वास्तु प्रासादेषु प्रशस्यते।

नैर्ऋत्य कोणगत कोष्ठकस्य पश्चिमार्द्धादारभ्य वायव्य कोणगतकोष्ठस्य पश्चिमार्द्धं यावत्क्रमेण निर्ऋतिं, दौवारिकम्, सुग्रीवं, वरुणं, पुष्पदन्तं, असुरं, शोषं, रोगंच, यजेत्। ततः उत्तरे वायव्यकोणगतकोष्ठकस्योत्तरार्द्धकोष्ठकमारभ्येशानदिक्स्थोत्तरीयकोष्ठकार्द्धंयावत् क्रमेण वायुं, नागं, मुख्यं, सोमं, भल्लाटं, अर्गलं, दितिं, अदितिं च यजेत् । पुनः पूर्वादिस्थापितदेवेष्वाद्यन्तदेवौ विहाय मध्यस्थ षड्देवान् तदधोवर्तिकोष्ठार्द्धादारभ्य कोष्ठचतुष्टयतदन्तार्द्धकोष्ठकपर्य्यन्तं षट्सु स्थानेषु पूर्वादिचतुर्षुदिक्षु

---

महाकपिलपञ्चरात्रे :—

अपरेष्वपि कार्य्येषु यागहोमादिकेषु च वास्तुमण्डलकं कुर्य्यात् सूचयित्वा समं गुरुः ।

मेरुतंत्रे :—

ब्रह्मस्थानं रक्तवर्णैर्दिशः पीतैः विदिक् सितैः ततोदिशस्तु हरितैर्विदिशः कृष्णवर्णकैः ॥ अरुणः परिधिः कार्यः सुन्दरं मण्डलं भवेत् । मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ॥ सितेन रजसा भूयस्तद्दिक्षु चतसृष्वपि । षट्कं सम्मार्ज्य रजसा रक्तेन परिपूरयेत् ॥ तयोर्मध्ये चतुर्दिक्षु कोष्ठ द्वादशसंख्यकम् । मार्जयित्वा हरिद्वर्णैर्यथाशोभं प्रपूरयेत् ॥ कोणेकोष्ठयुगंचापि पीतवर्णेन पूरयेत्। शिष्टानिच पदान्यत्र

यजेत् एवमेते त्रिपञ्चाशद्देवाः ( पञ्चचत्वारिंशद् ) चतुष्षष्टिपदे प्रयोक्तव्या । इति

ततोवेद्यामध्यप्रदेशे कलशं संस्थाप्य वास्तोष्पतिमूर्तिमग्न्युत्तारण; आवाहन प्राणप्रतिष्ठादिषोडशोपचारैः

---

यथाशोभं प्रकल्पयेत् ॥ विचित्राणि ततोमध्ये ब्रह्माणं सम्प्रपूजयेत् । इति

---

( गौतमीयतंत्रे )

उक्तानामपि देवानाम्पदान्यापूर्य पञ्चभिः । रजोभिस्तेष्वयोतेभ्यः पायसान्नैर्वलिं हरेत् ॥ पायसैर्मधुरैः सर्वान् सं यजेन्मधुरान्वितैः । तत्तद्द्रव्यैर्वा मतिमान् पूजयेद्दोषशान्तये ॥

( मेरुतन्त्रे )

व्रीहिमुद्गयवैः क्षौद्रघृतदुग्धप्लुतैः क्रमात् । अष्टोत्तरशतंवाष्टोत्तरविंशतिमेव वा ॥ प्रत्येकं तैर्हुनेद्द्रव्यैर्मन्त्रैस्तद्वच्चपायसैः । बलिं च तेषां कुर्वीत पायसैर्व्यञ्जनान्वितैः ॥ सर्पिस्तैर्दुग्धकदलीफलापूपादिसंयुतैः । एवं सिंहगते भानौ पूर्णायां प्रतिवासरे ॥ रुद्रगेहे वास्तुपूजायां मण्डपेषु समाचरेत् । न वालमरणं व्याधिर्भूतप्रेतादिकानि च ॥ न सर्प पीडा नान्योन्य कलहाद्यशुभानि च । पुत्रपौत्रधनारोग्यं पशुदासीसमृद्धिभाक् ॥ अरोगीविजयख्यातश्चिरं जीवति तद्गृहे । राजवेश्मसु सर्वत्र तथा च महिषीगृहे ॥ सचिवा-

पूजयेत् । ततस्तत्तद्देवोक्तद्रव्यैस्तत्तन्मन्त्रैश्च प्रत्येकमष्टोत्तरशतमष्टाविंशतिमेव वा हुनेत् । हवनान्ते दक्षिणमार्गे पायसव्यञ्जनादिभिर्वाममार्गे वक्ष्यमाणवस्तुभिश्च बलिं समर्प्पयेत् ( मण्डलाद्बहिः कोष्ठचतुष्टयंअतिरिक्तं निर्माय तेषु गुरुगणेशदुर्गाक्षेत्रपालानपि उक्तदिशा पूजयेत् अनन्तरं वेद्याः ऐशान्यां कलशं संस्थाप्यवरुणं यथाविधिपूजयेदिति राघवभट्टः ) अयं कोष्ठकान्तर्गतो विधिरप्रसिद्धः करणेचाप्रत्यवायः यदि करणेच्छास्यात्तदा मण्डलपूजनानन्तरं वास्तुपूजनात्प्रागेव कुर्य्यात् ।

---

मात्यसेनानि भवनेषु परेषु वा । विदध्यात्प्रतिवर्षन्तु प्रोक्तसिद्ध्यै तु दैशिकः ॥

न चेदुक्तान्यथारूपफलैः क्रोधोनिघ्नं भवेत् । भैरव क्षेत्रपालानां योगिनीनाञ्चिशेषतः ॥ वामाचारैः बलिः कार्यो महिषैर्वापि कुक्कुटैः । आराधितास्तु वामेन जायन्तेऽतिबुभुक्षिताः । देवता बलिमिच्छन्ति तद्धीनं घ्नन्ति साधकम् ।

वास्तुध्यानम् ( सोमशंभुतंत्रे )

आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् । स्मरेत्पूजासु कुड्यादिनिवेशे त्वधराननम् ॥ जानुनी कूर्परावंसे दिश्वि वात हुताशयोः । पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥

अत्र पैत्र्यामिति । प्रकृतिमण्डले पितृदेवताधिष्ठितायां रक्षोदिशि ननु दक्षिणस्यामिति ध्येयम् ।

( महाकपिलपंचरात्रेऽपि )

पूर्वमासीन्महाभूतः सर्वभूतभयङ्करः । स देवैर्निहतो भूमौ स

अथ सं ए काशीतिपदं ततश्चतुष्षष्टिपदं वास्तुमण्डलं प्रदर्शितं तद्रचना च प्रदर्शिता परन्तु चतुष्षष्टिपदके वास्तुमण्डले यायारेखा पूर्वापराः यायाश्चदक्षिणोत्तराः चतुष्षष्टिपदकं वास्तुमण्डलं निष्पादयन्ति तासां नामानि च न प्रदर्शितानि तानि चात्र प्रदर्श्यन्ते यथावास्तुमण्डलरचनात् प्राक् यजमानः शुद्धं शास्त्रविहितगुणोपेतंकर्म्मकाण्डक्रियादक्षमाचार्य्यं प्रार्थयेत् तत आचार्यः प्रोक्तलक्ष-

---

वास्तु पुरुषः स्मृतः ॥ यावद्भूमिस्थिरालोके तावद्वास्तवसुरः स्थिरः । संहारे तु लयं याति देवैः सर्वग्रहादिभिः ॥ विस्तारोऽस्य समन्ताच्च शतकोटिस्तु योजनम् । मण्डलोक्तदेवताध्यानानि तन्त्रान्तरे। उक्तानां सर्वदेवनां स्वरूपं च निगद्यते । अक्षमालां स्रुवं दक्षे वामे दण्डकमण्डलुम् ॥ दधानमष्टनयनं यजेन्मध्येऽम्बुजासनम् । सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिता ॥ कृतांजलिपुटा ऊर्ध्वं खड्गखेटकपाणयः । ब्रह्माणं संनिरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ॥ स्व स्व स्थानस्थिताश्चैव साधारणमुदाहृतम् ।

अथ देवतावर्णाः ।

मरीचिः श्वेतवर्णः स्याद्विवस्वानभ्रवर्णकः ॥ शातकुंभनिभोमित्रः कृष्णवर्णस्तु भूधरः । सविता नीलवर्णाभः सावित्रोधूम्रविग्रहः । इन्दुश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा ॥ रुद्रः प्रवालसदृशः पीतोरुद्रजयस्तथा ॥ आपोगोक्षीरधवलः आपवत्सोजपाद्युतिः । ईशानः क्षीरधवलः पर्ज्जन्योऽञ्जन-

णां सर्वतः परिशुद्धां वास्तुमण्डपपरिमाणावच्छिन्नां पञ्चगव्यैः संसिच्य तन्मध्ये शुक्लडोरकं प्रासार्य्य कनकशलाकया रत्नेन रजतशलाकया वा तदभावे पुष्पफलधान्यानामन्यतमेन वा शान्तां, यशोवतीं, कान्तां, विशालां, प्राणवाहिनीं, सतीं, वसुमतीं, नन्दां, सुभद्रां इति नवरेखाः प्रागपरायताः दक्षिणोपक्रमाः उदगपवर्गाः विलिख्य ततः हिरण्यां, सुव्रतां, लक्ष्मीं, विभूतिं, विमलां, प्रियां, जयां, कालां, विशोकां इति नवरेखाः दक्षिणोत्तरायताः पश्चिमोपक्रमाः पूर्वापवर्गगाः विलिख्य चतुःषष्टिपदं वास्तुमण्डलं निर्माय पञ्चरजोभिः पदानि परिपूर्य्य मध्येऽष्टदलं वक्ष्यमाणरीत्या निर्माय तन्मध्ये ब्रह्माणं ध्यात्वा आवाह्य तत् पदेषु तत्तद्देवताः पूर्वोक्ताः वक्ष्यमाण ध्यान रूपेण ध्यात्वा आवाह्य पूजयेत् इति मण्डलरचनाप्रकारेण मण्डलोत्पादिकानां रेखाणां नामानि प्रदर्शितानीति । ध्यानानि तु अधोलिखितानि बोध्यानि

---

संनिभः ॥ जयन्तोऽञ्जनसंकाशो महेन्द्रः श्यामलद्युतिः । आदित्यो रक्तवर्णः स्यात् सत्यकश्चित्रवर्णकः । वृषो बन्धूक पुष्पाभः कुन्दाभश्चान्तरिक्षकः । उद्यद्दिनकराभोऽग्निः पूषा रत्नाभसंन्निभः ॥ वितथश्चेन्द्र चापाभो विद्युद्वर्णो गृहक्षतः । निर्ऋतिः पावकाभश्च पीतो दौवारिकः स्मृतः ॥ सुग्रीवो नीलकण्ठाभः चन्द्राभः पुष्पदन्तकः । वरुणः स्फटिकाभाङ्गो भृङ्गाभश्चासुरो मतः ॥ यमश्चाञ्जन संकाशो गन्धर्वः पद्मरागवत् । भृङ्गराजश्च भृङ्गाभो मृगो जीमूतसन्निभः ॥ शोषश्चोत्पलसंकाशो

रोगश्चैवेन्द्रनीलवत् । वायुः कृष्णाभवर्णः स्यान्नागः श्वेतेन्दु-सन्निभः ॥ मुख्योमौक्तिकसंकाशोभल्लाटः श्वेतपद्मवत् । सोमः स्फटिकसंकाशोऽर्गलोरक्तोत्पलद्युतिः ॥ दितिः कुन्देन्दुधवला कपिला चादितिः स्मृता । चरकी शंखसदृशी विदारी पावक द्युतिः ॥ पूतनाहिमसंकाशा मेघाभा पिलपिञ्जिका ॥ खड्गं च पानपात्रं च क्षुरिकां कर्तरीं तथा । दधाना भीमरूपास्ताः राक्षस्यः परिकीर्तिताः ॥ सितोरक्तश्च पीतश्च कृष्णः स्कन्दा दिकाग्रहाः । वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः ॥ दधाना भीषणाः प्रोक्ताः ग्रहाः स्कन्दादिकाश्चते ।

---

बलिमन्त्राद्रव्यभेदाश्च ( गौतमीयमहाकपिलपञ्चरात्रयोः )

पायसौदनलाजैश्च युक्तं धूपप्रसूनकैः । अन्नादिभिश्च संयुक्तं माषभक्तादि-मण्डितम् ॥गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रशामय । गन्धादिशर्करारूपं पायसोपरि संस्थितम् संयुतंवा ॥ आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय । चन्दनाद्यर्चितं नाथ कर्पूरागुरुमण्डितम् ॥ विवस्वन् वैगृहाणेमं सर्वदोषं प्रणाशय । सगुडं पायसं नाथ पुष्पादिसुसमन्वितम् ॥ गृहाणेमं बलिं ह्यद्य मित्रशान्तिं प्रयच्छ मे । माषौदनं समांसं च गन्धादिक्षीरसंयुतम् ॥ गृहाणेमं महीभृत्त्वं सर्वदोषं प्रणाशय । एवं मध्ये तु सम्पूज्य ईशानादिबलिं हरेत् ॥

एतेनपूजायामाग्नेयादिक्रमेऽपिबलावीशानादिकमः अन्यत्रापि ।

ईशानाद्दक्षिणावर्तोबलिः सामान्यमाषितः । सर्वेषामपि वस्तूनां विशेषा पदनिर्णये ॥

क्वचित्पूजातु तथैवोक्ता ।

ईशकोणादिषु सुरान् पूजयेच्च विधानतः । ईशाणादिचतुष्कोणसंस्थितान् पूजयेद्बुधः ॥ इति ।

तथा । क्षीरखण्डसमायुक्तमपुष्पादिभिरलङ्कृतम् । गृहाणेमं बलिं पूज्य-

मापशान्तिम्प्रयच्छ मे ॥ दधीदं गुडसंमिश्रं गन्धादिभिः सुसंयुतम् । गृहाणेमंबलि वत्स विघ्नमत्र प्रणाशय ॥ पुष्पादिकुशपानीयंशर्करागुरुवासितम् । सावित्रवै गृहाणेमं शान्तिमत्र प्रयच्छ मे ॥ पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् । गृहाणेमं बलिं सूर्य विघ्नमत्र प्रणाशय ॥ शीतमन्नं तथा पुष्पं कुङ्कुमादिसु मण्डितं गृहाणेमं बलिं गृह्यं शक्रदेव नमोस्तु ते ॥ ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितम्। गृहाणेमं बलिं गृह्यमिन्द्रजय नमोस्तु ते ॥ पक्वोपक्वमिदं मांसं वस्त्रपुष्पादि-संयुतम्। गृहाणेमं बलिं गृह्यं रुद्रदेव नमोस्तु ते ॥ समांसं घृतसंपक्वं गन्धपुष्पादि-संयुतम् गृहाणेमं बलिं रुद्र जय स्वस्ति नमोस्तु ते ॥ रक्तपुष्पं समांसं वै रक्त-वस्त्रादि संयुतम् । विदारि वै गृहाणेमं रक्षोविघ्नं विनाशय ॥ पित्तरक्तास्थि-संयुक्तं रक्तगन्धादि मण्डितम् । गृहाणेमं पूतने त्वं रक्षोविघ्नं विनाशय ॥ सघृतं माषभक्तं च रक्तगन्धादिसंयुतम् । बलिं गृहाण शर्व त्वं रक्षो विघ्नं विनाशय ॥ मांसपुष्पादिसंयुक्तं माषभक्तोपशोभितम् । गृहाणेमं बलिं स्कन्द रक्षोविघ्नं विनाशय ॥ श्वमांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम् । अर्यमन् वै गृहाणेमं रक्षोविघ्नं विनाशय ॥ रक्तमांसौदनं मत्स्यं गन्धधूपसमन्वितम् । जृम्भकंच गृहाणेमं रक्षोविघ्नं विनाशय ॥

छागकर्णान्वितं मांसं वस्त्रगन्धादिसंय्युतम् । पिलिपिच्छे गृहाणेमं रक्षोविघ्नं विनाशय ॥ घृतेन साधितं मांसं वस्त्रगन्धादिसंय्युतम् । चरकि त्वं गृहाणेमं रक्षोविघ्नम् विनाशय ॥ सघृतं सास्रुतं भक्तं वस्त्रगन्धाद्यलंकृतम् । गृहाणेमं बलिं त्वीश वास्तुदोषापहारके । उत्पलं पायसैर्युक्तं वस्त्रादिकस-मन्वितम् । गृहाणेमं बलिं गृह्यं मेघराज नमोस्तुते ॥ पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम् । गृहाणेमं बलिं गृह्यं जिष्णुसुत नमोस्तुते ॥ ओदनं घृतसम्पूर्णं पञ्चरत्नादिमण्डितम् गृहाणेमं बलिं गृह्यं देवराज नमोस्तुते ॥ रक्तपुष्पयुतं भक्तं रक्तगन्धादिभिर्युतम् । गृहाणेमं बलिं गृह्यं भास्कराय नमोस्तुते ॥ वितानं धूम्रवर्णाभं गन्धाद्रिकसुशोभितम् । रक्तपुष्पं गृहाणेमं बलिं सत्य नमोस्तुते ॥ इदन्तु मांसभक्तं वै वस्त्रगन्धादिपूजतिम् । गृहाणेमं वृषबलिं वास्तुदोषं विनाशय ॥ इदं तु शाद्वलं मांसं नैवेद्यादिसुसंयुतम् । गृहाणेमं बलिं इदं व्योम शान्ति प्रयच्छमे ॥ सुवर्णं पिष्टकं चाथ वस्त्रगन्धादिभिर्युतम् । घृतान्वितं गृहाणेमं सप्तजिह्व नमोस्तुते ॥ क्षीरं लाजासमायुक्तं गन्धपुष्पादि

संयुतम् । गृहाणेमं बलिं हृद्यं पूषदेव नमोस्तुते ॥ मांसौदनं गन्धमाल्ययुतं वस्त्रादिभूषितम् । वितथेश बलिं गृह्णन् वास्तुदोषं विनाशय ॥ मत्स्य मांसयुतं भक्तं गन्धपुष्पाद्यलंकृतम् । यमराज गृहाणेमं बलिं शान्तिं प्रयच्छमे ॥ पक्वमांसौदननवनीतं वस्त्रादिमण्डितम् । गृहाणेदं प्रीतिकरं गृहरक्ष नमोस्तुते ॥ नानागन्धसमायुक्तं रक्तगन्धादिभिर्युतम् । बलिं गृहाण गन्धर्व सर्वदोषं प्रणाशय ॥ इमान्तु शाकुनीं जिह्वां मत्स्यसक्तोपरिस्थिताम् । गृहाणेमं भृङ्गराज । बलिं शान्तिं प्रयच्छमे ॥ एवं तिलघृतोपेतं गन्धपुष्पादिभिर्युतम् । गृहाणेमं बलिं हृद्यं मृगदेव नमोस्तुते ॥ शर्करामण्डितं खण्डं वस्त्रगन्धाद्यलंकृतम् । प्रीतो बलिं गृहाणेमं रक्षोराज नमोस्तुते ॥ चन्दनागुरुकाखण्डं वस्त्रगन्धादिभिर्युतम् । गृहाणेमं बलिं हृद्यं दौवारिक नमोस्तुते ॥ इदं तु पायसं नाथ गन्धपुष्पादिभिः श्रितम् । सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छमे ॥ यवास्वलंकृतं दुग्धं भक्तोपरिसमन्वितम् । गृहाणेमं बलिं हृद्यं जलदेव नमोस्तुते ॥ माषभक्तं कुशस्तम्बं घृतगन्धादिसंयुतम् । पुष्पदन्त गृहाणेमं वास्तुदोषं प्रणाशय ॥ मधुना स्नापितं पिष्टं गन्धाद्यैरुपशोभितम् । बलिं गृहाण सुरेन्द्र सर्वदोषं प्रणाशय ॥ घृतं चान्नसमायुक्तं कर्पूरादिसमायुतम् । गृहाणेमं बलिं शोष सर्वशान्तिं प्रयच्छमे ॥ यवजं तण्डुलं नाथ गन्धपुष्पादिशोभितम् । गृहाणेमं बलिं रोग सर्वदोषं प्रणाशय ॥ सघृतं मोदकं चेदं वस्त्राद्यैरुपशोभितम् । गृहाणेमं बलिं हृद्यं मृगवाह नमोस्तुते ॥ इदन्तु कृसरान्नं मे दुग्धगन्धादिसाधितम् । पातालेश गृहाणेमं विघ्नमत्र प्रणाशय ॥ नारिकेलोदकं भक्तं पीतवस्त्रादिसंयुतम् । गृहाणेमं बलिं मुख्य वास्तुदोषं प्रणाशय ॥ दधिगन्धादिभिर्युक्तं पीतपुष्पसमन्वितम् । बलिं प्रगृह्यतां सोम सर्वदोषं प्रणाशय ॥ ओदनं घृतसंमिश्रं गन्धपुष्पसमन्वितम् । गृहाणेमं बलिं गृह्य भल्लाटक नमोस्तुते ॥ माषान्नन्तु घृताभ्यक्तं गन्धपुष्पादिमण्डितम् । गृहाणेमं बलिं हृद्यमर्गलाख्य नमोस्तुते ॥ क्षीरखण्डसमायुक्तं नानापुष्पोपशोभितम् । दैत्यमातर्गृहाणेमं सर्वदोषं प्रणाशय ॥ मैरिकां मधुसंमिश्रां वस्त्रगन्धादिसंयुताम् । गृहाणेमं बलिं गृह्य देवमातर्नमोस्तुते ॥ स्वर्गपातालमर्त्येषु देवतावास्तुदेवताः । गृह्णन्त्विमं बलिं दिव्यं तुष्टा यान्तु स्वमन्दिरम् ॥ मातरांभूतवेतालाः येचान्ये बलिकांक्षिणः । विष्णोः पारिषदाये च तेऽपि गृह्णन्त्विमं बलिं ॥ पितृभ्यः क्षेत्रपालेभ्यो बलिन्दत्वा प्रकामतः । प्रभाताद्दुकमार्गस्य कुंकुमपुष्पादिभिर्यजेत् ॥

ततोयथाविहितं बलिन्दत्वा पुनस्तान् समभ्यर्च्य यथाशक्ति जप्त्वा स्तुत्वा प्रणम्य विसर्ज्जयेत्। यद्यनेक-दिनसाध्यं कर्म तदा कर्मसमाप्तौ विसर्जनं कार्य्यम् मण्डपारंभकर्म्माणि तु विसर्जनं कृत्वा मण्डपरचनामारभेत्। विसर्जनमन्त्रोयथा, यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीं इष्टकामसमृद्ध्यर्थं पुनरागमनायच ॥ इति एवं देवान् विसृज्य मण्डपभूमिखननार्थं गृहारंभकर्माणि गृहमित्यादि-निर्माणार्थं तथा वास्तुपूजनानन्तरं वास्तुकोष्ठखननार्थं च स्वर्णकुद्दालं प्रपूज्य खनितृपुरुषं विश्वकर्मधिया पूजयेत् स्वर्णकुद्दालं तु ॐ स्वर्णकुद्दालायनमः इति सर्वोपचारैः सम्पूज्य ततः विश्वकर्मरूपं खनितृपुरुषं पूजयेत् तद्ध्यानं यथा द्विभुजः पीतदेहस्तु जटाधारी कजासनः। विश्वकर्मा सदागौरो ज्ञानमुद्राक्षसूत्रभृत् ॥ विश्वकर्मन् जगद्व्यापिन्

---

प्रयोगसारे :—

वास्तुशेषः क्रियापूतः सर्वैरक्षाविधानकृत्। भूतिं प्रीतिकरं चास्मिन् दिशांबलिमुदीरयेत् ॥ दिक्पालपरिषत्सर्वभूतानुद्दिश्यनामभिः। पूजाविसर्जनान्तो यः सविश्व योदिशोबलिः ॥ दध्यम्बुरजनी पुष्प लाजसक्तु तिलान्धसा। द्रव्येण वितरेद्दिश्यं बलिं दिक्क्रमयोगतः ॥ सुराणां तेजसां चैव प्रजानां रक्षसामधि। तथा जलानां प्राणानां नक्षत्राणां च तत्पुनः ॥ विद्यानामधिपानां च नान्यथोक्तान् बलिं हरेत्। स वाहन पदं प्रोक्त परिवारायशक्तये ॥ तत्पार्षदेभ्यश्च ततः सर्वेभ्य इति संयुतः। भूतेभ्यश्च क्रमाद्भूयः प्रादक्षिण्यात्क्षिपेद्बलिम्। द्विषत् पिशाच वेताल रक्षोरक्षार्थिनामिह। दिशां बलिर्विशेषेण सर्वसम्पत्समृद्धिदः ॥ वास्तौ गृहप्ररोहे भूतद्रोहे गृहप्रवेशे च। वितते च शान्तिहोमे दिशाम्बलिः सिद्धये प्रयोक्तव्य इति।

वाममार्गीणां मतप्रदर्शनार्थमेवात्र प्रदर्शितोऽयं प्रकारः।

संसारसृष्टिकारक। अत्र कुद्दालहस्त त्वं विश्वकर्मन्नमोस्तुते। इति ध्यात्वा कुद्दालहस्ताय विश्वकर्मस्वरूपाय खनितृपुरुषाय नम इति गन्धाक्षतैः सम्पूज्य प्रार्थयेत् । एकाशीति कोष्ठ-भेदे वास्तौ विश्वात्मकर्मक । कुद्दालंगृह्यतामत्र खननं कुरु साम्प्रतम् इति तद्धस्ते कुद्दालं दक्षिणां च दद्यात् ।

ततः पृथिवीं गन्धाक्षतैः सम्पूज्य प्रार्थयेत् यथा कुद्दालदारितैरत्र कीटकोटिक्षतैरपि । क्षम्यतां पृथिवीदेवि विष्णुस्थापनहेतवे ॥ अत्र विष्णुरिति उपलक्षणं तत्र मण्डप गृह, हर्म्य, प्रासादिनिर्माणे तत्तन्नाम च गृह्णीयादिति, एवं पृथिवीं सम्प्रार्थ्य विश्वकर्मात्मक खनितृपुरुषोवास्तुपुरुषस्य कक्षान्तरे खननं कुर्य्यात् इतरत्रखनने तन्त्रसारे दोष दर्शनादिति ॥

---

उक्तं च तन्त्रान्तरे

भद्रं मुहूर्तमाश्रित्य खन्यतां वास्तुकोष्ठकम् । स्वर्णकुद्दाल-रूपत्वं भूमेः खननकर्मणि ॥ विश्वकर्मायुधोनित्यं नमस्ते चास्त्रमूर्तये । पुनश्च—द्विभुजः पीतदेहस्तु जटाधारी-कजासनः ॥ विश्वकर्मा सदा गौरो ज्ञानमुद्राक्षसूत्रभृत् ॥ विश्व-कर्मन् जगद्व्यापिन् संसारसृष्टिकारक । अत्र कुद्दालहस्तत्वं विश्वकर्मन्नमोस्तुते ॥

पृथिवीप्रार्थना ( तंत्रसारे )

कुद्दालदारितैरत्र कीटकोटिक्षतैरपि । क्षम्यतां पृथिवी देवी विष्णुस्थापनहेतवे ॥

# अथ मण्डपवेदिकुण्डस्थण्डिलादि रचना प्रकारः ॥

तत्र मण्डपस्यप्राधान्यात् प्रथमं मण्डपस्याधममध्य-मोत्तमव्यवस्थया यादृशमण्डपरचनाभीप्सिता भवेत्त-दुन्मितां भूमिं शोधनकृतादिगभिप्रायेण समन्तात्समां चतुरस्रां विदध्यात् तत्प्रकारः- प्रथमं दिक्शोधनसमये पूर्वादिदिक्चतुष्टये तत्तन्नामोपलाञ्छितेषु विन्दुषु शङ्कवोनिवे-श्यास्ततः मण्डपविस्तारमितमजरत्सूत्रंद्विपाशंमध्याङ्कितं विधायसूत्रस्यैकं प्रान्तं पूर्वशङ्कौ द्वितीयं दक्षिणशङ्कौ बध्नीयात । तत्पश्चात् सूत्रमध्याङ्कितं चिन्हमग्निकोणदेशे चाकर्षयेत् यत्र चिन्हं पतेत् तत्रैवाग्नेयीदिगिति । एवं दक्षिणपश्चिमशङ्कुभ्यान्निर्ऋतिः पश्चिमोत्तरशङ्कुभ्याम्वाय-वीदिक् । उत्तरपूर्वशङ्कुभ्यामैशानीदिगिति चतस्रोविदिशः स्थिराः सम्पद्यन्ते इत्थं कृत्वा मण्डपार्थं यतेत् ॥ मण्डपस्य तु सर्वकर्माङ्गतया विहितत्वात् विहितेषु तीर्थादि-स्थानेषु समीकृतायां भूमौ दीर्घविस्तारयोर्दशहस्तोद्वादश हस्तोवा कनिष्ठः चतुर्दशहस्तः षोडशहस्तो वा मध्यमः अष्टादशादिहस्तः श्रेष्ठोमण्डपः कार्यः । तुलादाने तु सर्व समावेशाय विंशतिहस्तएवेति विशेषः । इति सर्वसाधारणो मण्डपः । क्वचित्षोडशहस्तमण्डपोप्युत्तमपक्षे गृहीतः ।

कुण्डमण्डपनिर्णयादिग्रन्थेषु अनेकमानमण्डितामण्डपाः दृश्यन्ते तेचानेकशाखीयाश्च परन्तु सर्वथा स्वशाखीयप्रमाणास्तथा यागसम्बन्धिसर्ववस्तुसन्निवेशयोग्यपरिमाणा मण्डपा विधेया इति। ब्राह्मणादिवर्णसापेक्षाश्चाप्युत्तमाद्यधमान्ता मण्डपास्सान्ति ते च कारिकायां स्पष्टाः कारिकायां सर्वप्रकारमण्डपनिर्माणवचनानि पृथक् २ निवेशितानि सान्ति इति।

---

शारदायाम् :—

नक्षत्रराशिवाराणामनुकूले शुभेहनि। ततोभूमितले शुद्धे तुषाङ्गारादिवर्ज्जिते॥ पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्। पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वामिनां वरम्॥

कथं समचतुरस्राभूमिः स्यादिति ( मण्डपकुण्डसिद्धौ )

दिगन्तशङ्कुद्वयगं द्विपाशं विस्तारतुल्यं तु गुणं दलांके। कोणे प्रकर्षेदिति वेदकोणेष्वेवं चतुष्कोणमतीवसाधु॥

---

अधमादि मण्डपमानम् ( मण्डपकुण्डसिद्धौ )

दशसूर्य्यकरोन्मितोऽधमः स्यादिनशक्रप्रमितैः करैस्तु-

---

अत्र यथाश्रुत व्याख्याने कुण्डाष्टकवेद्यृत्विक्प्रचारस्थलाद्यनुपपत्त्या पञ्चभिः सप्तभिरित्यनेन द्वादशहस्तः पञ्चभिर्नवभिरित्यनेन "चतुर्दशहस्तः" सप्तभिर्नवभिरित्यनेन च षोडशहस्तोमण्डपः इति पदार्थादर्शे। एतेन द्वादशहस्तः कनीयान् इति।

मध्यः । धृतिभूपकरोन्मितोवरीयान् नखहस्तोप्ययमण्डपस्तुलायाम् ॥

अथ वर्णव्यवस्थयापिमण्डपमानं ( कैश्चिदुक्तम् )

नख, भूप, सूर्य, दश,हस्तमण्डपो द्विजतोबुधैर्निगदितोऽथवा वरः । अधमान्वयस्य वसुहस्तमण्डपः करिदिक्करो गुरुतरःस्मृतोऽपरैः

कुण्डार्णवे :—

कनिष्ठतोमण्डप अष्टहस्तो दाहोथवाद्वादशहीनहस्तः । थानन्तरे मण्डपहस्तबारा चौदाथवा षोडशहस्तबारा ॥ सोलाथवाष्टादशबीसहस्त वा बीसचौबीसहितः प्रशस्तः ॥

अथद्विमुखदशमुखशतमुखकोटिहोमेषु मण्डपपरिमाणमाह ।

द्विमुखेन्दशानन उक्ता करपञ्चविंशतिः । द्विगुणापि चतुर्गुणान्यथा नहि कुण्डानि विशंतिमण्डपे ॥

( कुण्डतत्वप्रदीपे ) अधममध्यमोत्तमामण्डपाः :—

वसुदिग्रविशक्रकलाधृतिभिः करमानभवाँल्लघुमध्यवरान् । इह मण्डपमध्यगुणान्विबुधाः कथयन्ति यथायतविस्तृतिभिः ॥ करविंशतिजं निजहस्ततनं दशनैः परमोत्तमसत्रकरैः । भुवउच्छ्रितिसद्धं करामथवैककरां परितः सुसमां च सृजेत् ॥ त्रिषु वक्रचतुष्कमिहक्रमशः ककुबन्तरतः करयुग्मततम् । चतुरष्टमिताङ्गुलिकृच्युगुच्छ्रितिरत्रहि मंडपसंप्रमिता ॥ करजकरमितोवा मंडपोब्राह्मणानां नृपरविकरतुल्यौ भूपतीनां विशां च रविदशकरतुल्यः पादजानां व्यवस्था करिकरमि-

एवं स्वस्वसमावेशयोग्यं मण्डपभूमानमुत्तमादिव्यवस्थया परिकल्प्य हस्तार्द्धोच्चं हस्तोच्छ्रायं वा इष्टकादि निर्म्मितं समचतुरस्रं मण्डपस्थलं सुचतुरशिल्पिभिर्निर्माय तत्र प्रथमं प्राक् पश्चिमायतैर्दक्षिणोत्तरायतैश्च चतुर्भिश्चतुर्भिः सूत्रैः समान्तरालैस्तुल्यदीर्घायामाः मण्डपस्थलस्य नवखण्डा विधेयाः । तेषां च मध्यमखण्डे हस्तमात्रोन्नता अपक्वेष्टकादिभिर्वेदिर्विधेया । सर्वेष्वपिखण्डेषु सूत्रद्वय-

---

तजचुः प्राकृतानां तु केचित् ॥

परशुरामः :—

मण्डपोष्टगुणः कुण्डात् कुण्डं होमानुमानतः । होमोजपदशांशेन जपः कर्तुरपेक्षया ॥ विप्राणां मंडपः कार्य्योहस्तैर्विंशतिसंमितैः । राज्ञांषोडशभिर्हस्तैः हस्तैर्द्वादशभिर्विशाम् ॥ शूद्राणां दशभिर्हस्तैरष्टभिर्हीनवर्णिनाम् । सर्वेषां सर्ववर्णैस्तु कार्याः कार्यानुसारतः ॥ कनिष्ठोदशभिर्हस्तैः मध्योद्वादशभिः करैः ॥ श्रेष्ठः षोडशभिर्हस्तैर्लघुरुद्रादिषु त्रिषु ॥ चत्वारिंशत्करोभूरि पञ्चधीकेनविभ्रुता । पञ्चाशत्करविस्तारोविपुलोविपुलस्तया ॥ इति ॥

( सिद्धान्तशेखरे )

स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम् ।

( महाकपिलपंचरात्रे तु )

उच्छ्रायो हस्तमानं स्यात्सुसमं च सुशोभनम् ।

संलग्नतावशेन चतुष्कोणतामापन्नेषु षोडशसु स्थानेषु यज्ञकाष्ठोद्भवाः स्तंभास्तथा निवेश्याः यथातदारोपणेन सर्वएवखण्डाश्चतुस्तंभवत्वेन प्रतीयेरन् । तथाच वेदिकोण चतुष्टये चत्वारः वाह्यपंक्तिषु च कोणस्थानेषु द्वादशस्तंभा इत्येवं षोडशस्तंभनिवेशनम् । वेदिकोणस्तंभाश्च अष्टहस्त-प्रमाणाः अष्टादशादिहस्तमण्डपेतु मण्डपार्द्धप्रमाणाः कार्याः । अन्ये तु द्वादशस्तंभाः सर्वत्र पंचहस्तप्रमाणाः । षोडशानामपि तेषां स्व स्व पंचमांशेन भूम्यन्तः प्रविष्ट मूलतया निधानम् । शिरसि चूडा च कार्या ।

तेषां चूडासु च उभयत एकैकरन्ध्रयुक्तानि बलिका-ख्यानि द्वात्रिंशत्काष्ठानि देयानि । यथाचैकेकया बलि-कया प्रान्तयोः स्थितरन्ध्रद्वयेन द्वयोर्द्वयोरुपरि चूडायां योजनं भवेत् तथा ग्रथ्नीयात् । एवञ्च प्राच्यादिषु दिक्षु प्रत्येकं तिसृभिस्तिसृभिर्बलिकाभिः स्तंभचतुष्टयग्रथनेन द्वाद-शसु स्तंभेषु द्वादशबालिका देयाः ।

---

एवं वितस्त्युच्छ्रायहस्तोच्छ्राययोरेववचनानि सर्वत्र मण्डपनिर्माणग्रन्थेषु दृश्यन्ते । यथा ( मण्डपकुण्डसिद्धौ )

उच्चां भूमिं मण्डपस्य प्रकुर्याद्धस्तोन्मानामर्द्ध हस्तोन्मितांवा । मध्ये भूमिं मण्डपेनोन्मितां च त्यक्त्वा कुर्यान्मण्डपस्थे-द्द्वितीयः ॥

मण्डपस्थलस्योच्छ्राये वितस्ति हस्तयोर्विकल्पः स्यात् परन्तु मध्यवेदि-कोच्छ्रायस्तु सदैव हस्तोन्मित एव कार्यः सर्वसम्मतत्वात् । तस्य विस्तारायामयोर्मण्डपस्य विस्तारायामभेदात्प्रभेदः इति ।

तथा वेदिकोणस्थस्तंभाभ्यां चतसृषु दिक्षु तथैव ग्रन्थने चतस्रः इत्येवं षोडशवलिकाः स्वस्वखण्डप्रमाणा एव देयाः।

ततो वेदिकोणस्थस्तंभस्य प्रत्येकं तत्समसूत्रस्थवाह्यपंक्तिस्थस्तंभाभ्यां पूर्ववच्चूडयोर्योजनाय द्वे द्वे वलिके तथा देये यथा वेदिवहिःकोणस्थस्तंभस्य वाह्यवन्हिकोणोत्तरस्थस्तंभेन वाह्यवन्हिकोणस्थस्तंभेन च योजनं भवति। एवमन्येषामपि वोध्यम्। ततोवेदिकोणस्थस्तंभैः वाह्यकोणस्थस्तंभानां योजनार्थं कर्णाकाराश्चतस्रोवालिकास्तत्तच्चूडासु देयाः।

# अथ स्तंभानिवेशनम्

तत्कोणे पञ्चहस्तान्दृढतरसरलान् सारदारुप्रभूतान्। स्थूलान्स्तंभान् सुतुल्यानपिशिखिहरिदारंभतोगर्तमध्ये। त्रेधाभक्तेन्तराले युगलयुगलतोरोपयेत्पंचमांशैः। वेद्याः कोणेष्वपीत्थं निखनतु चतुरष्टादिहस्तान्समंतात्॥

बलिकानिवेशनविधीरत्नावल्याम्:—

निधेयास्तंभानामुपरि शुभचूडासु बलिकाः। कृतौ वा कर्णैतावहिरपिसमस्ताः सुसरलाः। प्रतीचीपूर्वस्था यमदिशिहरिस्थाश्चबलिकाः। विधेयाः कोणस्थामखविटपिजाः साधुमतिनो॥

कुण्डरत्नावल्यामपि:—

ततोवेदिकोणस्थस्तंभानामुपरि शिखराकारतासम्पादिकाश्चतस्रोबलिकादेयाइत्येवं षोडशबलिकाभवेयुः एवं च यावत्प्रमाणेनोभयोर्वालिकयोर्योजनं शिखरतां गच्छेत्तावता प्रमाणेन सम्मितास्ताः शिखरोत्पादिकाबालिकाश्चकार्याः नहितासामन्यत्प्रमाणं कुहचिद्दृष्टं प्रत्यये गतमिति ।

अन्तस्तंभमुखेषु ताश्च विक्कुप्प्रान्ताश्चतस्रस्तिरश्चिना ऊर्ध्वमुखानिधेहि सुदृढेकाष्ठे तु कूटाह्वये । सूर्य्याश्चापिबहिः स्थितेष्विनमितस्तंभेषु पूर्वापरादेया द्वादशदक्षिणोत्तरगताः दिक्तः कृशानोः स्थिताः ॥

यज्ञवृक्षाश्च ( मण्डपकुण्डसिद्धौ ) :—

वृक्षःस्याद्यज्ञियोवेणुः क्रमुकस्तंभकर्म्मणि । अन्ये विशुद्धवृक्षा वाभवेयुर्नान्यभूरुहाः ॥

मण्डपाच्छादनार्थं ( शारदायाम् )

नारिकेलदलैर्वाह्यै श्छादयेत्तत्समं ततः ।

मेरुतंत्रे :—

नारिकेलदलैर्वंशैः कटैराच्छादयेत्पुनः । झञ्झामारुतवृष्ट्यादिभयं न स्याद्यथातथा ॥

वास्तुशास्त्रेपि :—

कटैः सद्भिश्चसंच्छाद्या विजयाद्यास्तुमंडपाः ।

मण्डपस्तंभनिवेशनं तु आग्नेयादिक्रमेण कार्यम् :—

स्तंभोच्छ्राये शिलान्यासे सूत्रयोजनकीलके । खननावटसंस्कारमारंभोवह्निगोचरे ॥

ततोमण्डपस्य चतुर्दिक्षु द्वयोर्द्वयोःस्तंभयोर्म्मध्ये वाह्यपंक्तिस्थमध्यमण्डपस्य मध्यभागेषु चत्वारि द्वाराणि कार्य्याणि तानिचाल्पेमण्डपे द्विहस्तकरविस्तृतानि मध्येमण्डपेचतुरङ्गुलाधिकाद्विहस्तमितानि श्रेष्ठे अष्टाङ्गुलाधिकद्विहस्तविस्तृतानीति । चतुर्हस्तदीर्घाभ्यां द्वाभ्यां स्तंभाभ्यामुपरिस्थया पूर्वोक्तविस्तारविशेषयुक्तया एकैकया बालिकया प्रत्येकं युक्तानि कर्य्याणि । स्तंभादिकं सर्वमेव सारदारुभवं कार्य्यम् । प्रतिद्वारं द्वौद्वौ कुंभौ स्थापयेत्कोणेष्वेकैकमिति विशेषः ततोनारिकेलदलैर्वंशादिभिर्द्वारवर्जं सर्वत्र मण्डपमाच्छादयेत् । दर्पण, चामर, वस्त्रादि-

---

द्वाराणिचत्वारि दिगन्तभागे द्विहस्तविस्तारयुतानि मध्ये। वेदाङ्गुलैरष्टभिरेधितानि कनिष्ठमध्योत्तममण्डपेषु ॥

कुम्भाविति :—

द्वारे द्वारे घटद्वन्द्वं सरक्ताभं सपल्लवम् । सर्वौषध्यर्थसंयुक्तं सवस्त्रं चन्दनान्वितम् ॥ मण्डपे कलशौ द्वौद्वौ द्वारेद्वारे निवेशयेत् । प्रतिकोणे तथैकैकं स्थापयेत्कलशं शुभम् ।

इति विधानपारिजाते ।

वंशैस्ततश्चसरलैः शुकटैरथापितं नारिकेलकदलैरथवापिपत्रैः । स्थूणासुचामरदर्पणकैरथापि संभूषयेत्तु सुपटैरथघण्टकाभिः * द्वारवर्जमिति * मध्यत्रिभागशिखरं रुचिरं विधायप्रच्छादयेद्दृढकटैः क्रमुकैः सुवंशैः । सद्वारवर्जितजनाश्रयमेवमत्र स्तंभान्विचित्रवसनैरपि मंडपश्चः ॥

भिस्तथा देवताचित्रादिभिश्च षोडशस्तंभान् मण्डपभि-त्तीश्च समन्ताद् एवं भूषयेद्यथा सर्वतोमण्डपः सुमनोहरः देवसदनामिवरमणीयकः देवताभक्त्युपपादकोभवेदिति द्वार-देशेकदलीस्तंभादिशोभां विदध्यात् । ततोमण्डपाद्वाह्ये द्वारसम्मुखे हस्तान्तरितेदेशे तोरणाख्यानि वाह्यद्वाराणि कुर्य्यात् । तानि चाल्पे मण्डपे पञ्चहस्तोन्मितानि मध्यमे षट्करोन्मितानि उत्तमे सप्तकरोन्मितानि स्वस्वप्रमाणार्द्ध-विस्तृतानिकुर्य्यात् । सर्वाणि च तत्तत्प्रमाणयोःस्तंभयोरुपरि स्वस्वार्द्धप्रमयैकैकया वलिकया युक्तानि कार्य्याणि । वलिको-परि शास्त्रोक्तं काष्ठं देयम् । तोरणानि च तत्तत्काष्ठजा-तानि सारदारुभवानिवेतिपञ्चरात्रे ॥ शक्तिशिवयागे तु चतुर्षु फलकेषु शूलाकृतयः कीलादेयाः ते चाल्पे मण्डपे नवाङ्गुलदीर्घा मध्यमे एकादशांगुलदीर्घाः उत्तमे त्रयो-दशांगुलदीर्घाः स्वस्वतुरीयांशविस्ताराः फलकजातीयकाष्ठ-विशेषा अल्पादिभेदेन द्वित्रिचतुरङ्गुलप्रमाणेन फलकमध्य-

तोरणानि :—

न्यग्रोधोदुम्बराणां चलदलजटिनां निस्त्वचं सत्वचं वा स्तम्भद्वन्द्वं सुरम्यं कुगुणपरिधियुक्दिक्परीणाहयुक्तम् । बाणैः षड्भिश्चहस्तैश्चरणपरिमितैर्युक्तमुक्तं गुणाढ्यं भूमौ गर्ते निवेश्यं निजकरलवतोऽखण्डितैःपण्डितैस्तत् ॥ सारदारुभवान् स्तम्भान्

भागानिविष्टमूलेनाधःस्थकीलकान्तरेणोपलक्षिताः कार्य्याः। वैष्णवयागे तु अल्पादिभेदेन दशद्वादशचतुर्दशाङ्गुलदीर्घाः स्वस्वतुरीयांशविस्ताराः निवेशनार्थं यथाक्रममधोभागे द्वित्रिचतुरङ्गुलप्रमाणकीलकान्तरेण सहिताः प्राच्यादिप्रादक्षिण्येन शङ्खचक्रगदापद्माकृतयः कीलकाः स्थाप्याः। ततः पञ्चवर्णवितानेन विचित्रवस्त्रैः सफलकदलीस्तंभैः क्रमुकनारिकेलादिफलैर्विविधभोज्यैः दर्पणचामरादिभिरवतारचित्रादिभिश्च मण्डपं भूषयेत् ततो द्विहस्तनिखातस्थ

---

दृढान् कुर्य्यादृजून् समान् ( इति पंचरात्रे ) अलाभेत्वेकमेवैषां सर्वाशासुनिवेशयेदित्यपि पंचरात्रे ।

शूलानीति ।

यद्वादैर्घ्येङ्गुलीभिर्नवभिरभिमितान् पादविस्तीर्णताढ्यान् द्व्यङ्गुष्ठं संनिखातान् समशिखरयुतान्वक्रशृंगद्वयान्तः । स्वल्पे मध्येऽथ पूज्ये द्विकनिगममितैरङ्गुलैर्वृद्धिमिष्टा खातस्यैकद्विवृद्ध्या विनिखननमपि स्पष्टमाचष्टसर्वः ॥

वैष्णवयागे विशेषः ।

कीलान्मध्ये समन्तात् फलकसमतरून् स्तंभमाशांशमानान् स्वाम्भोध्यंशप्रकीर्णान् दशरथ चरण श्रीगदापद्मचिन्हान् । विष्णोर्यागेऽथशैवे त्रिषु च करमितान्पादविस्तारभाजो वस्वंशाढ्यो च खाते विनिखनतु तथा शूलझषणत्र्यांकान् ॥

विविधभोज्यैरिति

सफलदलकपूगैर्नारिकेलद्रुमोत्थैः क्रमुकतरुभवैर्वा कादलै-

दशहस्तमितवंशस्योपरि स्थितान् पंचहस्तदीर्घान् द्विहस्त-मितविस्तारान् चतुष्कोणाकारान् गैरिकादिभिर्लिखितस्व-स्वदिक्पालादिवाहनान् प्राच्यादिक्रमेणाष्टौ पीतादिवर्णकान् पटनिर्म्मितध्वजान् दद्यात्। यथा प्राच्यां पीतवर्णे ध्वजे स्वदिक्पतीन्द्रस्यवाहनमैरावतम्। आग्नेय्यां रक्तवर्णे ध्वजे अग्निवाहनं छागम्। याम्यायां कृष्णवर्णे ध्वजे यमवाहनं महिषम्। निर्ऋत्यां नीलवर्णे निर्ऋतिवाहनं सिंहम्। वारुण्यां श्वेतवर्णे ध्वजे मत्स्यम् वरुणवाहनम्। वायव्यां धूम्रवर्णे ध्वजे वायुवाहनं हरिणम्। सौम्ये श्वेतवर्णे कुवेर वाहनमश्वम्। ऐशान्यां श्वेतवर्णे ईशवाहनं वृषभम्। क्रमाल्लिखित्वा दद्यात्। तत उपरोक्त दिक्पाल ध्वजवर्णानुरूपाः अष्टौपताकाः देयाः। ताश्चापि-गैरिकादिभिर्लिखित वज्राद्यस्त्रयुक्ताः कार्य्याः। ताः सप्तहस्तदीर्घा एकहस्तविस्तारास्त्रिकोणाकारा वस्त्रनिर्मिता द्विहस्तनिखातस्थ दशहस्तवंशस्योपरिस्थिताः कार्याः। यथा प्राच्याम् पीतपताकायामुक्तदीर्घविस्तारनिर्मितायाम्वज्रमिन्द्रस्य। आग्नेय्यां रक्तवर्णायां शक्ति-

---

दर्पणैश्च। विविधवसनबन्धैश्चामरैर्घण्टिकाभिर्विविधरचितमाल्यैर्भूषयेत्सर्वयूपान्॥ चन्द्राटोपैश्चामरैः पट्टकूलैः पौष्पस्रग्भिर्दर्पणैर्घण्टिकाभिः। खाद्यैर्भक्ष्यैः सत्फलैः पूरिभेदैर्भूषां कुर्यान्मण्डपे पल्लवैश्च॥

मग्नेः। याम्यायां कृष्णायां दण्डं यमस्य। नैर्ऋत्यां नीलायां खड्गं राहोः। वारुण्यां श्वेतायां पाशं वरुणस्य। वायव्यां धूम्रायामङ्कुशं वायोः। सौम्यायां श्वेतायां गदां कुवेरस्य। ऐशान्यां श्वेतायां त्रिशूलं शिवस्य। सर्वत्र पताकायामित्यध्याहारः॥ एवं शस्त्राङ्कितासु पताकासु प्रान्ते किंकिणी चामरादिभिर्भूषयेत्। नवमीपताका पूर्वेशानयोर्मध्ये- आचार्य कुण्डसमीपे श्वेता अथवा कमण्डलुवंकिता रक्ता देया। एका नैर्ऋत्यपश्चिमयोर्मध्ये- अनन्ताय पताका देया ध्वजोपिदेयः तत्र शस्त्रं चक्रम् वाहनोगरुड़ः। इति शिष्टाचारानुरोधात् वस्तुतस्तु अष्टानामेव दिक्पालानां प्राधान्यं मण्डपोपरि एकामहाध्वजा शैवेशाक्त्ये त्रिशूलांकिता वैष्णवे चक्राङ्किता च देया गाणपत्ये सौरे च आगमतोविचार्यदेया।

---

ध्वजानिति।

अष्टाशासु ध्वजाग्रयोन्करयुगलततान्पञ्चहस्ताढ्यदैर्घ्यान्। दीर्घैस्तैर्वंशदंडैरुपचितशिरसः स्वस्वलोकेशवर्णान्॥ दध्यात्तेषु क्रमेण लिखित गजवरछागयास्यांश्च सिंहम्। मीनैणांश्च वृषांश्चाप्यथ च हरिभान्युक्तधातुद्रवेण॥ इति।

पताकादेयेति।

कुण्डं कुण्डंप्रतिमुनिकरा हस्तमात्रं विशाला। लोकेशानैस्तुलितरुचयोवज्रमुख्यायुधाढ्या॥ हस्तद्वन्द्वं खनितनिहतैर्दिक्करैर्दंडवर्य्यैरिन्द्रेशानीर्हिमगिरिनिभासंविधेया पताका॥

# वेदिकारचनाविधानारंभः।

❀ आदौमध्यवेदिका विवेचनम् प्रधानत्वात्। ❀

प्रथमन्तु अधमाद्युत्तमान्तमण्डपभूमेः नव विभागाः समाः कार्याः तत्र मध्यमस्यमध्यगतनवमखण्डस्य यावन्मिता भूमिः सैव मध्यवेदिका हस्तोच्छ्राया स्वीयरामाऽध्यक्षहयांक रूद्रविमितैर्वा शैःसमुन्नतावा कार्या सा तु पक्केष्टकाभिरपक्वेष्टकाभिर्मृदा वा वक्ष्यमाणलक्षणसम्पन्नासुशिल्पिभिः कारयितव्या। वक्ष्यमाणलक्षणवेदिकास्तु दर्पणोदरसान्निभा

---

महाध्वजेति ।

एका महाध्वजा प्रोक्ता मंडपोपरिमध्यतः । अत्युच्चा दशहस्ता सा दीर्घा त्रिहस्तविस्तृता ॥ विशदा नवमी शुभा पताका पुरुहूतेश दिगन्तरा विधेया । दशमीदितिजस्य वारुणस्य मध्येस्यादिति केचिदाहुराचार्याः ॥

मध्यमवेदिविषये उक्तम् ( कुण्डकल्पद्रुमे )

विधायक्षितिं मंडपस्याङ्कको्ष्ठां विरच्यान्तकोष्ठे तु वेदीष्टकाभिः । स्वकीयाग्निवेदेषु पाकं हि रुद्रांशकैर्वायकल्प्यान हस्तोन्नता सा

( कुण्डकौमुद्याम् )

वेदीमण्डपमध्यकोष्ठविमिता हस्तप्रमाणोच्छ्रया । रामाऽध्यक्षहयांकरुद्रविमितैर्वांशैर्भवेदुन्नता । मध्ये दर्पणसन्निभा

पद्मसन्निभा अष्टास्रा वेदास्रा विंशत्यस्राद्यः सम्यगुक्ता-अधोद्रष्टव्या । इयं वेदिका कर्मविशेषे विभिन्नरूपा भिन्नमानलक्षणा भवति यस्मिन्कर्मणि यस्याअपेक्षा भवेत् सैव विधातव्या यथाविवाहकर्म्मणि श्रीधरीनाम्ना विंशत्यस्रावेदिका विधेया इयं चापि प्रकारत्रयाभिन्नाभिन्नाकाराभवाति ।

---

समतमास्रास्रोसु पार्श्वा तथा । पक्वापक्वसमेष्टिकाभिरथवालाभे मृदा सुन्दरा ॥ सामान्योक्ता वेदिकेयं प्रतिष्ठा त्वारामादौ पद्मिनी पद्मतुल्या । विंशत्यस्रा श्रीधरीस्याद्विवाहे राज्ञां पट्टे स्यात्सुभद्रा सभद्रा ॥

अथ कर्मविशेषे वेदिमानम् ( कुण्डलरत्नावल्याम् )

रुद्रादौ हवनेऽथ वेदिरथवा वेदाङ्गनागैः करैः । एक द्वित्रिभिरंगुलैश्च कथिता राजादिषु न्यूनता । पादोच्चाथ तुलाविधौ तु नवभिर्नागैः स्वरैर्वापिसा द्वाभ्यां सार्धकरेण हस्तविमिताप्युच्चाथ वाप्यादिषु ॥ वेदैः सायशरैस्तथाप्यथ हयैर्हस्तैर्मिताावाथवा ॥ मध्ये मण्डपरन्ध्रभागविमिताऽध्यस्रापिहस्तोच्चका । भूपानाम्प्रवराभिषेचनविधौ स्यात्सर्वतोभद्रिका । ज्ञेया पद्मनिभाजलाशयविधौ स्यात्सर्वतोभद्रिका ॥

श्रीधरीवेदिनिर्माणप्रकारः ।

वेदीफलं स्वाभ्ररसांशकेनार्कघ्नेनयुक्तं च पुनर्द्विनिघ्नं । तन्मूलमित्यादिविदिक्स्थकोणवेदास्रकान्तं तनुयात्ततश्च ॥ आद्याब्धिकोणस्थभुजार्धमत्र षड्भागविभज्यापि च सूत्रपातात् ।

पूर्वोक्तवच्छ्रीधरिवेदिरत्र भवेन्नखाग्नानयनाभिरामा ॥

ऊर्मविंशत्यस्राश्रीधरी यथा ।

वेदीफलात्पञ्चनगाष्टराम निघ्नाद्दहीभांककराप्तमूलम् ।
व्यासः समाभ्राश्विमितास्त्रवेद्या व्यासाङ्गभागः स्वनृपांशहीनः ॥
जीवाभवेत्तन्मितकर्कटेन प्राक्तस्तुवृत्तं नखधा विभज्य ।
ज्याविंशतिं तत्र समां प्रदद्यात् वितर्दिरेवं नखकोणका वा ॥

अथ पद्मिनीवेदिप्रकारः ।

वेद्याः फलं भूमिसमुद्रनिघ्नं वेदाक्षिभिस्तद्विभजेच्च लब्धेः । मूलं व्यासः पद्मिनी वेदिकायाः साद्विकोणा पद्म-कुण्डोक्तवत्स्यात् ॥

अथ भद्रिकावेदिप्रकारं प्राह ( रत्नावलीकारः )

वेदीफलं स्वाब्धिकरांशकेनाष्टघ्नेन युक्तं च पुनाद्विनिघ्नम् ।
तन्मूलमित्यावलयन्तु वेदिस्थलस्यमध्यात्प्रविधेहि तस्मिन् ॥
दिक्कोणकं वारिधिकोणमेकं तस्मिन्विकाष्ठास्त्रकमब्धिकोणम् ।
विधाय चाद्यस्य भुजाङ्घ्रिचिन्हात्सूत्रं च संलग्नभुजांघ्रिचिन्हे ॥
बाह्यार्धकोष्ठभ्रमिमार्जनेन स्यात्सूर्यकोणा किल भद्रिकैवम् ।
राज्याभिषेके नृवराधिपानां प्रोक्तामुनीन्द्रैरपिवास्तुशास्त्रे ॥

हस्तोन्नता च विस्तीर्णा चतुर्हस्तैः समन्ततः । त्रिभागं मण्डपं कृत्वा मध्यभागे तु वेदिका ॥

त्रिभागमिति मण्डपस्य पूर्वपश्चिमतउदग्दक्षिणतश्चोभयतस्त्रिभागे कृतेनव-भागोऽमवेदिति अन्यत्स्पष्टम् । ( मात्स्ये )

चतुर्हस्तां शुभां वेदिं चतुरस्रां चतुर्मुखाम् । यथा षोडश-हस्तः स्यान्मण्डपश्च चतुर्मुखः ॥ वेद्याश्च परितोगर्ता रत्नि-

राजाभिषेके सर्वतोभद्रिकावेदिर्विधेया । जलाशयविधौ पाद्मिनी विवाहे श्रीधरी यथाशक्यं कार्या आसां सर्वासां निर्माणप्रकारस्तु संक्षेपतः कारिकायांस्पष्टीकृतः अतिपारिस्फुटरीतियस्तु तत्तद्विषयकशास्त्रे द्रष्टव्याः अत्र-ग्रन्थाविस्तृतिभयाद्दिङ्मात्रमेव दर्शितम् । प्रसङ्गादत्रैता वेद्यः प्रदर्शिताः वस्तुतस्तु चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदेति

मात्रास्त्रिमेखलाः ।

अन्यत्रापि वेदिविधेयेत्युक्तं ( रत्नावल्याम् )

दानोत्सर्ग प्रतिष्ठासु वेदीमध्ये प्रकीर्तिता । प्राच्यामुदीच्यां शान्तौ वा मुकुरोदरवत्समा ॥

*अत्र प्राच्यामुदीच्यामितिपदेनैशानीदिक् ग्राह्या । शिवकोणे प्रशस्यते इति वचनात् * । सर्वत्र प्राच्यां, उदीच्यां, द्वारदेशं वर्जयित्वैव वेदिप्रसङ्गो बोध्यः । अन्यथा तत्तद्द्वारोक्तविधानस्य वैयर्थ्यात् तेन पूर्वोत्तरमध्ये द्वारप्रदेशस्थलं हित्वैव वेदिकां विरचयेदिति भावः । शतचण्डीमुद्दिश्य मण्डपमध्येऽष्टकोणां वेदीं कुर्यात् । तद्यथा । मध्यस्तम्भ चतुष्कमध्यसमं चतुरस्रं कृत्वा षोडशहस्तमण्डपेऽष्टादशांगुलाधिकहस्तेन विंशतिहस्ते चतुर्विंशत्यंगुलाधिकहस्तेन कोणेषूभयतोङ्कयित्वाष्टसूत्रदानादष्टास्रमिति राघवभट्टः । षोडशांगुलाधिकहस्तमात्रं मध्ये चतुरस्रं कृत्वा तत्संलग्नानि चतुर्दिक्षु तन्मानानि चतुरस्राणि चत्वारि कृत्वा बाह्यचतुरस्राणां कोणेषु सूत्राणि दत्वा दिक्षु चतुर्थांशांस्त्यजेदित्यष्टाश्रि ।

॥ इति कमलाकरकृतशतचण्डीपद्धतौ ॥

सिद्धान्तशेखरवचनान्मुख्याचतुरस्रैवसर्वत्रेतिमध्यवेदिकाविधानम् । यदि मण्डपमध्ये कुण्डोभवेत्तदा द्वारमार्गं विहायान्यत्र प्राच्यामुदीच्याम् ( ऐशान्यां ) वेदिः कार्या द्वारे द्वारपालाधिष्ठानात् यज्ञसमाहाराणामानयनप्रसङ्गाच्चेति अन्यथा द्वारदेशे वेदिस्थानात्तद्वारीय यज्ञसमाहाराणाम्मण्डपे प्रवेशनावरोधाच्छास्त्रविहितविधेभङ्गत्वं स्यात् होमद्रव्यप्रवेशः पूर्वद्वारेण दानद्रव्यप्रवेशो दक्षिणद्वारेण दक्षिणार्थान् संभारानुत्तरद्वारेण प्रवेशयेत् ।

## ॥ ग्रहादिवेदिरचना प्रकारः ॥

एवं मण्डपं निर्म्माय हस्तमात्रदीर्घयामावितस्तिमात्रोच्चा द्व्यङ्गुलोच्चवप्रद्वयवती ग्रहवेदिः कार्य्या । तत्रैवग्रहान्संस्थाप्य अधिदेवान् ।

प्रत्यधिदेवांश्च संस्थापयेत् । इन्द्रादिलोकपालान् तथा गणेशादीनपिस्थापयेत् ।

---

मध्यवेदीनिर्माणस्तु शास्त्रान्तरात् संगृह्योच्यते ।

ततोमण्डपसूत्रं तु त्रिगुणं परिकल्पयेत् । पूर्वादिषु क्रमात्तस्य भागेनैकेन वेदिका ॥ मण्डपस्य नवांशस्तु वेदिका वैस्मृता बुधैः । तुलापुरुषदानादौ मध्यभागे तु वेदिका ॥ शान्तिके पौष्टिके विप्र शिवकोणे प्रशस्यते । चतुर्थांशोच्छ्रितिस्तस्याः राजहस्तोच्छ्रयायवा ॥ लक्षणं राजहस्तस्य कथयामि तवानघ । षण्णवत्यङ्गुलैर्विप्र दण्ड हस्तः स्मृतोबुधैः वेदनेत्राङ्गु

लैःप्रोक्तोवंशहस्तोमनीषिभिः। राजहस्तोविंशसंख्याङ्गुलैः सद्भिरुदाहृतः।स्वामिहस्तोभवेदष्ट चन्द्रार्कैरङ्गुलैस्तथा। दर्पणोदरसंकाशानिम्नोन्नतविवर्जिता॥ शुभाकारा च या वेदी कर्तु:कामफलप्रदा। वक्रपार्श्वाक्लिन्नमध्या परूषाद्रूगशोभना॥ मानहीनाधिकायाशौ कर्तुःकामविनाशिनी। पक्वाभिर्वाप्यपक्वाभिरिष्टिकाभिर्दृढायथा॥ चतुरस्रा चतुष्कोणा तदभावे मृदापिवा। एवं द्व्यंगुलैर्हीनो क्षत्रविट्शूद्रजन्मनाम् ॥ इतितेऽभिहितं तात वेदीलक्षणमद्भुतम् ॥ इति ॥

वेदिकाया आय परिज्ञानमपि लिखितम् (विश्वकर्मप्रकाशे)

विस्तरेण हतं दैर्घ्यं विभजेदष्टभिस्ततः। यच्छेषं संभवेदाया ध्वजाद्यास्तेस्युरष्टधा॥ ध्वजोधूम्रोहरिः श्वागौ खरेभो वायसोष्टमः। इति। विषमायाः प्रशस्ताः स्युः समाश्चाशुभदाः स्मृताः इत्यन्यत्र। प्रायः मण्डपे वेदिकादिषु च यथा ध्वजआगच्छेत्तथा। अङ्गुलादिकं शोध्यं योज्यमिति आयसाधनपक्षभूतां मार्गः। वस्तुतस्तु ध्वजायस्यात्र प्रशस्ततमत्वेपि कुण्डसिद्धौ नात्यन्तं तस्यापेक्षा इति समीक्षाचक्रवर्तिनः

# * ग्रहनिर्माणप्रकारः *

वेदिपरिमितं श्लक्ष्णं क्षौमं कार्पासं वा वस्त्रं प्रसार्य वस्त्रप्रान्तेऽवध्यर्थं चतुर्दिक्षु समन्तादेकैकां रेखां लिखित्वा ततोऽन्तरैकैकाङ्गुलास्तिस्रस्तिस्रस्तथैव लिखित्वा शिष्टं चतुरस्रमन्तर्गतं प्रागुदक् त्रेधा विभज्य तेन निष्पन्नेषु नवकोष्ठेषु मध्यकोष्ठे सूर्यस्य आग्नेय कोष्ठे सोमस्य। दक्षिणकोष्ठे भौमस्य। ऐशानकोष्ठे बुधस्य। उत्तरकोष्ठे गुरोः। पूर्व

कोष्ठे शुक्रस्य । पश्चिमकोष्ठे शनेः । नैर्ऋत्यकोष्ठे राहोः । वायव्यकोष्ठे केतोः । इत्येवं क्रमेण वक्ष्यमाण प्रकारेण लिखित्वा तत्तद्वर्णाक्षतैः पूरयेत् । अथवा यथा ग्रहपीठानां पत्रेषु निवेशो भवति तावत्प्रमाणं पत्रं सकर्णिकमष्टपत्रं पद्मं विलिख्य कर्णिकायां सूर्यस्य आग्नेय पत्रे सोमस्य दक्षिण पत्रे भौमस्य ईशानपत्रे बुधस्य उत्तरपत्रे गुरोः । पूर्व पत्रे शुक्रस्य पश्चिमपत्रे शनेः । नैर्ऋत्यपत्रे राहोः । वायव्यपत्रे केतोरिति ॥ प्रसारितवस्त्रमध्ये रक्तचूर्णेन षड्यूकासप्तयव-सहितैकाङ्गुलात्मकव्यासार्द्धेन वृत्तं सूर्यस्यपीठं विदध्यादिति । आग्नेय्यां श्वेतचूर्णेन यूकाद्वयसप्तयवसहित चतुरङ्गुलात्मकभुज चतुष्टयेन चतुरस्रं सोमस्य पीठम् ॥ याम्ये रक्तचूर्णेन चतुर्यूका-धिकाङ्गुलत्रयात्मक भुजत्रयेणैकयूकापंचयवसहितद्व्यङ्गुललम्बकं त्रिकोणं दक्षिणाग्रं भौमस्य पीठम् ॥ ऐशान्यास् पीत-चूर्णेन हरितचूर्णेनवा चतुर्यवान्तरं चतुरङ्गुलदीर्घमुदक्संस्थंभुज संज्ञकं रेखाद्वयं समाग्रं लिखित्वा तद्रेखाद्वययोरुदग्रताग्रयो-रन्तराले तदग्र संगतामन्तरालप्रदेशप्रादेशपरिमितामेकां रेखां लिखित्वा पौरस्त्यभुजोत्तर दिग्गताग्रात्पुरतोऽग्रसंलग्नां चतुर्यवात्मिकां प्राचीं रेखाम्विधाय तथैव पाश्चात्य भुजोत्तर-दिग्गताग्रात्पश्चादग्रसंलग्नां चतुर्यवात्मिकां प्रतीचीं रेखां विधाय भुजद्वय मध्यत उत्तरऋजुतिर्यक् सूत्रम् दत्वा भुजद्वय-मध्यत उत्तरे लिक्षापचंक यूकाद्वयसहित पंचयवाधिकाङ्गुल-द्वयं नीत्वा तत्र चिह्नं कृत्वा चतुर्यवात्मक प्राक्प्रत्यग्रेखाबहि-र्प्रान्तावारभ्यचिन्ह पर्यन्तं षड्यवाधिक द्व्यङ्गुलात्मकं भुज-द्वयं कुर्यात् । इत्येवं बाणाकारं पीठं बुधस्य । उत्तरस्यां पीतचूर्णेन पूर्वपश्चिम भुजद्वयं त्र्यङ्गुलं दक्षिणोत्तर

भुजद्वयं द्व्यङ्गुलमित्येवं दीर्घचतुरस्रपीठं गुरोः। पूर्वस्याम् श्वेतचूर्णेन पञ्चयूकासप्त यवैकाङ्गुलात्मकव्यासार्धेन वृत्तं कृत्वातस्मिन्वृत्ते पूर्वां दिशमारभ्य यूकात्रययवद्वयसहित द्व्यङ्गुलमिताः पञ्चज्याः कृत्वा इत्येवं पञ्चकोणपीठं शुक्रस्य। अथवा यूकाषट्कयवषट्कसहितद्व्यङ्गुलात्मकव्यासार्धेन वृत्तं कृत्वा तस्मिन्वृत्ते पूर्वां दिशमारभ्य यूकाषट्कयवषट्कत्र्यङ्गुल परिमितदेशे चिन्हं कृत्वा तत आरभ्यान्येषु प्रदेशेष्वेवमेव चिन्हानीत्येवं पञ्च चिन्हानि कर्काटकेन कृत्वा यस्मात्कस्मादेकस्माच्चिन्हादनन्तरं चिन्हं विधाय तृतीयचिन्हसंलग्नं यूकाद्वययवत्रयाधिकाङ्गुलपंचकपरिमितं वाहुं कृत्वा एवमेवेतरांश्चतुरोवाहून्सम्पाद्य कोणाभःस्थान् वाहून् वृत्तं च मार्जयेत् इत्येवमुत्करसंज्ञं पञ्चकोणं शुक्रस्य पीठम् ॥ पश्चिमायां कृष्णचूर्णेन लिक्षाचतुष्टय यूकाचतुष्टययवचतुष्टयाधिकचतुरङ्गुलात्मक व्यासार्धेन वृत्तं कृत्वा वृत्तसङ्गतां यूकापञ्चकयवत्रयाधिकषडङ्गुलमितां ज्यां कुर्यादित्येवं मत्यग्रं षडङ्गुलक्षेत्रफलं शनेः पीठम् ॥ अथवा लिक्षाषट्कयवपञ्चकाधिकांगुलत्रयमितां वृत्तरेखासंलग्नां ज्यासंज्ञकां रेखां दद्यात् इत्येवं षडङ्गुलक्षेत्रफलम् शनेः पीठम्। नैर्ऋत्यां नीलचूर्णेन चतुरङ्गुलपरिमितचतुर्भुजं चतुरस्रं कृत्वा चतुरस्रस्याग्नेयकोणाद्दक्षिणतोयूकाषट्कैकयवाधिकैकाङ्गुलात्मकं प्रदेशमृजुतया वर्धयित्वा तत्र चिन्हं कृत्वा एवमेवोत्तरतोवर्धयित्वा चिन्हं कृत्वा दक्षिणदिग्गतचिन्हान्नैर्ऋतकोणपर्य्यन्तां रेखां लिखित्वाधःस्थ द्व्यङ्गुलात्मकभुजार्धयोश्चिन्हं कृत्वा ताभ्यां चिन्हाभ्यामेकैकाङ्गुलात्मकव्यासार्धेन वृत्तद्वयं लिखेत्। मध्यस्थितं सर्वं

मार्जयेत् इत्येवं शूर्पाकारं पीठं राहोः ॥ वायव्यास् नानावर्णैः पूर्वापरमष्टाङ्गुलदीर्घं चतुर्यवान्तरं रेखाद्वयं विलिख्याध आरभ्य पञ्चांगुलप्रमाणमुपरिभागादेकाङ्गुलप्रमाणं प्रदेशमुत्तररेखायास्त्यक्त्वा शिष्टद्वयङ्गुलप्रमाणां रेखां सम्मार्ज्यैक यवाधिकचतुरङ्गुलात्मकौ भुजावुत्तरतो मिथोलग्नास्यौ कुर्यादित्येवं ध्वजाकारंपीठं केतोः ॥ ( सर्वत्र कोष्ठमध्यभागानुसारेणपीठमध्यभागकल्पना ) (आदित्याभिमुखाः सर्वे इत्येतस्मिन् पक्षे) सोमचतुरस्रपीठस्य दिक्षुकोणाः कल्पनीयाः । भौमस्य तु पूर्ववदेव बाणस्याग्रमीशानकोष्ठे नैर्ऋतकोणसम्मुखं यथास्यात्तथा बाणाकारपीठम् । गुरोः पूर्ववदेव । शुक्रपीठस्य पश्चिमांदिशमारभ्य पञ्चज्याकल्पनम् । शनेः पीठं प्राग्ज्यं कल्पनीयम् । नैर्ऋतकोष्ठे शानकोणाभिमुखं राहुपीठं शूर्पाग्रं कल्पनीयम् । ध्वजस्योत्तराग्रतापूर्वंप्रोक्ताऽत्रदक्षिणाग्रतेति-केतुपीठम् । इति विशेषः । ( वप्रद्वयवतीति ) गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृतां । वप्रद्वयावृतां वेदिं वितस्त्युच्छ्रायसम्मितामितिमात्स्ये ।१।( अयुतहोमे करमितालक्षहोमेसार्द्ध ह-स्ताकोटिहोमे द्विहस्ता)। कोटिलक्षायुतेहोमे द्विसार्द्ध करसम्मिता इतिकुण्डरत्नावल्यां । ( ग्रहवेदि कुत्र कार्या इत्याकांक्षायाम् आह )। वर्जयित्वा रुद्रहोममीशान्यां ग्रहवेदिका । रुद्रहोमे तत्र रुद्रवेदिः मण्डपैशानभागेतु ग्रहवेदिकरोन्मिता । इति मात्स्येऽपि ( प्रधानपीठादक्षिणस्यामपि खेटवेदिः )। अथ प्रधानादपि यत्र पूर्वं ग्रहाधिवासश्च तदा प्रधानं । ईशान देशे तु ततस्त्ववाच्यां श्री खेटवेदिः करविस्तृतोच्चा इतिकुण्डरत्नावल्याम् । (यथा रुद्रहोमे )। ( वेदेरुच्छ्रय अर्द्ध हस्त एक हस्तोवा उक्त च )। करोऽर्धदोर्वोच्छ्रय एकहस्ता तता च

तस्याऽस्त्विगुणाङ्गुलोच्चौ। वप्रौतृतीयौ यदिचेद्द्वितीयस्तुल्यस्तता स्तेचयमांगुलाभ्यां। (मध्यकोष्ठ इति) मध्येतु भास्करं विद्याच्छशिनं पूर्वदक्षिणे। दक्षिणे लोहितं विद्याद्बुधः पूर्वोत्तरेण तु। उत्तरे तु गुरुं विद्यात् पूर्वस्यैव तु भार्गवम् पश्चिमे तु शनि विद्यात् राहुं दक्षिण पश्चिमे। पश्चिमोत्तरतः केतुः स्याप्योवै शुक्लतण्डुलैः। अथवा वर्णकैः कार्याः स्वस्ववर्णादि धातुभिः (वृत्तम् चतुरस्रम् त्रिकोणमित्यादि) भानुन्तुमण्डलाकारं सोमं तु चतुरस्रकम्। अङ्गारकं त्रिकोणं च बुधं बाणाकृतिं तथा। गुरुं दीर्घं चतुरस्रं पञ्चास्रं भार्गवं तथा। धनुस्तुल्यं शनिं विद्याद्राहुं शूर्पाकृतिं तथा। ध्वजाकाराः केतवश्च गणेशं तत्र रूपिणमित्यादि ( पीठानामङ्गुलनियममाह गोभिलः ) द्वादशाङ्गुलिकं सूर्ये मध्ये वृत्तं तु कारयेत्। चतुर्विंशाङ्गुलं सोमे आग्नेय्यां चतुरस्रकं। वेदाङ्गुलं तु भौमस्य पैत्र्यां कुर्यात् त्रिकोणकं। वेदाङ्गुलं बुधे कार्यं ऐन्द्र्यां बाणाकृतिस्तथा। षडङ्गुलमुदग्जीवे पट्टाकारं तु कारयेत् नवांगुलं भृगौ पूर्वे पञ्चकोणं तु कारयेत्। पश्चिमेद्व्यंगुलं सौरेर्धनुषाकृति कारयेत्। शूर्पाकारं लिखेद्राहोपञ्चविंशतिनैर्ऋते। पञ्चविंशाङ्गुलं केतोर्वायव्ये च ध्वजाकृतिः। ( ग्रन्थान्तरे अङ्गुलनियमः। द्विषडङ्गुलकं सूर्ये सोमे तु द्विगुणं लिखेत्। चतुरङ्गुलं बुधे भौमे गुरौ मन्दे षडङ्गुलं। भृगौनवाङ्गुलं लेख्यं राहौसोममिताङ्गुलं केतौ द्विरदसंख्याकं लिखित्वा पूजयेद्नु। (द्विषडङ्गुलं द्वादशाङ्गुलं ) ( आश्वलायनगृह्य परिशिष्टेऽङ्गुलसंख्याः ) द्वादशाङ्गुलकः सूर्यः सोमस्तुद्विगुणस्तस्या। कुजः स्याच्चतुरंगुलस्तदर्धं तु बुधः स्मृतः। षडङ्गुलोभवेज्जीवो भार्गवस्तु नवांगुलः। सौरीस्याच्चतुरङ्गुलो राहुश्च पञ्चविंशतिः।

( क्वेत्ऽप्यपि तथैव ) पद्मपुराणे द्वादशांगुलं लिखेदर्कं सोमं च द्विगुणं भवेत् । भृगुं नवांगुलं चैव गुरुं चैव षडङ्गुलं बुधं भूमिसुतं सौरिं चतुस्त्रिद्व्यंगुलं लिखेत् । सोमादर्द्धांगुलं राहुं केतुमध्यर्द्धमङ्गुलं । इति । ( अत्रांगुलसंख्यानियम कार्यवाक्यानां पीठांगुलसंख्यायां विरोधोदृश्यते मिथः । अतः । एकतरावलम्बनेन कार्य्यं अथवा सर्वानुसरणं श्रेयइति मत्वा कानिचित्सर्वसम्मतानि कानिचिदेकसम्मतानीति कृत्वा कार्य्यं ) ( रक्तचूर्णेन श्वेतचूर्णेनेत्यादि ) भास्करांगरकौरक्तौ शुक्लौ शुक्रनिशाकरौ । सोमपुत्रोगुरुश्चैव तावुभौ पीतकौ स्मृतौ कृष्णंशनैश्चरं विद्याद्राहुं चित्राश्च केतवः इतिमात्स्ये ( केचनहरिद्वर्णमपिबुधस्येच्छन्ति ) नीलंबुधस्य कर्तव्यमितिविष्णुधर्मोत्तरवचनात् शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ प्रत्यङ्मुखः शनिः सोमः शेषाः दक्षिणतोमुखा । प्रत्यङ्मुखावूर्ध्वदृष्टी उदङ्मुखौ वामदृष्टी । ( आदित्याभिमुखाइति ) प्रत्यङ्मुखावधोदृष्टि दक्षिणतोमुखाः दक्षिणदृष्टयः । आदित्याभिमुखाइत्युक्तेरितिहेमाद्रिः । ( अथवा पद्मपत्रेषु ग्रहाणांनिवेशनम् कार्य्यम् तदुक्तंतत्त्वप्रदीपे ) पीठंयुग्मकरंमितायत्रिलिखेत्पद्मं दलैश्चाष्टभिः । ( हेमाद्रिर्विकल्पपरिजिहीर्षया प्राङ्मुखावूर्द्धदृष्टी उदङ्मुखौ वामदृष्टी प्रत्यङ्मुखोधोदृष्टिदक्षिणतोमुखाः दक्षिणदृष्टयइति व्याचष्टे तत्र मूलं चिन्त्यं ) अधिदेवान् प्रत्यधिदेवान्निति उक्तंच शान्तिमयूखे । वक्ष्ये स्थानानि देवानामीश्वरादि यथाक्रमम् । सूर्य्यस्यैवोत्तरेशम्भुमुमांसोमस्यदक्षिणे स्कन्दमङ्गारकस्यैवदक्षिणस्यां निवेशयेत् । सौम्यात्पश्चिमतो विष्णुं ब्रह्माजीवस्य पूर्वतः ।

इन्द्रमैन्द्र्यां सितोद्द विद्यान्मन्दादुत्तरतोयमम्। राहोः पूर्वोत्तरे काल सर्वभूतभयावहम् । केतोर्नैर्ऋत्यदिग्भागे चित्रगुप्तं निधापयेत् । ( संग्रहे ) ईश्वरादयोदेवाः अधिदेवतात्वेन व्यवहृताः । अग्न्यादयस्तु ( अग्निरापोधराविष्णुरिन्द्रेन्द्राणीप्रजापतिः । सर्पोब्रह्मा च निर्दिष्टा अधिदेवायथाक्रमं । ) प्रत्यधिदेवतात्वेनव्यवहृताः । ( तेषां स्थानम् ) अधिदेवाद्दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् । ( वासिष्ठोपेतु देवतानां स्थानान्तरे चोक्तं ) ग्रह देवतयोर्मध्ये अधिदेवान्निवेशयेत्इति ( स्कन्दा [?] सिष्ठीयवचनं योग्यं परं कैश्चिन्नाद्रियन्ते ) ( लोकपालानिति ) पद्मप्राग्दलमारभ्य दलाग्रेषु क्रमान्न्यसेत् । इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः पूजयेत् इतिपारिजाते ( गणेशादीन्निति ) विनायकं तथा दुर्गां वायुमाकाशएव च । आवाहयेद्व्याहृतीभिस्तथैवाश्विकुमारकौ । ( एतेत्रयश्च ) ग्रहेभ्यः उत्तरतः स्थाप्याः ( इति साम्प्रदायिकाः ) दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये ( संग्रहे ) राहोमन्ददिनेशानामुत्तरस्यां यथाक्रमं । गणेशोदुर्गावायुश्चराहुकेत्वोश्च दक्षिणे । आकाशमश्विनौचेति पञ्चैतान् स्थापयेद्बुधइति । ( अन्यत्र ) उत्तरे शनिसूर्याभ्यां गुरुकेत्वोश्च दक्षिणे । गणाधिपः प्रतिष्ठाप्यः सर्वदेवनमस्कृतइति । ( बौधायनमते तु ) रविभौमशुक्रसोमबुधगुरुमन्दादिक्रमउक्ताः । ( उत्तरे क्षेत्राधिपतिं वास्तोष्पतिं च स्थापयेदित्येके ) मोत्रावाहनस्थापनादि विचार पूजाप्रकरणे । अधिदेवानां प्रत्यधिदेवानामपिपूजामन्त्राः तत्रैव विविच्य लेखिष्यामः ।

आग्नेय्यां मातृकापीठम् । नैर्ऋते वास्तुपीठं । एकाशीतिपदं तदादशरेखाः कार्य्याः । चतुःषष्टिपदं तदानवरेखाः कार्य्याः । ( वास्तुदेवतानामानि तथा रेखानामानि स्थानानि च प्राग्दर्शितानि । पुनरपि प्रदर्शयिष्यामः । ) वायव्यां योगिनीपीठं । ( गृहवास्त्वर्च्चने योगिन्यो-वायव्यांस्थाप्याः । अन्यत्र शुभकृत्येषु नैर्ऋत्यां इतिकेचित् ।

वस्तुतोयत्र वास्तुवेदी तत्रवायव्यां अन्यत्रनैर्ऋत्यामित्येवसमीचीनः पक्षः । योगिनी नामानिग्रन्थेषु अन्यान्यन्यान्युपलभ्यन्ते । एकपक्षमवलम्ब्य स्थापनपूजने च कार्य्ये ।

मध्यवेद्यां सर्वतोभद्रं लिखेत् । शक्तियागे गौरी तिलकं ।

---

आग्नेय्यामिति । मन्थानभैरवतन्त्रे । शेषवेद्याः ततः ख्यातं हस्तमेकं तु विस्तरे । उच्छ्रायोऽर्काङ्गुलः प्रोक्तः स्नानवेदी द्विहस्तका । आग्नेय्यां मातृकावेदी वास्तुवेदी च नैर्ऋते । क्षेत्रपालस्य वायव्यामीशान्यां च नवग्रहाइति ( कुण्डरत्नावल्यामपि ) एवंवेद्यश्चापि तिस्रः प्रकुर्य्याच्छोचिष्केशः क्रव्यभुग्वायुदिक्षु ( अग्निनिर्ऋतिवायूनां दिक्षु ) स्थाप्यान्खेटान्मातृकांश्चापि वास्तून्क्षेत्रेशं च स्थापयेत्तासु यागे ।

पञ्चोर्ध्वाःपञ्चतिर्य्यक् च रेखाः कृत्वा विचक्षणः वापीचतुष्कमध्यस्थं गणेशं तत्र पूजयेत् । मध्यनैर्ऋत्यके गौरीं

पद्मां पावकगोचरे । शचीं पश्चिमतोमेधां सावित्रीं विजयां यमे । जयोत्तरे देवसेना स्वधामीशानएव च । स्वाहाग्नेय्यां तथा पूर्वं मातरोलोकमातरः । मध्ये वायौ धृतिं चैव नैर्ऋत्यां पुष्टिमेव च । तुष्टिं चैव तु वायव्ये मध्ये च कुलदेवताम् ( वास्तुपीठमिति ) शान्तिरत्नादिग्रन्थेषु कुण्डात्पूर्वभागे वास्तुपीठं । अन्यत्र नैर्ऋते । ( अन्यग्रन्थेषु दोषकथनात् नैर्ऋते एव कार्यम् ) भूतप्रेतपिशाचानां राक्षसानां च नैर्ऋते निवासोराक्षसीनां च तस्मात्पीठं च नैर्ऋते । निर्ऋतिं यः परित्यज्य करोत्यन्यत्र दिक्ष्वपि । पीठे चावाहितादेवानायान्ति न सुखप्रदाः । न पूजां नच नैवेद्यं परिगृह्णन्ति ते यतः । तस्मात्सर्वप्रयत्नेन वास्तुपीठं च नैर्ऋते । कमलाकरादिभिः एकाशीतिपदं वास्तुमण्डलं उक्तम् । मत्स्यपुराणादौ चतुःषष्टिपदम् । अनयोर्मध्ये एकपक्षमवलम्ब्यमण्डलं कार्यम् ।

योगिनीपीठमिति । नवभिश्चोर्ध्वरेखाभिस्तिर्यग्भिश्चतथैवहि । एवं चतुःषष्टिकोष्ठं योगिनीमण्डलं स्मृतम् । तत्र द्विपञ्चाशत्कोष्ठेषु रक्तवर्णेनार्धं पूरयित्वा तदर्धं हरिद्वर्णेन पूरयेत् । शेषं द्वादशकोष्ठानि रक्तवर्णेन पूरयेत् । इति चन्द्रिकायाम् ।

प्रकारान्तरेण योगिनीक्षेत्रपालमण्डलम् ।

वर्तुलं मण्डलं कार्यं द्विपञ्चाशत्पदानि च । प्राकारषट्के कुर्वीत सिन्दुरैर्विलिखेत्क्रमात् । कलामासादिकं चैव वसुषष्ठोत्तारं तथा । मध्ये चाष्टदलं कार्यं पूजयेद्भैरवाष्टकम् । चतुष्कोणे चतुःषष्टीयोगिनीपूजयेन्नृपः । ( योगिनीनां ) चतुषष्टीयोगात्सम्प्रतीमनोः । चतुषष्टीति सा प्रोक्ता योगसिद्धिप्रदायिनी ।

कल्पद्रुमे योगिन्यः।

जया च विजयाचैव जयन्ती चापराजिता। दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी। प्रेताशी डाकिनी काली कालरात्रिस्तथैवच। टङ्काक्षी रौद्रवैताली हुङ्कारी ऊर्ध्व केशिनी। विरूपाक्षी च शुष्काङ्गी नरभोजिनिका तथा। फङ्कारी वीरभद्रा च धूम्राङ्गी कलहप्रिया। राक्षसी घोर-रक्ताक्षी विश्वरूपा भयङ्करी। चण्डमारी च चण्डी च वाराही मुण्डधारिणी। भैरवी च तथोर्ध्वाक्षी दुर्मुखी प्रेतवाहिनी। खट्वाङ्गी च लम्बोष्ठी मालिनी मत्तयोगिनी। काली रक्ताच कङ्काली तथा च भुवनेश्वरी। त्रोटिकी च महामारी यमदूती करालिनी। केशिनी मेदिनी चैव रोमगङ्गाप्रवाहिनी। विडाली कामुकालाक्षी जया चाधोमुखी तथा। मुण्डाग्रधारिणी व्याघ्री काङ्क्षिणी प्रेतभक्षिणी। धूर्जटी विकटी घोरी कपाली विषलम्बिनी। चतुःषष्टिस्तु योगिन्यः पूजनीयाः प्रयत्नतः।

इति योगिनीनामानि। अन्यत्र नामान्तराण्यपि सन्ति। सर्वतोभद्रमिति।

# * सर्वतोभद्ररचनाप्रकारः *

विलिखेत्सर्वतोभद्रं वेदिकोपरिसुन्दरम्। तिर्य्यगूर्ध्वगता रेखाः कुर्यादेकोनविंशतिम्। खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चकोष्ठकाः। एकादशपदा वल्ली भद्रा तु नवभिः पदैः। चतुर्विंशत्पदा वापी विंशत्यापरिधिपदैः। मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं लिखेत्। श्वेतेन्दुः शृङ्खला कृष्णा वल्ली नीलेन पूरयेत्। भद्रारक्तासिता वापी परिधिः पीतवर्णकः।

बाह्याभ्यन्तरदलैः श्वेतैः कर्णिकाः पीतवर्णिकाः । खण्डेन्दुः शृङ्खलो वापी वल्ली भद्रन्तु पञ्चकम् । परिध्यावेष्टितं सर्वं बाह्यं सत्व रजस्तमः । सर्वं तत्र समुद्दिष्टं सर्वतोभद्रमण्डलम् ।

मध्ये ।

ब्रह्माष्टासु दिक्षु देवाः सोमादयः स्मृताः । वायुसोमद्वयोर्मध्ये वसूनष्टौ तु कारयेत् । सोमेशयोर्मध्यभागे रुद्रा एकादश स्मृताः । ईशानवह्निणोर्मध्ये आदित्यान्द्वादशाँल्लिखेत् । इन्द्राग्न्योस्तु तथा मध्ये ह्यश्विनौ पूजयेत्ततः । विश्वेदेवाः सपितृका अन्तराग्नेययाम्ययोः । यमनैऋत्ययोर्मध्ये सप्तऋषींश्च कारयेत् । नैऋत्यपश्चिमयोर्मध्ये नागभूतांश्चकारयेत् । वायुपश्चिमयोर्मध्ये गन्धर्वाप्सरसस्तथा । ब्रह्मचन्द्रमसोर्मध्ये रुद्रान् देवान् प्रपूजयेत् । स्कन्दं नन्दीश्वरं शूलं महादेवं प्रपूजयेत् । ईशानब्रह्मणोर्मध्ये कुर्य्याद्दक्षादि सप्तकम् । ब्रह्मेन्द्रयोस्तथा मध्ये दुर्गां विष्णुं तथैवच । ब्रह्माग्निमध्ये च तथा स्वधा देवीं प्रपूजयेत् । मध्ये च ब्रह्मयमयोर्मृत्युरोगादयः स्मृताः । ब्रह्मनैऋत्ययोर्मध्ये वसुविघ्नौ तु पूजयेत् । मध्ये च ब्रह्मवरुणयोरपांस्थानमुच्यते । ब्रह्मवाय्वोरन्तराले मरुतां सप्तकं स्मृतम् । ब्रह्मणः पादमूले तु पृथिव्यः सप्तसागराः । तत्र गङ्गा च यमुना कावेरी नर्मदा तथा । गोदावरी तथा कृष्णा पयस्विनी सरस्वती । गन्धपुष्पाक्षताद्यैश्च पूज्यावै यथाविधि । यस्मात्स्यात्सर्वतोभद्रं सर्वतोभद्रमीरितम् ।

पञ्चरात्रे :—

रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत् । शालितण्डु

लचूर्णेन शुक्लं वा यवसम्भवम् रक्तं कुसुम्भसिन्दूरगैरिकादिसमुद्भवम्। हरितालोद्भवं पीतं रजनीसम्भवं तथा। कृष्णैर्दग्धैर्यवैः पीतंहरित्कृष्णाविमिश्रितम् ।

हेमाद्रौ स्कान्दे :—

प्रागुदीच्यायतारेखाः कुर्यादेकोनविंशतिम् । खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चभिः पदैः । एकादशपदावल्ली भद्रातु नवभिः पदैः। चतुर्विंशतिपदा वापी विंशत्यापरिधिः पदैः। मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् । श्वेतेन्दुः शृङ्खला कृष्णा वल्लीर्नीलेन पूरयेत् । भद्रं रक्तं सितावापी परिधिः पीतवर्णकः। वाह्यान्तरदलश्वेता कर्णिकापीतवर्णिका ) परिध्यावेष्टितं पद्मं वाह्ये सत्वंरजस्तमः । तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरेश्वरान् ।

गौरीतिलकमिति :—

गणपतिव्रते प्रोक्तं भद्रं वैनायकाभिधम् । देव्याव्रते गौरीभद्रं सूर्य्ये सूर्य्यस्यमण्डलम्। शैवे च लिङ्गतोभद्रं सर्वतोभद्रकं हरेः। स्वस्वभद्रालाभे तु कार्य्यं वै हरिमण्डलम् ।

( लाभे तु तदेव ) उक्तं च गौरीतिलकं रुद्रयामले आनन्दरामायणे च।

तिर्य्यगूर्ध्वगतारेखाः कार्य्याः स्निग्धास्त्रयोदश । कोणेन्दुस्त्रिपदः कार्यः शृङ्खलास्त्रिपदाः सिताः। वल्ली च षट्पदानीला भद्रंरक्तं प्रकल्पयेत्। पदैर्द्वादशभिः स्पष्टमुत्तरे पूर्वदक्षिणे। पश्चिमायां महारुद्रमष्टाविंशतिकोष्ठकैः। लिंगपार्श्वे तथा सूर्द्ध्न्यष्टौ कोष्ठाः सुपीतकाः। लिंगमेकं तथा गौर्य्यास्तिस्रोष्ठत्र तु

मण्डले । पूजयेन्मण्डलं चैव तस्य गौरी प्रसीदति ।

मंडल संग्रहे । बृहद्गौरीतिलकं ।

प्राच्योदीच्या:कृतारेखा: त्रयोविंशतिसंख्यया । कोणेन्दुः शृङ्खला कार्या पदैश्चनवभिः क्रमात् । अष्टादशपदा वल्ली भद्रं तु नवभिः पदैः सूर्य्यपदा भवेद्वापी ततोलिङ्गं प्रकल्पयेत् । दशमानं पदं तस्य मध्ये चैव चतुष्टयम् । दशैव जलाधारे लिङ्गे चैव चतुष्टयम् चतुर्भिश्च पदैर्मध्ये पद्मं कुर्यात्सुशोभनम् । शक्तिव्रते सदा कार्यं गौरीतिलकमण्डलम् ।

गौरी तिलकं हेमाद्रौ ।

प्राच्योदीच्याः कृतारेखाः अष्टादशैवाष्टादश । पदेषु स्थापयेद्देवान्नवाशीतिपदद्वयम् ॥ अण्डत्वाद्ब्रह्मलोकस्तु सर्वतो भद्रमुच्यते । तत्रस्वर्णमयं वेश्म निर्मितं प्रभुणास्वयम् । तत्पद्म-मिति विज्ञेयं यत्र कार्य्यचितिः स्वयं । तत्र यत्पुण्डरीकं तद्-ब्रह्मणः स्थानमुच्यते ।

अन्यच्च लिङ्गतोभद्रविषये ।

लिङ्गतोभद्रमित्येतन्निरुक्तमर्थवद्भवेत् । लिङ्गं गमकमित्याहु-र्ज्ञानं ज्ञापकमित्यपि । पीयूषवापनाद्वापी भद्रं भद्रसमीक्षणात् । साध्यशब्दः प्रसिद्धो हि वर्तन्ते साधनेष्वपि । तस्मिञ्छुक्लं रक्तनीलमित्यादि श्रुतिशासनाः । वर्णा अपि परस्मिंस्तूपास-नार्थं भवन्तिहि । तद्ब्रह्मपरमं लिङ्गं मङ्गलं भद्रवाचकम् । सत्वं रजस्तमोवर्णा यत्र मायासु वेष्टिताः । मनश्चन्द्रोमहा-मोहः शृङ्खलास्नेहवल्लिका । तैरिदं सर्वतस्तत्वं वेष्टितं घट-व्योमवत् । तिर्यगूर्ध्वं महाकारः प्रसृतः पटतन्तुवत् । ईश्वरः

# अथ सर्वोपयोगिकुण्डरचना ।

अष्टसुदिक्षु वेद्याः सकाशान्मेखलान्तं सपादहस्तम् अथवा वेद्याः पादं वा त्रयोदशाङ्गुलमन्तरं यथास्यात्तथा-ज्ञात्वा कुण्डानि कुर्य्यात् । पूर्वस्यां वेदास्रं । आग्नेय्यां योनिकुण्डं । दक्षिणस्याम् अर्धचन्द्रं । निर्ऋतौत्रिकोणं । प्रतीच्यां वृत्तं । वायव्यां षडस्रि । उदीच्यांपद्माकारं । ईशान्यामष्टास्रि । अथवा सर्वाणिचतुरस्राणि । वर्तुला-निवा । इन्द्रेशानयोर्मध्ये चतुरस्रं वृत्तं वा आचार्य्यकुण्डम् विदिक्स्थ योनित्र्यस्रषडस्राष्टभिर्विना पञ्चकुण्डी । अस्मि-न्पक्षे ऐशान्यामाचार्य्य कुण्डम् । एककुण्डपक्षः स्वीकृत-

---

सर्वभूतानां हृद्देशेसंस्थितोऽमलः । अलिङ्गोऽरूपएवासावेकत्व गणनात्परः । मायया लिङ्गरूपी च ह्येकइत्यभिधीयते । पुरुषः प्रकृतिश्चापि व्यक्तोऽहङ्कार एव च । चतुर्लिङ्गानि चोक्तानि लक्षणानि शिवस्य च । कार्यकारणभूतानामेक एव हि पञ्चकम् । सत्त्वंरजस्तमइति वसुलिङ्गानिचात्मनः । दशे-न्द्रियाणि चमनोबुद्धि र्द्वादशकं स्मृतम् । दशेन्द्रियाणि भूतानि जीवयुक्तानिषोडश । चतुर्विंशति तत्वैश्च चतुर्विंशतिलिङ्ग-कम् । चैतन्यसहितः साक्षात्पञ्चविंशतिकंस्मृतम् ।

अष्टसुदिक्ष्विति :—

अष्टाशास्वाशासु रम्याणि कुण्डान्येतान्यनुक्रमात् । चतुरस्रं योनिरर्धचन्द्रं त्र्यस्रं च वर्तुलं । षडस्रं पङ्कजा-

स्तदाप्राच्यांप्रतीच्यां उत्तरस्यांऐशान्यां वा कार्य्यम् । प्रमाणाधिक्यात् ऐशान्यां उत्तरस्यांवा कार्य्यम् होमवाहुल्ये तथाग्रहशान्त्यादिषु मण्डपमध्येपिकरणे न दोषसम्भावना। शास्त्रे मध्येपि विधानात् ।

चतुरस्रकुण्डविधानम् । व्यासं द्विघ्नं विधाय तुर्य्यचिन्हं सपाशं सूत्रं पूर्वगे शङ्कौ पश्चिमके च दत्वा कोणयोः

---

कारमष्टास्त्रं तानि नामतः । इति शारदातिलके । सर्वाणीति । पञ्चरात्रे । सर्वाणि तानि वृत्तानि चतुरस्राणि वा सदा । इति ।

आचार्य्यकुण्डमिति :—

शारदातिलके । आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरिति ।

पञ्चकुण्डीति :—

नारदीये । यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा । कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । पञ्चमं कारयेत्कुण्डमीशदिग्गोचरं बुधइति ।

ऐशान्यामिति :—

एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुध इति ।

उत्तरस्यामिति :—

उत्तरस्यां भवेत्कुण्डं वृत्तं वा चतुरस्रकमिति । अथवा दिग्गिकुंडमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेव । इतिपुरश्चर्यार्णवे ।

पाशतुर्य्ये चेत् कर्षेत् तदा वेदास्रं भवेत् ।

मध्येइति ।

ग्रहशान्तिमुपक्रम्य वशिष्ठः । कुण्डं तन्मध्यभागे तु कारयेच्चतुरस्रकम् । ( रत्नावल्यां ) । एकं कुण्डं शुभदं मध्ये शान्तौ जपाङ्गहवनेषु ।

कुण्डवेद्योरन्तरम् आह रत्नावलीकारः :—

वेद्याः स्वकाशादिह वाष्टदिक्षु कोष्ठस्यमध्यः वहिकुण्ड-मध्यः । स्यान्मेखलान्तं तु सपादहस्तं पादं त्रिचन्द्रांगुलमन्तरं वा ।

शारदातिलके ।

प्राक्प्रोक्ते मण्डपे विद्वान्वेदिकाया वहिस्त्रिधा । क्षेत्रं विभज्य मध्ये तु पूर्वादि परिकल्पयेत् । अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमादिति । वेदिपादान्तरं त्यक्त्वा कुण्डानि नव पञ्चवेति ( सोमशम्भुः ) । कुण्डवेद्यन्तरं चैव सपादकरसंमितम् ( इतिनारदः ) ।

वासिष्ठसंहितायां ।

त्रयोदशांगुलं त्यक्त्वा वेदिकायाश्चतुर्दिशम् । वेदीभित्तिं परित्यज्य त्रयोदशभिरङ्गुलैरिति च । सपादहस्ताद्यन्तरपक्षे कुण्डमध्यकेन्द्राणि समानानि न भवन्तीति ज्ञेयम् ।

चतुरस्रकुण्डं कुण्डसिद्धौ ।

द्विघ्नव्यासं तूर्य्यचिन्हं सपाशं सूत्रं शङ्कौ पश्चिमेपूर्वगेपि । दत्वा कर्षेत्कोणयोः पाशतूर्य्ये स्यादेवं वा वेदकोणं समानम् ॥

( योनिकुण्ड० )

पूर्ववच्चतुःकोणं विधाय तस्याजिनांशं ज्ञात्वा क्षेत्रे चतुर्विंश-त्यंशे स्वीयरदांश (३२) युक्तान् पञ्चमांशान् पुरतः संवर्ध्य कर्णाङ्घ्रिमानेन प्रत्यक्पुरोङ्कात् इन्दुखण्डे विलिख्य ततोगुणदानतः योनिकुण्डं । ( अर्धचन्द्रकुण्ड० ) स्व-शतांशयुक् पञ्चमांशहीनक्षेत्रमानपरिमितकर्कटेन वृत्तदले कृते अग्रतः सूत्रदानेन अर्द्धचन्द्रं स्यात् ( त्रिकोणकुण्ड० ) चतुरस्रक्षेत्रस्य वन्ह्यंशं पुरतो निधाय पुनः श्रोण्योः क्षेत्रस्य चतुर्थांशकं निधाय पुनः त्रिषु चिन्हेषु सूत्र-दानेन त्रिकोणकुण्डं भवेत् ( वृत्तकुण्ड० )

क्षेत्रेजिनांशे (२४) कृतेप्राक्तमस्वजिनांशकेन युतैस्त्र-

---

योनि० ।

क्षेत्रे जिनांशे पुरतः शरांशान्संवर्ध्य च स्वीयरदांशयुक्तान् ।
कर्णाङ्घ्रिमानेन लिखेन्दुखण्डे प्रत्यक्पुरोङ्काद्गुणतोभगाभम् ।

( अर्धच० )

स्वशतांशयुतेषु भागहीनःस्वधरित्रीमितकर्कटेन मध्यात् ।
कृतवृत्तदलेऽग्रतश्च जीवां विदधात्विन्दुदलस्य सिद्ध्यै ।

( त्रिकोण० )

वन्ह्यंशं पुरतो निधाय च पुनः श्रोण्योश्चतुर्थांशकं । चिन्हेषु त्रिषु सूत्रदानत इदं स्यात्त्र्यस्त्रि कष्टोज्झितम् ।

वृत्तकु० ।

विश्वांशैः स्वजिनांशकेन सहितैः क्षेत्रे जिनांशे कृते ।
व्यासार्धेनमितेन मण्डलमिदं स्याद् वृत्तसंज्ञं शुभम् ।

योदशांशैः व्यासार्धमितकर्कटेन मण्डलेकृते अनुत्तमं वृत्त-कुण्डं भवेत्। (षडस्र०) क्षेत्रजिनांशंविधाय स्वकीयैः आक्षिशैलांश (७२) युक्तैर्धृति (१८) मितांशैः (यथाचतु-र्विंशत्यङ्गुलात्मकेक्षेत्रे १८ऋं० श्यव ) तावताव्यासार्द्धेन-मण्डलेकृतेतन्मितधृतगुणके कर्कटेवाउत्तरदिक्तः परिवर्तने-षट्सु चिन्हेषु एककं हित्वा षट्सूत्राणि प्रदद्यात्। ततः संध्यर्तु (६) दोषांनाशे अपिचवृत्तिकृतेर्नाशेनेत्ररम्यं षडस्रं भवेत॥ पद्मकुण्ड०। क्षेत्रस्य अष्टमांशात् ( यथाचतुर्विं-शत्यङ्गुलात्मके त्र्यङ्गुलं ) यतः वृद्धेः वृत्तशरके कृते आदिमं वृत्तंकर्णिकाख्यं ( पुनस्त्र्यङ्गुलं त्यक्त्वा यद् द्वितीयं ) युग्मे वृत्ते षोडशकेशराणि। एवं पुनः पुनः वृत्तेकृते चरमे (पञ्चमे) स्वकीय अष्टत्रिंश (३८) भागोनिते। षोडशधा-

षट्कोणकु०।

भक्ते क्षेत्रे जिनांशैर्धृतिमितलवकैः स्वाक्षिशैलांशयुक्तै-र्व्यासार्द्धान्मण्डले तन्मितधृतगुणके कर्कटे वेन्द्रदिक्तः। षट्चिन्हेषु प्रदद्याद्रसमितगुणकानेकसेकं तु हित्वा। नाशे संध्यर्तुदोषामपि च वृत्तिकृतेर्नेत्ररम्यं षडस्रम्।

पद्मकु०।

अष्टांशाच्च यतश्च वृत्तशरके पद्मादिसंकर्णिका युग्मे षोड-शकेशराणि चरमे स्वाष्टत्रिभागोनिते। भक्ते षोडशधाशरा-न्तरधृते स्युः कर्कटेष्टौच्छदाः। सर्वांस्तान्खनकर्णिकांत्यज निजा-यामोच्चकां स्वात्मजम्।

शरान्तरधृते कर्कटे अष्टौच्छदाः (पत्राणि) स्युः ततः सर्वान् केशरादीन् छदान् खन । निजायामोच्चकां कर्णिकांत्यज। (एवं पद्मकुण्डं । अष्टकोण कु० ) जिनांशच्चेत्रे स्वकीय अष्टाचि (२८) भागोनयुतैः गजचन्द्र (१८)भागैः वृत्ते-कृते दिग्विदिशोरन्तरस्तः तृतीययुक्तैः अष्टसूत्रैः अष्टकोणं भवेत् । (होमानुसारेण कुण्डमानं ) पञ्चाशदादिनवनवति पर्य्यन्तं मुष्टिमितं । (मुष्टिरत्निः)शतादिनवनवत्यधिकनव-शताहुतिपर्य्यन्तम् अरत्निमितम् (निष्ककनिष्ठमुष्टिहस्तोऽ-रत्निः ) सहस्रादिहोमेहस्तमात्रम् । अयुतादौ द्विहस्तम् । लक्षादौ चतुर्हस्तम् दशलक्षादौषड्हस्तम् । कोटिहोमादौ-अष्टहस्तं दशहस्तंवा । (चतुर्विंशत्यङ्गुलैर्हस्तः । अङ्गुलंतुति-र्य्यक्कनिहिताष्टयवप्रमाणंस्वमध्यमामध्यपर्वामितंवाज्ञेयम्। मुष्ट्या वा चतुरङ्गुलानि । सूक्ष्ममानम् ) अर्धयवोनचतुस्त्रिं-शदङ्गुलैर्द्विहस्तं । सार्धैकचत्वारिंशदङ्गुलैस्त्रिहस्तम । अष्टा-चत्वारिंशदङ्गुलैश्चतुर्हस्तं । पादोनचतुष्पञ्चाशदङ्गुलैः पञ्च-हस्तम् ॥ पादोनैकोनषष्ट्यङ्गुलैःषड्हस्तं । सार्धत्रिषष्ट्यङ्गुलैः सप्तहस्तं । यवोनाष्टषष्ट्यङ्गुलैरष्टहस्तं । द्विसप्तत्यङ्गुलैर्नव-हस्तं । षट्सप्तत्यङ्गुलैर्दशहस्तं । षण्णवत्यङ्गुलैः षोडशहस्तं ।

---

अष्टको० ।

क्षेत्रजिनांशे गजचन्द्रभागैः स्वाष्टाक्षिभागेन युतैस्तु वृत्ते । विदिग्दिशोरन्तरतोष्टसूत्रैस्तृतीययुक्तैरिदमष्टकोणम् ।

(न्यूने कुण्डे) आधिकहोमः कार्य्यः । आधिके न्यूनहोमो-निषिद्धः नवकुण्डी उत्तमा सप्तकुण्डी मध्यमा पञ्चकुण्डी अधमा इतिकेचित् । एकाङ्गुलः (जिनांशमानः) द्व्यङ्गुलः (अर्कांशमानः) कण्ठः कार्य्यः । (कण्ठहीने वाग्रोधः

---

होमसंख्यानुसारतः कुण्डप्रमाणम् । कुण्डसिद्धौ ।

शतार्द्धे रत्निः स्याच्छतपरिमितेऽरत्निविततं सहस्रे हस्तं स्यादयुतहवने हस्तयुगलम् । चतुर्हस्तं लक्षे प्रयुतहवने षट्कर-मितम् ककुभिर्वा कोटौ नृपकरमपि प्राहुरपरे ।

न्यूने कुण्डे इति ।

कुण्डतत्वप्रदीपे । न्यूने हि कुण्डेऽधिकसंख्यहोमोनहीन मानोऽधिकसंख्यकुण्डे ।

कुण्डरत्नावल्यां ।

न्यूनेऽथ कुण्डेप्यधिके विधेयो न्यूनोनहोमोधिके प्रशस्तः ।

कोटिहोमपद्धतावपि ।

न्यूनसंख्योदिते कुण्डेधिकोहोमोविधीयते । अनुक्तकुण्डो न्यूनस्तु नाधिके शस्यते क्वचित् ।

नवकुण्डीति ।

उत्तमा नवकुण्डी स्यात् सप्तकुण्डी च मध्यमा । पञ्चकु-ण्ड्यधमा प्रोक्ता कैश्चिन्मात्स्यवचोवलादिति ।

कण्ठः कार्य इति ।

कण्ठोजिनांशमानंस्यादर्कांश इति चापरे ।

सोमशम्भौ ।

वहिरेकाङ्गुलः कण्ठो द्व्यङ्गुलः कुण्डिनामः ।

इति दोषस्मरणात् । कण्ठं कृत्वा तद्बहिर्मेखलाकार्य्या ।) क्षेत्रं अष्टधाविभज्य पञ्चभागैः भुवं खनेत् । उपरित्र्यंशैः षट् अष्ट द्वादश लव विस्तृतापिण्डास्तिस्रोमेखला रचयेत् । ( प्रकारान्तरेण मेखलाप्रकारः । ) षष्ठांशकात् उन्नत-विस्तृता तिस्रोमेखलाः कार्य्याः । अथवा चतुर्भागतुल्या एका मेखला । ( पञ्च मेखलापक्षे । ) षट् (६) शर(५) वेद(४) राम(३) द्वि (२) अंशैः विस्तृताः कार्य्याः पंचसु प्रथमामेखला नवभागपिण्डाः द्वितीयादयः शरभागहीनाः कुण्डानुकारा कण्ठाद्बहिरेव मेखलाः कार्याः । एकैव मेखला चेत् तदा क्षेत्रचतुर्थांशेनोच्चा विस्तृता कार्य्या अथवा चतुरङ्गुलविस्तारोत्सेधा । द्विमेखलपक्षे षष्ठांशेना-

---

वहिरिति ।

खातादेकाङ्गुलं त्यक्त्वा मेखलानां स्थितिर्भवेत् ।

सोमशम्भौ ।

त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलं । मेखलैका तु वैश्यस्य.... इति ।

मेखला० ।

अष्टधा विहितकुण्डशरांशैः संखनेद्भुवमुपर्य्यन्तांशैः । मेखलारचयेदपि तिस्रः षड्गजार्कलवविस्तृत पिण्डाः ।

प्रकारान्तरेणेति :—

रसांशकाउन्नतविस्तृताश्च तिस्रोयवैकायुगभागतुल्या ।

पञ्चेति :—

पञ्चोथवा षट्शरवेदराम द्व्यंशैस्तताः स्युर्नवभाग-पिण्डाः । आद्यापरास्तच्छरभागहीना जिनांशकण्ठाद्बहिरेव सर्वाः ।

ष्टमांशेन द्वेकार्य्ये । इति । अर्काङ्ग भागोच्चततस्तु नाभिः कार्य्यः अयं नाभिः कुण्डाकारः । अथवा पद्मतुल्यः पद्म-कुण्डे तु न कार्य्यः । ( योनिरचना० ) । क्षेत्रार्द्धात् दीर्घा क्षेत्र तृतीयांशाद्विस्तृता क्षेत्र चतुर्विंशत्यंशपरिमाण-वती उपरि मेखलायुता अग्रेणनिम्नं अङ्गुल्यात्मकं विशन्ती वृत्तार्द्धद्वयेन युक्ता अधोभागे स्थूला अश्वत्थपत्राकृतिः मूलात् सच्छिद्रनाला मनोहरा सर्वकुण्डेषु योनिः कार्य्या ।

---

एकेति :—

( पिङ्गलाचार्य्यः ) एका षडङ्गुलोत्सेधा विस्तरा मेखला मता । ( लक्षणसंग्रहे विशेषः ) चतुरङ्गुलविस्तारोत्सेधा वैकैव मेखला इति । द्विमेखल इति तन्त्रान्तरे ।

तन्त्रान्तरे :—

षष्ठांशेनाष्टमांशेन मेखलाद्वितयं विदुः । इति । कुण्डा-नुकारा अपिमेखलाः स्युरर्काङ्गभागोच्चततस्तु नाभिः । ( कुण्डाकारोनाभिरम्भोजसाम्योवाब्जेयं न )

योनिरचनेति ।

योनिर्व्यासार्द्ध दीर्घा विततिगुणलवादायताग्धिर्द्विभागा । तुङ्गा तावत्समन्तात्परिधिरुपरिगातावदग्रेण रम्या । निम्नं कुण्डं विशन्ती वलयदलयुगेनान्विताधोविशाला मूलात्स-च्छिद्रनालान्तरवटरुचिराश्वत्थपत्राकृतिः सा ।

( कस्मिन्कुण्डे कुत्र योनिः कार्य्या । ) पूर्वस्याः कुण्डत्रयी दक्षिणदिग्योनिः उत्तराग्रा इतराणि पञ्चकुण्डानि पश्चिमयोनियुक्तानि पूर्वादिगग्रकाणि । योनिः कोणे योनिकुण्डेचनभवति । ( द्वादशाङ्गुलमेखलापक्षे ) पंचदशाङ्गुलिभिर्दीर्घा दशाङ्गुलैः विस्तृता योनिः कार्य्या ।

---

( कस्मिन्कुण्डे इति )

कुण्डत्रयी दक्षिणयोनिरैन्द्याः सौम्याग्रका स्यादितराणि पञ्च । पश्चाद्भगानीन्द्रदिगग्रकाणि योनिर्नकोणे नच योनिकुण्डे ।

( द्वादशांगुलेति )

अथार्काङ्गुलपक्षे तु मेखलानां दशाङ्गुलैः । विस्तृता तिर्यभिर्दीर्घाङ्गुलिभिर्योनिरिष्यते । ( श्रौते तु नाभिकण्ठयोन्योन कार्य्याः ) खातान्येतानि कुण्डानि तान्यिग्रके स्मार्तकर्म्मणि । अनामिकान्यकण्ठानि वियोनीति श्रुतेरिति मेरुतन्त्रे ।

सर्वसाधारणकुण्डविधानं विलिख्य अधुना कस्मिन्यज्ञे कीदृक्कुण्डं कार्य्यम् इति लिख्यते ।

( शान्तिसारे डामरतन्त्रे मार्कण्डेयपुराणे ) एकावरणसंयुक्ते योनिमण्डलमण्डिते । दशांशविधिना होममुक्तद्रव्येण साधयेत् । नवदुर्गामखे कुण्डमेवं जानीहि भूपते नित्यचण्डीविधानेऽपि कुण्डमीदृक् प्रकीर्तितम् । नवचण्डीमखे कुण्डमीदृग्लक्षणमुच्यते । एतद्द्विगुणितं कुण्डं शतचण्ड्यां प्रकीर्तितम् । शतमङ्गलनामानं कुण्डेग्निं प्रतिष्ठापयेत् ।

(तिस्रोमेखला ब्राह्मणानां क्षत्रियाणां द्वे। इति कुण्डकौमुद्यां। कस्मिन्यज्ञे ( होमे ) कीदृक्कुण्डं कार्य्यमिति लिख्यते ) दुर्गायज्ञे नित्यचण्डी विधाने नवचण्ड्युत्सवे एकावरण (एकमेखला) युक्तं योनिमण्डलमण्डितं कुण्डं कार्यम्। शतचण्ड्यां वैदिकदुर्गाराधने च द्विमेखलकं कार्यम्। नवग्रहमखे (अयुतहोमे) एकमेखलकं (लक्षहोमे) त्रिमेखलकं द्विहस्तं चतुर्हस्तंवा ( कोटिहोमे ) चतुर्हस्तं त्रिमेखलकं योनिद्वयोपतं कार्य्यम्। वैश्वदेवे दशाङ्गुलकं।

---

· ( वैदिकदुर्गाराधनेच )

कुण्डे वा स्थण्डिले वापि होमं कुर्य्यादतन्द्रितः। चतुरस्रं भवेत्कुण्डं मेखलाद्वयसंयुतम्। ( शान्तिसारे ) नवग्रहमखे कुण्डम् हस्तमात्रं प्रशस्यते। चतुरस्रं समन्तात्तु योनिवक्त्रं समेखलम्। चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता। प्रागुदक्प्रवणा कार्या सर्वतः समविस्तृता। लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम्। द्विहस्तं विस्तृतं तद्वच्चतुर्हस्तायतं पुनः। ( तद्वच्छब्दोविकल्पार्थः वक्त्रं कंठः योनिवक्त्रं च त्रिमेखलाश्च विद्यन्ते यस्य तत् इति ) कोटिहोमप्रकरणे वासिष्ठयाम्। चतुर्हस्तं भवेत्कुण्डं चतुरस्रं समन्ततः। योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्। द्विरङ्गुलोच्छ्रिताकार्या प्रथमा मेखला बुधैः। त्रिरङ्गुलोच्छ्रिता तद्वत् द्वितीया परिकीर्तिता। उच्छ्रायविस्तराभ्यां च तृतीया चतुरङ्गुला। चतुरङ्गुलविस्तारः पूर्वयोरपि शस्यते। *दशाङ्गुलकमिति* ( यज्ञपार्श्वे ) दशाङ्गुलं तु दैर्घ्येण विस्तारे

इति । प्राच्यादिषु दिक्षु विदिक्षु चाष्टौ ऐशान्यामेकमाचार्य्यं कुण्डमिति पूर्वोक्तप्रकारेण नवकुण्डानिकुर्य्यात् । तदशक्तौ चतुर्दिक्षु चत्वारि ऐशान्यामेकामिति पंच तत्राप्यशक्तौ एकमेव कुर्य्यात् । कुण्डनिर्माणस्यातीवदुष्करतयान्यूनाधिकतायां दोषश्रवणाच्च कुण्डस्थाने स्थण्डिलानि वा कुर्यात् । तत्रापि मेखलाकरणे न्यूनाधिकतायां दोषः स्यादतो मेखलादिरहितं स्थण्डिलं कुर्यात् । कुण्डनिर्माणे शक्तश्चेत् कुण्डमेव कुर्यात् । मुख्यतः तस्यैव शास्त्रोविधानात् (उक्तं च ) कुण्डरूपाग्न्यायतनकरणाशक्तौ स्थण्डिलं कार्यम् । (कुण्डे वा स्थण्डिले वा इत्याचार्यवचनाद्यदा स्थण्डिलं क्रियते तदा वेदिरेव कार्या न मण्डप इति प्रयोगपारिजाते ) नित्यंनैमित्तिकं होमं स्थण्डिलेवा समाचरेदिति शारदातिलकवचने द्वयोर्ग्रहणेन काम्ये न स्थण्डिलमित्यर्थादुक्तं भवतीति सं० रत्नमालायां ॥

---

चतुरङ्गुलम् । षडङ्गुलं तु उच्छ्राये मेखला द्व्यङ्गुलामता । वृत्तं वा चतुरस्रं वा कुण्डं स्याद् वैश्वदैविकम् । ( गृहकल्पावलौ विशेषः ) ॥ षडङ्गुलमथोच्छ्रायं गर्ते च चतुरङ्गुलम् । द्वादशाङ्गुलदीर्घं स्यात्कुण्डं वैश्वदैविकम् । (दोषश्रवणादिति) *जयद्रथयामले* । सूनाधिके सुहृद्द्वेषोमानहीने दरिद्रता । वाग्रोधः कण्ठहीने स्यादसिद्धिर्न्यूनखातके । अधिके चातुरो भोगोमानेनाधिकमेखले । व्याधयः संप्रवर्तन्ते वीतोष्ठे स्यादपस्मृतिः । उच्चाटः स्फुटिते छिद्रे संकुलेऽवाच्यताभवेदिति ।

( विश्वकर्मापि ) खातेधिके भवेद्रोगी हीने धेनु धनक्षयः । वक्रकुण्डे च संतापो मरणं छिन्नमेखले । मेखलारहिते शोको-ऽधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुण्डं यत्कण्ठ-वर्जितम् । इति । (आगमान्तरेपि) मानाधिके भवेन्मृत्युर्मान-हीनेदरिद्रताइति । मानहीनेमहाव्याधिरधिके धनुवर्द्धनं । योनिहीने त्वपस्मारो वाग्दण्डः कण्ठवर्जितः । (इति सिद्धान्तशेखरे) अनेकदोषदं कुण्डमन्यून्नाधिकं यदि । तस्मात्सम्यकपरीक्ष्यैव कर्तव्यं शुभमिच्छता । इति वासिष्ठसंहितायाम् ।

## ॥ अथ स्थण्डिलविचारः ॥

(स्मृतिसारे) कुण्डे वा स्थण्डिले वापि होमकर्म समारभेदिति (तथाचसूतसंहितायां) मध्यवेद्याश्चतुर्दिक्षु कुर्यात्कुण्ड चतुष्टयं । कुंडाभावे स्थंडिलेषु होमः कार्य्योयथाविधिः । (क्रियासारे) होमेष्टदिक्षु प्राक्प्रहः प्रागुदक्प्रवणोऽथवा । उदक्प्रहः प्रदेशो वा स्थण्डिलस्य स्थलंस्मृतम् । (वायवीयसंहितायामपि) । अथाग्निकार्यं वक्ष्यामि कुंडे वा स्थंडिलेपि वा । (इत्यादिवचनात् स्थंडिलेष्वपिहोमः कार्यः इतिनिर्णीतिः ) (तद्विधिश्च बौधायनगृह्यसूत्रे) सिक्ताश्चतुरङ्गुलं प्राचीनमुद्धृत्य पञ्चाङ्गुलीप्रमाणं पश्चिमतऊर्ध्वमङ्गुलीविशेषं दक्षिणत ऊर्ध्वमङ्गुली विहीनमुत्तरतः पञ्चप्रस्थं सिकताश्शुचयश्चनार्द्रा अरत्निमात्रं समचतुरस्रं प्राक्प्रवणं स्थण्डिलं करोतीति । ( सिकतामृत्पांसवः ) ( प्रयोगपारिजाते स्थण्डिलकरण कारिका ) प्राणानायम्य संकल्प्य परितः स्थण्डिलंशुचिः । अधिकं वेणुमात्रं वा गोमयेनोपलिप्य च । ( गृह्यपरिशिष्टे )

अथ होष्यन् धर्मकिञ्चिदुच्छ्रिता समाकृञ्जिमा भूमिः स्थण्डिल-मुच्यते । (तदिषु मात्रावरं)"नारायणः"।(इषोर्मात्रेवमात्रायस्य स्थण्डिलस्य तदिषुमात्रम् एकस्य मात्राशब्दस्य लोप उष्ट्र-मुखवत् । तच्चतदवरंच इषुमात्रावरम् । ( अवरंनिकृष्टम् ) चतसृष्वपि दिक्षु इषुप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं) भगवानपि* । अथशुद्धे समेदेशे आसीनः प्राङ्मुखः शुचिः। इषुमात्रं चतुर्दिक्षुगोमयेन सवारिणा । ( आपस्तम्बः )। इषुररत्नित्रयात्मकः । ( त्रिररत्निरिषु स्मृतः) ( शतपथे इषुप्रमा णम् ) पञ्चमादेश इषुर्भवति । अस्मिन्कल्पेपञ्चदशाङ्गुलपञ्चद-शाङ्गुलात्मकचतुर्ज्यं भवति ।

## ❀ श्रौतप्रकरणस्थं प्रसङ्गात् अग्न्यायतनमपि प्रदर्श्यते ❀

पिशीलमात्रा भवन्तीति धिष्ण्यानां विज्ञायते पिशीलं षड्विधम् अष्टादशाङ्गुलमेकं (१) विंशत्यङ्गुलं (२) बाह्वोरन्त-रालं (३) बद्धमुष्ट्यरत्निरिति (४) चतुर्विंशत्यङ्गुलं (५) षट्त्रिं-शदङ्गुलं च (६) षं ( धिष्ण्यानि अग्न्यायतनानि)विज्ञायत इत्यत्र श्रुतिरिति शेष इतिरत्न मा० (अग्न्यायतननिर्माणप्रकारः प्रसङ्गादेव कारिकाभिः प्रदर्श्यते ) पिशीलमात्रारज्जुः स्या-त्सा च सूक्ष्मा दृढा तया यावतीमानतोरज्जुस्तावत्यागन्तुकी भवेत् । आगन्तुक्याश्चिन्हमर्धे श्रोण्यां सार्द्धं तु तद्भवेत् । लक्ष्मान्तरार्द्धं पाशौ द्वावभितः सर्वरज्जुषु । पृष्ठ्यां प्रागायतां कृत्वा शङ्कून्न्यसेत्प्रमाणतः । दीर्घभागस्थितं पाशं पूर्वशङ्कौ प्रकल्पयेत् । ह्रस्वभागस्थितं पाशं क्षिपेच्छङ्कौ तु पश्चिमे । लक्षणं कर्षणार्थं तु ततआकृष्य दक्षिणे । क्लृप्तलक्षणत श्रोणिं दक्षिणां कल्पयेत्ततः । उत्तरेप्येवमाकृष्योत्तरां श्रोणिं

प्रकल्पयेत् । ततः पाशौ विपर्य्यस्य तस्यांशौ कल्पयेत्पुरः ( विश्वकर्म्मा० ) कृत्वा प्राक्सूत्रमृज्वेकं दक्षिणोत्तरमत्स्ययोः । न्यस्य सूत्रं ततः कोणैरङ्कितैश्चतुरस्रकम् । ( प्रागपरसूत्रं हस्तादीष्टप्रमाणकं कृत्वा मत्स्येन साधितयोर्दक्षिणोत्तरदिशोस्तत्प्रमाणं सूत्रमुभयतः । समार्धं कृत्वा तावत्प्रमाणेन सूत्रेण कृतमध्यकर्षणेन मत्स्येन वा चतुष्कोणाङ्कैश्चतुरस्रं संपन्नं भवति ) *साङ्गमायतनं स्मृतौ*अरत्निमात्रं विज्ञेयमग्नेरायतनं शुभम् । श्रौते चोपासने कण्ठखातयोनिविवर्जितम् । मेखलाद्वितयं कार्य्यं रेखालग्नं तु बाह्यतः । बाह्याऽङ्गुलविस्ताराऽभ्यन्तराचतुरङ्गुला । बाह्याषडङ्गुलोत्सेधाऽभ्यन्तरा द्वादशाङ्गुला ॥

( सर्वकर्म्मोपयोगी स्थण्डिलं हरिहर भाष्ये ) शुद्धायां भूमौ सप्तविंशत्यङ्गुलं मण्डलं परिलिख्य तत्र परिसमूह्य० इत्यादि । ( तथा च गृह्यकारिकायाम् ) हस्तमात्रं चतुष्कोणं बाहुमात्रमथापि वा । चतुरङ्गुलसमुच्छ्रायं स्थण्डिलं सर्वकर्म्मसु । ( पद्धतौ हस्तमात्रेत्युपलक्षणं होमबहुत्वे स्थण्डिलं महत्कार्यम् अर्थात्परिमाणम् इतिकात्यायनवचनात् कल्पलतायामपि तथैव दर्शनात् । तत्प्रमाणं च पूर्वोक्तकुण्डप्रमाणवत् ज्ञेयम् ) *अष्टाङ्गुलोच्छ्रायकं स्थण्डिलं कर्मप्रदीपे *अष्टाङ्गुलसमुत्सेधं चतुर्विंशाङ्गुलायतम् । पन्नगास्तत्र सीदन्ति तदर्थं स्थण्डिलं भवेदिति । त्र्यस्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मितम् । सिकताद्यैर्विधातव्यं स्थण्डिलं हस्तमात्रकम् । ( इति चन्द्रपीठे ) ( प्रादेशमात्रोच्छ्रायकंस्थण्डिलं बोधायनगृह्यसूत्राष्टमाध्याये

ऽपि ) अथ शुचौ समेदेशे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलं कृत्वा प्रादेशमात्रमुच्छ्रितमिति । ( गोचर्मलक्षणं कारिकायां ) अष्टाङ्गुलिभिः प्रादेशं प्रादेशैकेनतत्पदं । पदैर्द्वादशभिश्चैव गोचर्मत्वृषिभिः स्मृतं । अंगुष्ठेन कनिष्ठान्तं योजनीयं प्रयत्नतः । प्रादेशतालगोकर्णवितस्तिरिह कथ्यते ।

विधानपारिजाते शुल्वसूत्रे च

## होमसंख्यानुसारतः स्थण्डिलोच्छ्रायप्रमाणम्

कार्य्याशतार्द्धेङ्गुलसम्मितोच्छ्रितिः शताहुतौ द्व्यङ्गुल सम्मितोच्छ्रितिः सहस्रहोमे चतुरङ्गुलोच्छ्रितिर्वस्वङ्गुलास्यादयुतेसमुच्छ्रितिः । नृपाङ्गुलालक्षहुतौ समुच्छ्रितिर्विंशाङ्गुलास्यात्प्रयुते समुच्छ्रितिः । तत्वाङ्गुलाकोटिमखे समुच्छ्रितिस्ततोधिकं नोविदधीतमानकम् ॥ १ ॥ ( स्थण्डिलेपि कण्ठः कार्यश्चेत् तत्प्रमाणं कुशकण्डिकाभाष्ये ) स्थण्डिलं मृन्मयं कार्यं चतुर्विंशत्यङ्गुलायतम् । द्विरङ्गुलं भवेत्कण्ठं व्यासस्य वचनं यथा ( कण्ठमानं शम्भौ ) वहिरेकाङ्गुलः कण्ठोद्व्यङ्गुलः क्वचिदागमः । ( कुण्डार्के ) ( स्युर्वहिर्मेखलास्तु । ( कुण्डपद्मिन्यां ) कण्ठाद्वहिर्मेखला भवति । ( वासिष्ठीभाष्ये शौनकादयः ) ( नखाताद्वहिर्मेखलाभवतीतिवचनात्खातंमेखलादिसहितं मन्यन्ते । ( स्थण्डिलमवलम्ब्यपद्धतौ ) ( कश्चित्कुण्डवत्स्थण्डिलेऽपिमेखलायोन्यादिकार्यमित्याह । तदज्ञानविजृम्भितमिति ( केनचित्ग्रन्थकारेण स्वकीयग्रन्थे कुण्डवन्मेखलां कृत्वा इत्यलेखि । परं कुत्र भगवान् वौधायनः कथितवान् इति नालेखि । सर्वत्र सूत्रकारैः स्थण्डिलप्रकारो-

मेखलारहितएवोक्तः परं कैश्चित्तन्त्रवादिभिः स्थण्डिलं मेखलासहितमप्युक्तं । यथा 'सूतसंहितायां स्थण्डिले मेखला कार्य्या कुण्डोक्तस्थण्डिलाकृति । (तन्त्रान्तरेपि) समेखलं स्थण्डिलं तु प्रशस्तं होमकर्म्मणि । इति ! (मेखलासहितस्य कुण्डसंज्ञा प्रतिपादिता गोभिलीयगृह्यकर्म्मप्रकाशिकायां । तद्यथा) प्राचीनप्रवणमुदीचीनप्रवणं समं वा भूप्रदेशमुपलिप्यारत्निमात्रं समंचतुरस्रं द्वादशाङ्गुलोच्छ्रितम् चतुरङ्गुलविस्तृतमेखलात्रययुक्तं कुण्डं कृत्वा इति ।

## कुण्डेषुपंचावधिः संख्या मेखलानाम्

सर्वत्राहुतिसङ्ख्यापूर्वकं प्रमाणं दर्शितम् । यथा अयुतहोमे एकमेखलकं । लक्षहोमे च त्रिमेखलकं कुण्डम् । एवं नवरात्रयागेनित्यचण्डीमखे च एक मेखलं । शतचण्डीप्रयोगे तु द्विगुणं कुण्डं निष्पाद्यते । तस्यैव शास्त्रे विधानात् । वैदिकदुर्गाराधनेपि द्विमेखलकमेवकुण्डं विहितम् । स्मार्त प्रयोगेषु सर्वत्रैव मेखलास्थानं कण्ठवहिर्भूतमेव प्रतिपादितम् । श्रौते च यत्र कण्ठरहितं कुण्डं न तत्र योनिरपि निर्मीयते । तत्र कुण्डेषु एका वा द्वे मेखले भवतः (मेखलाविषये द्वावेव पक्षौ) मेखलासहितं खातं खाताद्वहिर्भूता वा मेखला । द्वयोरेवप० मेखलापरिमाणतः कुण्डखातपरिमाणस्याधिकं निश्चितम् । एवं स्थण्डिले मेखलाचेत्क्रियेत तदा मेखलापरिमाणतः स्थण्डिलोच्छ्रायपरिमाणाधिक्यत्वं अर्थादेव लभ्यते । यत्र केवलायां समस्थल्यां योनिकण्ठविरहिता मेखला तद्भावरणम् । योनिकण्ठवर्जिते स्थण्डिले मेखला वप्रेतिनाम्ना प्रख्याता । सर्वत्र सूत्रेषु पद्धतिषु च स्थण्डिलरचना

मेखला शून्यैव प्रदर्शिता ) परं कैश्चित्तन्त्रवादिभिर्मेखलासहितापि समर्थिता। तथापि यत्र मेखलाविधानं तत्र कण्ठयोनिरचनाविधानमपि अवश्यम्भावी। मेखलाविधानवादीनां प्रामाण्येनैवैतत्सिद्ध्यति। (यथा अग्न्यायतनधर्मास्ते मेखलादयः) अत्र मेखलादयइतिबहुवचननिर्देशेन आदिशब्देन च कण्ठयोनिमेखलाइति त्रयाणामेव ग्रहणम् मेखलाकण्ठनाभ्यः इति पारिजातीय वचनात् कण्ठकरणमपि अभ्युपगतम् कण्ठश्चेत्त्वाभ्युपगम्यते मेखलारचना तद्बहिर्भूतैव भवेत्। विकण्ठेऽपैति पञ्चताम्। वाग्रोधः कण्ठहीने। इति दोषसम्भावना कुण्डवत्स्थण्डिलेऽपि तुल्यैव। यत्रयत्राचार्य्यवरैः आधानादिहोममधिकृत्य समानमेखलकं स्थण्डिलं समतलेकण्ठयोनिरहितं स्थण्डिलं विहितम् तत्र तस्य कुण्डइति संज्ञा लिखिता। अतोनमेखलायुक्तं स्थण्डिलं रचयेत्। रचयेच्चेत्तर्हि कण्ठाद्बहिर्भूतमेव मेखलां विदध्यात्। एवम्प्रकारेण यदि क्रियेत तदा तस्य वेदीति संज्ञास्यात्। चतुरङ्गुलोच्छ्रायपरिमिते स्थण्डिले त्रिमेखलाविधानं स्थूलपुरुषकण्ठकटिप्रमाणादिभिः कृशपुरुषकण्ठकटिरचनातुल्यम्। नवचण्ड्यां शतचण्ड्यां सहस्रचण्ड्यां वान क्वापि मुख्यतःस्थण्डिलविधानमपितु कुण्डविधानमेव। (शतचण्डीप्रयोगेवैदिकदुर्गाराधने च द्वयोर्मेखलयोरेव विधानम्)सूतसंहितायामपि। स्थण्डिलाकृतीति एकवचनान्तेनैकैव मेखलाप्रतिपादिता। नतिस्रः। चतुरङ्गुलोच्छ्राये स्थण्डिले नवांगुलोच्छ्रायक त्रिमेखलाकरणं प्रतारणमात्रमेव। यत्र कुत्रापि त्रिमेखलाकरणं विहितम् तद्द्वादशांगुलोच्छ्राये एव। (अधिककरणे दोषः) ( जयद्रथयामले) अधिकमेखले व्याधयः संभवन्ति। इत्यादि स्थण्डिलं सर्वत्र शुद्धवालुकया शुद्धमृत्तिकया वा रचनीयमिति

शास्त्राज्ञा। पक्के ष्टनिर्मितिस्तु सर्वथैव शास्त्रसिद्धान्तावमानयित्री केवलबालमनोरञ्जिनी । स्थण्डिलरचनाप्रकारःपूर्वोक्तोद्रष्टव्यः इत्यलमतिविस्तरेण ।

## एकहस्ताद्दशहस्तान्त कुण्डेषु भुजमानक्षेत्रफलप्रदर्शकंचक्रम् ॥

| ह० हस्ताः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| अंगुलानि | २४ | ३४ | ४१ | ४८ | ५३ | ५८ | ६३ | ६७ | ७२ | ७५ |
| यवाः | ० | ० | ५ | ० | ५ | ६ | ४ | ७ | ० | ७ |
| क्षेत्रफलानि | ५७६ | ११५२ | १७२८ | २३०४ | २८८० | ३४५६ | ४०३२ | ४६०८ | ५१८४ | ५७६० |

## सूक्ष्मभुजमान प्रदर्शकचक्रम् ॥

| हस्ताः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| अं० | २४ | ३३ | ४१ | ४८ | ५३ | ५८ | ६३ | ६७ | ७२ | ७५ |
| यवाः | ० | ७ | ४ | ० | ५ | ६ | ३ | ७ | ० | ७ |
| यू० | ० | ४ | ४ | ० | २ | २ | ७ | ० | ० | १ |
| लिक्षा | ० | ४ | ३ | ० | ४ | ३ | ७ | ३ | ० | २ |
| वाला० | ० | ३ | ४ | ० | ६ | २ | २ | ५ | ० | ० |
| रथ० | ० | ५ | ५ | ० | ४ | ६ | ० | ६ | ० | ४ |
| त्रस० | ० | ४ | | ० | | | १ | | ० | |

# ॥ उपपत्तिः ॥

एकहस्तक्षेत्रस्य चतुर्विंशत्यङ्गुलात्मकस्य भुजकोटिघातः क्षेत्रफलं तच्च षट्सप्तत्यधिकपञ्चशती ५७६ एतत्पदमेकहस्तस्य क्षेत्राङ्गुलानि २४ चतुर्विंशतिः एवं क्षेत्रफलस्य षट्सप्तत्यधिकपञ्चशतात्मकस्य द्व्यादिगुणितस्य यन्मूलं तदेवभुजमानं ॥ इतिसर्वत्र ज्ञेयम् ॥

## आहुतिसंख्यया कुण्डभुजाङ्गुलमानप्रदर्शकच० ॥

| आहुति संख्या | | अंगु० | यव | यूका | लिक्षा | बालाग्र |
|---|---|---|---|---|---|---|
| ह० मा० हस्तार्ध | १० | १२ | ० | ० | ० | ० |
| | २० | १४ | ६ | १ | २ | २ |
| | ३० | १७ | ० | ६ | ३ | २ |
| | ४० | १९ | १ | १ | ५ | ३ |
| रत्निहस्तः | ५० | २१ | ० | ० | ० | ० |
| | ६० | २१ | २ | ३ | ६ | ६ |
| | ७० | २१ | ४ | ७ | १ | ३ |
| | ८० | २१ | ७ | २ | ३ | ० |
| | ९० | २२ | १ | ५ | ३ | ४ |
| | १०० | २२ | ४ | ० | ० | ० |
| | २०० | २२ | ५ | २ | ७ | ० |
| | ३०० | २२ | ६ | ५ | ६ | ० |
| | ४०० | २३ | ० | ० | ५ | ० |
| | ५०० | २३ | १ | ३ | ३ | १ |
| | ६०० | २३ | २ | ६ | ० | ५ |
| | ७०० | २३ | ४ | ० | ५ | १ |
| | ८०० | २३ | ५ | ३ | १ | ५ |
| | ९०० | २३ | ६ | ५ | ६ | ० |
| १ को हस्तः | १००० | २४ | ० | ० | ० | ० |
| | २००० | २५ | २ | ३ | ० | ५ |
| | ३००० | २६ | ४ | २ | ० | ७ |
| | ४००० | २७ | ५ | ५ | ५ | ० |
| | ५००० | २८ | ६ | ६ | ० | ५ |
| | ६००० | २९ | ७ | ३ | ४ | १ |
| | ७००० | ३० | ७ | ६ | ७ | ६ |
| | ८००० | ३२ | ० | ० | ० | ० |
| | ९००० | ३२ | ७ | ७ | ० | ३ |
| द्वौ हस्तौ | १०००० | ३३ | ७ | ४ | १ | ६ |
| | २०००० | ३६ | ० | ० | ० | ० |
| | ३०००० | ३७ | ७ | ४ | ४ | ७ |
| | ४०००० | ३९ | ६ | ३ | १ | ४ |
| त्रयोहस्ताः | ५०००० | ४१ | ४ | ४ | ३ | ३ |

| आहुति संख्या | | अंगु० | यव | यूका | लिक्षा | वालाग्र |
|---|---|---|---|---|---|---|
| | ६०००० | ४२ | ७ | ३ | ५ | १ |
| | ७०००० | ४४ | २ | ० | २ | ० |
| | ८०००० | ४५ | ५ | २ | २ | ३ |
| | ९०००० | ४६ | ६ | २ | १ | ७ |
| चत्वारोहस्ताः | १००००० | ४८ | ० | ० | ० | ० |
| | २००००० | ४९ | २ | ४ | १ | २ |
| | ३००००० | ५० | ४ | ६ | १ | १ |
| | ४००००० | ५१ | ६ | ६ | १ | १ |
| पञ्चहस्ताः | ५००००० | ५३ | ० | ४ | ० | ६ |
| | ६००००० | ५४ | २ | ० | ५ | ० |
| | ७००००० | ५५ | ३ | ३ | १ | ५ |
| | ८००००० | ५६ | ४ | ४ | ३ | २ |
| | ९००००० | ५७ | २ | ५ | ६ | ६ |
| षड्हस्ताः | १०००००० | ५८ | ६ | २ | ३ | ४ |

## ❀ एवमग्रेपिबोध्यम् ❀

अन्तरं नवभिर्भक्तं यत्पूर्वापरकुण्डयोः । अङ्गुलानि यदाप्तं तु सा वृद्धिरिष्टहोमके । इति सूत्रात् । सहस्रान्तरे चतुःषष्टि ६४ वृद्धिः ।

योन्यादिकुण्डेषु यावन्तोहस्ता आहुतिसंख्यानुसारेण कुण्डे चिकीर्षितास्युस्तावद्धस्ताङ्गुलमानमितं मानदण्डं । यजमान पञ्चमांशात्मकहस्ताङ्गुलैर्भित्वा समं सम्पादयेत् । तत्र मानदंडे चतुर्विंशत्यंशकाः कार्याः तदङ्गुलमानं स्यात् । तैरङ्गुलैः सार्धद्वियवाधिकत्रिंशदाद्यङ्गुलमानं कृत्वा योन्यादि-कुण्डरचना कार्या । वातनाभिकण्ठमेखलायोनिरूपाणि पञ्चा-ङ्गान्यपितेषुतैरेवाङ्गुलैः सम्पाद्यानि ॥ इति समीक्षाचक्रवर्तिः ॥

इति श्री. भाष्याचार्य पं० हरिनामदत्त शास्त्रि तनय विद्यावाचस्पति पं० देवीप्रसाद शास्त्रि प्रणीत शतचंडीयज्ञविधानस्य प्रथम खण्डे मण्डप वेदि पीठ कुण्ड स्थण्डिल रचना प्रकारः ।

# * अथ संगृहीताः परिभाषाः *

स्नातः कुर्वीतोपवीती सर्वंकर्म पवित्रवान् । आचान्तः पुनराचामेत्तिलकी बद्धचूडकः ॥ १ ॥ श्रद्धया कर्म्म कुर्वीत धौतवस्त्रधरोभवेत् । अव्यग्रोलङ्कृतोमौनी दम्भासूयादिवर्जितः ॥ २ ॥ आपद्युक्तोऽपिशुद्धः सन्नेव कर्म्म समाचरेत् । जपहोमादिषु नरमन्यं नाकारणात्स्पृशेत् ॥ ३ ॥ अबुद्धिपूर्वसंस्पर्शश्चेद् दा वायुपस्पृशेत् । बुद्धिपूर्वकसंस्पर्शे प्राणायामत्रयं चरेत् ॥ ४ ॥ वर्णत्रयस्यसंस्पर्शादाचम्य प्रयतोभवेत् । संस्पर्शे प्रतिलोमानां स्नानमेव विधीयते ॥ ५ ॥ खलवाटत्वादिदोषेण विशिखश्चेन्नरोभवेत् । कौशीं तदा धारयीत ब्रह्मग्रन्थियुतां शिखाम् ॥ ६ ॥ कार्य्यं सप्तभिर्दर्भैर्धार्या श्रोत्रे तु दक्षिणे । नैकवासा नच द्वीपे नान्तराले कदाचन ॥ ७ ॥ श्रुतिस्मृत्युदितं कर्म्म न कुर्य्यादशुचिः क्वचित् । परितोवेष्टितोदेशोऽद्भिर्यः सद्वीपमुच्यते ॥ ८ ॥ अनावृतस्तु योदेशः सोऽन्तरालं प्रकीर्तितम् । दानं प्रतिग्रहोहोमो भोजनं बलिरेवच ॥ ९ ॥ साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथाभवेत् । अप्रौढपादः कुर्वीत कृताऽस्वायाम एव च ॥ १० ॥ त्रिमात्रः प्रणवोवाच्यः कर्म्मारम्भे च सर्वदा । उपोषितः कर्म्मकुर्याद्विध्यनुज्ञे विना सदा ॥ ११ ॥ पेषणादिकयन्त्रेषु शब्दोयावत्प्रवर्तते । पतितान्त्यजचाण्डालादीनां यावच्चशब्दकः ॥ १२ ॥ तावत्कर्म न कर्त्तव्यं तथा संध्याद्वयेऽपि च । संकीर्त्यमासपक्षादीन्निमित्तानि तथैव च ॥ १३ ॥ इदं कर्म करिष्येऽहमिति संकल्पमाचरेत् । यावन्ति कर्म्मसं बद्धान्यृक्षाणि स्युस्तुतावताम् ॥ १४ ॥ वारादीनामपि तथा युक्तं सर्वत्र कीर्तनम् । केनचित्त नवीनेन प्रोक्त

मेतत्तु युक्तितः ॥ २५ ॥ कर्मण्यनियतैर्धर्म्मैः साध्ये साधारणो-क्तितः । वारादीनां समुल्लेखो निर्वाह्योऽस्मिंस्तु कल्पके ॥ १६ ॥ प्रायोगिकास्त्वेकभादेरेव कुर्वन्ति अनुकीर्तनम् । अनुल्लङ्घ्य स्वशास्त्रोक्तविधिं कर्म समाचरेत् ॥ १७ ॥ कर्मान्यथा कृतं ज्ञात्वा तावदेव पुनश्चरेत् । प्रधानस्याक्रियायां तु साङ्गं तत्पुनराचरेत् ॥ १८ ॥ तदङ्गाकरणे प्रायश्चित्तमेव न कर्म तत् । प्राचीदिशामनुक्तौ स्यादथवैशान्युदक्स्मृता ॥ १९ ॥ अनुक्तौ प्रहुतादीनां कर्तुरासीनता भवेत् । कर्त्राङ्गाणामनुक्तौ तु दक्षिणाङ्गं प्रकीर्तितम् ॥ २० ॥ चक्षुरादिषु नैतत्स्यादितिना-रायणः सुधीः । कदङ्गस्पर्शने वामोहस्तोऽन्यस्पर्शनेऽन्यकः ॥२१॥ नाभ्यधोङ्गान्यसन्ति स्युर्नाभ्यूर्ध्वं स्युस्तुसन्ति वै । नाभौत्वन्य-तरोहस्त इतिज्ञेयं विचक्षणैः ॥ २२ ॥ करेरोगोयदि तदोभये-षोभयौ स्मृतौ । अवैधं नाभ्यधः स्पर्शं कर्मकाले नचाच रेत् ॥ २३ ॥ रक्तपूयो (य) रेतआदिस्पर्शे स्नानं प्रकीर्तितम् । प्राक्संस्थं कर्मदेवानामुदग्दिगपवर्गकम् ॥ २४ ॥ उदग्दिक्सं-स्थमथवा प्राचीदिगपवर्गकम् । दक्षिणाशापवर्गंतु प्रत्यग्दिक्सं-स्थमेव हि ॥ २५ ॥ पित्र्यं कर्म प्रकर्त्तव्यं स्पष्टं यदिवचोभवेत् । अङ्गोपस्पर्शने वस्त्रदशासंस्पर्शने तथा ॥ २६ ॥ छेदने भेदने चैव निरासे खनने तथा । पैतृके राक्षसे रौद्रे नैर्ऋते चाभिचारिके ॥ २७ ॥ एतेषु वै निमित्तेषु जलोपस्पर्शनं भवेत् । अधोवायुसमुत्सर्गे प्रहासे ऽनृतभाषणे ॥ २८ ॥ मार्जारमूषकस्पर्शे आक्रन्दे क्रोधसम्भवे । निमित्तेष्वपि सर्वेषु कर्मकुर्वन्नपः स्पृशेत् ॥ २८ ॥ यत्वोत्वा- स्वोः स्नानमुक्तं तदन्य विषयं भवेत् । इति केचिद् बुधाः

प्राहुरन्ये त्वित्थं समूचिरे । ३० ॥ पुच्छान्यदेश संस्पर्शे उदकः स्पर्शनं भवेत् । स्नानं तु पुच्छस्पर्शे स्यात्कर्मकाले च भोजने ॥ ३१ ॥ अबुद्धिस्पर्शविषये वायुपस्पर्शनं भवेत् । बुद्धिपूर्वे तु स्नानं स्यादिति प्राहुः परेबुधाः ॥ ३२ ॥ सौम्याख्यदिशि कर्तव्यो निरासो देवकर्मसु । पितृकर्मसु याम्याख्यदिक्षु परिकीर्तितः ॥ ३३ ॥ दैवे कर्मणि चासन्ते प्रादक्षिण्यं प्रकीर्तितम् । पित्र्येप्येवं बुधैर्ज्ञेयं नेदं स्यात्परिषेचने ॥ ३४ ॥ अप्रादक्षिण्यमेवस्यात्तत्र सूत्रकृदुक्तितः । निवीतिता न मानुषेस्याद्दैवे यज्ञोपवीतिना ॥ ३५ ॥ प्राचीनावीतितातु स्यात्पित्र्ये स्पष्टं वचो यदि । स्मृत्युक्ताङ्गेषु विज्ञेये उभेस्मृत्युक्तरीतितः ॥ ३६ ॥ अप्रादक्षिण्यापसव्ये सूत्रोक्तोनियमोऽत्रवा । हवनं भोजनं दानं श्राद्धं देवार्चनादि च ॥ ३७ ॥ वहिर्जानुन कार्यं स्यात्तद्वदाचमनं स्मृतम् । विहारः पृष्ठतोनैव प्रकर्तव्यः कदाचन ॥ ३८ ॥ पात्राण्याज्यं हविर्वन्हिरेतेष्वन्तः क्रमात्परम् । कर्तारस्तु वहिर्भूता एवैष्वन्तस्तु होमकृत् ॥ ३९ ॥ वहिर्भूतस्ततोब्रह्मा ऽन्येभ्याऽन्तर्भूतईरितः । सर्वेषु एतेषु पत्न्यन्तस्ततोऽप्यन्तः पतिर्भवेत् ॥ ४० ॥ एतत्सर्वत्रविज्ञेयं विशेषविधिना विना । अविज्ञाता स्वरामंत्राः प्रयोक्तृभ्याप्रयोक्तृभिः ॥ ४१ ॥ एकश्रुत्यैव सर्वत्रजयन्तस्वामिभाषणात् । ऋषिं च देवतां छन्दोविनियोगं मनोस्तया ॥ ४२ ॥ विज्ञायैवक्रियाः कार्याः याज्ञवल्क्यमुनिस्मृतिः । ऋषिश्छन्दोदेवता च छन्दश्चर्षिदेवता ॥ ४३ ॥ ऋषिश्च देवताछन्द इत्येवं स्यात्त्रिधाक्रमः । सौत्रमन्त्रावेदाविद्भिर्वामदेवर्षयः स्मृताः ॥ ४४ ॥ लिङ्गोदितोभवेद्देवोऽस्पष्टे देवेऽनलः स्मृतः । सौत्रे ऋष्यादिविज्ञानं नेत्युक्तं पारिजातके ॥ ४५ ॥ वैतानिके मखे श्राद्धे ब्रह्मयज्ञे तथैवच । ऋष्याद्यवगते नैत्रा

प्रेक्षास्तीति पुरातनाः ॥ ४६ ॥ श्रौते श्राद्धे च मन्त्रादौ प्रणवो
पि न हीष्यते । अन्ये त्वेतस्य वचसो निर्मूलत्वादितोपि च ॥ ४७ ॥
स्याद्दृष्यादिस्मृतिस्तारोच्चारणं चेति वैजगुः । मन्त्रान्तस्य
स्वरस्य पाठकाले हि कर्मणः ॥ ४८ ॥ सर्वत्रोपक्रमः कार्यः
सूत्रकारस्य वाक्यतः । स्वाहाकारो हि मन्त्रान्ते नित्योगाह्यो
प्रकीर्तितः ॥ ४९ ॥ पिण्डमन्त्रे पि नो यत्र स्वधाकारनिदर्श-
नम् । स्वाहान्त एव तत्र स्यादिति भाष्यकृतेरितम् ॥ ५० ॥
मन्त्रादौ मन्त्रमध्ये वा स्वाहाशब्दोस्तिचेत्तदा । नान्ते
प्रयोक्तव्य इति प्रोक्तवानाश्वलायनः ॥ ५१ ॥ भवेदव्यवधानेन
देवतापदतः पुरा । स्वाहाकारस्य पाठश्चेत्त्यागान्ते भवेदयम् ॥
नचेद्वेत्पाठ इत्थं तदान्तेपि भवेत्स तु । स्वधामिति मंत्रे
स्मिन्नर्थे ह्यस्तिनिदर्शनम् ॥ ५३ ॥ इदमेवानुसर्तव्यमतएव
मनीषिभिः । मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी
॥ ५४ ॥ तदन्तेन्यां प्रयुञ्जीत सा होमाङ्गतयामता । शक्ति
संगमतन्त्रोक्तादेतस्माद्वाक्यतः पुनः ॥ ५५ ॥ स्वाहाशब्दं
प्रयुञ्जीत तन्त्रस्य प्रबलत्वतः । विशेषोयं तन्त्रयुक्ते वैदिके होम-
कर्मणि ॥ ५६ ॥ जुहोति विधि संबद्धमन्त्रेष्वेष विधिः स्मृतः ॥
स्वाहान्तोनाममन्त्र स्यादमन्त्र स्वाहुतिष्वयो ॥ ५७ ॥ कर्म-
शिष्टोदकं कर्म समाप्तौ तु परित्यजेत् । नत्वन्यत्रोपयुञ्जीता
चमनक्षालनादिषु ॥ ५८ ॥ मन्त्रमुच्चारयेन्मन्त्रप्रतिपाद्यं तु
शेषिणम् । संस्तुवंस्तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ ५९ ॥
आभिमुख्ये क्षणाधिक्यादेतच्चाभिमंत्रणम् । शेषिणश्चिन्तनं
कुर्वन् सम्यक्स्थित्वा समीपतः ॥ ६१ ॥ सन्निधौ तिष्ठन्ना-
सीनो वा कुर्वञ्छेषचिंतनम् । नतिमुद्रायुतोमन्त्र पठेदिप-
सुपस्थितिः ॥ ६१ ॥ अभिमर्शोमन्त्रपाठः संस्पर्शसमकालिकः ।

चतुःस्वरोच्चारणात्मा जपतीति विधौजपः ॥ ६२ ॥
अभिमर्शानुमन्त्राभिमन्त्रोपस्थितिकर्मणाम् । प्रसा-
धितं जपत्वं हि व्याख्याकृद्भिरतस्त्वयम् ॥ ६३ ॥ चतुः
स्वरत्वधर्मस्तु मन्त्रेष्वेतेष्वपि स्मृतः । ततोऽन्यत्र तु मन्त्राणां
नियतैकश्रुतिर्भवेत् ॥ ६४ ॥ कात्यायनमताद्वापि स्युर्वा
"स्वरसंयुता,, । सर्वत्रैव ग्रूह्यसामनोश्चत्वारोनियताः
स्वराः ॥ ६५ ॥ संवादप्रैषभिन्नानां मन्त्राणां स्यादुपांशुता ।
आश्रवणं प्रवरणं प्रत्याश्रावणमेव च ॥ ६६ ॥ श्रौतएतान्यपि
ज्ञेयान्युच्चैरेव विचक्षणैः । कुर्य्यादुपनयनादीनि विवाहान्तानि
लौकिके ॥ ६६ ॥ प्रायश्चित्ताख्यकर्माणि काम्यकर्माणि वै
तथा । औपासने लौकिके वा कर्त्तव्यानि सदा बुधैः ॥ ६८ ॥
उपाकर्मोत्सर्जने तु कुर्याच्छिष्ययुतोयदि । लौकिकाग्नौ तदा
कुर्यादशिष्यश्चेत्स्ववह्निके ॥ ६८ ॥ गृह्यानले प्रकर्तव्योहोमः
पारायणीयकः । पारायणस्यकर्ता चेद्वृत्विग्लोकानले तथा ७० ॥
अवशिष्टं गृह्यकर्म कार्यमौपासनेऽनले । औपासनाग्निसाध्येषु
प्रजासंस्कार कर्मसु ॥ ७१ ॥ मुख्यकर्तुरभावेन यदि कर्त्र-
न्तरे भवेत् । लौकिकाग्नौ तदाकर्म नतु गृह्ये कदाचन ॥७२ ॥
सर्वाधानीभवेद्विप्रश्चेत्तदा तत्र लुप्यते । स्थालीपाकः पार्व-
णाख्यऔपासनाहुतिस्तथा ॥ ७३ ॥ मासिश्राद्धादिलौकाग्ना-
विति केचिद्व्बुधा जगुः । मासिश्राद्धं दक्षिणाग्नावष्टकादीनि
लौकिके ॥ ७४ ॥ वैजयन्तीकृदाहेति प्राहुरन्येपि
केचन । प्रजासंस्कारकर्माणि स्युर्लौकानलएव तु ॥ ७५ ॥
शास्त्रान्तरे प्रोक्तं चित्तहोमाःसंधानहेतवः । नष्टस्य कर्मणोयस्मा
त्तस्मात्स्युर्गृह्य एव ते ॥ ७६ ॥ स्वतन्त्रत्वाल्लौकिकाग्नावेव
शास्त्रान्तरेरीतम् । ग्रहयज्ञादिकं कार्यं नतु गृह्यानले चरेत् ॥

७७ ॥ गृह्यान्तरोक्त लोकाग्नौ गृह्याग्नावप्याचरेत् । पुनरग्न्याहितौ सर्वाधाननिर्मथितानले ॥ ७८ ॥ आनीते श्रोत्रियागारात्तु ग्नौ ब्रह्मौदनक्रिया । विवाहे यदि निर्मन्थ्यस्तदा तस्यात्तु मंथनम् ७९ ॥ यदि द्वितीयः पक्षः स्यात्स्वीकार्योऽत्र स एव तु ॥ एवंरूपा व्यवस्थातु व्याख्याकृद्भिः प्रदर्शिता ८० ॥ बहुशुष्केन्धने चाग्नौ सुसमिद्धे विधूमके । आङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥ ८१ ॥ आज्यहोमे स्रुचकृना दर्व्येव विहिता यतः । अतस्तत्रभवेत्सैव न स्रुवेणाहुतिर्भवेत् ॥ ८२ ॥ साधनं क्षीरद्रव्यादिहोमे दर्वीस्रुवोऽथवा । सूत्रकृद्भिर्हिते होमे, द्रव्यस्य कठिनस्यतु ॥ ८३ ॥ दर्वीहस्तोऽथवा ज्ञेयः शान्त्यादौ "हस्त,, एव तु । होमे शिष्टैराहुतोऽस्ति यतोऽतोऽत्र स एव हि ॥ ८४ ॥ हस्तएवाचार्य्यवाक्यादौपासनहुतौ भवेत् । होम द्रव्येऽनादिष्टे "सर्वत्राज्यं,, प्रकीर्तितम् ॥ ८५ ॥ कण्ठोक्तचासमिधां स्याच्चेयत्रप्रादेशमात्रता । तत्रैव सास्यादन्यत्र त्वैच्छिकीयं समीरिता ॥ ८६ ॥ औषध्यः सक्तवः पुष्पं काष्ठं मूलं फलं तृणम् । एतद्धस्तेन होतव्यं नान्यत्किंचिद्रचोदनात् ॥ ८७॥ अनादेशे दक्षिणा गौर्हेमवा पूर्णपात्रकम् । देवकार्येनैवदेयं रजतं त्वशुभं हि तत् ॥ ८८ ॥ पात्रं पादोपसपृष्टं प्रक्षाल्यं सर्वथा बुधैः । हुतं यन्मात्रधौतेन तन्न भुङ्क्ते हि देवता ॥ ८९ ॥ पात्राणां शोधनं नातः कार्यं केवलहस्ततः । किन्तु दर्भैस्तृणैर्वापि पर्णैर्वा वाससापि वा ॥ ९० ॥ सर्वेषु धर्मकार्येषु पत्नी दक्षिणतो भवेत् । अभिषेके विप्रपादक्षालने "वामतः,, स्मृताः ॥ ९१ प्रभु प्रथमकल्पस्य योऽनुकल्पेन वर्तते । सनाप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥ ९२ ॥ बहल्पंवा स्वगृहीक्तं यस्ययावत्प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते

# ॥ अथ नित्यस्नानप्रयोगः ॥

शुचिर्भूतः कर्ता शुभ्रां यथादेशसम्भवां वा मृदम्, आर्द्रगोमयं कुशान् तिलाक्षतान् सुरभीणि पुष्पाणि, भस्म चादाय तीर्थतटे गच्छेत्। तदनन्तरं सूर्य्याभिमुखस्तीर्थानि प्रार्थयेत् (तीर्थप्रार्थना) नमामि गङ्गे तवपाद

---

सर्वं कृतं भवेत् ॥ ८३ ॥ यन्नाम्नातं स्वशाखायां पारक्यमविरोधियत्। आकाङ्क्षितं शेषभूतमनुष्ठेयं विचक्षणैः ॥ ८४ ॥ तत्कृतौ फलवैशिष्ट्यं न दोषस्त्वकृतौ भवेत्। ग्रामधाचारिकाधर्मा देशजातिकुलोद्भवाः ॥ ८५ ॥ ग्रामाचाराः परिग्राह्याः येचशास्त्राविरोधिनः। युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम् ॥ ८६ ॥ ( इति संक्षेपपरिभाषा: ॥ )

स्नातोऽधिकारी भवति दैवेपित्र्ये च कर्मणि। पवित्राणां तथा जाप्ये दाने च विधिचोदिते। ( इति विष्णुवचनात् ) स्नानस्य दैवपित्र्यकर्माधिकारसम्पादनायावश्यकत्वं। ( अतस्तद्विधिः) तत्स्नानं कुत्र विधेयम् इत्याकाङ्क्षायाम्। तीर्थे इति। ( नद्यादौ ) इति सू०। आदिशब्देन देवखात, तीर्थ, तडाग, सरो, गर्त, ह्रद, प्रस्रवणादेः अकृत्रिमजलाशयानां ग्रहणम् ( तत्र नदी कूलद्वयान्तर्गतयोजनाधिकभूभागप्रवाहसलिला। देवखातो ब्रह्मह्रदः। तडागोगदालोल प्रभृतिः। सरउत्तरार्कदण्डखातादि। गर्तोयोजनभूभागपर्य्याप्तजलप्रवाहः। ह्रदोऽगाधोऽशोष्योजलराशिरवस्थितः। प्रस्रवणंस्वतः प्रवृत्तोनिर्झरः ) मृदमिति। तथाचसू०। मृद्गोमयकुशतिलसुमनसआहृत्य। ( सुरभीति ) अगन्धोग्रगन्ध प्रतिषिद्धवर्जितानि।

पङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ।। भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ।। पुष्करा-द्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । आगच्छन्तु पवि-त्राणि स्नान काले सदामम । त्वं राजा सर्वतीर्थानां त्व-मेव जगतः पिता । याचितंदेहि मे तीर्थं सर्वपापैः प्रमुच्यते । अपामाधिपतिस्त्वं च तीर्थेषु वसतिस्तव । वरुणाय नमस्तु-भ्यं स्नानानुज्ञां प्रयच्छमे । अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति याः । देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धोका-वेरि जलेऽस्मिन्सान्निधिं कुरु ।। (इतिसम्प्रार्थ्य) पादौ हस्तौ प्रक्षाल्य कुशोपग्रहोबद्धशिखी यज्ञोपवीती आचम्यसंकल्पं

---

( गच्छेदिति ) उदकान्तं गत्वा शुचौदेशे स्थाप्य । इति सू० । [ उदकान्तं उदकसमीपं ] ( प्रक्षाल्येति ) प्रक्षाल्यपाणिपादं । इतिसू० [ प्रक्षाल्य मृदाजलेन च प्रकर्षेण क्षालयित्वा । पाणिपादमितिसूत्रे पाण्योरभ्यर्हितत्वात् पाणिशब्दस्य पूर्व-निपातः । तेन विप्रोदक्षिणपादोपक्रमेण पादौ प्रक्षाल्यतथैव पाणीप्रक्षालयेन्नपाठक्रमेणेति हरिहरः ।

( उपग्रहइति ) उपगृह्यत इत्युपग्रहः । तथाच कुशाउप-ग्रहायस्य । ते च बहवः सव्ये । दक्षिणे तु दलद्वयात्मकं पवित्रं । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः (इति कात्यायनोक्तेः *बद्धशिखीइति* बद्धा शिखा (चूडा ) ऽस्या-स्तीति बद्धशिखी, । ( यज्ञोपवीति ) यज्ञोपवीतं ब्रह्मसूत्र-

कुर्य्यात् । [केचित्तु प्रायश्चित्तविधानोक्तं हेमाद्रिमहासंकल्पं कुर्वन्ति तथैवात्रापि कारयन्ति । अन्ये च तीर्थस्नानादौ साधारणसंकल्पमेव कुर्वन्ति कारयन्ति च] "देशकालौ सङ्कीर्त्य" मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इहजन्मनि जन्मान्तरेवा कायिक, वाचिक, मानसिक, सांसर्गिक, ज्ञाताज्ञातस्पर्शास्पर्शभुक्ताभुक्तपीतापीतादि, सकल, पातक, निरासपूर्वकमासन, भोजन, शयन, गमनादिष्वनृतभाषणादि, दोष, निरासनद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकतीर्थे स्नानमहं करिष्ये । (ततस्तीर्थाभिमन्त्रणम्) ओंउरुᳫं हिराजाऽवरुणश्चकार सूर्य्याय पन्था मन्न्वेतवाउ । अपदे पादा प्रतिधातवेकरुतापवक्ता हृदया विधश्चित् । नमोऽवरुणायाभिष्ठितो ऽवरुणस्यपाशः । इति

मस्यास्तीति "यज्ञोपवीति,, सदोपवीतिना भाव्यं सदा बद्धशिखेन च इति कात्यायन वचनेन सामान्यतः कर्माङ्गत्वे सिद्धेपि शिखाबन्धयज्ञोपवीतयोर्विशिष्य स्नानाङ्गत्वाभिधानं । केशबन्धोत्तरीयनिवृत्त्यर्थम् । (आचम्येति) यथाविहितमाचमनं कृत्वा आचमनसङ्कल्पविचारौ अस्मिन्नेव पुस्तके अन्यत्रद्रष्टव्यौ । (उरुᳫंहीति) उरुᳫंहीति तोयमामन्त्र्येति सू० हलायुधस्तु "उरुंहीति,, तोयोपस्थानं नमो० ... पाश इति तोयप्रवेशनमित्याह । (आ० दिति) आवर्तयेद्योतेश्चनम् इति सू० । दक्षिणहस्तेन प्रदक्षिणं सकृदावर्तयेत् । आलोडयेत् (कामक्रोधादीन्निति) कामाद्यरिषड्वर्गं पाप्मानंध्यायेत् । ध्यानं मनसाध्यात्वा भूमौ प्रक्षिपेत् (इतिहरिहरः) यज्ञादिष्व

मन्त्रेण न्युब्जाञ्जलिहस्तेन "तोयमभिमन्त्रयेत्" (ततो-जलावर्तनम्) ओं येतेशतं ऽवरुण ये सहस्रं यज्ञियाः पाशा-वितताः महान्तः। तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्च-न्तु मरुतः स्वर्काः। इतिमन्त्रेण जलं दक्षिणहस्ताङ्गुलिभि-र्दक्षिणावर्तं "त्रिवारमालोडयेत्" [भ्रामयेत्] (ततोञ्जलि-नापोग्रहणम्) ॥ ओंसुमित्रियान ऽआप ऽओषधयः सन्तु इतिमन्त्रेण (जलंगृहीत्वा) ओंदुर्म्मित्रियास्तस्मै सन्तु योऽ-स्मान् द्वेष्टि वयञ्चद्विष्मः। इतिमन्त्रेणाञ्जलिस्थमुदकं कामक्रोधादीन्मनसा विचिन्त्य स्ववामभागे तीर्थतटे प्रक्षिपेत्। ततोमृदं त्रेधा विभज्य एकस्माद्भागादल्पां मृदं वामकरेणा-दाय कटिमनुलिप्याद्भिः प्रक्षाल्य तथैव पुनर्द्विवारं प्रक्षाल्य एवमेव वस्तिं उरूजंघे चरणौ करौ चैकैकशः प्रक्षाल्याचम्य तीर्थोदकं नत्वा। ओंइदम्विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपांसुरे। इत्यनेन दक्षिणपाणिगृहीतया। मृदा "मुखतोनाभि पर्य्यन्तं" वामकरगृहीतया "नाभितः

---

द्वेष्यस्तिष्ठति तस्यां क्षिपेदिति (श्रीदत्तः) तिष्ठति यस्यामस्य-द्विष "इति बौधायनः" वस्तुतः कमपि शत्रुं विचिन्त्य प्रक्षे-पणं न वरम्। अतः कामादि नाशार्थमेव प्रक्षिप्तव्यम् इति॥ नैऋत्याम् अपोनिषिञ्चेत् (इति वीरमित्रोदये) स्ववामभागे इति बहुत्र (कटिमिति) कटेनभिः पृष्ठवंशस्य समन्तात्। कटि वस्त्युरूजङ्घेचरणौ करौ मृदाभिस्त्रिः प्रक्षाल्य। इतिसू०। तस्याअधोभागे वस्तिगुदमेढ्रयोरन्तरालम् [(इति हरिहरः)] नाभेरधोभाग "इत्यन्ये" (नत्वेति) नमस्यमोदकम् इति

पादपर्य्यन्तं" अङ्गान्यालिप्य शनैर्नाभिमात्रं जलं प्रविश्य सूर्य्याभिमुखंस्थित्वा स्नायात् "तत्रमन्त्रः" ओं आपोऽअस्मान्मातरः शुन्धयन्तु घृतेननोघृतप्वः पुनन्तु । ठविश्वठं हिरिप्रम्प्रवहन्ति देवीः । इत्यनेन "स्नात्वा" ओं उदिदाभ्यः शुचिरापूतऽएमि । इति उन्मज्य [उत्क्रम्य] पुनस्तूष्णीं स्नात्वा उन्मज्य आचामेत् । ततोगोमय लेपनम् ॥ अग्रमग्रञ्चरन्तीनामोषधीनां वनेवने । तासामृषभपत्नीनां पवित्रं कायशोधनम् । तन्मेरोगांश्च शोकांश्च पापं मेहर गोमय । इत्यनेन गोमयमभिमन्त्र्य दक्षिणकरगृहीतेन गोमयेन मूर्द्धप्रभृतिनाभिः पर्य्यन्तं वामहस्तेन गृहीतेन नाभ्यादि पादपर्य्यन्तं शरीरं विलिम्पेत् ॥ तत्रमंत्रः । ओंमानस्तो-

सूक्तात् । आलभ्भेदङ्गानिमृदेदंविष्णुमितिसू० । आलभेत् [ स्पृशेत् ] ( वामकरेति ) आह च भृगुः, धर्मविद्दक्षिणं हस्तम् अधः शौचेन योजयेत् । तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत् । ( सूर्य्याभिमुखमिति ) शनैर्जलाशयंप्रविश्य नाभिमात्रे स्थितः सूर्य्यस्याभिमुखः सन्निमज्जेत् शिरसाजलमवगाहयेत् ( इतिकात्यायनः ) यत्तु प्रवाहाभिमुखोनिमज्जेत् इति स्मृत्यन्तरं तदन्यशाखीयविषयम् ( इति हरिहरः ) यातु सूर्याभिमुखत्वं च स्थावरजले प्रवहज्जले तु प्रवाहाभिमुख इति ( रत्नाकरेण व्यवस्था दत्ता तच्चिन्त्या ) यतः कात्यायनः स्नानं नद्यादावित्युपक्रम्य सूर्याभिमुखोनिमज्जेदिति सामान्येन स्मरति । ( योगीयाज्ञवल्क्योऽपि ) भास्कराभिमुखोमज्जेदापोऽस्मान्निति च ऋचा (षट्त्रिंशन्मते ) प्रवाहाभिमुखोस्नायाद्बह्वृचोथर्वसामगाः । यजुषां चैव सर्वेषां सूर्याभिमुखमज्जनम्

के तनये मानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः मानो-
व्वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे ॥
[केचनास्मिन्समये भस्मादिस्नानमपि कुर्वन्ति यथा प्राय-
श्चित्तविधौ] तत्र भस्मस्नानमन्त्रः, ओंजलमितिभस्म
स्थलमितिभस्म व्योमेतिभस्म सर्वꣳहवा इदंभस्म मनऽ-
एतानिचक्षूꣳषिभस्मानीति ॥ ओं प्रसद्यभस्मना योनिम-
पश्च पृथिवीमग्ने । सꣳसृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पु-
नरासदः । इतिपूर्ववत् स्नानं विधाय पञ्चगव्यस्नानं
कुर्य्यात् । तद्विधिः । गायत्र्यागोमूत्रं गन्धद्वारामिति
गोमयं पयः पृथिव्याम् इत्यनेन आप्यायस्वेत्यनेनवापयः
दधिक्राव्णइति दधि तेजोसीति आज्यम् । देवस्यत्वा
सवितुःप्रसवेऽश्विनोर्व्वाहुभ्याम्पूष्णोहस्ताभ्याम् । अश्विनो-
र्भैषज्येनतेजसे व्व्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन
व्वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलायश्रियै
यशसेभिषिञ्चामि । इतिकुशोदकं ॥ ततः स्नानंकृ-
त्वाऽभिषिञ्चेत्]

मन्त्राः । ओं इमम्मे वरुणश्रुधी हवमद्याच मृडय ।

---

तस्मात्कात्यायनयोगीयाज्ञवल्क्यमतानुवर्तिनां वाजसनेयिनां
सर्वं स्रोदकाशयस्नाने सूर्याभिमुखत्वम् ( इति दिक् )
( उन्मृज्यइति ) *योगीयाज्ञवल्क्यः* ततोऽवमृश्य गात्राणि
निमज्योन्मज्यवैपुनः । इति । ( आचमनंकृत्वा गोमयेनेति )
आचम्य गोमयेनापि मानस्तोकया समालभेत् इति । ( अभि-

त्वामवस्युराचक्रे ॥ १ ॥ ओं तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानोहविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ २ ॥ ओं

षिञ्चेदिति ) सच गोमयानुलिप्तगात्र एवेति हरिहरः ततोऽभिषिच्य मन्त्रैस्तु वारुणैस्तु यथाक्रमम् । (पावयेदिति) पावनं चोदकबिन्दूनां शिरसिनिक्षेप इति श्रीदत्तः *भाष्ये तु* दर्भैरेव नाभित ऊर्ध्वं पुनर्नाभिं यावत्पावयेत् इति । यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् । ( इति कात्यायनः ) अथ माध्यान्हिकस्नान विधिं प्रातः स्नानेऽतिदिशन्नद्यादौ निगमयति । गेहेचेत्तदमन्त्रवदिति जलाशयादन्यत्र स्नाने मन्त्रनिवृत्तिं प्रतिपादयति । अतोयदि गेहे उद्धृतोदकेन उष्णेन वा स्नाति तदा न कश्चिद्विधिः अमन्त्रवदिति वचनात् । वृथातूष्णोदकस्नानं वृथाजाप्यमवैदिकम् ( इति याज्ञवल्क्यः) *षट्त्रिंशन्मते तु* आपः स्वभावतोमेध्या विशेषादग्नितापिताः । तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा । (तथा च यमः) आपएव सदा पूज्यास्तासां वन्हिर्विशोधकः । तस्मात्सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् । नित्यं नैमित्तकञ्चैव क्रियामङ्गलमकर्षणम् । तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः इति चतुर्वर्गचिन्तामणौ । आदित्यकिरणैः पूतं पुनः पूतन्तु वह्निना । आस्नातमातुरस्नाने प्रशस्तन्तु शृतोदकम् । शीताद्भिरचाभिषिच्योष्णां मन्त्रसंस्कारयोगतः । गृहेऽपि शस्यते स्नानं तद्विना न फलं लभेत् । इति । (कस्मिन्२ कर्मणि निषेधोऽपि प्रदर्शितः) मृतेजन्मनि सङ्क्रा-

त्वन्नोऽअग्ने॒व्वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः। यजिष्ठो॒वन्हितमः शोशुचानो॒विश्वाद्वेषाᳬसि प्रमुमुग्ध्य- स्मत् ॥ ३ ॥ ओं सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽ अस्याऽउषसो॒व्युष्टौ। अवयक्ष्वनो॒व्वरुणᳬ रराणो व्वीहि- मृडीकᳬ सुहवोनऽएधि ॥ ४ ॥ ओं मापोमौषधीर्हिᳬ- सीर्द्धाम्नोधाम्नो राजँस्ततो॒व्वरुणनोमुञ्च। यदाहुरघ्न्याऽ- इति व्वरुणेति शपामहेततो॒व्वरुणनो मुञ्च ॥ ५ ॥ ओं उदुत्तमम्वरुण पाशमस्मदवाधमं ॒विमध्यमᳬ श्रथाय। अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ ६ ॥ ओं मुञ्चन्तुमा शपथ्थ्यादथो॒व्वरुण्या दुत। अथोयमस्य पड्वीशात्सर्व्वस्माद्देवकिल्विषात् ॥७॥ ओं अवभृथ निचु- म्पुण निचेरुरसि निचुम्पुणः। अवदेवैर्देवकृतमेनोयासिषम- व मर्त्यैर्मर्त्यकृतम्पुरुरा॒व्णोदेवरिषस्पाहि ॥ ८ ॥ "ततः तूष्णीं स्नात्वाचम्य त्रिभिर्दर्भैर्दक्षिणकरधृतैः सोदकैर्नाभि- मारभ्य प्रदक्षिणं नाभिपर्य्यन्तं वक्ष्यमाणैः प्रणवादिभिर्म्म- न्त्रैरात्मानं पावयेत्।" ओं पुनातु। ओं भूः पुनातु। ओं भुवः पुनातु। ओं स्वः पुनातु। गायत्र्या सर्वं पुनातु॥ ओं आपोहिष्ठामयोभुवस्तानऽ ऊर्ज्जेदधातन। महेरणाय चक्षसे। पुनातु। [एवं सर्वत्र ] योवः शिवतमोरसस्तस्यभा- जयतेहनः। उशतीरिव मातरः। पुनातु। तस्माऽअरङ्गमा- मवो यस्य क्षयाय जिन्वथ। आपोजनयथाचनः। पुनातु। ओं इदमापः प्रवहता वद्यञ्च मलञ्च यत्। यच्चाभिदुद्रो-

हानृतं यच्च शेपेऽअभीरुणम् । आपोमातस्मादेनसः पवमानश्च मुञ्चतु । पुनातु । [ हानृतमित्यन्तश्चतुर्थः इति केचित् । श्रीदत्तादयस्तु मुञ्चतुइत्यन्तश्चतुर्थइत्याहुः ] ओं हविष्मतीरिमाऽआपोहविष्माँ२ आविवासति । हविष्मान्देवोऽअद्ध्वरोहविष्माँ२ अस्तु सूर्यः । पुनातु । ओं देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः तन्देवेभ्योदेवत्रादत्त शुक्रपेभ्योयेषाम्भागस्थ स्वाहा । पुनातु। ओंकार्षिरसि समुद्रस्यत्वा क्षित्याऽउन्नयामि । समापोऽअद्भिरग्मतसमोषधीभिरोषधीः । ओं अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वाश्चितानः । याभिर्म्मित्रावरुणावभ्यषिञ्चन्न्याभिरिन्द्रमनयन्नत्यरातीः । पु० । ओंद्रुपदादिव मुमुचानः स्विन्नः स्नातोमलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः । पु० । ओं शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये । शंय्योरभिस्रवन्तुनः । पु० । ओं अपाᳪं रसमुद्द्वयसᳬं सूर्य्ये सन्तᳬं समाहितम् । अपाᳪं रसस्य यो रसस्तंवो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् । पु० । ओं अपोदेवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थाना दुज्जिहतामोषधयः सुपिप्पलाः । पु० । ओं पुनन्तु मा पितरः सौम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा । पु० । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्व-

स्वमायुऽर्व्यश्नवै । पु० । ओं अग्नऽआयुॅं षि पवसऽ आसुवोर्ज्जमिषञ्चनः । आरेबाधस्वदुच्छुनाम् । पुनातु । पुनन्तु मा देवजनाः पुनन्तु मनसाधियः । पुनन्तु विश्वा-भूतानि जातवेदः पुनीहिमा । पु० । पवित्रेण पुनीहिमा शुक्रेण देवदीद्यत् । अग्ने क्रत्वाक्रतूँ१ रनु । पु० । यत्तेपवित्र मर्च्चिष्यग्ने विततमन्तरा । ब्रह्मतेन पुनातुमा । पुनातु । पवमानः सोऽ अद्यनः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । पु० । उभाभ्यान्देवसवितः पवित्रेण सवेन च माम्पुनीहि विश्वतः । पु० । वैश्वदेवी पुनती देव्या गाद्य-स्यामिमावह्व्यस्तन्वोवीतपृष्ठः । तयामदन्तः सधमादेषु व्वयॅं स्यामपतयोरयीणाम् ॥ पु० ॥ चित्पतिर्म्मा पुनात्व च्छिद्रेण पवित्रेण सूर्य्यस्यरश्मिभिः । तस्यते पवित्रपते पवित्र पूतस्य यत्कामः पुनेतच्छकेयम् । पु० । वाक्पतिर्म्मा पुना-त्वच्छिद्रे०....तच्छकेयम् । पु० । देवोमा सविता पुनात्व-च्छिद्रेण०....तच्छकेयम् । पु० । चित्पतिर्मा पुनातु वाक्प-तिर्म्मा पुनातु देवोमा सविता पुनात्वच्छि०....तच्छकेयम् पु० ॥ चित्पतिर्म्मेति एक एव मन्त्रोग्राह्योनतु मन्त्रत्रयं संख्याया अश्रवणात् दीक्षित पावने तु मन्त्रत्रयं इति विशेषश्रवणान्मन्त्रत्रयग्रहणमिति श्रीदत्तः इतिवी-रमित्रोदये] ओंपुनातु । ओं भूः पुनातु । ओं भुवः पुनातु । ओं स्वः पुनातु । गायत्र्यन्ते सर्वं पुनातु ॥ पावनकुशा-न्परित्यज्य पूर्ववत् । इमम्मे इत्याद्याभिरवभृथेत्यष्टाभिर्ऋग्भि-

रभिषिञ्चेत् । ततोऽन्तर्जलेनिमग्नोऽनुच्छ्वसन्नघमर्षण सूक्तं ऋतञ्च सत्यञ्चेति त्रिर्जपेत् । द्रुपदादिवेति वा त्रिः पठेत् । ओं आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः । सशिरसं प्राणायामं वा त्रिः पठेत् ।

---

न्तौ ग्रहणं चन्द्रसूर्ययोः अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा । (इति उष्णोदकस्नानकृतेऽपि न क्षतिः याज्ञवल्क्यवचनं च वैदिकस्नानपरम्) । *स्नानभेदाः हरिहरभाष्ये* वारुणं, आग्नेयम्, वायव्यं, मांऽयम्, कापिलम्, ब्राह्मम्, पार्थिवम्, दिव्यम्, मानसम्, एते च स्नानानुकल्पाः सर्ववर्णाश्रमाणां सर्ववेदशाखाध्यायिनाञ्च मन्त्रस्नानं विहाय साधारणाः । प्रातःस्नानं नित्यम् । चाण्डालादीन् स्पृष्ट्वा यत्स्नानं तन्नैमित्तिकं । दैवज्ञविधिचोदितं पुष्पस्नानादिकं काम्यम् । जपयज्ञदेवपितृपूजनार्थं नद्यादितीर्थेषु यत्स्नानं तत्क्रियाङ्गम् ॥ "कात्यायनोक्तस्नानविधिस्तु काण्वमाध्यन्दिनीनां नियतः इतरेषाञ्चानुक्तस्नानविधिविशेषाणां वह्वृचानां मत्स्यपुराणोक्तस्नानविधिना विकल्पितोवोद्धव्यः । स्मृत्युक्तप्रयोगोयच्छाखोक्त प्रयोगेण संवदति तच्छाखीयैरेव ग्राह्यः । यथा याज्ञवल्क्योक्तः कात्यायनीयैः । परन्तु कात्यायनानुक्तो योगी याज्ञवल्क्योक्तोविशेषांशोऽनाकाङ्क्षितोऽपि फलविशेषार्थिना अनुष्ठेयः । शूद्रादिभिस्तु पौराणिक एव ग्राह्यः । (इति वीरमित्रोदये) ब्राह्मणैर्वैदिक एव ग्राह्यः" । योवैदिकमनादृत्य कर्मस्मार्तेतिहासकम् । मोहात्समाचरेद्विप्रो नसपुण्येनयुज्यते । प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् । गुणनिष्ठः प्रधानंतु

विष्णोर्वा स्मरणं कार्यम् । ओं तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । ततास्त्रिः स्नात्वाचम्य निर्गच्छेत् इति ।

हित्वा गच्छत्यधोगतिम् ॥ इति वचनात् ( चतुर्विधाब्राह्मणाः ) आर्चिकाः, याजुषाः, सामगाः, आथर्वणाः, तत्र सर्वाणि कर्माणि याजुर्वेदिकान्येव । कुतः तत्रैव सर्वेषां श्रौतस्मार्तानां कर्मणामुत्पत्त्यादिविधीनां सत्वात् । यद्यपि ऋग्वेदे साम्न्यथर्वणे, किमपि विहितं श्रूयते तदङ्गमात्रम् । यथाहोत्रमृग्वेदे, स्तोत्रं सामवेदे, ब्रह्मत्वमाथर्वणे, यथावा वह्वृचब्राह्मणे उपांशुयाजस्यामावस्यायांविधानमित्युपवर्षः । तथापि तत्र विकल्प एवाङ्गीकृतः । परमेतादृशप्रधानस्याल्पस्य विहितत्वादकिंचित्करं चैतद्विधानम् । प्रधानविधानार्थं हि राजवत्प्रवृत्तं यजुर्वेदमनुसरन्ति भृत्यादिवदृग्वेद प्रभृतयः । आश्वलायनेन सूत्रिताअपि पञ्चयज्ञा यजुर्वेदमूलाएवेति नारायणप्रभृतयः प्रतिपन्नाः इतिसुविदितमेव सूत्रवृत्तिकृतश्रमाणाम् । तस्मात् कर्मानुष्ठानार्थमितरैर्यजुर्वेदएव शरणीकरणीय इति नान्तरीयकतयासमापतितम् ॥ विद्यारण्या अप्याहुः । कर्मकाण्ड विषये यजुर्वेदस्यैव प्रधानत्वाद्भित्तिस्थानीयोयजुर्वेदश्चित्रस्थानीयावितरौ । सचद्विविधः । शुक्लकृष्णाभ्यां । तत्र क आश्रयितव्य इति चिन्तायाम् शुक्लएवाश्रयितव्यः । माध्यन्दिन ब्राह्मणएव कर्मठ भवितुं योग्यः । (तस्यैव प्रशंसा होलिभाष्ये) ऋग्वेदी च पितृस्थाने यजुर्वेदी पितामहः । त्रिवेदी प्रपितुः स्थाने विश्वेदेवाह्यथर्ववित् । वाजिविप्रविशेषेण श्राद्धकर्म

निरन्तरम् । शुक्लाः प्रशस्ताः कृष्णास्तु यजुरुक्तानिषेधतः। तस्मात्कण्यानि हव्यानि दातव्यानि द्विजातये । वाजिनेदत्त मेकं तु तत्कोटि गुणितं भवेत् । (वायुपुराणे वाजिशाखिनः प्रशंसा ) शक्रसोमाग्निरुद्राश्च विश्वेदेवास्त्रिलोचनः । विधाता शङ्खपाणिश्च तथासप्तर्षयोऽमलाः । मृकण्डः कपिलोव्यासयाज्ञवल्क्यपराशराः । वाल्मीकिर्नारदोऽगस्त्यइत्येते वाजिशाखिनः इति । (तथा च देवीभागवते । ) अयातयामानि तु भानुगुप्तान्यन्यानि जातान्यतिनीरसानि । यजूंषि तेषामथ याज्ञवल्क्योह्ययातयामानि रवेरवाप । वाजसनेःव्युत्पत्तिरपि प्रदर्शिता (आन्हिकसूत्रावल्यां) आदित्येनाधायित्वादादित्यान्युच्यन्ते । वाजइत्यन्नस्य नामधेयम् । "अन्नं वै वाज,, इतिश्रुतेः। वाजस्य सनिर्दानं यस्य महर्षेरस्ति सोऽयं "वाजसनिः,,। तस्यपुत्रो वाजसनेयः तस्य "याज्ञवल्येति,, नाम समाधेयम्। तेन याज्ञवल्क्येन तानि यजूंषि महर्षिभ्यः पञ्चदश समर्पिता इति । एवमेतद्याज्ञवल्क्यस्य स्वशाखीयानां च शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाइति नाम । मध्यन्दिनेन महर्षिणा याज्ञवल्क्याल्लब्धः शाखाविशेषोमाध्यन्दिनः । वाजसनेयस्यर्षेः पुत्रस्य याज्ञवल्क्यस्य प्रवर्तकत्वात् सा शाखाऽपि वाजसनेयी । एवं च तच्छाखाध्ययनकर्तारः शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाः प्रसिद्धाः । "तन्मन्त्रादिपरिगणना,, । सन्मूलो यजुराख्यवेदविटपी जीयात्समाध्यन्दिनिः । शाखा यत्र युगेन्दु १४ काण्ड सहिता यत्रास्ति सा संहिता । यत्रा ध्यायविध ४० लताविभान्ति "शरशैलाङ्केन्दु १९७५ भिर्ऋदलैः । "पञ्चद्वीपुनभोङ्क,, ९०५२५ वर्णामधुपैः "खाग्न्यर्क,, १२३० गुं (ठ) गुञ्जितैः । इति । यत्तुतत्र कआश्रयितव्य इतरैरिति चि-

स्तायाम् । अन्यतराश्रयणेऽपि न दोषः इति वामन शर्माह । तच्चिन्त्यम् । उपरोक्त प्रमाणैस्तथा कलौमाध्यन्दिनीशाखा कलौ चण्डीविनायकौ इति स्मृति प्रामाण्याच्च परंतत्तच्छाखा-ध्येतारो ब्राह्मणाः स्वशाखीयमेव कर्म कुर्वन्नभ्यु दयेन युज्यन्ते । (इतिदिक्) प्राज्ञैः एवं सर्वकर्मसु विज्ञेयं । प्रकृतमनुसरामः "यथोक्त विधिस्नानमालस्यादिना अकुर्वतोन कर्माधिकारः" यथाहनि तथा प्रातः इति वचनात् प्रातः स्नानेऽप्यस्य विधेः प्राप्तौ (छन्दोगपरिशिष्ट विशेषः) अल्पत्वाद्धोमकालस्य महत्वात्स्नानकर्मणः प्रातर्नतनुयात्स्नानं होमलोपोविगर्हितः इति । साग्निः पादप्रक्षालनादि गोमयलेपनान्तं विधाय मुञ्चन्तुमेति अभिषिच्य निमज्याचम्य दर्भैः प्रणवव्याहृति गायत्रीभिः प्रतिमन्त्रं पावयित्वा मुञ्चन्तुमेतिपुनरभिषिच्यान्त-र्जलेऽघमर्षणादीनामन्यतमेनावर्त्याचम्य निर्गच्छेत् । निरग्निस्तु कृत्स्नमनुतिष्ठेत् सङ्कोचनिमित्तस्य होमस्याभावात् । इति । (हरिहर भाष्ये) इदं स्नानं न प्रातः स्नानं किन्तु मध्याह्न स्नानं । स्पष्टी कृतञ्चैतत् । (वीरमित्रोदये) जटिनः शिरो-रोगिणश्चाकण्ठमज्जनं स्नानम् । सभर्तृकयोषिताञ्च । ग्रहणा-दिनिमित्तं जटयादीनामपि सशिरस्कमेव स्त्रीशूद्राणां सर्वं च तूष्णीम् ॥ (आहच योगी याज्ञवल्क्यः) ब्राह्मणक्षत्रियविशां स्नानं मन्त्रवदिष्यते । तूष्णीमेव तु शूद्रस्य सनमस्कारकं मतम् । (बौधायनोऽपि) अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् । मन्त्रवत्प्रोक्षणं वापि द्विजातीनां विशिष्यते । इति । (गौणस्नानानि) आपोहिष्ठेत्यादिभिर्मान्त्रंमृदालम्भं च पार्थिवम् । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ।

# ॥ अथ मङ्गलस्नानविधिः ॥

यजमानः चम्पकादितैलयुतं सर्वौषधी, कृष्णतिल, आमलक्यादिचूर्णं अङ्गेषूद्धर्त्य आहिरिविभोगैरितिमन्त्रेण स्नायात् ॥ ओं अहिरिविभोगैः पर्य्येति बाहुञ्ज्यायाहेतिम्परिबाधमानः । हस्तघ्नोऽविश्श्वा ऽवयुनानि विद्वान्पुमान्पुमाꣳ सम्परिपातु ऽविश्श्वतः ॥ इतिम० स्नानं० ॥

---

यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते । वारुणं चावगाहन्तु मानसं ह्यात्मचिन्तनम् । आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् ॥ अप्राशस्त्ये समुत्पन्ने स्नानमेवं समाचरेत् । ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः । यौगीकं स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम् ।

कृष्णतिलानि० । (आन्हिकसूत्रावल्याम्) सर्वौषधीकृष्णतिलागन्धमामलकैस्तथा । सुगन्धिना चम्पकादितैलं युक्तं सचूर्णकैः ।उद्वर्त्याङ्गानि चूर्णेन मङ्गलस्नानमाचरेत् । एवं स्नानं प्रकुर्वीत ब्राह्मणैः सह निश्चितम् । इति ॥ सर्वत्रैव चण्डीपाठविधौ कृततैलाभ्यङ्ग इति पाठात् । चम्पकादितैलयुतम् । इति निर्देशाच्च । किञ्चित्तैलविषये लिख्यते ॥ तिलोद्भवं तैलं न तु कुसुमादि प्रभवमिति तस्यविकार इति पाणिनिस्मृतिः । ततश्च पाणिनिकृते निष्पन्नः तैलशब्दो नान्यदभिधातुं शक्नोति । केचिदाहुः । सर्पिप्राययुद्भवस्नेहान्यस्नेहवाचकस्तैलशब्दस्तत्रापि प्रयोगात् । इति । (तदयुक्तम्)

केवलस्य तैलशब्दस्य तिलविकारान्यवाचकत्वाभावात् ॥ यत्तु वार्तिककृता स्नेहे तैलमिति तैलप्रत्ययो विहितः स स्नेहमात्र वाचकः अतसीतैलमैरण्डतैलमित्यादि । तथाचायुर्वेदप्रणेतारश्चरकहारीतादयो न स्नेहमात्रं केवलेन तैलशब्देनाभिदधति तिलविकार एवतु प्रयुञ्जत इति । नच तिलविकारवचनत्वे पिण्याकादिष्वपि तैलशब्दप्रवृत्तेस्तैलनिषेधे तन्निषेधोऽपि प्रसज्यत इतिवाच्यम् । तैलशब्दस्य स्नेहे निरूढत्वात् । यथा पङ्कजशब्दः पद्मएव निरूढत्वाद्वर्तते नतु मण्डूकादौ । यस्तुक्वचित्केवलतैलशब्दस्य स्नेहान्तरेऽपि प्रयोगः सः सादृश्यादुत्पन्नः । अतएवाहुः शब्दविदः निरपन्नस्तद्गुणास्येोत्रतैलत्वमितरेष्वपि । यातितस्मात् तिलविकारएवस्नेहस्तैलं नतुस्नेहमात्रमिति ॥ ( पक्वापक्वतैलविचारः । ) दशम्यां तैलमस्पृष्ट्वा यः स्नायादविचक्षणः । चत्वारि तस्य नश्यन्ति आयुः प्रज्ञायशो बलम् । तैलाभ्यङ्गं न कुर्वीत कुर्य्युर्वा नवमीं विना । अत्र कासु तिथिषु तैलाभ्यङ्गो विहितः प्रतिषिद्धश्च । (तत्र केचिदाहुः ) विधिः पक्वतैलविषयः निषेधस्त्वपक्वतैलविषयः । (तदुक्तं षट्त्रिंशन्मते ) सूर्यशुक्रादिवारेषु निषिद्धासु तिथिष्वपि । स्नाने वा यदि वा स्नाने पक्वतैलं न दुष्यति । नवम्यां तूभयोरपि निषेधः । कुर्युर्वा नवमीं विनेतिवचनादिति ( तदयुक्तं ) निषेधस्य रागप्राप्ततैलाभ्यङ्गविषयत्वात् । विहित तैलाभ्यङ्ग विषयत्वे विकल्प प्रसङ्गात् । नच विधिशास्त्रात् तैलमात्रप्राप्तादपक्वतैलरूपविशेषनिषेधान्नविकल्प इतिवाच्यम् । "ये यजामहे,, करणस्याप्येष वै सप्तदशः प्रजापतिर्यज्ञे च यज्ञेन्वायत इतिवाक्यात् । सर्वयज्ञेषु प्राप्ता

वनुयाजादरपि विशेषनिषेधान्निषेधपक्षे विकल्पाभाव प्रसङ्गात् तत्र च यः परिहारः सोऽत्रापीत्यदोषः। रागप्राप्तविधिप्राप्तो भयविषयत्वे च निषेधस्यैकत्र शास्त्रान्तरबाधसापेक्षो निषेधः अन्यत्र निरपेक्ष इति विधिवैषम्यं प्रसज्यते। न च विधि वैषम्य परिहार्थीविधिप्राप्तस्यैव प्रतिषेध इति वाच्यम्॥ शास्त्रान्तर बाधं विना निषेधस्य सम्भवे तद् बाधस्यानुपपत्तः तस्मान्निषेधो रागप्राप्ततैलविषयस्तत्र च सर्व तैलनिषेधप्राप्तौ सूर्यशुक्रादिवारेष्विति वाक्येन निषेधोन पक्वतैलइतिक्रियते। तस्माद्पक्वं तैलं विहित तैलाभ्यङ्गे उपादेयमिति सिद्धम्॥ (बृहस्पतिः) सङ्क्रान्त्यां रविवारे च षष्ठ्यां भौमदिने तथा। द्रव्यान्तरगतं तैलं न दुष्यति कदाचन। "अत्रकेचिदाहुः" कदाचनेत्यनेनान्यस्मिन्नपि निषिद्धकाले द्रव्यान्तरगतस्य तैल स्यादुष्टत्वमुच्यते। अन्यथास्य वैयर्थ्यापत्तेरिति। (तदयुक्तं) यदिसर्वस्मिन्नपि निषिद्धकाले द्रव्यान्तरगतस्य तैलस्यादुष्टत्वं विवक्षितं स्यात्तदा उत्तरार्द्धेनैव तत्सिद्धेः। पूर्वार्द्ध वैयर्थ्यं प्रसज्येत। पूर्वानुवादपक्षाच्च। कदाचनेत्येतावन्मात्रानुवादत्व-मुक्तम्। तस्मात्सङ्क्रान्त्यादिषु द्रव्यान्तरगतं तैलं कदाचिदपि न दुष्यतीत्यस्यार्थः॥ अतःसङ्क्रान्त्यादि चतुष्टयएव द्रव्यान्तर गतस्य तैलस्योदुष्टत्वं नान्यत्रेति सिद्धमित्यन्ये। (तदप्य युक्तम्) सर्वस्मिन् काले द्रव्यान्तरगतस्य तैलस्यवचनान्तरेणा-दुष्टत्वाभिधात्। सङ्क्रान्त्यादिग्रहणस्य वा निःशेषप्रदर्शनार्थ-त्वात्। सङ्क्रान्त्यादावपि न दुष्यति किमुतान्यत्रेति। (तदाह प्रचेताः) सार्षपञ्गन्धतैलञ्च यत्तैलं पुष्पवासितम्। अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन। (यमः) घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। नदोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः।

# ॥ अथ महाव्याहृतिहोमः ॥

कर्ता तीर्थे यज्ञागारे गवांगोष्ठे देवतायतने एकान्ते देशे वा स्नातः शुक्लवासाजितेन्द्रियः शुचिराचम्य प्राणानायम्य देशकालौसङ्कीर्त्य आरब्धप्रायश्चित्तस्य पूर्वाङ्गतयाविहितं महाव्याहृतिभिराज्येन अष्टोत्तरशतं अष्टाविंशतिं वा होमं करिष्ये । शरीरशुद्ध्यर्थं ब्रह्मकूर्चहोमं, पञ्चगव्याशनं च करिष्ये । ततः स्थण्डिलं कृत्वा तत्र पञ्चभूसंस्कारान् विधाय (विधनामानं) अग्निं प्रतिष्ठाप्य । वक्ष्यमाणकुशकण्डिकाप्रकरणस्थ पूर्णपात्रान्तां कुशकण्डिकां कुर्य्यात् पात्रासादने एतान्यपि स्थापनीयानि । सुवर्णादिपात्रं, पद्मपालाशादिपात्रं, वा यज्ञीयकाष्ठं, हरितानि सप्तकुशपत्राणि, पञ्चगव्यं, [गोमूत्रादि पृथक् २] स्थापनीयानि । ततः पवित्रच्छेदनादि अग्निपर्य्युक्षणान्तं कर्म्म सम्पाद्य । आज्येन आघारावाज्यभागं हुत्वा अष्टोत्तरशतेनाष्टविंशतिभिर्वा आज्याहुतिभिर्व्यस्तसमस्ताभिर्व्याहृति-

(कात्यायनः) माङ्गल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च । स्नेहभावसमायुक्तं मध्यान्हात् प्रविशिष्यते इति ॥

इति श्री भाष्याचार्यसूनुप्रणीतशतचण्डीयज्ञविधानस्य प्रथमखण्डे सविचारस्नानप्रयोगः ।

व्याहृति होमान्ते ब्रह्मकूर्चविधिना पञ्चगव्याशनं कार्यम् । ( इतिसंस्कार रत्नमालायाम् । ) *विधान मालायाम् । *

भिर्होमः कार्य्यः । ओं भूः स्वाहा इदमग्नये नमम । ओं भुवः स्वाहा इदं वायवे नमम । ओं स्वः स्वाहा इदं सूर्य्याय। ओं भूर्भुवः स्वः स्वाहा इदं प्रजापतये । [एवं सप्तवारं कृते "अष्टाविंशतिराहुतयः । सप्तविंशतिवारे कृते "अष्टोत्तरशतम्" आहुतयोभवन्ति"] केचिदत्र सर्वत्र इदं महाविष्णवे पापघ्ने इति त्यागं कुर्वन्ति ॥

# ॥ अथ ब्रह्मकूर्च्चहोमः ॥

तत्रादौ पञ्चगव्यकरणम् ॥ पञ्चगव्यार्थमासादिते पात्रे पवित्रे निधाय । गायत्र्या नीलवर्णायाः गोःपलपरिमितं मूत्रं तस्मिन्नेव पात्रे निधाय । गन्धद्वारां''''श्रियम् । इत्यनेन तस्मिन्गोमूत्रे कृष्णायागोरङ्गुष्ठार्धपारिमितं गोमयं, निक्षिप्य । ओं आप्यायस्व समेतुते ऽविश्वतः सोमवृष्ण्यम्। भवा ऽवाजस्य सङ्गथे । इत्यनेन ताम्रवर्णाया गोःसप्तपलपरिमितंक्षीरं तस्मिन्नेव सम्मिल्य । ततः । ओं दधिक्राऽणोअकारिषञ्जिष्णोरश्वस्य ऽवाजिनः । सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत्। इत्यनेन श्वेतायाः गोःपलत्रयपरिमितं तस्मिन्नेव निक्षिप्य । ततः । तेजोसि शुक्रमस्य मृतमसि मायुष्याऽआयुर्म्मे पाहि । इत्यनेन तस्मिन्नेव कपिलायाः गोः एकपलमितमाज्यं गृहीत्वा । ओं देवस्यत्वा सवितुः प्रसवेऽश्विनोऽर्वाहुभ्याम्पूष्णोहस्ताभ्याम् । इत्यनेन। एकपलपरिमितं सप्तभिः कुशैः स्रावितमुदकं तस्मिन्नेव

गृह्णीयात् । [देवस्यत्वैतस्मिन्मन्त्रेऽभिषिञ्चामि अथवा "गृह्णामि" इति वाक्यशेषं केचिदाहुः] ततः आपोहिष्ठेत्यादिमन्त्रत्रयेण तैरेवसप्तभिरन्यैर्वाकुशैर्मन्थेत् । [केचन प्रणवमुच्चार्य्य हस्तेनालोडनम् प्रणवेनैव यज्ञीयकाष्ठेन निर्मन्थनम्] इति वदन्ति । तत आसादितान्सप्तदर्भान्गृहीत्वा तैरेवोद्धृत्योद्धृत्य जुहोति अशक्यत्वाद्दर्भेषु सहायार्थं

---

ब्रह्मशुद्धौ गृहारम्भे सूतके मृतके तथा । यज्ञारम्भे धनप्राप्तौ प्रायश्चित्ते विशेषतः । रोगमुक्तौच संपर्के क्षुद्रपापापनुत्तिषु । विदध्याद्ब्रह्मकूर्चंच मासिमास्यथवा द्विजः । ब्रह्मशुद्धिः= वेदशुद्धिः उपाकर्मोत्सर्जनाख्यास् ) तत्र । गृहारम्भनिमित्तश्रादावधिकारार्थत्वात् । सूतकमृतकनिमित्तं तदपगमे । यज्ञारम्भेऽपि आदौ अधिकारार्थत्वादेव । एवं धनागमे० । प्रायश्चित्ते विशेषत इति श्रवणात्तत्रैव ब्रह्मकूर्चस्यावश्यकत्वं नेतरत्र । परं यज्ञारम्भे विधानात् परब्रह्मप्राप्तिश्रवणाच्च सर्वत्रैवावश्यकत्वं प्रतीयते इति मन्यामहे । ( तद्विधिः सूत्रे ) ब्रह्मकूर्चंमवक्ष्यामि कायशोधनमुत्तमम् । शूद्राणां भाजनेभुक्त्वा वेदानां विक्रयेतथा । होमातिक्रमकाले तु पर्वहीनमसंस्कृतम् । एतेषां चैव शुद्ध्यर्थं पञ्चगव्यं प्रशस्यते । कपिला ताम्रवर्णी च श्वेता नीला तथा सिता । कपिलायाः घृतं ग्राह्यं ताम्रवर्णाः पयः स्मृतम् । श्वेतायास्तु दधिग्राह्यं नीलायास्तु गोमूत्रकं ( कृष्णायाःगोमयमुद्धरेत् ) गोमूत्रं तु पलं दद्यादंगुष्ठार्धं तु गोमयम् । क्षीरं सप्तपलं दद्याद्दधित्रिपलमुच्यते । पलमेकं घृतं ग्राह्यम् पलमेकं कुशोदकम् । गायत्र्यागृह्य गोमूत्रं गन्धद्वारेति गोमयं । आप्यायस्वेति क्षीरं

दर्वीग्राह्या इति गोपीनाथः) ओं अग्नये स्वाहा इदमग्नयेन०। ओं सोमाय स्वाहा इदं सोमाय न० ओं इरावतीधेनुमतीहि भूतꣳ सूयवसिनीमनवे दशस्या । व्यस्कभ्नारोदसी विष्णवेते दाधर्थ पृथिवीमभितोमयूखैः स्वाहा । इदं पृथिव्यै। ओं इदम्विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाꣳसुरे स्वाहा । इदं विष्णवे। ओं मानस्तोके तनयेमानऽआयुषि मानो गोषुमानोऽअश्वेषुरीरिषः। मानो व्वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तः सदामित्वा हवामहे। इदं रुद्राय। (अपउपस्पृश्य) ओं तत्सवितु...... प्रचोदयात् स्वाहा। इदं सवित्रे। ओं ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चव्विवः। इदं ब्रह्मणे॥ अवशिष्टपञ्चगव्यस्य चतुर्थभागं पलाशपत्रे उद्धृत्य। ओं स्वाहा। इत्यावृत्तेन प्रणवमन्त्रेण यावतीभिराहुतीभिश्चतुर्थभागहोमोभवेत् तावतीराहुतीर्दर्भैरेव जुहुयात्। इदं परमात्मने०। ततोऽवशिष्टं पञ्चगव्यं प्रणवेनालोड्य तेनैवाभिमन्त्र्यासनाद्बहिरुपविश्य प्रणवेन हस्तेनादौ किंचित्पीत्वाऽवशिष्टं सर्वं हस्तेन पात्रान्तरेण वा तूष्णीं

---

दधि क्राव्णोऽस्य वै दधि। तेजोमसि शुक्रमसीत्याज्यं देवस्यत्वेति कुशोदकम्। नदी प्रस्रवणे तीर्थे रहस्ये निर्जने वने। यज्ञागारे गवां गोष्ठे देवतायतनेषु वा। तत्र स्नात्वा शुचि-

पिवेत्। प्राशनमन्त्रः यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके । प्राशनात्पंचगव्यस्य दहत्वग्निरिवेन्धनम् । ततोहस्तं मुखं च प्रक्षाल्य पवित्रं त्यक्त्वा द्विराचम्यान्येपवित्रे धृत्वा स्वासने उपविश्य व्यस्तसमस्तव्याहृतिभिश्चतस्राहुतीर्जुहुयात् । ओं भूः स्वाहा । भुवः । स्वः । भूर्भुवः स्वः । स्वाहा । इदं प्रजापतये । ततः स्विष्टकृदाद्यङ्गहोमादि । ओं अग्नयेस्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते । ततः संस्रवप्राशनादि । प्रणीताविमोकान्तं कृत्वा देशका० सं० । प्रायश्चित्तांगहोमसाद्गुण्यसिद्धयर्थं ब्रह्मणे पूर्णपात्रमिदं तुभ्यमहं सम्प्रददे । इतिदद्यात् । ततः परिस्तरणानि विसृज्य । उत्तरकर्म कुर्यात् इति ।

---

भूत्वा शुक्लवासा जितेन्द्रियः । पालाशं पद्मपत्रं वा ताम्रभाजनमेववा । उदुम्बरमयं पात्रं श्रीवृक्षस्य तथैव च । सप्त पत्राः शुभोदर्भाः अक्षताश्चैव संयुताः । तैरेवोद्धृत्य होतव्यमग्नये० स्वा० सो० स्वा० इरावती० इदं विष्णु० विष्णोर्नुकं मानस्तोके च गायत्री ब्रह्मयज्ञानमिति । तस्य चतुर्भागगं ० हुत्वा । प्रणवेनालोड्य प्रणवेनाभिमन्त्र्य प्रणवेन पिवेत् । ब्रह्मणानिर्मितो ह्येषः सत्यः शौचात्मको विधिः । ऋषिभिर्वालखिल्यानां शौचार्थं समुदाहृतः । मासिमासि प्रयुञ्जानोविरजाभवत्यर्धमासेऽर्धमासे प्रयुञ्जान ऋषिलोकमवाप्नोति षड्रात्रे षड्रात्रे स्वर्गलोकमवाप्नोति संवत्सरमहरहः परंब्रह्माधिगच्छति । त्वगस्थिगतैर्मलिनैर्देहैस्तिष्ठति मानवः ।

# ॥ अङ्कुरार्पणविधिः ॥

संकल्प्य शुद्धस्थलं गोमयेनोपलिप्य रङ्गवल्यादिभिरलङ्कृत्य तत्र सिताक्षतान् संप्रकीर्य्य नववेणुपात्रं श्वेतसूत्र-

---

ब्रह्मकूर्चोदहेत्तस्य यथा अग्निरिवेन्धनम् । इति । ब्रह्मकूर्च कुण्डकण्डिका प्रकरणस्य पर्य्यग्निकरणकाले पञ्चगव्यस्यापि पर्य्यग्नि करणं आज्यस्योत्पवनानन्तरम् पञ्चगव्यस्याप्युत्पवनं केचिदिच्छन्ति । (धर्मसिन्धौ) हरिवंश श्रवणांग प्रायश्चित्तविचारे प्राजापत्य प्रत्याम्नायाः तथापर्षद्भुनियुक्तिः दशविधस्नानानि चोक्तानि । अन्यग्रन्थेषु विष्णुश्राद्धादीनि विहितानि ब्रह्मकूर्चप्रयोगश्च । परं परब्रह्मप्रापकत्वात् अस्यैव श्रेष्ठतरत्वं प्रतिभाति । अतएषः प्रयोगो अनुष्ठानकर्मणि विधेयः इति मम मतम् प्रायश्चित्तविधानान्ते धर्मसिन्धौ अयं प्रायश्चित्तविधिः कृच्छ्रन्यूनप्रायश्चित्तेषु न कार्य इति । धर्म० सिन्धुकारसम्मतया ब्रह्मकूर्चहोमेनैव सर्वकार्यसिद्धिः ॥ परं एतद्देशीयकर्मठानामनुरोधेनाङ्कितं प्रायश्चित्तविधानमप्यग्रे अवलोकयन्तु भवन्तः । इति ॥

कर्त्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् । नवमे, सप्तमे, वापि, पञ्चमे, दिवसेऽपिवा । तृतीये बीजनक्षत्रे शुभवारे शुभोदये) सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः । सहवादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् । तत्र मृत्तिकतां शुभ्रां गृहीत्वा पुनरागतः मृन्मयेष्वथवा वैणवेषु पात्रेषु

वेष्टिताः पालिकाः संस्थाप्य वल्मीकमृत्तिकां ह्रदपङ्कं शुष्क-गोमयं च प्रक्षिप्य पालिकाः श्वेततन्दुलैः पूरयित्वा दूर्वा-ङ्कुराश्वत्थशिरीषविल्वपत्राणामुपरि शुभेमुहूर्ते तद्वेणुपात्रं निधाय तत्र सितरक्तहरिद्वर्णानि पुष्पाण्यवकीर्य्य मध्यादि-पञ्चस्थानेषु ब्रह्मादिपञ्चदेवताः पूजयेत्। (तत्रायं क्रमः) ब्रह्मयज्ञानमितिमन्त्रेण मध्ये ब्रह्माणम् इन्द्रऽआसान्नेते-तिमन्त्रेण पूर्वदले इन्द्रम्। यमायत्वेत्यनेन दक्षिणस्यां यमम्। तत्वायामीतिमन्त्रेण प्रतीच्यां वरुणम्। सोमोधेनु-मितिमन्त्रेण उदीच्यां सोमम्। एतान् आवाह्य षोडशो-पचारैः सम्यगभ्यर्च्य पालिकापश्चाद्भागे प्राङ्मुखस्तिष्ठ-न्नुपस्थानं कुर्य्यात्। तत्र मन्त्रः। दिशांपतीन्नमस्यामि सर्वकामफलप्रदान्। कुर्वन्तु सफलं कर्म्म कुर्वन्तु सततं शुभं। इतिमन्त्रं जप्त्वा वीजान् प्रक्षाल्य समन्त्रं वापयोदिति॥

---

योजयेत्। अनेकबीजसंयुक्तां तोयपुष्पोपशोभितां। (कर्मविशेषेऽङ्कुरारोपणस्याक्रियोक्ताशौनकेन।) निषेके गर्भसंस्कारे जातकर्मच नाम च। हित्वाऽङ्कुरारोपणं स्यादन्यत्र शुभकर्मसु (निषेको गर्भाधानम्) "रात्रावेवाङ्कुरारोपणं कर्तव्यम्," रात्रौ मुहूर्ते कल्याणे प्रथमेऽङ्कुररोपणम्। "तत्कारणमप्याह शौनकः," औषधीनांहि सर्वासां चन्द्रः प्रोक्तोऽधिदैवतम्। तस्मात्सर्वप्रयत्नेन रात्रावङ्कुररोपणम्। "गदाधरभाष्ये बृहस्पतिः," आत्यन्तिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम्। अतित्वरायां सद्योदिवैव बृहस्पत्युक्तेरितिकेचित ॥

# अथ प्रायश्चित्तविधानारम्भः ।

तत्र यज्ञकर्त्रा यज्ञाधिकारप्राप्त्यर्थकशुद्धविग्रहेण भवितव्यम् । तदर्थं प्रायश्चित्तविधानम् । (एतद्विधानन्तु) यज्ञकर्तृणां तत्सहायकाचार्य्यादीनामपि सर्वेष्वपि न्यूनाधिकपापसम्भवात् ॥ (तत्रादौ सामग्र्युपकल्पनम्) फलताम्बूलगन्धपुष्पधूपदीपाः पञ्चगव्यानिमृद्भस्म गोमय दूर्वा तिलाः समिद्दर्भाः होमार्थंघृतंपर्षद्दक्षिणानिबन्धानुवादकपूजार्थं दक्षिणा पूर्वोत्तराङ्गगोप्रदान विष्णुश्राद्धद्रव्यमिति ॥

---

(प्रायश्चित्तेन्दु शेखरे) किन्नाम प्रायश्चित्तमिति "यद्यथाविध्यनुष्ठानादुपचिताशुभनाशकमेव प्रायश्चित्तम् । तुलापुरुषादावतिव्याप्तिवारणाय एवेति । (न तु पापान्तरजनकमित्यर्थः) पापनिवर्त्तनक्षमधर्मविशेषे योगरूढोयं शब्द इतितत्त्वम् ॥ संकेतविशेषसंबंधेन प्रायश्चित्तशब्दवत्त्वमेव प्रायश्चित्तत्वम् ॥ अत एवक्रत्वङ्गेविशेष प्रायश्चित्ते तद्व्यवहार इत्यन्ये । ( अन्यत्र ) प्रायश्चित्तं नपुंसकलिङ्गं । तत्साधुत्वं च प्रायस्य पापस्य चित्तं नाम शोधनं यस्मात्तादिति विग्रहाद्भवति । पारस्करप्रभृतिनिच संज्ञायां पा० ६ । १ । १५७ । इत्यत्र । "प्रायस्य चित्तिचित्तयोरितिवार्तिकोक्त्या," सुट् निपात्यते । तेनप्रायश्चित्तमितिपदं सिद्ध्यति इदं तत्पापक्षयसाधनार्थं कर्म येन मनुष्या निष्पापा भवन्ति । तथा च (अङ्गिराः) आह प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चय संयुक्तं प्रायश्चित्तमिति स्मृतम् ॥ अथात्र प्रायस् शब्दस्तपोवाचकः चित्तशब्द-

स्तु निश्चयार्थद्योतकः निश्चयेनातिदार्ढ्यं न युक्तं तपः प्रायश्चित्तमित्यङ्गिरसो वचनस्य भावः। (हारितस्तु) प्रयतत्वाद्बोपचितमशुभं नाशयतीति अर्थाच्छुद्ध्या पापानां नाशोभवतीति प्रायश्चित्त एवंवदति। अथैवं प्रायश्चित्तशब्द साधुत्वं विधाय पापप्रकारं दर्शयति यथा मनुष्येषु प्रधानतया पापानां त्रैविध्यं सम्पद्यते तदित्थम् (प्रथमं) धर्मशास्त्रे यस्यवर्णस्य यदाचरणं विहितमस्ति तस्याकरणम्। (द्वितीयं) यस्य यत्कर्मनिषिद्धं प्रतिपादितं तदनुष्ठानम्। (तृतीयं) इन्द्रियदमनाभावात्स्वेच्छया कामोपभोग इति। एभिः प्रकारत्रयोत्थैः पापैः मनुष्याणां पतनं भवति तत्क्षयार्थमेव-प्रायश्चित्तस्यावश्यकमिति। पापानां दिग्दर्शनं तु अग्रे प्रायश्चित्तकल्पनाप्रकरणे द्रष्टव्यम्। प्रायश्चित्तेन किम्फलमिति (प्रायश्चित्तेन्दुशेखरे) पापिनः प्रायश्चित्तं नित्यं नैमित्तिकं वेत्यतोविकलाङ्गात् पापस्यनाशः। किन्त्वल्पस्यैव नतु समग्रस्य एवं च काम्यमेतत्। एवं च प्रधाननिष्पत्तावपि न प्रधाननिवृत्तिरिति बोध्यम्। एकप्रायश्चित्तकनानापापकर्मणां तत्प्रायश्चित्तैकप्रयोगेणैवनाशः। एवमधिक पापनाशार्थमुक्तेनैकवारमनुष्ठितेन न्यूननाशस्यापि पापान्तरस्य नाशः एवं यत्र यत्प्रायश्चित्तमुपदिष्टं तदन्यूनक्लेशकप्रायश्चित्तान्तरोपि तत्र योज्यम्। पापिनांतदुपदेशश्च पुण्यायेति। कथं प्रायश्चित्तोपदेशःकार्य इति तत्रैव स चार्चितेन पृष्टेनैव विदुषा संसदि धर्मशास्त्रादि बुध्वैव कार्यः। अन्यथोपदेष्टा प्रत्यवैति। संसच्चतुर्भिस्त्रिभिर्वाधर्मशास्त्रादितत्त्वज्ञैर्भवति। यतिवर्ज्यं नैकेनापि ब्रह्मविदा भवति। पर्षद्दक्षिणां लक्षगवादि

(अथ प्रयोगः) त्र्यवरानेकं वा विप्रं पर्षत्त्वेनोपविश्य कृत स्नानः शक्तश्चेदार्द्रवासाः कर्त्ता विप्रान्प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत्। विप्रैः किन्तेकार्य्यं मिथ्यामावादीः सत्यमेववदेति पृष्टः गोवृषयोर्निष्क्रयीभूतं निष्कं तदर्धं तत्पादाःन्यतमप्रमाणं रजतद्रव्यं सभ्येभ्यः सम्प्रददे नममेति सङ्कल्प पुरस्सरं सभ्याग्रे निधायअमुकनाम्नोमम जन्मप्रभृति अद्य यावज्ज्ञाताज्ञात कामाकाम सकृदसकृत्कृत कायिक वाचिक मानसिक, सांसर्गिक, स्पृष्टास्पृष्ट, भुक्ताभुक्त, पीतापीत। सकलपातकातिपातकोपपातक, लघुपातक, सङ्करीकरण, मलिनीकरणापात्रीकरण, जातिभ्रंशकर, प्रकीर्णकपातकानां मध्ये सम्भावितपातकानां निरासार्थं प्रायश्चित्तमुपदिशंतु भवन्त इतिवदेत्। (पुत्रादिः प्रतिनिधिश्चेन्मम पितुर्जन्मप्रभृतीत्यादि वदेत्) उक्तेषु पापेषु यद्येकतममेव

---

किंचिद्द्वय पर्यन्ता। यथायोग्यं कृच्छ्रसंख्यया वा। पर्षत्तुष्टिर्वा गौर्वृषभश्चेत्यन्ये। निवेदित दोषस्य पर्षदनुमत्यैव प्रायश्चित्तानुष्ठानं बोध्यम् पापी च सचैलं स्नातो वाग्यतः आर्द्रवासा उपदेष्टारं साष्टाङ्गं प्रणम्य स्पष्टाभिधानं वदेदिदं मे पापं निष्पन्नं प्रायश्चित्तं मे उपदिशत्विति। पापं कृतवतः परैर्ज्ञातदोषस्य च सभोपस्थानं विना भोजने भाषणे च पापवृद्धिः। आसम्वत्सरं प्रायश्चित्ताकरणे पापद्वैगुण्यम्। विज्ञः स्मार्तस्य प्रायश्चित्तकथने चित्तस्यवृत्तिस्तत्पापभागिता च ज्ञात्वाउपदिशेत्। शूद्रादिभ्यः प्रायश्चित्तोपदेशोविप्रमन्तरा कृत्वाः कार्यः। क्षत्रियवैश्ययोरप्येवम्। गुरूणि पापे लघु लघूः

नि च गुरुप्रायश्चित्तं न वाच्यम् । पापगौरवन्तु कामतः कृप्र-त्ययं साभ्यासमनुष्ठानाद्दण्डगौरवात्स्वातिशयाच्च निन्दार्थवादा ल्लोकगर्हातिशयाच्चज्ञातव्यम् । लघुनाप्येतद्विपर्ययेणज्ञेया । प्रायश्चित्तं यथोक्तमेव वाच्यम् । नतुस्नेहलोभादिनानुग्रहः कार्यः ॥ तथा सति पापं वक्तरि संक्रमेत् ॥ दुर्वलेतु मष्टरि प्रथमं यथोक्तं उदाहृत्य तच्छक्त्यनुसारेण ग्रीष्मादिकालहि-मालयादिदेशानुसारेण चानुग्रहः कार्य एव । एवं शिशु वृद्ध-स्त्रीरोगिणामप्यनुग्रहः । तदपि यद्वर्णस्य यत्पापे प्रायश्चित्त-मुक्तं तत्पादन्यूनं तदर्धं तत्पादं वेति वलदेशकालानुसारेण न ततोन्यूनम् । तत्र वालवृद्धातुरस्त्रीणामर्द्धम् । एकद्वित्रिध र्मत्वे पादमेव । एवं च यत्र पादमेवप्रायश्चित्तमुपदिष्टं तत्रापि नानुग्रहः । षोडशवर्षन्यूनोवालः । अशीतिवर्षादधिकोवृद्धः । पूर्णषोडषवर्षस्य पूर्णं प्रायश्चित्तम् । ऊनैकादशवर्षस्य पञ्च-वर्षादूर्ध्वं पादप्रायश्चित्तम् । द्वादशादाषोडशमर्धम् । एव-मतिरोग्यतिवृद्धयोरपिपुत्रादिभिः । ( अत्रवहुषुपुत्रेषुज्येष्ठः पत्नीषु च प्रथमा प्रधानावा) पञ्चवर्षन्यूनस्य न पापम् । शास्त्रो पदिष्टं पूर्णं प्रायश्चित्तं विप्रस्यैव । क्षत्रिय विट् शूद्राणां च पादहानिः । क्वचिद्विशेषस्तुवाचनिकः । तत्र जपहोमादि रहितमेव शूद्रस्य । अमंत्रकप्राणायामश्च । यागाद्यनुष्ठानशी-लानां जपादिकम् । इतरेषां तपआदि । नामधारकमूर्खनि-र्धनानांतपः । अनधीतानां च षोडशवर्षाधिकब्रह्मचारिणोद्वि गुणं । वानप्रस्थस्य त्रिगुणम् । यतेश्चतुर्गुणम् । स्वयमशक्तौ प्रतिनिधिद्वारा प्रायश्चित्तं कार्यम् । अज्ञानादकामकृते यदुक्तं कामकृते तद्विगुणं कामतोऽभ्यासेचतुर्गुणम् । कामा दिकृतेयदुक्तम् अकामादिकृते तदर्धं योज्यम् ॥ कृतप्रायश्चित्तो

पापं कृतं भवेत्तदा "किन्तेकार्यमिति प्रश्ने" मयामुकवधः अमुकभक्षणम् अमुकागम्यागमनं कृतमित्यादि प्राक्कृतमेव पापमुच्चार्य तत्प्रायश्चित्तमुपदिशन्तु भवन्तः इत्येववदेत् जन्मप्रभृति अद्ययावदित्यादिकं न वदेत् ॥ ( अत्रतुशतचण्डीयज्ञाधिकारार्थम् स्मार्तकर्मण्यधिकारार्थंवा वदेत् ) सर्वधर्मविवेक्तारोगोप्तारः सकलाद्विजाः । मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् । प्रसादः क्रियन्तां मह्यं शुभानुज्ञां प्रयच्छथ ॥ पूज्यैः कृतः पवित्रोहं भवेयं द्विजसत्तमैः । इतिसभ्यान्प्रार्थयित्वा मामनुगृह्णन्तु भवन्तइति नमेत् ॥ ततः सभ्यैः शक्त्यादिविचार्य प्रायश्चित्ते निश्चिते कर्ता चन्दनपुष्पादिभिः पुस्तकपूजामनुवादकपूजां च कृत्वा निबन्धपूजात्वेन किंचिद्द्रव्यं निधायानुवादकाय भृतिरूपां दक्षिणां पापानुसारेण दद्यात् । ततः सभ्याः पुस्तकवाचनपूर्वकं अनुवादकस्याग्रे कथयेयुः ॥ अनुवादकश्च कर्त्तारं वदेत् । तद्यथा सभ्यैरुपदिष्टोऽनुवादकः अमुकस्य ते जन्मप्रभृति अद्ययावज्ज्ञाताज्ञात, कामाकाम, सकृदसकृत्कृत, कायिक, वाचिक, मानसिक, सांसर्गिक, स्पृष्टास्पृष्ट, भुक्ताभुक्त, पीतापीत, सकलपातकातिपातकोपपातक, संकरीकरण, मलिनीकरण-पात्रीकरण जातिभ्रंशकरप्रकीर्णक, पातकानां मध्ये संभावितपापानां निरासार्थं पर्षदुपदिष्टं सार्धाऽब्दप्रायश्चित्तं अमुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितं त्वया आचरितव्यं तेन तव शुद्धिर्भविष्यति ॥ त्वं कृतार्थोभविष्यसीति

त्रिरुपदिशेत्। अन्यस्मिन्कार्ये सार्धाब्दादिषडब्दानां मध्ये यस्य सभ्याः निश्चयं कुर्य्युस्तदेव वदेत् ब्राह्मणस्य पूर्णम् इतरेषाम्पादोनादि ॥ ततः कर्ता ओमित्यंगीकृत्य प्रणम्य पर्षदं विसृजेत् ॥ ततोरिक्तायां सायाह्ने देशकालौ संकीर्त्य अमुकशर्मणोमम जन्मप्रभृति अद्ययावज्ज्ञाताज्ञातमध्ये संभावितानां पापानां निरासार्थं करिष्यमाणकर्मण्यधिकारप्राप्त्यर्थं च पर्षदुपदिष्टं सार्धाब्दादिप्रायश्चित्तानां मध्ये अमुकप्रायश्चित्तं प्राच्योदीच्याङ्गसहितं अमुकप्रत्याम्नाये-

---

गोभ्यः स्वयं तृणं दद्यात् । तच्चताः निःशंकं स्वयमेवभक्षयेयुः तदैनमंगीकुर्युः सचेदं पापं नपुनः करिष्यामीति प्रतिजानीयात्॥ नोचेत्पुनः प्रायश्चित्ते योज्यः । ( पापानि ) प्रकीर्णक, जातिभ्रंशकर, संकरीकरणापात्रीकरण, मलिनीकरणोपपातक, महापातकानुपातकरूपाणि संक्षयोक्तमेतदेषां विवरणविस्तृतिस्तु धर्मग्रन्थे द्रष्टव्येति ॥ ( प्रायश्चित्तात्पूर्वदिनकृत्यमाह शंखः । ) वाप्यकेशनखान् पूर्वं घृतंप्राश्यहविर्निशि । प्रत्येकं नियतंकालमात्मनोव्रतमादिशेत् । वहिर्नगृहे, प्रत्येकं नियतं कालमिति कालसंख्याः संकल्पवाक्ये उल्लेखनीयाः इत्यर्थः । निशि निशामुखे व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शनात् इति लघुहारितेनैकवाक्यत्वात्तेन प्रायश्चित्तपूर्वदिने केशादीन् वापयित्वा स्नात्वाघृतं प्राश्य प्रदोषे संकल्पः कार्यः इति ॥ अष्टमीचतुर्दशीभिन्नकाले प्रायश्चित्तमिति व्यवहारचिन्तामणौ व्यासः । नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् । इति चतुर्दश्यां संकल्पयामायां कार्य-

नाहमाचरिष्ये । ततः यानिकानि च पापानि ब्रह्महत्यासमानि च । केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् । इति मन्त्रेण चौरं कार्यम् ॥ चौरान्ते गंडूषान् कृत्वा यथोक्तं दन्तकाष्ठेन आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नोदेहि वनस्पते ॥ इतिमंत्रेण दंतशुद्धिं कृत्वा काष्ठान्तरेण जिह्वामुल्लिख्य स्नात्वा नित्यस्नानाविधिना भस्मादिदशस्नानं कुर्य्यात् ॥ ( नित्यस्नानाविधिः पूर्वोक्तोद्रष्टव्यः । )

---

मितिशिष्टाचारः ॥ क्षौराभावे साधाब्दादिव्रतं द्विगुणं पर्षद्दक्षिणापि द्विगुणा । यत्र तु सभर्तृकस्त्रिया जीवत्पितृकादेश्च क्षौरं निषिद्धम् । तत्र न द्विगुणं व्रतम् । क्षौरं च शिखाकक्षोपस्थवर्जं नखकेशरोम्णामुदक्संस्थं वपनमिति सर्वत्र ॥ रोमवर्जनमप्यन्यत्र ॥ क्षौरस्यविशेषव्यवस्था महतिपातके सशिखा सरोम्णेति, अत्र तस्य प्रसंगाभावः । अस्य विशेषस्तु शास्त्रे द्रष्टव्यः ॥ क्षौराद्यङ्गजातमपि कृच्छ्राधिके भवति नकृच्छ्रन्यूने इति मयूखादौप्राजापत्यत्रयमित्यधिके वा प्रायश्चित्ते भवति । नतु ततोन्यूने इति गृह्याग्निसागरमतम् । (अथ प्रायश्चित्ते कृच्छ्रादिनिर्णयः) दिनंविलंघ्य रात्रौ सार्धयामाभ्यन्तरे मित भोजनेन नक्तव्रतम् । तदशक्तौ गुंजद्वय परिमितिरूप्यमाषकदानम् । तदभावे तन्मूल्यम् । दिवारात्रभोजनमुपवासः । तदशक्तौ रूप्यमाषत्रय दानम् । एकविप्रभोजनं वा सहस्र गायत्री जपोवा द्वादश प्राणायामा वा ( संकल्पः ) अद्येत्यादि अमुकगोत्रोमुकशर्माऽहममुककर्मजन्यपाप-

क्षयकामोनकृच्छ्रव्रतं करिष्ये ॥ तदशक्तौ प्रतिनिधिरूपमिमं माषकं चन्द्रदैवत्यं अमुकनामसगोत्राय विप्रायाहं सम्प्रदद इति। मूल्यं चेदिदम्मूल्यम्विष्णुदैवत्यमिति वा सङ्कल्प्य दानम्। विप्रं च सम्पूज्य द्रव्यमालभ्य प्रोक्ष्य दद्यात्। प्राजापत्यलक्षणं (मनुस्मृतौ) त्र्यहंप्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परं च नाश्नीयात्प्राजापत्यः स उच्यते ॥ सायंद्वाविंशतिग्रासाः प्रातः षड्विंशतिस्तथा। अयाचिते चतुर्विंशःपरञ्चानशनं स्मृतम् ॥ कुक्कुटाण्डप्रमाणं वा यावद्वा प्रविशेन्मुखम्। एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ॥ (पादोनकृच्छ्रमाह शङ्खः) द्व्यहं प्रातर्द्व्यहं सायं द्व्यहमद्यादयाचितम्। द्व्यहं परं चोपवासः पादोनव्रतमाचरन् ॥ (कृच्छ्रार्द्धव्रतमाह आपस्तंवः) सायं प्रातस्तथैवैकं दिनद्वयमयाचितम्। दिनद्वयं च नाश्नीयात्कृच्छ्रार्धमभिधीयते ॥ (पादकृच्छ्रमाह याज्ञवल्क्यः) एकभुक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ॥

इति। एषु प्राजापत्यादिषु धेनुदानतन्मूल्यदानेन वा निर्वाहः यथा-प्राजापत्यं षडुपवाससमं पयस्विधेनुदानसमानं च वाचिकम्। (यथाहमनुः) भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रभक्षणे। इत्यत्र मत्या षडुपवासे वक्तव्ये प्राजापत्यविधानादिति धेनुदान समाने च षडुपवासे कार्षापणत्रयं, सङ्कलनादिति। एवं च पादोनकृच्छ्रे सार्द्धोपवासचतुष्टयसङ्कलनेन चतुः पणाधिक कार्षापणद्वयम्। कृच्छ्रार्धे तु एतद्दिनषट्कसाध्यमुपवासत्रयसङ्कलनेन सार्धकार्षापणतुल्यमिति। पादकृच्छ्रे च एतत्त्र्यहसाध्यं उपवासत्रयसङ्कलनेन सार्धोपवास तुल्यत्वेनात्र द्वादशपणा इति। सर्वप्रायश्चित्तप्रयोगे (प्रायश्चित्तेन्दुशेखरे) तत्र षडब्द-

ञ्यब्दसार्धाब्दादिव्यवस्था प्राजापत्यप्रत्याम्नायाश्च परिभाषोक्ता एव । तत्र त्रिंशत् कृच्छ्रमब्दम् पञ्चचत्वारिंशत्कृच्छ्रम् सार्धाब्दम् । नवतिकृच्छ्रं त्र्यब्दम् । तद्द्विगुणं षडब्दम् (कृच्छ्रं प्राजापत्यमितिपर्य्यायौ) व्रताशक्तौ तु व्यवस्था (प्रायश्चित्तेन्दुशेखरे) उपवासस्तु फलादिद्वारा कार्यः (यथाह तत्रैव) अष्टावैतान्यव्रतघ्नानि आपो, मूलं, फलं, पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ इति परन्तु परिमितमेव गौडाः । इदमपिनेत्यपरे । (यद्वा) क्रमेणैकभुक्तनक्तायाचितोपवासाः एवं त्रिरावृतिः ॥ इदं षडुपवाससमम् । तदशक्तौ पयस्विनीधेनोर्दानम् । तदभावे गोमूल्यम् । गवासभावे निष्कंस्यात्तदर्धं पादमेव वा (सुवर्णचतुष्टयसमतोलितं रूप्यं निष्कम्) रूप्यपरिमाणे निष्कं सुवर्णाश्चत्वार इति याज्ञवल्क्यात् ॥ धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्यापि दरिद्राणाम्प्रकीर्तिता ॥ (इति षट्त्रिंशन्मते धनिकादिभेदेन गवांमूल्यम्) तत्र पञ्चभिः पुराणैरितिशेषः । पुराणश्च षोडशमाषपरिच्छिन्नं रजतम् । कृष्णलातु रक्तिकाख्य गुञ्जा परिमिता । मासकन्तु तद्द्वयपरिमितं रूप्यं रूप्यमासकम् । यद्वापणषोडशकं पुराणः पुराणएवकार्षापण कार्षिकश्चेति । (पणस्तु) अशीति रक्तिकापरिमितं ताम्रम् । अशीतिर्वराटिका वा । ताम्रपण एव कर्ष उच्यते । रौप्यः पुराणोदक्षिणस्यां पणैः पूर्वस्यामिति व्यवस्था । वृषेषट्कार्षापणा देयाः ॥ पंचेति मूलपाणिः ॥ केवलगोमूल्यंन्तु पुराणत्रयमुत्तमः पक्षः । द्वात्रिंशत्पणामध्यमः एकपुराणोधमः (इतिगौडाः) दश कार्षापणधेनोरश्वे पञ्चदशैव-तु । द्वात्रिंशत्पणिकागावो ह्यष्टा वा नतु हीनता ॥ इति यदुक्तं तत्तु प्रायश्चित्तातिरिक्तदक्षिणाप्रसंगेन भवतो बोध्यम् ।

(धनिकादीनां लक्षणं च संस्काररत्नमालायाम् वराहपुराणोक्तं) “वर्धयित्वा धनं यस्तु तस्माद्ग्रासमपीहयः । नखादेत्संग्रहपरो धनिकः(कृपणः) स उदाहृतः ॥ पोषणीयकुटुम्बस्य निर्वाहोयावता भवेत् । तावदेव सुखं येन लभते प्रतिवार्षिकम् ॥ ऋणं यस्य तु नास्त्येव स मध्यम उदाहृतः । धनं पूर्वापरं यस्य वर्त्तते बहुसंख्यया । अधिकस्यार्जकोयः स्यात् समहाधन उच्यते ॥ सदाचाररतोविप्रो धनार्जन पराङ्मुखः । कुटुम्बयत्नमतिकः स दरिद्र इति स्मृतः ॥ यस्यस्यादशनाभावः सदाचाररतस्य हि । महादरिद्रः सभवेद्ग्रासोधान्यविवर्जितः ॥ वर्धयित्वा धनं यस्तु ग्रासं वार्षिकमर्जयेत् । सवैधन्य इति प्रोक्तश्चैकवर्षेण यः पुमान् ॥ वर्षद्वयमितं ग्रासं सहिधन्यतरः स्मृतः । अधिकस्यार्जकोयः स्यात्सधन्यतम ईरितः ॥ धनेनैव विना यस्तु ग्रासंवार्षिकमर्जयेत् । सवै धीर इति प्रोक्तस्तारतम्यं च पूर्ववत् ॥ एतेन यज्ञे यज्ञकर्तुः सामर्थ्यं बुद्ध्वा गवांमूल्यं कल्पयेदिति । (अत्र प्रसङ्गात् स्वर्णमान व्यवस्थाप्युच्यते) गुञ्जापरिमित कृष्णलापरिमितपंचकं स्वर्णमाषः । षोडशमाषा अक्षशब्देन सुवर्णशब्देन कर्षशब्देन विस्तशब्देन चोच्यंते ॥ सुवर्णाश्चत्वारः पलं निष्कश्च ॥ दशपलानि धरणमिति (मनुस्मृतौ) धेनुमूल्यनिर्णयमाह संवर्तः (प्रायश्चित्तकदम्बे) प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् । धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ॥ (षट्त्रिंशत्मतेपि कार्षापणाः षोडशपणाः । कार्षापणः वार्षिके स्यात्पणाः षोडशकेपिच) इति विभवः ॥ (कात्यायनः) द्वात्रिंशत्पणिकागावोवत्सः पौराणिकोमतः । धेनुमूल्यं कार्षापणत्रयम् सवत्सागौर्धेनुरित्यर्थः । गोमूल्यं कार्षापणं कलाविति अधिकारे स्मृतिः । गौः षोडशपणास्तत्र मानवाः इतिनिर्धनाः ।

ततः स्नानाङ्गतर्पणं कार्य्यम् । तर्पणं यथा—ब्रह्मादयोदेवाः । तान्देवाँस्तर्पयामि भूर्देवाँस्तर्पयामि भुवर्देवाँस्त० स्वर्देवाँस्त० भूर्भुवः स्वर्देवाँस्त० ॥ ततोनिवीती-कृष्णद्वैपायनादयोऋषयस्तान् ऋषीन् त० भूर्ऋषीन् । भुवर्ऋषीन् स्वर्ऋषीन् । भूर्भुवःस्वर्ऋषीन् ॥ प्राचीनावीती । सोमः पितृमामोंगिरस्वानाग्निष्वात्ताः कव्यवाहनादयोये पितरस्ताँन्पितॄँस्तर्पयामि । ओं भूः पितॄन्० भुवः पितॄन्० स्वः पितॄन् । भूर्भुवः स्वः पितॄन् ॥ ( ततोयक्ष्मतर्पणादि ) ओं यन्मया दूषितं तोयं मलैः शारीरसंभवैः । तस्यपापविशुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकमिति । वासःपरिधानान्ते तिलकं धृत्वा आचम्य देशकालादिसंकीर्त्य विष्णुप्रीत्यर्थं प्रायश्चित्ताङ्गभूताविष्णुश्राद्धसम्पत्तये श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतं द्रव्यं दातुमहमुत्सृजे इति संकल्प्य तच्चतुर्भ्योब्राह्मणेभ्यः पूजनपूर्वकं दद्यात् ॥ तेन पापापहामहाविष्णुः प्रीयतामिति च वदेत् ॥

---

यत्तु वृषभमूल्यं पञ्चकार्षापणा इति तन्न, शूलपाणिलिखित वचन विरोधात् । धेनुसङ्कलने तेन पठन्तीतिकृत्वा लिखितम् ॥ द्वात्रिंशत्पणिकागावोवृषभा षट्पुराणिक इति प्रसिद्धवचनानुसारेण व्यवस्थाश्रेयसीति प्रतीमः ॥ पणादिसंख्याज्ञानार्थं स्पष्टमाह (श्री भास्कराचार्यः) वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः । ते षोडशद्रम्म इहावगम्यो द्रम्मैस्तथाषोडशभिश्चनिष्काः ॥ तेन २० वराटिकाः=काकिणी ।

ततः प्रायश्चित्ताङ्गगोदानं करिष्ये इति संकल्प्य ॥ गवा-मङ्गेष्वाति गोदानं प्रत्यक्षं द्रव्यद्वारा वा कुर्य्यात् । प्रत्यक्षा गौचेत दानग्रहीतारं ब्राह्मणं वृत्वा यथाविधि पूजयित्वा धेनुपूजनं च कुर्य्यात्। ततोगोपुच्छे देवर्षिंतर्पणं च कृत्वा, कांस्यपात्रे गोपुच्छं निधाय दुग्धतिलकुशसुवर्णयुतं कृत्वा दक्षिणहस्तेन गृहीत्वा देशकालौ संकीर्त्य ममसमस्त-पापक्षयार्थं पापापहश्रीमहाविष्णुप्रीत्यर्थमिमां गां सवत्सां सोपस्करां यथाशक्तिविभूषितां रुद्रदैवत्यां तुभ्यमहं सम्प्रददे इत्युच्चार्य संकल्पयुतद्रव्यं गोपुच्छं च विप्रहस्ते दद्यात्। ततः प्रार्थयेत ॐ यज्ञसाधनभूताया विश्वस्याघौघनाशिनी॥

---

*काकिण्यः=पणः लोके पैसा इति १६ पणाः=द्रम्मः अस्य पाव-लीं चौअन्नी इति भाषा तथा १६द्रम्माः=१निष्कः। तेन। मुद्रा-चतुष्टयस्यनिष्केति संज्ञा। अतो धेनु मूल्यं निष्कं निष्कार्द्धं तदर्द्धं वेति गवामभावे निष्कंस्यात्तदर्द्धं पादमेववेति वचना-देकस्यगोर्मूल्यं धनिकस्य मुद्राचतुष्टयम् मध्यवित्तस्य मुद्राद्व-यम् दरिद्रस्य तु रूप्यकमेव तेन सार्द्धाब्दे पंचचत्वारिंशत्कृ-च्छ्रस्य प्रत्येकं गोदानम् पंचचत्वारिंशत्। तन्मूल्यं धनिका-नाम् १८० अशीत्युत्तरशतं मुद्राः मध्यवित्तस्य नवतिः हीन-वित्तस्य पंचचत्वारिंशत् त्र्यब्दे द्विगुणं षडब्दे चतुर्गुणं एवं द्वादशाब्दे ३६० षष्ट्युत्तरशतत्रयं गोदानम् तन्मूल्यं धनिकादि-क्रमेण १४४०, ७२०, ३६०, षडब्दे ७२०, ३६०, १८०, त्र्यब्दे ३६०, १८०, ९०, सार्द्धाब्दे १८०, ९०, ४५ इति। अथ प्राचीन परिभाषया गोमूल्यम्। धेनुः पंचभिराढ्यानामिति षडब्रि-

विश्वरूपधरोदेवः प्रीयतामनया गवा ॥ इति (ततः गोदान-सांगतासिद्ध्यर्थं विप्राय दक्षिणां दद्यात् ) अनेन गोदानकर्मणा पापापहश्रीमहाविष्णुः प्रीयतामिति जलमुत्सृजेत् ॥ ( गोदानासंभवे यथाशक्ति तन्मूल्यं देयम् । ) तद्यथादेशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितं यथाशक्तिगोनिष्क्रयीभूतं द्रव्यदानमहं करिष्ये इति संकल्प्य ब्राह्मणं सम्पूज्य देयद्रव्यं गृहीत्वा देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितमिदं गोनिष्क्रयीभूतं द्रव्यं तुभ्यमहं सम्प्रददे । इति । नात्र दक्षिणा ॥ (इतिप्रायश्चित्तधेनुदानम् । ) प्रायश्चित्तहोमः पूर्वोक्तोद्रष्टव्यः ।

---

शन्मतमवलम्ब्य पणषोडशकं पुराणस्तद्भूतपंचभिः पुराणैः अर्थात्पंचद्रम्मैः पुराणद्रम्ममानयोरभेदत्वादेका गौरिति । अतः सपादरूप्यकं गोमूल्यमित्युत्तमः पक्षः तेनसार्द्धाब्दप्रायश्चित्ते पञ्चचत्वारिंशद्गो मूल्यम् ५६। सपादषट्पंचाशन्मुद्रामितम् । त्र्यब्दे नवति गोमूल्यम् ११२॥ सार्द्धं द्वादशोत्तरं शतम् । षडब्दे अशीत्यधिकशतगोमूल्यम् २२५ सपादशतद्वयम् इति धनिकानाम् । मध्यवित्त दरिद्रयोश्च त्रिपुराणकार्षापणसमं मूल्यं परिकल्प्य व्यवस्था कार्या । उभयपक्षे तु क्षत्रियादीनां पादोनप्रायश्चित्त विधानात्तादृशं गोमूल्यं कल्पितव्यमिति इति व्यवस्था पूर्वदेशीयानाम् । दाक्षिणात्यानान्तु रौप्यं पुराणं परिकल्प्य तस्मादुक्तव्यवस्थेति तदुक्तं प्रायश्चित्तेन्दुशेखरे "रूप्यः पुराणोदक्षिणस्यां पणैः पूर्वस्यामिति व्यवस्थेति" तत्र पुराणश्च षोडशमाषपरिच्छिन्नं रजतमिति ।

गृहमागत्य प्रातरारभ्य संकाल्पितप्रायश्चित्तं संकल्पितप्रत्याम्नायानुसारेणानुष्ठायोत्तरांगानि कुर्य्यात् यथागोनिष्करजतादिदानपक्षे पंचगव्यप्राशनांते इदं सार्द्धाब्दे पंचचत्वारिंशत्कृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतं प्रतिकृच्छ्रं निष्कतदर्धतदर्धान्यतमप्रमाणरजतद्रव्यं वा तन्निष्क्रयीभूततात्कालिकराजकीयमुद्रया संख्यायिकं मुद्रात्मकं द्रव्यं यथा दैवतं नानानाम गोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजे ॥ ( अत्र बृहत्संकल्पयोजनास्यैव खण्डस्यान्यतमे पृष्ठे विलोक्या )

---

तत्र च रक्तिकाख्यगुंजापरिमिता कृष्णला (रक्तिका, गुंजा, कृष्णला त्वेकएव पर्यायाः तद्द्वयं माषः । तादृशाः षोडशमाषाः पुराणः अन्यत्सर्वं धेनुः पञ्चभिराढ्यानामित्यादिवचनात् व्यवस्था । अथ वृषमूल्यंषट्कार्षापणमिति वचनात् पुराणस्य कार्षापणकार्षिकापर्यायाच्चापि रजतमानपक्षे षट्पुराणरजतम् ९६ षट्नवतिमाषमितम् "पञ्चेति शूलपाणिः" तेनाशीति माषमितम् भास्करमते तथा ग्रन्थकारमतेचपणःयथस्यया अशीतिरक्तिकापरिमितताम्रशकलस्य ह्यशीतिवराटिकाभिः प्राप्तस्य ताम्रशकलस्य पणसंज्ञात्वेन कर्षसंज्ञात्वेन वा परिकल्प्य तादृशपणषोडशकैः पुराणस्तेन पुराणषट्कं पञ्चकं वा वृषमूल्यमिति अथवा सर्वेषां त्रिपुराणकमेव गोमूल्यम् । ( उत्तमः पक्षः ) इति । इदानीन्तने व्यवहारे पणस्य व्यवस्थाभिन्ना एव दृश्यते ( धर्मशास्त्रे तु ) यादृशमानपणस्य व्यवहारः स एव प्रायश्चित्तादिकर्मणि गृहीतव्यः अर्थादशीतिरक्तिमानं ताम्रशकलं यन्मानेनोपलभ्यते तस्य

इति द्रव्यदानसंकल्पं कृत्वा तदैव द्रव्यं विभज्य, दत्वा चोत्तराङ्गानि कुर्य्यात्। तत्र संकल्पः देशकालौसंकीर्त्तनानन्तरमाचीर्णस्यामुकप्रायश्चित्तस्य सांगतार्थमुत्तरांगानि करिष्ये इति ततोहोमं कर्तुं स्थंडिलादिकरिष्ये इति संकल्प्य स्थंडिलमारभ्य कुशकण्डिकाब्रह्मवरणान्तं पूर्ववत्कृत्वा पूर्ववदेवाज्यहोममात्रं व्याहृतिभिः कृत्वानन्तरमत्रापि विष्णुश्राद्धं गोदानं च कुर्य्यात्॥ नात्र पंचगव्यहोमः॥ अंते शक्तेन गोभूहिरण्यादि दशदानानि कार्य्याणि। अशक्तौ हिरण्यदानम्। कर्म समाप्तिश्च॥

पणाभिधानं परिकल्प्य तादृशपणैरेवोक्त व्यवस्था कार्या ताम्राणामुपचयापचयव्यवहारात् पणमानस्याप्युपचयापचय इतिव्यवहारमार्गः (पूर्वन्तु) पणस्यस्थिरमानं परिकल्प्य स्फुटमूल्यं प्रदर्शितम्। तन्मूल्यं यद्येकेनाधुनिकपणेनाशीतिरक्तिकामितं ताम्रं लभेत् वाशीतिसंख्यकावराटिकाहाटके लभेयुस्तदैव तथ्यम् (अन्यथा) यदा यादृक्ताम्रव्यवहारस्तादृगेव पणः कल्प्यः शास्त्रे अशीतिरक्तिकामितस्य ताम्रशकलस्य वाशीतिवराटिकारूपस्य ताम्रशकलस्य पणशब्देनाभिधानात्। "पणस्तु" अशीतिरक्तिकामितं ताम्रमशीतिर्वराटिकावेति मूलवाक्यदर्शनाच्चेति।

अथ च शास्त्रे षोडशमाषपरिछिन्नरजतस्य पुराणाभिधानात्तादृशपुराणैः पञ्चभिस्त्रिभिरेकेन च धनिकादिभेदेन गोमूल्यं परिकल्प्य दाक्षिणात्यानां गोमूल्यं पूर्वं प्रतिपादितम् (षट्त्रिंशन्मुनिसम्मतम्) इदानीन्तु गवामभावे निष्कं स्यादित्या

द्विवाक्यात् रूप्यपरिमाणे निष्कं सुवर्णाश्चत्वार इति याज्ञवल्क्यसम्मतिदर्शनाच्च निष्कसमरजतं गोमूल्यं प्रदश्यते। यत्र रजतमेव गोमूल्यं वा तन्मूल्यसममाधुनिकी मुद्रावेति भवति (यथा) सुवर्णमानपरिभाषायांरक्तिकागुंजा कृष्णलेत्येक पर्यायाः पूर्वं प्रदर्शिताः तत्र पञ्च गुंजात्मकं एकस्वर्णमाषः तेषां षोडशकं सुवर्णः कर्षोऽक्षेति सुवर्णः कर्षावा चत्वारः पलं निष्कश्चेति अतः सुवर्णचतुष्टयसमतोलितं रूप्यं निष्कमिति तन्मानम् ३२० रक्तिका रजतम् एतदेव रजतं निष्कमानेन गोमूल्यं धनिकानां तदर्धार्धं मध्यवित्तस्य दरिद्रस्यचेति। एवं कृत्वा रजतशकलं गोमूल्यत्वेनोपकल्पयेद्वा तात्कालिकव्यापारेण तन्मित रजतस्य यन्मूल्यं लभेत्तदेव निष्कद्रव्यं विधाय तेन तदार्धार्धेन व्यवस्थां कुर्यादिति रूप्यनिष्कमूल्यं चापि दाक्षिणात्ये रौप्यपुराणवत्। गौडास्तु अशीति रक्तिकापरिमितताम्रशकलस्यवाशीति वाराटिकालभ्यस्य ताम्रशकलस्य पणसंज्ञाभिधानात्ताहृश पणैः परिभाषयानिष्कं विधाय निष्कं निष्कार्द्धं तदर्धंगोमूल्यं परिकल्पयेदिति वदन्ति (तथा चोक्तम्)धेनुमूल्यसमं मूल्यं भूधनधान्यवस्त्रस्वर्णरूप्यादि वा दद्यात् इत्येवं गोमूल्यं सविस्तरमुक्त्वा पुनः प्रकारान्तरेण कृच्छ्रस्थाने प्रत्याम्नायाः कथ्यन्ते। ( गायत्र्ययुतजपो वा कृच्छ्रस्थाने प्रत्याम्नायः ) गायत्र्या द्वादशाधिकसहस्रसंख्यकः समिद्घृतहविर्धान्यानामन्यतमस्य होमोवा तिलहोमस्तु सहस्र एवेति केचित्। घृताहुतिशतद्वयं वा वेदसंहितापारायणं वा प्राणायामशतद्वयं वा। द्वादशविप्रभोजनं वा। एकोपवासपूर्वकं द्वादशतिलपात्रदानं वा। तीर्थोद्देशेन योजनगमनं वा। रुद्रैकादशिनी वा। शिरः शोषणपूर्वकं द्वादशसांगस्नानानि

वेति ॥ परन्त्वेनत्सर्वं पृथक् पृथक् एकैककृच्छ्रपरं विभाति। कृच्छ्रस्थाने यथा गोमूल्यं तथैवैतत् यथा प्रतिकृच्छ्रमेकागौः तथैव प्रतिकृच्छ्रमेतत् इति विपश्चिद्भिर्विचार्य्यमिति ॥ ( प्रायश्चित्तविधाने ) चातीवाल्पप्रयाससाध्यम्प्रायश्चित्तं (मिताक्षरायां शंखोक्तं लिखति प्रायश्चित्तकदम्बकारः). यथा-अथ रहः कृतेषु प्रकीर्णोपपातकानुपातकमहापातकेषु गायत्र्या जपः प्रायश्चित्तम् ( मिताक्षरायां शंखः ) शतं जप्त्वा तु सावित्री महापापप्रणाशिनी । सहस्रं जप्त्वा तु तथा पातकेभ्यः प्रमोचिनी ॥ अयुतन्तु तथा जप्त्वा सर्वकल्मषनाशिनी । लक्षं जप्त्वा तु सावित्री महापातकनाशिनी ॥ इत्येव प्रमाणं दृष्ट्वा अनुष्ठानादौ पूर्वमयुतं जपेदिति तंत्रादौ दृश्यते ॥ इति । अतः प्रायश्चित्तं पापानुसारं कृत्वा करिष्यमाणानुष्ठानसिद्ध्यर्थं गायत्र्या अयुतजपं कुर्यात् । (तदुक्तं देवीभागवते ) यस्य कस्यापि मंत्रस्य पुरश्चरणमारभेत् । व्याहृतित्रयसंयुक्तां गायत्रीं चायुतं जपेत् ॥ नृसिंहार्कवराहाणां तांत्रिकं वैदिकं तथा । विना जप्त्वा तु गायत्रीं तत्सर्वं निष्फलं भवेत् ॥ इति । एवं सप्रणवव्याहृतिकगायत्र्ययुतं जप्त्वा आपोहिष्ठेत्यादि त्र्यृचम् । स्वस्ति न इत्याद्याः स्वस्तिमतीः । पुनन्तु मा देवजनाः इत्याद्याः पावमानीश्च सर्वान् जप्त्वा ओं गायत्र्याचार्यमृषिं विश्वामित्रं तर्पयामि । गायत्रीछन्दस्तर्पयामि सवितारं देवतां तर्पया० इति तर्पणं कृत्वा कद्रुद्रायेत्यादीनि रुद्रसूक्तानि सकृज्जपेत् ॥ तद्दिने उपवासः अशक्तस्य हविष्यान्नेन एकभुक्तव्रतम् । तत्राप्यशक्तश्चेदेकविप्रभोजनम् वा सहस्रं गायत्रीजपः द्वादशप्राणायामा वा इति ( स्मृत्यर्थसारोक्तमा-

वरणीयम् ) अत्र प्रायश्चित्तविधाने किंनामप्रायश्चित्तं तेषां भेदाः कतिकथं व्यवस्था च देया पापानां च भेदाः पापानुसारेण प्राजापत्यादि प्रायश्चित्तं सर्वप्रायश्चित्ते षडब्दादिनिर्णयः श्रद्धयापि प्रायश्चित्ताचरणं षडब्दादिव्रताशक्तौ धेनुदानम् तन्मूल्यदानम् मूल्यनिर्णयः ताम्ररौप्यमूल्यनिरुपणम् देशभेदेन तद्व्यवहारश्च अनन्तरमनेकेप्रत्याम्नायाः गायत्रीजपादेव सर्वेषां पापानां निवृत्तिः पापानुसारे कृते प्रायश्चित्ते मन्त्रसिद्ध्यर्थकायुतगायत्रीजपश्चेति सर्वंयथोक्तं सप्रमाणं प्रदर्शितम् अथ च मन्त्रसिद्ध्यर्थजपदिने प्रायश्चित्तान्ते उपवास एव कर्तव्यस्तदर्थमप्युक्तम् (अथेदानीं दशस्नानविषयः प्रस्तूयते) दशस्नानविषये ग्रन्थविस्तारयोजनानवकाशास्तत्रैव तत्फलदर्शनात् तत्क्रमस्तूच्यते तत्रापि प्रायश्चित्तेन्दुशेखरः । अत्र प्राचीनप्रयोगेषु मृत्तिकास्नानोत्तरं मार्जनाघमर्षणोक्तिर्दृश्यते तत्र मूलं मृग्यम् । दशविधप्रयोगे प्रक्रान्ते स्नानत्रयान्तेघमर्षणम् ततः सप्तस्नानानीति क्रमस्य निर्युक्तिकत्वात् सर्वदशविधस्नानान्ते एवाघमर्षणतर्पणादेर्मयूखादावुक्तत्वाच्च यथामार्गोदितैव पद्धतिः समीचीनेति । अस्मिन्दशविधस्नाने पञ्चगव्यस्नानमुक्तं तत्र यथेष्टं गोमूत्रादिकं गृह्णीयात् स्नानेन सर्वाङ्गमलापकर्षणहेतुत्वात् । यच्च पञ्चगव्यपरिमाणमुक्तं तत्पाने होमे चावधेयमिति स्नानान्ते अघमर्षणतर्पणादिकं स्नानांगम् । विष्णुश्राद्धन्तु प्रायश्चित्ताङ्गं ( सर्वत्रोपलब्धिरस्य प्रमाणवचनमनुपयुक्तमिति ) अत्रैव केचिद्विष्णुप्रतिमां प्रतिष्ठाप्य षोडशोपचारेण अर्चयन्ति विष्णुश्राद्धमपिकुर्वन्ति ( घटंसंस्थाप्यनत्रविष्णुपूजनमितित्वाचारः ) विष्णुश्राद्धानन्तरं प्रायश्चित्तांगहोमः तत्पूर्वं प्रायश्चित्तपूर्वाङ्गगोदानमिति प्राचां

एवं पूर्वोक्तविधिना प्रायश्चित्तं विधायात्मानं शुद्धं निष्कल्मषं देवतापूजनाधिकारयोग्यं सुदृढं विभाव्य अभीष्टयज्ञमारभेत् यज्ञकर्मण्यारम्भदिनात्समाप्तिं यावत्केनापिविशिष्टेन हेत्वन्तरेणसर्वदा समुपस्थितावशक्तश्चेदत्रैव स्वकीय पुत्र पौत्र, नप्तॄन् अन्यान् आत्मकल्याणचिन्तनपरान् कौटुम्बीयान् पुरोहितं* अन्यमपिपर्षद्ब्राह्मणं वा स्वप्रतिनिधिं कारयेत् तत्र सङ्कल्पः ओं अद्येत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्र प्रवर शाखाध्यायी शर्मा वर्मा गुप्तो वा अहं करिष्याचारः ( गोदानन्तु प्रत्यक्षं द्रव्यद्वारावेति ) स्थण्डिलनिर्माणम् अग्निस्थापनाग्निनामकरणकुशकण्डिकाब्रह्मप्रतिष्ठान्वाधानादिकं तु तृतीयखण्डोक्तवदेव ।

इतिश्री भा० पं० हरनामदत्तसुतदेवीप्रसादसंकलित शतचण्डीयज्ञविधानस्य प्रथमखण्डे प्रायश्चित्तविधानं समाप्तम् ।

यादृशीभावना यस्य सिद्धिर्भवति तादृशी इति वचनादात्मानं निष्कल्मषमित्यादि ज्ञात्वा कर्मारभेत् प्रतिनिधिविषयस्तु प्रायश्चित्तविधाने द्रष्टव्यः पुनर्लेखनेग्रन्थविस्तृतिरतो विशेषवचनमेवोच्यते । यदाह (त्रिकाण्डमण्डनः) काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुः ॥ ( पुरोहितमिति ) स्वयं कर्तुमशक्तश्चेत् कारयेत पुरोधसा । इति मरीचिः (व्रतानुष्ठानादिकमितिशेषः)

* मीमांसादर्शन ६ अध्यायस्य तृतीये पादे । तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ( इति सूत्रेण स्वामिनः प्रतिनिध्यभावः प्रदर्शितः ) परंचात्र कार्यवशात् कर्तुमशक्तश्चेत् तदा मरीचिमतमवलम्ब्य सर्वं कार्यम् । कार्याकरणे प्रत्यवायश्रवणात् ।

ष्यमाणामुक यज्ञानुष्ठानकर्माणि यदा कदा स्वकीयानुप-स्थितौ मदीयकर्तव्यकर्मकर्तुं कर्मसहायकरूपं अमुकगोत्र-प्रवरं शाखाध्यायिनं शर्म्माणं वर्म्माणं गुप्तं वा (पुत्रादिक-श्चेत्तस्यापिनामोच्चारणंकर्तव्यम्) मदीयशाखोक्तमार्गेण सर्वं व्यवहर्तुं स्वप्रतिनिधिरूपं त्वमेभिर्द्रव्याक्षतकुशजलपूगफल-हिरण्यस्रक्चन्दनादिभिः यज्ञकर्तृरूपेण वृणे। इति प्रतिनिधिहस्ते कुशजलादिकं दद्यात्। ततः प्रतिनिधिः वृतोस्मीति ब्रूयात् ततः कर्ता यथाविहितं कर्म आचार्यानुज्ञया मदीयश्रद्धया प्रेम्णा च कुरु। (प्रतिनिधिः) यथोक्तं यथारूपमेव करवाणीति (अथात्र पूज्याश्चेत्प्रतिनिधित्वं गतास्तान् प्रार्थयन् मित्रा-दयोबन्धुबान्धवाश्चेत्तदा सौहार्दभावेन पुत्रादयश्चेत्तदाज्ञा-रूपेण पूर्वोक्तं वाक्यं ब्रूयादिति शिष्टव्यवहारः) ॥ अतोऽ-नन्तरम् नद्यादितीरे यज्ञस्थानं चेत्तदा तत्स्थानाद्ग्रामेचे-द्ग्रामाद्बहिः क्रोशंक्रोशार्द्धं क्रोशद्वयं अभिमतं वा भूमिपरिग्रहं कुर्यात् (तद्यथा) स्वयं भूमिपरिग्रहार्थमुद्यतश्चेत् यज्ञीय काष्ठ-

---

भूमि परिग्रहस्तु ( तांत्रिकोमार्गः ) ( पुरश्चरणचन्द्रि-कायाम् ) पुण्यक्षेत्रादिकं गत्वा कुर्याद्भूमिपरिग्रहम् । तथा ह्यमुकमंत्रस्य पुरश्चरणसिद्धये ॥ मयेयं गृह्यते भूमिर्मंत्रो मे सिद्ध्यतामिति । भूमेः परिग्रहं कृत्वा परिमाणं च सर्वतः ॥ ग्रामक्रोशमितं स्थानं नद्यादौ स्वेच्छयामितम् । नगरादावथ क्रोशंक्रोशयुग्ममथापि वा ॥ आहारादिविहारार्थं तावतींभूमि-माक्रमेत् । क्षीरवृक्षोद्भवान् कीलान् दशदशमंत्राभिमंत्रितान् ॥

विनिर्मितान् सुश्लक्ष्णान् अष्टास्रान् द्वादशास्रान् वृत्तान् वा कीलान्दशसंख्यकान् हरिद्राकुंकुमादिरञ्जितान् हस्ते गृहीत्वा यज्ञकर्तृणामाहारविहारार्थं स्वस्थानादभितः प्रमितां भूमिं परिगृहीष्यामि ! भो ! आचार्य युक्तं चेत्तदर्थमाज्ञापय, एवमाचार्य्याज्ञां सम्प्राप्य पूर्वादितः दिक्पालबलिपुरस्सरं दिक्षु विदिक्षु च वक्ष्यमाणमन्त्रेण स्वाभीप्सितभूमेः परितः शंकून् रोपयेत् ॥ एतत्कर्मकर्तुं स्वयमशक्तश्चेत्प्रतिनिधिं प्रार्थयेत् (तद्यथा पूर्वलक्षणसम्पन्नान् शंकून् हस्ते आदाय भो ! प्रतिनिधे ! इमान्कीलकान् गृहीत्वा यज्ञस्थानाद-भितोष्टदिक्षु यथास्थानं यथोक्तविधिनाचेमानारोप्य मध्ये आहारविहारार्थं भूमिपरिग्रहंकुरु । ततः प्रतिनिधिः कील-कान्परिगृह्य यथासमयं यथाचारं भूमिपरिग्रहं कुर्य्यात् । तत्प्रकारश्च प्रथमं यागस्थान एव शंकुग्रहणं चेत्तत्रैवाथवा-न्यत्र स्वगृहादिषु शंकुग्रहणं भवेत्तदा यागस्थानमागत्यासने

---

निखनेद्दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् । क्षेत्रेचाकीलिते-मंत्री निर्विघ्नैः परिभूयते । क्षेत्रपालादिकं तत्र पूजयेद्वि धिवत्ततः । दिक्पतिभ्योबलिं दत्वा ततः क्षेत्रं समाश्रयेत् । क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचिन्तयेत् । इति । ( क्षेत्र-मध्यं मण्डपमध्यं यागस्थानमित्यर्थः ।) अथैवं क्षेत्रशोधनं कृत्वा रात्रौ स्वप्नं पश्येत् तथाच ( मंत्रमहोदधौ ) चिकीर्षुर्दैवतो-पास्तिमादौ भावि विचारयेत् । स्नानदानादिकं कृत्वा स्मृत्वा हरिपदाम्बुजम् ॥ अथोत कृताञ्जलिर्वा प्रार्थयेत् वृषभध्वजम् ।

चोपविश्य यज्ञभूमिं नत्वा ❀ ओं नमः सुदर्शनायास्त्राय फट्❀ इति मंत्रेणाष्टोत्तरशतं कृत्वाश्वत्थोदुम्बरप्लक्षान्यतमक्षीरीवृक्षोद्भवान् दशकीलकानभिमन्त्र्य। (ओं सुदर्शनायास्त्रायफट्) इति मन्त्रेणैव प्रत्येकं कीलं सम्पूज्य तत्रैव पूर्वादिक्रमेणेन्द्रादिदशादिक्पालान् आवाह्य पंचोपचारैः सम्पूज्य यागस्थान मध्ये गणेशंकूर्मानन्त, वसुधा, क्षेत्रपालाँश्चापि पूजयेत्) अत्रान्तरेगणेशादिपूजनमव्यवहार्य्यमित्यतः प्रथमं मङ्गलस्मरणानन्तरमेव सङ्कल्पपुरःसरं गणेशादिकं सम्पूज्य ततः कीलरोपणाभिमन्त्रणंपूजनं दिक्पालपूजनं च कारयेदिति) ततः गणेशादिभ्योदिक्पालेभ्यश्च स्वस्वप्रीत्यर्थंतत्तद्देवोक्तद्रव्यमादाय तत्तत्स्थाने पूजितदेवाग्रे सदीपं सध्वजं वलिमाहरेत् ततोभूतवलिंचदद्यात् । एवं देवताग्रे वलिंनिधायसमर्प्यचान्तेदेवान् मनसा, वाचा, कायेन कर्म्मणा प्रार्थयन् मन्त्रौ पठेत् । ओं ये रौद्रकर्म्माणो ये रौद्रस्थान वासिनः मातरोऽप्युग्ररूपाश्च गणाधिपतयश्चये ॥ विघ्नभूताश्च ये चान्ये दिवि दिक्षु समाश्रिताः । ते सर्वे प्रीत-

---

मंत्रः—भगवन्देवदेवेश शूलभृद् वृषबाहन ॥ इत्यादिभिः शिवं मोर्च्य निद्रां कुर्यान्निराकुलः ॥ स्वप्नं दृष्टं निशिप्रातर्गुरवे विनिवेदयेत् । इति । यथाविधितमाचान्तं शिखाबन्धाभिरक्षितम् । विधाय सार्धममुना वेद्यां दर्भास्तरे गुरुः ॥ शयीत तस्यां तां रात्रिमधिवासः समीरितः । इति शारदायाम् ॥ आचान्तमत्र च यथाविधि तं शिखायां बन्धैः सुरक्षित-

मनसः प्रतिगृह्णन्त्विमं वलिम् ॥ दशदिक्षु वाह्येचोपन्यस्तं माषभक्तादिबलिं देवेभ्योनिवेदयेत् ततोवामकराङ्गुष्ठानामिकाभ्यामर्घ्यजलं वलिपात्रादभितोऽभिधार्य पुष्पांजलिं गृहीत्वा ॐ भूतानि यानीह वसन्ति भूतले वलिं गृहीत्वाविधिवत्प्रयुक्तम् । सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु ते प्यत्र नमोस्तु तेभ्यः इति पुष्पांजलिं दत्वा करिष्यमाण कार्ये विघ्नकर्तारश्च ये भूतास्ते बलिंगृहीत्वा सन्तुष्टमनसः यज्ञार्थपरिगृहीतभूमेर्वाह्यमपसरन्ति । यज्ञसमाप्तिपर्य्यन्तं पुनर्नागमिष्यन्तीति मनसा ज्ञात्वा दशदिक्षु प्रमितभूमिं गत्वा पूर्वादित आरभ्य शंकून् रोपयेदिति अथवा पूजाद्रव्यमादाय दिक्ष्वेव निश्चितभूमिं गत्वा तत्र तत्र पृथक् २ शंक्वभिमन्त्रणं गणेशादिक्षेत्रपालान्तपूजनं दिक्पाल पूजनं च विधाय सर्व्वेभ्योवलिं दत्वा विघ्नापसरणार्थं सम्प्रार्थ्य शंकुं निखनेत् (इत्ययेवाचारः संव्यवहार्यः) मन्त्रास्तु पूर्वमुक्ताएव। इतिशंकुरोपणं भूमिपरिग्रहश्च। (कर्मैदन्तान्त्रिकएव विहितं श्रौते स्मार्ते चास्यमूलाभावः) । अस्मिन्दिनेपि साधकेन सोपवासेन हविष्याशिना वा भवितव्यम् । ततःयागमण्डपमागत्य शुचिर्भूत्वा सायंकालेआचार्येणगुरुणा सह वा करिष्यमाणयज्ञशुभाशुभज्ञानार्थं स्वप्नं निरीक्षेत

मनुं प्रविधाय मंत्री । वेद्यां ग्रथीतकुशसंस्तरणे रजन्यां शिष्येण सार्धमनुना गदितोऽधिवासः ॥ इति मेरुतंत्रे । (योगिनीतंत्रे) (मेरुतंत्रे च) यज्जाग्रतोदूरमुपैति दैवमाष्ट–

तत्क्रमोयथा सायंकाले सन्ध्योपासनं कृत्वा गुरुर्मूलमंत्रेण स्वकल्पोक्तमंत्रान्तरेण वा शिष्यस्य साधकस्य वा शिखां बध्वा मण्डपाद्बहिर्देवतायाः दक्षिणेभागे वेदिकान्तरोपरि कुशशय्यायां पूर्वशिरस्कः शिष्येण सार्द्धं शयनं कुर्य्यात् । शिष्यश्च शयनसमये स्वप्नमानवमंत्रेण शुभस्वप्नं प्रार्थयेत् ॥ ❀स्वप्नमानवमंत्रोयथा❀ भगवन्देवदेवेश शूलभृद्वृषवाहन । इष्टानिष्टे समाचक्ष्व ममसुप्तस्य शाश्वतम् ॥ ( यद्वा ) ॐ हिलि २ शूलपाणये स्वाहा । नमोजय त्रिनेत्राय पिङ्गलाय महात्मने । यमाय विश्वरूपाय स्वप्नाधिपतयेनमः ॥ स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः । क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥ इति । ( वैष्णवे तु ) ॐ नमः सकललोकाय विष्णवे प्रभविष्णवे । विश्वाय विश्वरूपाय स्वप्नाधिपतये-नमः ॥ ( यद्वा ) परब्रह्मस्वरूपस्त्वमन्तश्चरासि विश्वधृक् शुभाशुभगतिं देव स्वप्ने मे विनिवेदय ॥ इत्युच्चार्य्य जानुभ्यामवनीं स्पृष्ट्वा विष्णुं प्रणम्य प्रसन्नो वाग्यतो निजेष्टं विचिन्त्य शयनं कुर्यात् । ततः स्वप्नं दृष्ट्वा समुत्थायाचम्य पुष्पं धृत्वा गुरुं प्रणम्य गुरवे स्वप्नं

---

स्वमंत्रान्प्रयतस्त्रिरेतान् । लघ्वेकभुग् दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥ भगवन्देवदेवेश शूलभृद्वृषवाहन । इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वतः ॥ एवं सुप्तः कुशास्तीर्णे ततः प्रयतमानसः ॥ निशान्ते पश्यति स्वप्नं

निवेदयेत् । ततो गुरुः शुभमशुभंवा स्वप्नं निर्णीय स्वप्नो यदिशुभस्तदा देवतां प्रसन्नां जानीयात् । स्वप्नोयद्यशुभस्तदा शान्तिं कुर्य्यात् । दुःस्वप्नशान्तिस्तु फट् दुःस्वप्नदोषान् जहि २ फट् स्वाहा ॥ इति मंत्रेण । ॐ नखदंष्ट्रायुधाय महासिंहाय हूँ फट् नमः स्वाहा इति मंत्रेण वा तद्देवता गायत्र्या वा पलाश समिद्धृतमाज्याहुतिशतं वा जुहुयात् । ( तत्र सङ्कल्पस्तु ) ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्मा दुःस्वप्नशान्तिकामो गुरुद्वारा सक्षीर घृताक्त पलाशसमिदाहुतिशतमहं होष्यामि । इति संकल्प्य होमं कुर्यात् स्थण्डिले पंचभूसंस्कारादिसर्वं तृतीय खण्डोक्त तांत्रिकविधिवत्सर्वं कार्यम् । ( इत्यधिवासनविधिः । )

---

शुभं वा यदि वाऽशुभम् ॥ ( पिङ्गलामते मेरुतंत्रे च ) । तारो हिलिद्वयं शूलपाणये द्विठईरितः । स्वप्नमानवमंत्रोयं शम्भुना परिकीर्तितः ॥ नमो जय त्रिनेत्राय पिङ्गलाय महात्मने । वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ॥ क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥ ( तंत्रमंत्रप्रकाशे ) ओं हृतसकललोकाय विष्णवे प्रभविष्णवे । विश्वाय विश्वरूपाय स्वप्नाधिपतयेनमः ॥ स्वप्नमानवमंत्रोयं कथितोनारदादिभिः । (नारदीये) परब्रह्मस्वरूपस्त्वमनन्तश्चरसि विश्वधृक् । शुभाशुभगतिं देव स्वप्ने मे विनिवेदय ॥ इत्युच्चार्य नमस्कुर्याज्जानुभ्यामवनींगतः । प्रसन्नो वाऽयतस्तस्मिन् प्रयोतेष्टं विचिन्तयेत् ।

# ॥ अथ शुभस्वप्नाः ॥

## ( योगिनीतन्त्रे )

त्रिविधं दर्शनं तस्य यथार्थमयथार्थकम्। अपाकजं यत स्वस्थानां संयतानां हि दर्शनम् ॥ यथार्थमयथार्थंतदस्वस्थानां विकारजम्। अपाकजं मानसं च यथार्थफलमुच्यते ॥ ( आगमसिद्धान्ते ) आद्ये वर्षात्वत्सरार्द्धाद्वितीये यामे पाक्षोत्र्यषपाकात्तृतीये। यामे पाकः शर्वरी तुर्यपादे सद्यः पाकोयांविसर्गेषु दृष्टः ॥ ( तथा ) स्वप्ने पश्यति वै देवं निजेष्टं सर्वतोमुखम्। गुरुं प्रसादसुमुखं निर्मलं चन्द्रमण्डलम् ॥ गङ्गां भागीरथीं भानुं लिङ्गिनं लिङ्गमैश्वरम्। प्रसन्नां तत्र जानीयात् सिद्धिं स्वप्ननिदर्शने ॥ ( नारदपंचरात्रे ) क्षितिलाभः क्षतं चाब्धितरणं चाग्निपूजनम्। होमश्चज्वलिते बह्नौ संग्रामविजयस्तथा ॥ हंसकोकमयूराणां रथाराहणमेवच। ( महाकपिलपंचरात्रे ) कन्यां छत्रं रथं दीपं प्रासादं कमलं नदीम्। कुञ्जरं वृषभं मालां समुद्रफेनिलं द्रुमम् ॥ पर्वतं च हयं मद्यमाममासं सुरासवम्। एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥ नदीसमुद्र-तरणमाकाशगमनन्तथा। भास्करोदयनं चैव प्रज्ज्वलन्तं हुताशनम् ॥ ग्रह-नक्षत्रताराणां चन्द्रमण्डलदर्शनम्। हर्म्यप्ररोहणं चैव प्रासादशिरसोऽपि वा ॥ नागाश्ववृषभेन्द्राणां तरुशैलाग्ररोहणम्। विमान गमनं चैव सिद्धमन्त्रस्य दर्शनम् ॥ एवमादीनि सन्दृष्ट्वा नरः सिद्धिमवाप्नुयात्। स्वप्नेतु मदिरापानमाममांसस्य भोजनम् ॥ कृमिविष्ठानुलेपं च रुधिरेणाभिषेचनम्। भोजनं दधिभक्तस्य श्वेत-वस्त्रानुलेपनम् ॥ सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम्। रत्नान्याभरणादीनि दृष्ट्वा स्वप्ने प्रसीदति ॥ ( नारदपञ्चरात्रे ) गुरुर्देवो द्विजः कन्या गोगजाश्वाश्च केशरी। दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोचनम्। ताम्बूलभक्षणं चैव तथा वेश्याभिनन्दनम्। सिद्धान्नमाममांसं च मद्यस्त्रीमदिरावसाः ॥ छत्रं यानं सितं वस्त्रं तथान्यं श्वेतचन्दनम्। मालामुक्तास्रजो हारः पूर्णः समुदितः शशी ॥ प्रचण्ड-किरणः सूर्यो निम्नगाथ महोदधिः। प्रफुल्लपादपः शाली रोचना कुंकुमं मधु ॥ लाजाः सिद्धार्थकाः वीजं नवमाण्डं च पायसम्। उपासकोऽप्ययाचार्यो गायत्री च वरांगता ॥ सर्वे स्वप्ने शुभाः प्रोक्ताः सिद्धिमोक्षफलप्रदाः। ( नारदीये )

ग्रहणं तु परस्त्रीणामगम्यागमनन्तथा । दंशनं श्वेतनागेन बन्धनं शृङ्खलादिभिः ॥ रोदनं ताडनं चैव धावनं चाङ्गघातनम् । मृल्लोहत्रपुकांस्यस्य शीसकस्यापि कुत्सितात् ॥ धातोर्लाभस्तथा पुष्पं फलरत्नावुभावपि । व्यजनं स्वयमन्येन धमनं च विभावसोः ॥ एवमादीनि चान्यानि शुभान्याहुर्मनीषिणः । ( मेरुतन्त्रे ) पूर्णकुम्भोदर्पणं च मीनमाज्यं च रोचना । शवं रोदनहोमं च शस्त्राणि च पताकिका ॥ भारद्वाजोनृपालश्च वेदशब्दश्च गायनम् । कथामाङ्गल्यगीतानि चाङ्कुशं यद्धृदः प्रियम् ॥ स्वप्ने दृष्टानि चैतानि साधकः सिद्धिमाप्नुयात् । व्याध्यार्ते नास्ति दुःखं स्यात् सामान्यं सुखमाप्नुयात् ॥ यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । कामयन्तीं नदींसिन्धुं तरणं भ्रमणं च खे ॥ भास्करोदयनं चैव ग्रहणं चन्द्रसूर्ययोः । हर्म्यं प्रासादनागाश्ववृषशैलाग्निरोहणम् ॥ भोजनं दधिभक्तस्यापक्वमांसस्य भोजनम् । कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् ॥ ताम्बूलभक्षणं मद्यपानं वन्द्याभिवन्दनम् । प्रचण्डकिरण स्वस्थः कार्यसिद्धेस्तुलक्षणम् ॥ श्वेताम्बरधरानारी श्वेतमाल्यानुलेपना । अवगूहति यः स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ आशने, शयने, पाने, शारीरे, वाहने गृहे । ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥ सितोरगस्यदंशश्च जायते दक्षिणेकरे । दशाहोभिर्भवेद्लाभो रोगीरोगाद्विमुच्यते ॥ निगडैर्बहुपाशेन बध्यते वा सुतोभवेत् । प्रतिष्ठा वर्धते तस्य दुग्धपानाद्धनक्षयः ॥ सुरारक्तं पिबन् विद्यां लभेद्विप्रोधनं परम् । दीर्घदृष्टाभवेत्प्रीतिर्गोधूमैश्च धनागमः ॥ सिद्धाविष्टागमं विद्याल्लाभः सिद्धार्थकैस्तथा । दधिलाभाद्भवेदर्थो घृतलाभाद्भवेज्जयः ॥ घृताशनाद्धनक्लेशो जयस्तु दधिभक्षणे । लिङ्गाद्यभ्यर्चनं दृष्ट्वा व्यवहारे जयोभवेत् ॥ यस्तु मध्ये तडागादेर्भुञ्जीत घृतपायसम् । निष्कम्प पुष्करे पर्णे तं विद्यात् पृथिवीपतिम् ॥ देवतालिङ्गिनोगावः पितरोब्राह्मणानृपाः । यद्वदन्ति नराःस्वप्नेतत् तथैव भविष्यति॥अन्त्रैः सम्वेष्टयेद्यस्तु ग्रामं नगरमेव वा । ग्रामे मण्डलराज्यं स्यान्नगरे पार्थिवोभवेत् ॥ चन्द्रतारार्कग्रसनं परिमार्गणमेव च । भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ॥ जयोविवादद्यूतेषु शत्रूणां च तथा जयः । वडवा, महिषी, सिंही, गोहस्तिन्यादिदोहनम् ॥ प्रसादोगुरुविप्रेष्ट देवसिद्धादिकाल्लभः । स्नानं राज्याभिषेकश्च स्वशिरश्छेदनं मृतिः ॥ तीर्थोदकानां तरणं तथा विषमलंघनम् । गोहस्तिवडवासूति वन्दिलाभस्तथैव च ॥ परस्त्र्यालिङ्गनं तस्या लाभोरोदनमेव च । विष्ठालेपः कुन्दजाति वकुलक्ष्मेशदर्शनम् ॥ रणद्यूतविमर्देषु जयोनिगडबन्धनम् । पशुमर्त्य[illegible]णां च लाङ्घरव्यसनं तथा ॥ शिखिलाभः

श्वेतवस्त्र पुष्पचन्दनधारणम् । मणितारसुवर्णादिपात्रे भोजनकं यदा ॥ पश्येत् तदा साधकस्य ज्ञेया सिद्धिरुपस्थिता । कार्यार्त्तानां कार्यसिद्धिरितरेषां धनागमः ॥ इति

## ॥ अथाऽशुभस्वप्नाः ॥

कृष्णाम्बरधरानारी कृष्णगन्धानुलेपना । अवगूहति यं स्वप्ने सारात्रिस्तस्य पश्चिमा ॥ एवं तु रक्तया व्याधिः शोकोऽरुणलमानया । नीलया कलहो हत्या पीतया कीरया विपत् ॥ ( तथा ) वन्ध्याचर्मतुषास्थ्यादि लवणाङ्गारमिन्धनम् । विट्क्लीवोन्मत्ततैलानि जटिलारिवनौषधम् । रोगी तृणं च सन्यासी नग्नोऽभ्यक्तः क्षुधातुरः । विमुक्तकेशः पतितोऽप्यङ्गासृक् शरटाश्वतम् ॥ मार्जारयुद्धं कार्पासो गर्भिणी च रजस्वला । गुडस्तक्रं च काषायी पङ्कं रण्डाकलिर्गृहे ॥ वस्त्रादिकस्यस्खलनं लुलाप समरं तथा । अन्धः कुब्जोदुर्वचनो वधिरः खंजकुब्जकौ ॥ वमनं च घटोरिक्तो रजकीमलिनाम्बरा । एतैर्दृष्टैर्न कार्यं स्यात् रोगीमृत्युमवाप्नुयात् ॥ अशोकं करवीरं च पलाशं वाऽपि पुष्पितम् । स्वप्न पि सलिलं दृष्ट्वा नरः शोकमवाप्नुयात् । रूपान्तरप्रवेशश्च दक्षिणाशागतिस्तथा । पङ्के निमज्जनं स्नानं पुत्रभार्याविनाशदम् ॥ गोहस्तिद्विजदेवादि वज कृष्णं न शोभनम् । कार्पासभस्मास्थ्यादीनि त्यक्त्वा भुक्तं शुभावहम् । रक्तगन्धाम्बरस्रग्वी कृष्णोवा दक्षिणामुखः ॥ खरोष्ट्रमहिषारूढस्त्रिमासं न स जीवति । स्वप्ने वा पतनं गेहे द्वारं चास्य पिधीयते ॥ न चोत्तिष्ठति यत्तस्मात्तदब्दं तस्य जीवितम् । वान्तिर्मूत्रं पुरीषं च सन्तानजननं च्युतिः ॥ शुक्रस्य पश्येद्यः स्वप्ने तस्यायुर्दशमासिकम् । ताड्यते विकृतैः कृष्णैः पुरुषैरुद्यतायुधैः ॥ पाषाणैस्ताड्यते वापि तस्यमृत्युर्न संशयः । महिषोष्ट्रखरारूढस्तैलाभ्यक्तश्च मुण्डितः ॥ दक्षिणाशां प्रस्थितोयस्तस्य मृत्युर्न संशयः । पश्येत् प्रासादपतनं गृहस्य शशिसूर्ययोः ॥ पर्वतानां च वृक्षाणामधिकारच्युतिर्भवेत् । हानिश्चैव स्वगोत्राणां व्याधिनाऽभिभवस्तथा ॥ गृहसंमार्जनं लेपोगोमयेन मृदापि वा । तीर्त्वानदीं समायातस्तीरेऽप्यद्वसनं धृतम् ॥ रोगी रोगाद्विमुच्येत हानिः स्वस्थस्य जायते ॥ पुंनामानोमृगखगाः पातकीशूकरोरला । पिङ्गलाछुच्छुकापल्लीवामाङ्ककोकिलाशिवा ॥ स्त्रीनामानोमृगखगाः श्रीकण्ठोवानरोरुरुः । छिक्करः पिप्पलीभासोदक्षे काकर्क्षकुक्कुटाः ॥ दृष्टाश्चेद्रोगिणोरोगनाशः साधकसिद्धये । स्वस्थस्य वोधमाल्लाभोनियताल्लाभोऽशोभनम् ॥ ( अथस्वप्नविवेदनम् निवन्धे ) शिष्यस्य-

शुचिराचान्तः पुष्पहस्तोगुरूत्तमः। प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत्॥ स्वप्ने चाक्षिसमक्षं वा आश्चर्यमपि हर्षदम्। अकस्माद्यदि वा पश्येन्नाख्यातव्यं गुरोर्विना॥ (अथ दुःस्वप्नशान्तिः। (महाकपिलपंचरात्रे) दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात्। (पिङ्गलामते) शुभंशुभे भवेत्तस्य जुहुयादशुभे शतम्। अस्त्रेणेति क्रमाद्विद्वान्......इति॥ (मेरुतंत्रे) सक्षीराणां घृताक्तानां समिधां च शतं हुनेत्। पलाशानां तु गायत्र्या शूद्रः स्नात्वा हविष्यभुक्॥ दीपं दद्याद्विप्रगृहे विष्णोर्गेहे शिवालये। एवं दृष्ट्वाऽशुभंस्वप्नं गृह्णीयान्मनुमन्यथा॥ गृहीतेहानिरेवस्याद्वाऽन्यदेवं विचिन्तयेत्। (नारदपंचरात्रे) दृष्ट्वासमाचरेद्धोमं दन्तकाष्ठोदितं* मुने। केवलेनाथवाऽज्येन सिंहमंत्रेण शान्तये॥ (अस्त्रमंत्रगायत्री-सिंहमन्त्राणां विकल्पः) तारावज्रनखदंष्ट्रायुधाय महासिंहाय हूँफट्नमः॥

इतिश्रीभाष्याचार्य पं० हरिनामदत्त सूनु वि० पं० देवीप्रसाद शास्त्रि सङ्कलिते शतचण्डीयज्ञविधाने संगृहीताः स्वप्नकारिकाः।

॥ शुभम्॥

# ॥ अथ षट्चक्रनिरूपणम्॥

षोडशोपचारावाहनकर्मणि सुषुम्णावर्त्मना सुधीरिति वचनात् सुषुम्णादिपरिस्थितिज्ञानस्यावश्यकत्वं तच्च षट्चक्रज्ञानमन्तरानसम्भवतीत्यतः षट्चक्रवर्णनं लिख्यते।

प्रथमं तदुपयुक्तनाड्यः निरूप्यन्ते। श्लोकैः।

मेरोर्वामे इडा दक्षे पिङ्गला च स्थिते उभे। इति। (अनयोश्चन्द्रसूर्यस्वरूपत्वमाह सम्मोहनतन्त्रे) वामगा या इडानाडी शुक्ला चन्द्रस्वरूपिणी। शक्तिस्वरूपा हि सादेवी साक्षादमृतविग्रहा। दक्षे तु पिङ्गलानाम पुरुषा सूर्यविग्रहा रौद्रात्मिका महादेवि दाडिमीकेशरप्रभा इति (अनयोर्ध-

*दन्तधावनम् (जातीतगरमन्दारैः कुस्वप्नं च विनश्यति।)

नुराकारेण स्थितिरुक्ता । (धनुराकारप्रकारमप्याह ) यावामन्मुष्कसम्बन्धा सा श्लिष्यन्ती सुषुम्नया । दक्षिणं जत्रुमाश्रित्य धनुर्व्वक्रा हृदिस्थिता । वामांशजत्र्वन्तरगा दक्षिणां नासिकामियात् । इति । तथा दक्षिणमुष्कोत्थानाशायावामरन्ध्रगा इति ।

कन्दः सर्वनाडीनां मूलं तल्लक्षणम् :—

गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः । चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत् । नाड्यस्तस्मात्समुत्पन्नाः सहस्राणां द्विसप्ततिः । ( सुषुम्नाया मूलादिमस्तकपर्यन्तस्थितिप्रकारमाह ) सुषुम्ना चव्यवल्लीव मेरुश्लिष्टा पुरोगता । ग्रीवान्तं प्राप्य गलिता तिर्य्यग्भूता वरानने । शङ्खिनी नालमालम्ब्य गता सा ब्रह्मसादनम् । इति । ( तथान्यत्र ) चापाकारे स्थिते चान्ये सुषुम्नाप्रणवाकृति । पृष्ठास्थिघुण्टितोभिन्ना तिर्य्यग्भूता ललाटगा । भ्रूमध्ये कुण्डलीलग्ना मुखेन ब्रह्मरन्ध्रगा इति । ( शङ्खिनीलक्षणम् ) सरस्वती कुहुश्चैव सुषुम्नापार्श्वयोः स्थिते । गान्धारी हस्तिजिह्वा च इडायाः पूर्वपार्श्वयोः । १ । गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी । शङ्खिनी नाम सा नाडी सव्यकर्णान्तमिष्यते ।

( नाडीसंक्षेपेण निरूप्याधुना मूलाधारचक्रं निरूप्यते )

मूलाधारचक्रं चतुर्दलं रक्तवर्णं वशषस इति स्वर्णाभचतुर्वर्णयुक्तदलं कर्णिकायां धरामण्डलं चतुष्कोणं अष्टशूलावृतं पीतवर्णं तन्मध्येऽधोधराबीजं चतुर्भुजं ऐरावतारूढं पीतवर्णं वज्रहस्तं चतुर्भुजम् । धराबीजबिन्दुमध्ये शिशुरूपब्रह्मा रक्तवर्णः चतुर्भुजः दण्डकमण्डलुक्षसूत्राभयहस्तः चतु-

म्मुखः। तत्कर्णिकायां रक्तपद्मोपरि चक्राधिष्ठात्री डाकिनीशक्तिः। रक्तवर्णा चतुर्भुजा शूलखट्वाङ्ग चषकहस्ता। कर्णिकामध्ये विद्युदाकारत्रिकोणं तन्मध्ये कामवायुः कामबीजञ्च रक्तवर्णम्। तदुपरि स्वयम्भूलिङ्गः श्यामवर्णः तस्योर्ध्वेकुण्डलिनीशक्तिः सार्द्धत्रिवलयाकारा। तदूर्ध्वे लिङ्गाग्रे चित्कला दण्डाकारेण स्थितेति। इति मूलाधारनिरूपणम्।

स्वाधिष्ठानचक्रवर्णनम्:—

स्वाधिष्ठानचक्रं सिन्दूरवर्णं षड्दलं तडिदाभसविन्दु वभमयरल इति षड्वर्णयुक्तदलम्। तत्कर्णिकायां मध्यस्थलार्द्धचन्द्रयुक्ताष्टदलपद्मकारसम्भोजमण्डलम् शुक्लवर्णम्। तन्मध्ये वं इति वरुणबीजं मकराधिरूढं पाशहस्तं तत्क्रोडे विष्णुर्गरुडोपरिस्थितश्चतुर्भुजः शङ्खचक्रगदापद्मधारी पीताम्बरः वनमालाश्रीवत्सकौस्तुभधारी युवरूपः। पद्मकर्णिकायां रक्तपद्मोपरि राकिनीशक्तिः श्यामवर्णा चतुर्भुजाशूलाब्जडमरुटङ्कधरा त्रिनेत्रा कुटिलदंष्ट्राभयङ्करी शुक्लान्नरक्तधराभिलाषिणीति। ( इति स्वाधिष्ठानवर्णनम् )।

नाभिपद्म ( मणिपूराख्यम् ) वर्णनम् :—

नाभिपद्मं मेघवर्णदशदलं नीलाभसविन्दु तद्दलेषु डढणतथदधनपफ इति दशवर्णयुक्तं तत्कर्णिकायां त्रिकोणाकारं त्रिकोणवहिः स्वस्तिकायुक्तं रक्तवर्णं वन्हिमण्डलम्। तन्मध्ये रं इति वन्हिबीजं रक्तवर्णं मेषाधिरूढं चतुर्भुजं वज्रशक्तिवराभयधरं तत्क्रोडे रुद्रः वृषारूढोरक्तवर्णोद्विभुजोवराभयधारी भस्मलेपनशुक्लाभरणाभ्यां शुक्लीकृतदेहः वृद्धरूपः

पद्मकर्णिकायां रक्तपद्मोपरि लाकिनीशक्तिः नीलवर्णा त्रिवक्त्रा त्रिनेत्रा चतुर्भुजा वज्रशक्त्यभयवरकरा घोरदंष्ट्रा रक्तयुक्तखेचरान्नमांसाभिलाषिणीति । ( इति नाभिपद्मवि० )

* हृत्पद्मवर्णनम्ः *

हृत्पद्मं वन्धूकाभं सिन्दूराभसविन्दु कखगघङचछजझञटठ इति द्वादशवर्णयुक्तद्वादशदलम् तत्कर्णिकायां षट्कोणाकारवायुमण्डलं धूमाभम् तदुपरि सूर्य्यमण्डलम् तन्मध्ये विद्युत्कोटिनिभत्रिकोणम् । तदूर्ध्वे वायुबीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुजम् । अङ्कुशहस्तम् । तत्क्रोडे हंसाभईशः द्विभुजः वराभयकरः त्रिनेत्रः । अत्र कर्णिकायां रक्तपद्मोपरि काकिनीशक्तिः पीतवर्णा चतुर्भुजा पाशकपालवराभयकरा पीतवस्त्रा सर्वालङ्करणान्विता सुधार्द्रहृदया कङ्कालमालाधरा । मध्यत्रिकोणे वाणलिङ्गःशिवः अर्द्धचन्द्रविन्दुरूपमस्तकः स्वर्णवर्णः कामोद्गमोल्लसितः । तदधः स्थिरतरदीपकलिकाकारहंसरूपी जीवात्मा । एतत्कर्णिकाधो रक्तवर्णोर्द्ध्वमुखाष्टदलपद्मम् । तत्रकल्पवृक्षरत्नवेदी चन्द्रातप- पताकाद्यलङ्कृतं मानसपूजास्थानम् । इति हृत्पद्मवि० ।

* विशुद्धचक्रवर्णनम् *

कण्ठमूले विशुद्धचक्रं षोडशदलं धूम्रधूम्ररूपम् आरक्तकेशरं रक्तवर्णसविन्दुकषोडशस्वरयुक्तम् । कर्णिकायां नभोमण्डलं वृत्तरूपम् शुक्लवर्णम् तन्मध्ये त्रिकोणं तत्र चन्द्रमण्डलम् । तदुपरि हं इति नभोवीजं शुक्लवर्णं शुक्लाम्बरपरीधानं शुक्लगजारूढं चतुर्भुजं पाशाङ्कुशवराभयधरम् । तत्क्रोडे वृषभोपरिस्थितमहासिंहासने सदाशिवः अर्द्धनारीश्वरत्वादर्द्धाङ्गसुवर्णाभार्द्धाङ्गशुक्लाभः पञ्चवक्त्रः त्रिनेत्रः दशभुजः शूलटङ्कखड्गवज्रदहननागे-

न्द्रघण्टाङ्कुशपाशाभययुक्तदशहस्तः व्याघ्रचर्माम्बरः भस्मलिप्तसर्वाङ्गः नागहारशोभितः सुधास्राव्यधोमुखार्द्धचन्द्रशेखरः। एतत् कर्णिकायां चन्द्रमण्डलमध्ये अस्थ्युपरिस्थिता शाकिनीशक्तिः शुक्लवर्णा चतुर्भुजापाशाङ्कुशधनुःशरकरा पीताम्बरा पञ्चवक्त्रा त्रिनेत्रेति ( इतिविशुद्धचक्रवर्णनम् )।

* आज्ञाचक्रवर्णनम् *

आज्ञाचक्रं द्विदलं शुक्लवर्णं कर्बूरवर्णं हक्ष द्वययुक्तपत्रम् कर्णिकायां चक्राधिष्ठात्री हाकिनीशक्तिः शुक्लवर्णा रक्तषड्वक्त्रा त्रिनेत्रा षड्भुजा वराभयाक्षमालाकपालडमरुपुस्तकधरा शुक्लपद्मोपरिस्थिता। तदूर्ध्वे त्रिकोणे इतरलिङ्गः शुक्लवर्णः विद्युदाकारः तदूर्ध्वत्रिकोणे प्रणवाकृतिरन्तरात्मा प्रदीपाभज्ज्योतिः तस्य चतुर्दिक्षु अन्तरिक्षे ज्योतिः स्फुलिंगविस्वैर्वेष्टितः ज्वलद्दीपसदृशेन स्वतेजसा मूलादिब्रह्मरन्ध्रान्तप्रकाशकः। तदूर्ध्वे सूक्ष्मरूपं मनः तदूर्ध्वे चन्द्रमण्डले हंसक्रोडे परमशिवः सशक्तिक इति। ( इति आज्ञाचक्रवर्णनम् )

*सहस्रदलपद्मनिरूपणम्*

सुषुम्नानाड्यूर्ध्वे सहस्रदलपद्मं शुक्लवर्णमधोमुखं रक्तकिञ्जल्कशोभितं अकारादिलकारान्तपञ्चाशद्वर्णैः शुक्लाभैर्विंशत्यावर्तनेन सहस्रसंख्यकैर्युक्तंसहस्रदलम्। एतत्कर्णिकायां हंसः ततः परमशिवरूपगुरुः। ततः सूर्य्यमण्डलं चन्द्रमण्डलं ततोमहावायुः। ततोब्रह्मरन्ध्रम्। ततोमहाशङ्खिनी चन्द्रमण्डले विद्युदाकारत्रिकोणम् तन्मध्ये मृणालसूत्रशतभागैकभागरूपसूक्ष्मा चन्द्रस्यषोडशी कलाऽधोमुखी रक्तवर्णा। तत्क्रोडे केशाग्रसहस्रभागैकभागरूपसूक्ष्मानिर्वाणकला रक्तवर्णाऽधोमुखी। तदधस्तात् अव्यक्तनादात्मकनिबोधिका-

# अथाग्न्युत्तारण प्रयोगः ।

तत्र प्रथमं सङ्कल्पः । ओं अद्येत्यादि देशकालौ सङ्कीर्त्य अस्यां मूर्तावघातादिदोषपरिहारार्थमग्न्युत्तारणं देवता-सान्निध्यार्थं । प्राणप्रतिष्ठां च करिष्ये । इति संकल्प्य । यन्त्रं प्रतिमाम्वा पात्रेनिधाय घृतेनाभ्यज्य तदुपरि समुद्र-स्यत्वेत्यष्टाभिर्ऋग्भिः ( द्वादशऋग्भिर्वा ) प्रथमावृत्तौ दुग्ध-धारां द्वितीयावृत्तौजलधाराञ्च दद्यात् ( तत्रमन्त्राः ) ओं समुद्रस्यत्वा वकयाग्ने परिव्ययामसि । पावकोऽअस्म-भ्यꣳ शिवोभव ॥ १ ॥ हिमस्यत्वा जरायुणाग्ने परि-व्ययामसि । पावकोऽअस्मभ्यꣳ शिवोभव ॥२॥ उप-ज्मन्नुपवेतसेवतरनदीष्ष्वा । अग्ने पित्तमपामसि मण्डूकि-ताभिरागहि सेमन्नोयज्ञम्पावक वर्णꣳ शिवङ्कृधि ॥३॥ अपा-मिदन्न्ययनꣳ समुद्रस्यनिवेशनम् अन्न्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवोभव॥४॥अग्नेपावक रोचिषा मन्द्रया देवाजिह्वया । आदेवान्न्वक्षि यक्षि च ॥५॥ सनः पावकदी-दिवोऽग्ने देवाँ इहावह । उपयज्ञꣳ हविश्च नः ॥६॥ पावक-यायश्चितयन्त्या कृपाक्षामन्रुरुचऽउषसोनभानुना । तूर्व न्नया मन्नेतशस्य नूरणऽआयोघृणेनत तृषाणोऽअजरः ॥७॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे । अन्याँस्तेऽ-अस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳ शिवोभव ॥८॥ नृषदेव्वेडप्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदेव्वेट्स्वर्विदेव्वेट् ॥९॥ येदेवादेवानां यज्ञियायज्ञियानाꣳ संवत्सरीणमुपभागमासते।

अहुतादो हविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तु मधुनोघृतस्य ॥१०॥ येदेवादेवेष्वधिदेवत्वमायन्न्ये ब्रह्मणः पुरएतारोऽअस्य येभ्योनऽऋतेपवतेधाम किञ्चनन ते दिवोपृथिव्याऽअधिस्नुषु ॥११॥ प्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवोभव ॥१२॥ (इत्यग्न्युत्तारणम्) [प्राणप्रतिष्ठा] अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुः सामानिच्छन्दाँसि क्रियामयवपुः प्राणाख्यादेवता आंबीजं, ह्रींशक्तिः, क्रौं कीलकम् । अस्यां नूतनमूर्तौ । प्राणप्रतिष्ठापने विनियोगः । ओं आंह्रींक्रौंयंरंलंवंशंषंसंहंहंसः सोहं अमुकदेवस्य प्राणाइहप्राणाः (पुनस्ताएवपठन्)

---

ख्यवन्हिः । तदुपरि निर्वाणकलां क्रोडे परंबिन्दुः शिवशक्त्यात्मकः । अस्य केशाग्रकोटिभागैकभागरूपसूक्ष्मतेजोहंसरूपा निर्वाणशक्तिः अस्याहंसोजीवः बिन्दोर्मध्ये शून्यं ब्रह्मपदमिति । (इति सहस्रदलवर्णनम्

हस्तं निधाय हृदये प्राग्बीजं यादिकाष्टकम् हंसः सोहं ममप्राणावदेदिहद्विरुक्तितः । उक्त्वा तथैव पुनर्ममजीव इहस्थितः । पुनस्तदुक्त्वा मम तु वाङ्मनश्चक्षुरुच्चरेत् । श्रोत्रंघ्राणः प्राणइहागत्य सुखंचिरन्ततः तिष्ठन्तु वन्हिजायान्तमुक्त्वातारंततोजपेत् वपुर्ज्योतिर्मयं ध्यायेदिति स्यात्प्राणसंस्थितिः । (अत्रदेवविषये हृदये पुष्पप्रक्षेपः । ममइत्युपलक्षणम् यथात्मनि तथादेवे इत्युक्त्वान्मम अत्रदेवता नाम षष्ठ्यन्तंपठनीयम् ।)

देवस्यजीव इहस्थितः ( पुनस्ताएव ) प्रतिमायाः वाङ्मनस्त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखंचिरं तिष्ठन्तुस्वाहा । ( इतिवदेत् ) वैदिकमन्त्रेण वा प्राणप्रतिष्ठां कुर्य्यात् ( मन्त्राः ) ओं मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ । एषवै प्रतिष्ठानामयज्ञोयत्रैतेन यज्ञेन यजन्ते सर्वमेवप्रातिष्ठितम्भवति ( इति ) ततोदेवस्य पञ्चोपचारैः पूजां कुर्यात् । पञ्चदशवारं । प्रणवंपठन् देवस्यगर्भादि संस्काराः कार्य्याः ।

## अथ षोडशोपचारपूजनमन्त्राः

ओं आवोदेवासऽईमहे व्वामम्प्रयत्यद्ध्वरे । आवोदेवा-

---

( षोडशोपचारा इति ) पाद्यार्घ्याचमनीयं च स्नानं वसनभूषणे । गन्धपुष्पे धूपदीपौ नैवेद्याचमने तथा । ताम्बूलमर्च्चनस्तोत्रं तर्पणं च नमस्क्रिया । प्रपूजयेद्धि पूजायामुपचारास्तु षोडश ( कर्मप्रदीपे ) आवाहनासनम्पाद्यमर्घ्यमाचमनीयकम् । स्नानवस्त्रोपवीतञ्च गन्धमाल्यान्यनुक्रमात् । धूपं दीपञ्च नैवेद्यं ताम्बूलञ्च प्रदक्षिणा । पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश ॥ फलेन सफलावाप्तिः साङ्गतादक्षिणार्पणम् । (अथप्रसङ्गात् राजोपचाराः) उक्तषोडशोपचारपूजायामेव वक्ष्यमाणोपचाराः सम्मिलिता राजोपचारा भवन्ति । (तेच यथा) ततः पञ्चामृताभ्यङ्गमङ्गस्योद्वर्तनं तथा । मधुपर्कम्परिमलद्रव्याणि विविधानिच । पादुकान्दोलनादर्श

सङ्ग्राशिषो यज्ञियासो हवामहे ( इत्यावाहनमन्त्रः सर्वेषान्देवानाम् ) आवाहयामिपूजार्थं रक्षार्थं च ममक्रतौ ।

व्यञ्जनं छत्रचामरे ॥ वाद्यार्तिक्ये नृत्यगीतशय्या राजोपचारकाः । ( प्रतिष्ठित प्रतिमायामावाहनविसर्जनयोरभावाच्चतुर्दश १४ उपचारा एव) केषांचिन्मते तु आवाहनविसर्जनस्थाने ध्यानं पुष्पाञ्जलिदानञ्च । तेनषोडशोपचाराः सम्पद्यन्ते । ( नूतनप्रतिमायान्तु ) षोडशोपचाराएव ॥ आवाहनाभावे प्रतिमादौ पूजायाअसम्भवात् ( पञ्चोपचारपूजा तु ) स्थापित देवानां विसर्जनात्प्राक् पूजोक्ता तद्विषया ॥ ( तत्रपञ्चोपचारक्रमोयथा) गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च । अखण्डफलमासाद्य कैवल्यं लभते ध्रुवमिति । ( पूजानामदेवतोद्देशेन द्रव्यत्यागात् यागएव । तत्र यद्यपि केषांचिन्मते ) आवाहनादीनामयागात्मकत्वात्पूजात्वं न स्यात् । नच तेषां पूजात्वं नास्त्येवेति वाच्यम् । षोडशस्वप्युपचारेषु शास्त्रकाराणां पूजाशब्दप्रयोगात् । तथापि यागायागसमुदाये पूजा शब्दो गौरवितप्रीतिहेतुक्रिया त्वेनोपाधिनारूढ एव । यथा इष्टिपशुसोमसमुदाये राजसूयशब्दः । यद्यपीश्वरे यागायागसमुदायक्रियया जीववदन्तः करणवृत्तिरूपाप्रीतिर्नोपपद्यते । अन्तःकरणाभावात् । तथापिमायावृत्ति विशेषएव प्रीतिः शिक्षादिवत् । साच यद्यप्युत्पन्नत्वान्नश्यति तथापि फलं तु यावत्तिष्ठति । अपूर्ववत् ॥ ( प्रपञ्चितमेतत्सर्वस्वीरमित्रोदये ) आवाहनादिकं कार्यं मूर्त्यादौ त्रिविधं तु तत् । आदावाहनं कार्यं त्रिर्जपेन्मूलमन्त्रकम् । स्वाल्लोकात्सूक्ष्मरूपेण देवआगत्य मूर्तिषु । स्थितएवं भावयित्वा सुषुम्णा (सुषुम्णादिज्ञान षट्-

इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे । इति । ( अत्रा-

चक्रनिरूपणे लिखितं ) वर्त्मना सुधीः । आनीय तेजः स्वस्था नान्नासिकारन्ध्रनिर्गतम् । करपुष्पाञ्जलौ स्थाप्य तद्धृदाद्देव मूर्द्धनि । देवस्यतेजस्तन्मूर्तौ आवाहन्याख्यमुद्रया । स्थापये-दुच्चरेन्मूलमेतदावाहनं स्मृतमिति (मेरुतन्त्रे)। (आवाहनमुद्रा) यथा, हस्ताभ्यामञ्जलिम्बद्ध्वानामिकामूलपर्वभिः। अङ्गुष्ठौनिक्षि-पेत्सेयंमुद्रात्वावाहनीमता। (प्रकारान्तरेण)सम्यक्सम्पूरितापुष्पैः कराभ्यां कलिताञ्जलिः । आवाहनीसमाख्याता मुद्रा दैशिक-सत्तमैः । इति विभोर्निवेशितं यन्त्रं स्थापनं कथितं बुधैः । ततः संस्थापनं कुर्यादिहतिष्ठेतितिष्ठ च । मूलान्ते देवतानाम तस्यान्ते च पठेदिति । आस्थापनीयमुद्रां च दर्शयित्वा विभावयेत् । ( स्थापनीमुद्रा ) यथा, अधोमुखीत्वियं चेत्स्या-त्स्थापनीमुद्रिका स्मृता । ( अत्रेयमुक्तत्वादावाहनीमुद्रा ग्राह्या साचेदधोमुखी तदा स्थापनीति भावः ) यातु स्थिरा-देवतेति पश्चात्सम्प्रार्थयेदिति । देवेशभक्तिसुलभ सर्वाभरण-संयुत । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थितोभव एवं सम्प्रार्थ्य देवेशं सन्निधापनमाचरेत् । ( तद्यथा ) आश्लिष्ट मुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका । सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः । मूलमन्त्रं समुच्चार्य्य सम्बुध्येत्तां च देवताम् । इह त्वं सन्निधेहीति द्विरुक्त्वा तस्य सन्निधौ । स्थितं देवं तोषयेच्च सन्निधापनमुद्रया । देवतायास्ततः कुर्यान्मू-लमुच्चार्य सन्निधिम् ( इति ) सम्बुध्य तां वदेत्पश्चात्सन्निरुद्धो-भवेति च । द्विरुच्चरेत्कृपापूर्णां भक्तिभावनिरोधिताम् । प्रतिमायां स्थिरायातां देवतामिति चिन्तयेत् । अन्तः प्रवेशि-

वाहनमुद्रां च दर्शयेत्) एषोहदेवः प्रदिशोनुसर्व्वाः पूर्वोह

ताङ्गुष्ठा सैव संरोधिनी मता (इति संरोधिनीम्मुद्राम्प्रदर्शयेत्) देवतां सम्मुखीं कुर्यान्मूलमन्त्रेण दैशिकः । सम्बुध्यताम्वदेत्पश्चात्सम्मुखीभव इत्यपि । ध्यायेत्सम्मुखं देवं सुप्रसन्नाननाम्बुजम् । सम्मुखीकरणीम्मुद्रां दर्शयेदिति सुस्मृताम् । उत्तानमुष्टियुगला सम्मुखीकरणी मता । ( इति सम्मुखीकरणम् ) देवावगुण्ठनं कार्यं मूलमुच्चार्य मन्त्रवित् । सम्बुध्यतामवगुण्ठिताभवेत्यवगुण्ठनमुद्राम्प्रदर्शयेत् ( देवं चिन्तयेत् इति ) सव्यहस्तकृतामुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमितोभ्रामितामता । ( इत्यवगुण्ठन० ) भक्त्या सम्मोहितं देवं विस्मयोत्फुल्ललोचनम् । सकलीकरणं चैव देवस्य हृदयादिषु । षडङ्गमन्त्रान्विन्यस्य मूलमुच्चार्य देवताम् सम्बुध्यताञ्च सकलीकृताभववदेदिति । ध्यायेदङ्गानि देवे तु प्रतिष्ठाप्याङ्गदेवताः । यस्माद्भिन्नस्वभावानां यद्भिन्नं प्रयोजनम् । अङ्गानामङ्गिना सार्द्धं सकलीकरणाद्भवेत् । देवताङ्गे षडङ्गन्यासः स्यात् सकलीकृतिः । ( इति सकलीकरणम् ) अमृतीकरणम्वक्ष्ये पीठे संस्थाप्यदेवताम् । बध्वाथ धेनुमुद्रां देवमूर्ध्नि प्रवर्षणम् । जायते चामृतञ्चेति ध्यायन्नर्चोदकेन च । ( धेनुमुद्रा) यथा । अन्योन्याभिमुखीश्लिष्टा कनिष्ठानामिका पुनः । तथैव तर्ज्जनीमध्या धेनुमुद्रा समीरिता । अमृतीकरणं कुर्यात्तया साधकसत्तमः । त्रिसिञ्चेन्मूलमन्त्रेण दीपिनीमन्त्रमन्वितम् । अकारादि क्षकारान्तमातृकाभिस्त्रिधा पुनः । वाग्भवं वदयुग्मं च वाग्वादिनी च वाग्भवान् । क्लींक्लिन्ने क्लेदिनिक्लेदय महाक्षोभमित्यपि कुरुयुग्मं काम-

जातः सउगर्भेऽअन्तः । सएवजातः सजनिष्यमाणः प्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखः ( इत्यनेनदेवसम्मुखीकरणम् तन्मुद्रादर्शनं च ) [अथासनमन्त्रः] त्वंयविष्ठदाशुषोनॄः पाहि शृणुधीगिरः । रक्षातोकमुतत्मना (अथवा) पुरुषऽ-

---

बीजं श्रीं मोक्षं कुरुयुग्मकम् । प्रासादश्च पुनः । दीपिनीमनुरा-ख्यातोदेवतायाहि वृद्धिकृत् । ( दीपिनीमन्त्रोयथा ) ऐं वदवद वाग्वादिनि ऐंक्लींक्लिन्नेक्लेदिनिक्लेदय महाक्षोभं कुरु कुरु क्लींश्रींमोक्षंकुरुकुरु हौंहौं इति । मूलं सम्बोधनान्तं च देवनामामृतीकृतः । भवेति च ततोब्रूयादमृतीकरणन्त्विदम् । ( अथ परमीकरणम् ) परमीकरणं वक्ष्ये महामुद्रां च बन्धयेत् । उच्चार्य्य मूलं देवं च पूर्ववत्परमीकृतिः । कृतोभवेति च प्रोच्य ध्यायेद्देवस्य मस्तके । परमामृतवृद्धिञ्च देवस्य हृदयं स्पृशन् । ( महामुद्रा यथा ) अन्योन्यग्रथिताङ्गुष्ठा प्रसारित-कराङ्गुली:। महामुद्रेयमुदिता परमीकरणे बुधैः। प्रयोजयेदिमा मुद्रा देवताध्यानकर्म्मणि । कुर्यात्प्राणप्रतिष्ठां च देवस्येति वदेत्तथा । तत्तद्दैवतकल्पोक्तास्ततोमुद्राः प्रदर्शयेत् । ( वयम-प्यग्रे प्रदर्शयिष्यामः ) देवस्य वामभागे तु दद्यान्मूलेन चासनम् । पौष्पं दारुमयं वास्त्रमाक्षतं कौशतैजसम् । षड्विधं चासनं प्रोक्तं दैवताप्रीतिकारकम् ( आवाहनन्तु यः कुर्यात्सच क्रतुफलं लभेत् । आसनं रुचिरन्दत्वा शक्रत्वञ्च समाप्नुयात् ) यस्य यानि निषिद्धानि पुष्पाण्युक्तानि तैः कृतम् । केवलैरासनं हन्ति साधकस्य मनोरथान् । ( आसनस्वागतार्घ्याद्युपचारेषु पञ्चाद्याः षोडशमुद्राः ) यथा-आसने पद्ममुद्रैव कथिता

एवेदꣳ सर्व्वंयद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । सिंहासनं कनकरत्नमणिप्रभावच्छत्रध्वजालसितचामरतोरणाढ्यं । बालार्ककोटिसदृशं कनकाम्बराढ्यं श्रीविश्वनाथ मनसैव मयार्पितं ते । अत्रासनार्थे

मुनिभिस्तथा । ईषन्नम्राङ्गुलिर्दक्षः संत्यज्याङ्गुष्ठकं करः ॥ १ ॥ स्वागते स्वस्तिमुद्रा तु मध्यमूलगताङ्गुलिः । स्वस्तिमुद्रा द्विहस्ताचेन्मुद्रात्वर्घ्यस्य कीर्तिता ॥ २ ॥ तौ च प्रसारितहस्तौ पाद्यमुद्रा प्रकीर्तिता । देशिनीमूलगाङ्गुष्ठा दक्षिणाधः कनीयसी ॥ ३ ॥ आचाममुद्रा विख्याता देवताचामने विधौ । संयुक्तानामिकाङ्गुष्ठा तिस्रोऽन्याः सम्प्रसारिताः ॥ ४ ॥ मधूपर्क्के च सामुद्रा संत्यज्य च कनीयसीम् । कृत्वा मुष्टिं तथा स्नाने मध्यमाङ्गुष्ठकौ युतौ ॥ ५ ॥ अन्याः प्रसारितास्तिस्रोमुद्रा वस्त्रस्य चोदिताः । मधुपर्क्की समुत्ताना मुद्रालङ्कारिकी स्मृता ॥ ६ ॥ कनिष्ठाङ्गुष्ठकौ लग्नौ तिस्रोमध्याः प्रसारिताः । यज्ञोपवीतमुद्रेयं विद्वद्भिः परिकीर्तिता ॥ ७ ॥ मुक्तनिर्मलिकामुष्टिर्गन्धमुद्रेति सा स्मृता । उत्थिताधोमुखी मध्या साङ्गुष्ठाश्चेतरेतरा ॥ ८ ॥ पुष्पमुद्रा तदाख्याता सर्वसिद्धिप्रदायिनी । अंगुष्ठतर्जनीलग्नं तिस्रः संकुचिताः पराः । ९ । मुद्रा धूपदाने स्याद्देवानां तुष्टिकारिणी । उन्नता धौपकीमुद्रा दीपमुद्रेति कीर्तिता ॥१०॥ पञ्चाङ्गुलाग्रसंलग्ना प्रोत्थितोर्ध्वमुखी यदि । द्विधा निबद्धा मुद्रेयं नैवेद्यस्य प्रकीर्तिता ॥ ११ ॥ नाभौ हृदि ललाटे च करसम्पुटयोर्गता । नमस्कारे त्वियं मुद्रा देवतानां प्रसीदति । (इत्यासनादिमुद्राः) पूर्वन्तु आसन-

पुष्पाणि क्षिपेत् । ( अथ पाद्यमन्त्रः ) । ओं याऽआपो-दिव्याऽउतवास्रवन्तिखनित्रियाऽउतवा याः स्वयं याः । समुद्रार्थायाः शुचयः पावकास्ताऽ आपोदेवीरिह मामवन्तु

---

विचारे पुष्पासनदाने । "यस्य यानि निषिद्धानि पुष्पाणि...... मनोरथान्" इति लिखितमत्र निषिद्धपुष्पप्रसङ्गात् वर्ज्यपुष्पाणि देवानां पृथक् २ प्रदर्श्यन्ते । ( यथा मन्त्रमहोदधौ ) अक्षतानर्कधत्तूरौ विष्णौ नैवार्पयेत्सुधीः । बन्धूकं, केतकीं, कुन्दं, केसरं, कुटजं, जपाम्, । शङ्करं नार्पयेद्विद्वान्मालतीं यूथिकामपि। शक्तौ दूर्वार्कमन्दारान्मालूरं तगरं रवौ। विनायके तु तुलसीं नार्प्पयेज्जातुचिद्बुधः । ( लघुहारिते) स्नानङ्कृत्वा तु ये केचित्पुष्पं गृह्णन्ति वै द्विजाः । देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् । ( मन्त्रमहोदधौ ) चम्पकं कमलं त्यक्त्वा कलिकामपि वर्ज्जयेत् । कुरटकं, काचनारं, वर्ज्जयेद्बृहतीयुगम् । ( मेरुतन्त्रे ) नार्प्पयेद्भूमिपतितं कोष्णकं कृमिभक्षितम् । अङ्गलग्नं समाघ्रातं म्लानं पर्य्युषितं तथा उग्रगन्धमगन्धं च मध्यान्हस्नानतस्तथा ( अस्यापवादः ) न पर्य्युषितदोषः स्यात्तुलस्यां बिल्वचम्पके । जलजे, वकुले, ऽगस्त्ये, मालाकारगृहे, स्थिते । ( इति पुष्पासनविचारः ) पूजायामप्ययमेव विधिः । ( ग्राह्यपुष्पादिविचारस्त्वग्रे लेखिष्यामः ) ( अथ प्रकृतमनुसरामः ) यथाऽएवंकल्पिते शुभासने साङ्गं सावरणं देवं पूजार्थमिह चागतम् । इति ध्यात्वा तु मूलान्ते स्वागतं परिकीर्तयेत् ( पाद्यपात्रविचारश्चारदायाम् ) दूर्वां च विष्णुक्रान्तां च श्यामाकं पद्ममेव च। पाद्याङ्गानि च चत्वारि कथितानि समासतः । तथा। आगते

( अथवा ) एतावानस्य महिमातोज्यायाँश्च पुरुषः । पादोस्यविश्वा भूतानि त्रिपादस्यामृतन्दिवि । दूर्वाङ्कुराम्बुजमनोहरपुष्पयुक्तं शुभ्रं जलं सुरभिचूर्णसमन्वितं च । सौवर्णपात्रविलसत्पदयोर्विशुद्ध्यै पाद्यं गृहाण जगदीश ! मयार्पितं ते ( अथार्घमन्त्रः ) धामन्तोविश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि । अपामनीके समिथेयऽआभृतस्तमश्याम मधुमन्तन्तऽऊर्म्मिम् ॥ ( अथवा ) त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः । ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि । दूर्वाक्षतसुगन्धिहिरण्यरत्नदर्भाम्बुजं त्रिपथगाजलपुष्पयुक्तम् । सौवर्णपात्ररचितं फलयुक्तमर्घं तत्त्वं गृहाण मनसार्पितमाशुतोष । इत्यर्घ्यं समर्पयामि । ( अथाचमनमन्त्रः ) इमम्मेवरुणश्रुधी हवमद्याचमृडय ।

---

स्नानकाले च नैवेद्योपक्रमेऽपि च । त्रिविधः पाद्यकालः स्यात्पाद्यं स्यात्पादधावनम् । ( इतिमेरौ ) (शारदायाम् अर्घ्यद्रव्याणि) गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः । सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ( ततोऽर्घ्यदान विधिः ) ततोऽर्घ्यं मूर्ध्नि दद्यात्तत्कालोऽस्यत्रिविधोमतः । आगताय तथार्चायां स्नातुमासनगाय च । पूजान्ते गन्तुकामाय देवायार्घ्यं प्रदापयेत् । अर्घ्यद्रव्ययुतैस्तोयैरुपचारमनुं पठन् । ( अथाष्टाङ्गार्घ्य द्रव्याणि ) आपः क्षीरं कुशाग्राणि दधि दूर्वाक्षतास्तथा । फलं सिद्धार्थकाश्चैव अर्घोष्टाङ्गः प्रकीर्तितः । ( आचमनीयद्रव्याणि) कर्पूरमगुरुं पुष्पं दद्याज्जातीफलं मुने । लवङ्गमपि

त्वामवस्तु रोचके । ( अथवा ) आमागन्यशसासस्सठं सृज-ठ्वर्चसा तम्माकुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टं तनू-नाम् । इति । श्रीजान्हवीजलमयं सरसं सुधावच्चैला लवङ्ग-शुभगन्धमनोभिरामम् । पृथ्वीपते ! कनकपात्रधृतं मया ते भक्त्यार्पितं रुचिरमाचमनं गृहाण । इत्याचमनीयं स० । (अथ स्नानमन्त्राः) आपोहिष्ठामयोभुवः.........यथाचनः। ठ्वरुणस्योत्तम्भमनमसिठ्वरुणस्य स्कम्भसर्ज्जनीस्थाठ्व-रुणस्य ऋतसदन्न्यासि ठ्वरुणस्य ऋतसदनमासि ठ्वरुणस्यऽ-ऋत सदनमासीद ॥ श्रीजान्हवीजलमिदं सरसं सुधावच्चै-लालवङ्गशुभगन्धयुतं मनोज्ञम् पृथ्वीपते ! कनकपात्रधृतं मया ते स्नानं गृहाण जगदीश ! नमोनमस्ते । कावेरी, नर्मदा, वेणी, तुङ्गभद्रा, सरस्वती । गङ्गा, च यमुनातोयं मया स्नानार्थमार्पितम् । स्नानं समर्पयाम्यमुकदेवतायै

---

कङ्कोलं शस्तमाचमनीयके । *मूलमंत्रेण वदने दद्यादाचमनीयकम्* ( अन्यत्र ) जातीफलं लवङ्गैलाचन्द्रकङ्कोलचूर्णयुक् । पुनराच-मनीयार्थं तोयं देवमुखेऽर्पयेत् । ( अथास्यकालविचारः ) पाद्ये च मधुपर्के च स्नाने वस्त्रोपवीतयोः । भोजने चाचमः शुद्धतोयैः षोढा प्रकीर्तितः । ( अथ स्नानविचारः ) अन्यन्निवेदितं तोयं प्रकृतिस्थं सुशीतलम् । हेमादिकुम्भपात्रस्थं स्नानीयं जलमुच्यते । ( गन्धाद्भिः कारयेत्स्नानमिति ) अक्षता गन्धपुष्पाणि स्नानपात्रे तथा त्रयम् । ( अथ पुस्तकपूजायां ब्राह्मणपूजायां तु स्नानं न विधीयते ) (मेरुतंत्रे) गन्धाद्भिश्च

साङ्गायै नमः पुनराचमनीयं समर्पयामि । ( ततः पञ्चामृतस्नानम् ) ❀ तन्मन्त्रः ❀ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्। पुनः शुद्धोदकस्नानम् । ( अथ पृथक् २ पञ्चामृतस्नानमन्त्राः ) पयः पृथिव्याम्पयऽओषधीषुपयो दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ कामधेनुसमुद्भूतं सर्वेषां जीवनंपरम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् । ❀ पुनः शुद्धोदकस्नानम् ❀ (अथ दधिस्ना०) ओं दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः । सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् । पुनःशुद्धोदकस्ना० (अथ घृतस्ना०) घृतम्मिमिक्षे घृतमस्ययोनिर्घृतेश्रितोघृतम्वस्य धाम। अनुष्वधमावहमादयस्वस्वाहाकृतं वृषभव्वक्षिहव्यम् ॥ नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् । ❀ पुनः शुद्धोदकस्ना० ❀ ( अथ मधुस्नानमं० ) ओं

---

मूलेन यथाशक्त्याभिषेचनम् । (स्नानमिति) प्रसङ्गात् पंचामृतस्नानविधिः । ( षोडशोपचारपूजने शुद्धोदकस्नानमेवविहितम् । राजोपचारे पंचामृतादिस्नानमपि ) दुग्धं, दधि, क्षौद्रमाज्यं शर्कराच तथैवहि । तस्य तस्य च मंत्रेण देयं वा पृथक् पृथक् । ( अत्र स्नानावसरे घण्टानिनादः कार्यः ) । स्नाने , धूपे तथा दीपे ,नैवेद्ये, भूषणे तथा। घण्टानादं

मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधुद्यौरस्तुनः पिता ॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजः-पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ ❀ पुनः शुद्धोदकस्ना० ❀ (अथ शर्करास्ना०) ओं अपाꣳ रसमुद्वयसꣳ सूर्य्येसन्तꣳ समाहितम् । अपाꣳ रसस्य योरसस्तंवो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ इक्षुरससमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् । ❀पुनः शुद्धोदकस्ना० ❀ पौराणिकपञ्चामृतस्ना०। तोयैश्च दुग्धदधिमाक्षिकसर्प्पिराढ्यैः सितायुतैः कनक-

---

प्रकुर्वीत तथा नीराजनेऽपि च ( तथा शंखजलेन स्नानमपि विहितम् । तेनात्र शङ्खस्थापनं घण्टापूजनयोरपि प्रयोजनमपेक्षितम् स्यात्परं तज्ज्योतिषाचार्य्यपं० विष्णुदत्तलिखित-चण्डीपूजाप्रकरणे द्रष्टव्यम् ( अथ प्रकृतं लिख्यते ) पञ्चामृत-स्नानान्तरं पञ्चोपचारपूजां कृत्वा वस्त्रादिदेयमिति तन्त्रविदः॥ ( पाद्येन पातकं हन्यादर्घ्येणाप्नोत्यर्घतां । ततश्चाचमनं दत्वा सुचित्तस्सुखतां व्रजेत् । स्नानं व्याधिभयं हन्याद्वस्त्रेणायुष्य-वर्द्धनम् । सुगन्धितैलैरभ्यज्य सुगन्धामलकादिभिः । उद्वर्तनं विधायाथस्नापयेदुष्णवारिणा । नारिकेलोदकेनापि तथा तालफलाम्बुना । गन्धद्रव्यैश्चबहुभिस्तथा गन्धोदकेन च । ऐक्षवेणोदकेनापि सकर्पूरादिसुगन्धिना । शुद्धोदकैश्च मूलेन यथा शक्त्याभिषिञ्चयेत् । शङ्खं सम्पूज्य तेनैव स्नापयेत्तमन-न्यधीः । सर्व्वेषामपीति: शङ्खेन सूर्यस्य कदाचन । इतिमेरु

कुम्भघृतैः समन्त्रैः। कर्पूरकेशरसुगन्धिसुमिश्रितैश्च स्नानार्थमर्पितमिदं विधिवद्गृहाण। ❀ पुनः शुद्धोदकस्ना० ❀ ( शुद्धस्नानम० ) ओं शुद्धवालः सर्व्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाअवलिप्तारौद्रानभोरूपाः पार्ज्जन्न्याः ॥ मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम्। स्नानाय ते मया भक्त्या नीरं स्वीक्रियतामिदम्। (उद्वर्तनस्नानमन्त्रः) ओं अहिरिव भोगैः पर्य्येति वाहुञ्ज्यायाहेतिम्परिवाधमानः। हस्तघ्नोविश्वाव्वयुनानि विद्वान्पुमान्पुमाᳬ सम्परिपातुविश्वतः ॥ नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम्। उद्वर्तनं मया दत्तं गृहाण परमेश्वर। पुनः (शुद्धोदकस्ना०) स्नानान्ते पुनराचमनीयं। (अथ वस्त्रमन्त्रः) ओं युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः। तन्धीरासः कवयऽउन्नयन्ति साध्योमनसा देवयन्तः ॥ शीतवातोष्णसंत्राणं लज्जायाः रक्षणं परम्। देहालङ्करणं वस्त्रं अतः शान्तिं प्रयच्छ मे। (वस्त्रं समर्पयामि) आच-

---

तन्त्रे। (शङ्खपूजा चण्डिकापूजने द्रष्टव्या) (अथ वस्त्रविचारः) मदेयं विष्णवे मुख्यं पीतङ्कौशेयमम्बरम्। शिवाय च सरस्वत्यै पार्श्वनाथाय शुभ्रकम्। रक्तं शक्त्यर्कविघ्नानाम् भौमसौगतयोरपि। कृष्णं भैरवकालादेराधादेर्नीलमम्बरम्। अच्छिद्रं मलहीनं च सदस्यं नान्यधारितम्। कार्पासजम्बा कौशेयं राङ्कवं क्षाविशिष्यते। नैलाद्धिङ्कृतोद्वेगः सच्छिद्राद्धात्यता-

मनीयं यज्ञोपवीतम्० ) ओं यज्ञोपवीतम्परमम्पवित्रं प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं वलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ॥ दत्तं मया सुमनसा वचसा करेण यद्ब्रह्मवर्चसमयम्परमम्पवित्रम् । यद्धर्म्मकर्म्मनिलयं परमायुरेतद्यज्ञोपवीतमुररीकुरु विश्वनाथ इति यज्ञोपवीतम् स० । पुनराचमनीयम् । (अथ गन्धदानम्) ओं त्वाङ्गन्धर्व्वाऽअख-

---

भवेत् । परकीयाच्च दारिद्र्यं जीर्णादायुः क्षयोभवेत् । दग्धाद् विपद्भवेद्धास्यं दत्ते गात्रावलम्बिते । सूचीविद्धात् स्फोटकादि मलिनात्कान्तिहीनता । उग्रकेशे पुत्रनाशः पूजनादौ प्रयोजिते । इत्यपिमेरुतन्त्रे ( अथ गन्धविचारः ) सर्वेषु गन्धजातेषु प्रशस्तोमलयोद्भवः । तस्मात्सर्वप्रयत्नेन दद्यान्मलयजं सदा ( इतिरुद्रयामले ) ( समर्पणाङ्गनिर्णयः ) निवेदयेत्पुरोभागे गन्धं पुष्पं च भूषणम् । दीपं दक्षिणतोदद्यात्पुरतोवा न वामतः । वामतस्तु तथा धूपमग्रे वा नतु दक्षिणे । नैवेद्यं दक्षिणेभागे पुरतोवा न पृष्ठतः । धूपदीपौ सुभोज्यं च देवताग्रे निवेदयेत् । फलश्रुतिः ( उपवीतन्तु योदद्याद्ब्रह्मवेत्तृत्वमेव च । भूषणानि च योदद्यादनोपद्यमवाप्नुयात् । नानापुष्पप्रदानेन स्वर्गं राज्यमवाप्नुयात् । धूपोदहति पापानि दीपोमृत्युविनाशनः) सर्वमानस्तुनैवेद्यं दत्वा तृप्तिरतोभवेत् । मुखवासनदानेन कीर्तिमान् भवति ध्रुवम् । नीराजनेन शुद्धात्मा दर्पणेन प्रकाशयेत् । फलदःपुत्रवान्मर्त्यः तांबूलात्

नँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः। त्वामोषधे सोमोराजा विद्वान्यक्ष्मादमुच्यत ॥ यच्छ्रेष्ठमस्ति मलयाचलचन्दनानां कर्प्पूरकेसरसुगन्धिरसेन घृष्टम् ॥ आमोदमानमनिशं मनसा धृतं यत्तचन्दनं त्वमुररीकुरु दीनबन्धो ॥ इति गन्धं

स्वर्गमाप्नुयात् । प्रदक्षिणं तु यः कुर्य्यात् पापं हन्ति पदे पदे । ( अथ गन्धार्पणे अङ्गुलीविचारः ) अनामया च देवस्य ऋषीणां च तथैव च । गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः । पितॄणामर्पयेद्गन्धं तर्ज्जन्या च सदैव हि । तथैवाङ्गुष्ठमध्याभ्यां धार्य्योगन्धः सदा बुधैः । ( देवभेदेन गन्धाः ) कृष्णागुरुः सकर्पूरः सहितोमलयोद्भवैः । वैष्णवप्रीतिदोगन्धः कामाख्यायाश्च भैरवे । कुङ्कुमागुरुकस्तूरीचन्द्रभागैः समीकृतैः । त्रिपुराप्रीतिदोगन्धस्तथा चण्ड्याश्च शम्भुना । ( अथ गन्धाष्टकं देवभेदेन ) गन्धाष्टकं तत्त्रिविधं शक्तिविष्णुशिवात्मकम् । चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांस्यथकस्तूरीशक्तेर्गन्धाष्टकं विदुः ( मेरुतन्त्रे गन्धभेदाः प्रदर्शिताः ) चूर्णं घृष्टं धूमसारः सम्मर्दः प्राणिसम्भवः । गन्धः पञ्चविधोज्ञेयः मोददः स्वर्गवासिनाम् । प्रशस्तगन्धयुक्तानां पत्रचूर्णानि यानि च । तानि गन्धाह्वयानि स्युश्चूर्णाख्यः प्रथमः स्मृतः । घृष्टोमलयजोगन्धस्सरलोदेवदारु च । कृष्णागुरुकदम्बश्च द्वितीयः प्रकीर्तितः । शतपत्रीरसेमग्नाच्चन्दनागुरुकादिकात् । पिप्पलीयन्त्रतः काचकुप्यां सिद्धस्तृतीयकः ॥ कृष्णागुरुश्चन्दनदेवदारुकालीयकं वालकभद्रमुस्तम् । शिलारसः कुन्दरकोलकं च सेवन्तिकाकं तुरगाभिधानम् । मृत्कर्पटैः संयुतकाचकुप्यां दत्वा मुखं

समर्पयामि । अथाक्षतमन्त्रः । ओं अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रामतिष्ठया मती योजान्विन्द्रतेहरी । श्वेतैरखण्डितमनोहरशालिवीजैः संक्षालितैः शुचिजलैश्च सुगन्धिमिश्रैः । त्वामर्चयामि भगवन् मनसा महेश पृथ्वीपते मयि निधेहि कृपाकटाक्षम् । ( इत्यक्षतान् समर्पयामि ) ❀ विष्णुपूजने अक्षतानग्राह्या निषिद्धत्वात् ❀ (अथ पुष्पमन्त्रः) ओं ओषधयः प्रतिमो-

---

लोहमलोहसूत्रैः निष्काषितोधूसरस्तु तस्य सौगन्धिकैः क्वाचकठोरकेयः । महामोदनामा सुरामोदकारी तथा भूतयक्षोरगातङ्ककारी ज्वरारोचकच्छर्दिशङ्कापहारी ललाटे स्थितो दृष्टिदोषापहारी ॥ यथाभागमनेके तु सुगन्धागन्धवारिभिः । मर्द्दितश्चतुर्थस्तु संमर्द्द इति कीर्त्यते । कस्तूरिका चैक भाग द्वौभागौ मुस्तकस्य च तदर्धैलाजटामांसी त्वक्कुष्ठं च शिलारसः । चतुर्भागं बालकं घृतभृष्टा तथा नखी । सुगन्धकोकिला लोहवाणोराजवज्ञा तथा । अष्टौ भागाकेसरस्य सुरायाश्चैव षोडश । कृष्णागुरुश्च कालीयं तद्भागाष्टकमुच्यते ॥ तथा सेवन्तिकाकस्य भागानेकत्र मर्द्दयेत् कामोदनामकमर्द्दो देवताराजतोषकृत् । कस्तूरिकश्चौतुमदः प्राणिजात इतीर्य्यते । पञ्चमोयं सुगन्धस्तु देवदानवतोषकृत् । (अथाक्षतविचारः ) अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः । तदभावे च गोधूमाः नतु खण्डिततण्डुलाः । इति परशुरामः । ( अथ पुष्पनिर्णयः ) पुष्पं पञ्चविधं प्रोक्तं परञ्चात्मनेव च । उत्तमं, मध्यमं, हीनं, तेषां वक्ष्यामि लक्षणम् ।

दद्‌ध्वम्पुष्पवतीः प्रसूवरीः । अश्वाऽइव सजित्वरीर्व्वीरुधः पारयिष्ण्वः ॥ बिल्वैश्च चम्पकमनोहरजातिपुष्पैर्मन्दार-पङ्कजजपातुलसीदलैश्च । सम्मालिकाकनकपुष्पभरैर्म्मया ते सम्पूजितोमयि निधेहि कृपाकटाक्षम् । इति पुष्पाणि

तथा च मेरुतन्त्रे । परं सुवर्णपुष्पं स्यात्तत्सदा योग्यमेव हि । अभ्यङ्गपूर्वकं देयमर्च्चनार्हं सदा भवेत् । अपरं राजतं पुष्पं ताम्रजं च प्रकीर्तितम् । सदायोग्यञ्चेदमपि त्रिवर्षं चैक-वर्षकम् । तुलसी, केतकी, पद्मं, करवीरञ्च, मालती । पञ्चै-तान्युत्तमान्याहुर्मध्यमानि तथा दश । मल्लिकाकुन्दमन्दारवकु-लार्ज्जुनकिंशुकाः । पारिजातमशोकं च बिल्वं चम्पकमेव च एतद्भिन्नं सुवर्णं च सुगन्धहतमुच्यते । तत्तन्मंत्रविधानेन विहितानि समर्पयेत् वर्ज्यानि प्रागेवोक्तानि । ( पर्य्युषितस्या-पवादः ) पद्मजं पञ्चरात्रं स्याद्दशरात्रञ्च बिल्वजम् । एका-दशाहं तुलसी नैव पर्य्युषिता भवेत् । पुष्पाभावे तु योदद्या-दत्र दूर्वाङ्कुरानपि । सोपि पुण्यमवाप्नोति पुष्पदानस्य वै द्विजाः इति विष्णुधर्मोत्तरे । ( अदेयपुष्पाणि ) भङ्क्त्वा यद्विटपादिकं क्षितिरुहं चोत्पाट्य यच्चाहृतं यच्चाक्रम्य समा-हृतं तदखिलं पुष्पं भवत्यासुरम् । चौर्याकृष्टमनुक्तिदुष्टम-शुचिस्पृष्टं यदप्रोक्षितं यच्चाघ्रातमधोम्बरे विनिहितं क्रीतं च तद्वर्जयेत् ( पुष्पाभावेदेयद्रव्याणि मेरुतन्त्रे ) पुष्पाभावे प्रवालैर्वा तदभावे च कोरकैः । तदभावे फलैः पत्रै स्तदभावे तृणैः कुशैः ॥ ( अथार्पणविधानम् ) पत्रस्वा यदि वा पुष्पं फल-स्वापि तथैव च । केशवार्येशिवार्ये वा यथोत्पन्नं तथार्पयेत् । मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् । बिल्वपत्रार्पणे

समर्प्पयामि ) अथ विल्वपत्रमन्त्रः । ओं नमो विल्मिने च कवचिने च नमोऽवर्म्मिणे च ऽवरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय च हनन्याय च । इति विल्वपत्रं समर्प्पयामि । ( अथ तुलसीदलमन्त्रः ) ओं इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांशुरे । इति तुलसीदलं समर्प्पयामि ॥ ( अथ दूर्वामन्त्रः ) ओं काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवानो-

---

विशेषः पटले ) त्रिजटापत्रकैकेन हेरम्बं हरिमर्च्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजाविशेषतः ( अन्यत्र ) पत्रम्वा यदि वा पुष्पं फलंनेष्टमधोमुखम् । यथोत्पन्नं तथा देयं विल्वपत्रमधोमुखम् । ( संग्रहेच ) पुष्पञ्चाधोमुखम् नेष्टं तुलसीविल्ववर्ज्जितम् । तस्माच्चाधोमुखम् देयं विल्वपत्रं च शङ्करे । (मेरुतन्त्रे) पत्रम्वा यदि वा पुष्पं फलं नेष्टमधोमुखम् । दुःखदन्तु समाख्यातं यथोत्पन्नं तथार्पणम् ( अपवादोऽपि तत्रैव ) चित्रपूजासु सर्वासु न विरुद्धस्य दूषणम् । अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधौ न तत् । (अन्यत्र फलपुष्पार्पणेभेदः ) पुष्पमूर्ध्वमुखं योज्यं पत्रं योज्यं त्वधोमुखम् । फलन्तु सम्मुखं योज्यं यथोत्पन्नं तथार्चयेत् । ( इति पुष्पान्तपूजनम्विधाय आवरणपूजामारभेत् ) अथ पुष्पोपचारान्ते कुर्यादावरणार्च्चनम् । इति मेरुतन्त्रीयवचनात् । मंत्रसम्पुटितैर्वर्णैर्मातृकायाः सविन्दुकैः । क्रमेण गन्धपुष्पाद्यैर्देवस्याङ्गं समर्चयेत् । लयाङ्गेषु मातृणां स्थानाङ्गेषु ततः परम् । आदावरणं पूज्यं तदन्ते देवतां यजेत् । कृत्वावरणपूजां तु धूपदीपौ निवेदयेत् इति

दूर्वे प्रतनु सहस्रेण शतेन च ॥ दुर्वाङ्कुरा० ॥ (धूपमन्त्रः) ओं वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वेत्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ( पौ० श्लो० ) वनस्पतिरसोद्भूतो गन्धाढ्योगन्धउत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृ-

---

ह्यतां ॥ [एतदावरणपूजनं तान्त्रिके । तान्त्रिकाः आवरणपूजां कृत्वैव धूपदीपौ निवेदयन्ते । वैदिकाः खलु आवरणपूजामृतेऽपि धूपदीपादिना पूजयन्ति इति] (अथ धूपविचारः) धूपोदेयोगणेशस्य प्रियः प्रोक्तस्तु गुग्गुलुः । सर्जं देव्या महेशस्य निर्यासोदेवदारुजः । विष्णोःकृष्णागुरुः सिल्हं ( मनःशिला ) भास्करस्य प्रियं मतम् । शक्तेर्दशाङ्गं वक्ष्यापि शैलेयं मलयोद्भवम् नखं कुष्ठं सर्जरससेकैकांशं प्रकल्पयेत् । शिलारसागुरु जटामांसी भागद्वयं मतम् । षण्माक्षिकं सिताचाष्टौ धूपोऽयं शक्तिमोहनः ॥ हरीतकी सर्जरसमुरामांस्य कुभागिकाः । लाक्षा त्रिभागा चत्वारोभागाः शैलजमुस्तयोः । पञ्चभागं नखं प्रोक्तं षड्भागं कुष्ठमुच्यते । द्वादशांशोगुरुः केशविघ्नोविष्णुदशाङ्गकं । मधु मुस्ता घृतं गन्धोगुग्गुल्वगुरुशैलजम् । सरलं सिल्ह सिद्धार्थैः शेषदेवदशाङ्गकः । ( इतिमेरुतन्त्रे ) * सर्वदेवोपयोगी धूपः तन्त्रसारे * गुग्गुलं सरलं दारुपत्रं मलयसम्भवम् । ह्रीवेरमगरं कुष्ठं गुडं सर्ज्जरसं घनम् । हरीतकीं नखीं लाक्षां जटामांसीं च शैलजम् । षोडशाङ्गं विदुर्धूपं दैवे

ह्यताम् ॥ धूपमाघ्रापयामि ॥ (दीपमन्त्रः) ओं अग्निर्ज्ज्योति-र्ज्ज्योतिरग्निः स्वाहा सूर्य्योज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्योवर्च्चोज्ज्योति-र्व्वर्च्चः स्वाहा । ज्योतिः सूर्य्यः सूर्य्योज्योतिः स्वाहा ॥ (पौ० श्लो० ) सुप्रकाशोमहादीपः सर्वतस्तिमिरापहः । सवाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ अमुकदेवस्य दृष्टिदोषनिवारणार्थं दीपं दर्शयामि । [ दीपदानानन्तरं हस्तप्रक्षालनं कर्त्तव्यम् ] ( पौ० श्लो० ) भक्त्यादीपं प्रय-च्छामि देवाय परमात्मने । त्राहि मां निरयाद्घोराद्

---

पित्र्ये च कर्म्मणि । ( अङ्गुलीविचारः ) मध्यमानामिकाङ्गु-ल्योर्मध्यपर्वणि दैशिकः । अङ्गुष्ठाग्रेण देवेशिधृत्वा धूपंनिवे-दयेत् । ततः समर्पयेद्धूपं घण्टावाद्यजयस्वनैः । वामेन तु तथा धूपमग्रे वा नतु दक्षिणे । न धूपं वितरेद्भूमौ नासने न पटे तथा । यथा तथाधारगतं कृत्वा तं निवेदयेत् । मेदो मज्जायुतोनेष्टो विष्णवे दारु सम्भवः । ( ग्रह धू० ) रवेः कुन्दुरुकं धूपं शशिनस्तु घृताक्षताः । भौमे सर्ज्जरसं चैव अगुरुं च बुधेस्मृतम् । सिल्हकं गुरवे दद्यात् शुक्रे विल्वागुरुं तथा । गुग्गुलं मन्दवारे तु लाक्षा राहोश्चकेतवे । (कुन्दुरुकः सल्लकीनिर्यासः ) [ धूपनिरुक्तिः ] धूतावशेषमहा-दोषपूतिगन्धप्रहारितः । परमामोदजननाद् "धूप" इत्यभि-धीयते ( दीपविचारः ) । [ निरुक्तिः] दीर्घाज्ञानमहाध्वान्ता-हङ्कारपरिवर्ज्जनात् । परतत्वप्रकाशाच्च दीप इत्यभिधीयते इति "पुरश्चर्य्यार्णवे" । गोसर्पिषा वा तैलेन वर्त्या च लघु-

दीपज्योतिर्नमोस्तुते ॥ ( नैवेद्यमन्त्रः ) ओं अन्नपतेन्नस्य नोदेह्यनमीवस्य शुष्मिणः । प्रप्रदातारन्तारिषऽऊर्ज्जन्नो धेहि द्विपदे शञ्चतुष्पदे । (पौ० श्लो०) नैवेद्यं गृह्यतां देव! भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम्।

गर्भया । उच्चैः प्रदर्शयेद्दीपं नच मेदादिना क्वचित् । न मिश्रीकृत्य दद्यात्तु दीपं स्नेहाद्घृतादिकान् । दत्वा मिश्रीकृत्य स्नेहांत्तामिस्रं नरकं व्रजेत् । पारावतभ्रमाकारं भ्रामयेच्च प्रदर्शयेत् । देवस्य सर्वावयवाञ्च्छलोकमेकं ततः पठेत् । ( सुप्रकाश० इति मेरुतन्त्रे ) दीपं घृतयुतं दक्षे तैलयुक्तं च वामतः । दक्षिणे च सितां वर्तिं वामतो रक्तवर्तिकाम् । ( इति यामले ) पात्रेषु दीपोदानत्र्यो नतु भूमौकदाचन ( इति मेरुतन्त्रे ) सर्वंसहा वसुमती सहते न द्वयं त्विदम् । अकार्यं पादघातं च दीपतापं तथैव च । कृत्वा तु पृथिवीतापं दीपमुत्सृजते नरः । सतापतापं नरकं प्राप्नोत्येव शतं समाः । लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलम् । न सदीप इति ख्यातोह्योघवन्हिस्तु सः स्मृतः ( इति आन्हिकतत्वे ) [ पात्रवि० कालिकापुराणे ] सुवृत्तवर्त्ति सस्नेहपात्रेऽभग्ने, सुदर्शने मृण्मये वृक्षकोटौतुदीपं दद्यात्प्रयत्नतः । तैजसं दारवंलौहं मार्तिक्यं नारिकेलजम् । तृणध्वजोद्भवं वापि दीपपात्रं प्रशस्यते । (वर्ति०) वर्तिः श्वेता तथा रक्ता न पीता नासितापिच । पटोवानूतनः शुक्लोवर्तिकायां प्रशस्यते ॥ नैवनिर्वापयेद्दीपं लक्ष्मीनाशकरोयतः । (इतिमेरुतन्त्रे) (अन्यत्रापि)नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् । दीपहर्ता भवेदन्धः काणोनिर्वापको भवेत् । दीपनिर्वापणात्पुंसः कुष्माण्डछेदना-

शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च। आहारोभक्ष्य-भोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यं निवेदयामि ॥ प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा ॥ नैवेद्यान्ते आचमनीयं समर्पयामि ॥ मध्येपानीयं० ॥ उत्तरापोशनं० ॥

---

त्स्त्रियः। अचिरेणैव कालेन पिण्डनाशोभवेद्ध्रुवम् ॥ नैव-निर्वापयेद्दीपं लक्ष्मीनाशकरोयतः। (दीपमहिमा) यावद-क्षिनिमेषाणि दीपो देवालयेज्वलेत्। तावद्वर्षसहस्राणि स्वर्ग-लोके महीयते। (इतिविष्णुधर्मोत्तरे) *अन्यत्रापि* पुरश्चरण-कृत्ये च दीपं शृण्विह भैरव। दीपेन लोकाञ्जयति दीपस्तेजो-मयः स्मृतः। चतुर्वर्गप्रदोदीपस्तस्माद्दीपैर्यजेच्छ्रिये। गव्येन तत्रासामर्थ्ये तैलेनापि सुगन्धिना॥ दत्त्वा दीपो न हर्तव्य-स्तेन कर्मविजानता। निर्वापणं च दीपस्य हिंसनं च विगर्हि-तम्। यः कुर्याद्धिंसनं तेन कर्मणा पुष्पितेक्षणः। (नैवेद्यपा-त्राणि) तैजसेषु च पात्रेषु सौवर्णे राजतेऽपि वा। ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽपिवा पुनः। यज्ञदारुमये वापि नैवेद्यं कल्पयेद् बुधः। सर्वाभावे तु माहेयं स्वहस्तघटितं यदि ॥ नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः। भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पञ्चमम्। सर्वत्रैव च नैवेद्यमाराध्यास्मै निवेदयेत् ॥ निवेदयामीति सर्वं दद्यान्महेश्वरि। (इति पुरश्चर्यार्णवे) (तान्त्रिकनैवेद्यार्पणविधिः) पाद्यमाचमनीयं च दत्त्वा नैवेद्यमर्पयेत्। निधाय स्वर्णकं पात्रं साधारं मण्डले त्विह। संस्थाप्य चतुरस्रं च संस्कुर्याच्छास्त्रमार्गतः। अस्त्रमंत्रेण

करोद्वर्तनार्थैचन्दनानुलेपनं० ॥ ( मन्त्रः ) त्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः । त्वामोषधे सोमोराजा ऽविद्वान्यक्ष्मादमुच्यत । (ताम्बूलमन्त्रः) याः फलिनीर्य्याऽ अफलाऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूता-स्तानो मुञ्चन्त्वꣳहसः । (पौ०श्लो०) पूगीफलं महद्दि-

---

संप्रोक्ष्य चक्रमुद्राभिरक्षितम् । स्पर्शदृष्ट्यादिदोषांश्च (यं) वायुबीजेन शोषयेत् । स्पृशन्दक्षकराग्रेण (रं) वन्हिबीजेन निर्दहेत् । (वं) बीजेनामृती कृत्य मूलमंत्रेण तत्पुनः ॥ स्पृशेत् कराभ्यां विधिवदष्टवाराभिमन्त्रितम् । धेनुमुद्रां प्रदर्श्याथ गन्धपुष्पैः समर्पयेत् । देवमभ्यर्च्य कुर्याच्च पुष्पाञ्जलिमनन्यधीः । हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् । पञ्चधा षड्रसोपेतं गृहाण मम सिद्धये । मूलमंत्रं समुच्चार्य स्वाहान्तं जलमर्पयेत् । कराभ्यां स्पृशन्पात्रं नैवेद्यान्ते नमो वदेत् । देवस्य दक्षिणे हस्ते जलं दत्वा पठेदिदम् । "अमृतोपस्तरणमसि स्वाहा" इतिभवाक्षरः । दर्शयेद्दक्षहस्तेन विकचोत्पलसन्निभाम् । दर्शयित्वा ग्रासमुद्रां पञ्चप्राणाहुतिश्चरेत् । कनिष्ठानामिकाङ्गुष्ठयोगः प्राणस्य मुद्रिका । तयाग्रासं गृहीत्वा प्राणायस्वाहेति संवदेत् तर्जनीमध्यमाङ्गुष्ठयोगेऽपानपदंवदेत् । अन्तं स्वाहान्तमथ चाव्यानाय ततोवदेत् । स्वाहान्तमध्यमाङ्गुष्ठयोगेन निर्वपेत् । हित्वाकनिष्ठां सर्वाभिरुदायाग्निगेहिनी । सर्वाभिस्तु समानाय स्वाहोक्त्वा ग्रासमर्पयेत् । ततः स्वर्णादिजे पात्रे सुतोयं धेनुमुद्रया । अमृतीकृत्य देवाय देयमन्त्रमिमं पठेत् ॥ नमस्ते देवदेवेश सर्व तृप्तिकरं परम् । अन्नं निवेदितं शुद्धं प्रकृतिस्थंसुशीतलम् ।

ढ्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ताम्बूलपत्रं पूगीफलं च समर्पयामि ॥ (फलमन्त्रः) याफलिनीः० ॥ (पौ० श्लो०) इदं फलं मयादेव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ऋतुफलानि स० ॥ ( प्रदक्षिणामन्त्रः । ) ये

---

परमानन्दसम्पूर्णो गृहाण जलमुत्तमम् । उक्त्वैवं देवता वामे जलपात्रं निवेशयेत् । त्रिभिर्वर्णैः प्रदातव्यं देवार्थं पाक भोजनम् । घृतपक्वं दुग्धसिद्धं साधितं केवलाग्निना । युक्तमैक्षवपङ्केन तच्छूद्रस्य प्रशस्यते । ( ततःपुष्पाञ्जलिर्दद्यात् । ) अस्त्र मन्त्रेण बन्धनम् । दिशां कृत्वा जवनिकां देवस्य परितोन्यसेत् । अमृतात्मकनैवेद्यं नमइत्युच्चरेत्बुधः । धेनुमुद्रां प्रदर्श्याथ भुञ्जानां देवतां स्मरेत् । अष्टोत्तरशतं जप्त्वा मूलमन्त्रेण कं ददेत् । भोजनान्तरे देयमद्भिः कर्पूरवासितैः । मध्यमाचमनीयं मध्ये पानीयं करमार्जनम् । गाण्डूषिकजलं दत्वा दद्यादाचमनं बुधः । देवोच्छिष्टं गृहीत्वा तु निर्माल्य भोजिने नमः । ऐशान्यां तु विनिक्षिप्य हस्तं प्रक्षालयेत्ततः । (मन्त्रमहोदधौ उच्छिष्टाधिका०) विष्वक्सेनोहरेरुक्तश्चण्डेश्वरउमापतेः विकर्तनस्य चण्डांशुर्वक्रतुण्डोगणेशितुः । शक्तेरुच्छिष्टचाण्डाली स्मृता उच्छिष्टभोजिनः । ( तथा गौतमीये ) गणेशे वक्रतुण्डाय सूर्य्ये चण्डांशवेऽर्पयेत् । विष्णौ तु विष्वक्सेनाय शिवे चण्डेश्वराय च । शक्त्युच्छिष्टशेषिकायै दद्यादर्चनसिद्धये । अन्यथा नैवसिद्धिः स्यादर्च्चकोनरकं व्रजेत् । ( स्थापनक्रमः ) नैवेद्यं दक्षिणेभागे पुरतोवा न पृष्ठतः । दक्षिणं तु परित्यज्य

तीर्थानि प्रचरन्ति सृकाहस्तानिषङ्गिणः । तेषाꣳ सहस्रयोजने वधन्वा नितन्मसि । ( पौ० श्लो० ) यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिण पदेपदे । प्रदक्षिणां स० ॥ (आर्तिकमन्त्रः) ॐ

वामे नैव निधापयेत् । अभोज्यं तद्भवेदन्नं पानीयं च सुरोपमम् । ( अन्नपानीयमितिपाठोग्रन्थान्तरविरोधाद्विचारणीयः ) ॥ कालिकापुराणे ॥ योयद्देवार्चनरतः सतन्नैवेद्यभक्षकः । केवलं सौरशैवे तु वैष्णवोनैव भक्षयेत् । समानं त्वन्यनैवेद्यं भक्षयेदन्यदैवतः । निवेदितं च यद्द्रव्यं भोक्तव्यं तद्विधानतः । तन्न चेद्भुज्यते मोहाद्बोक्तुमायाति देवताः । अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् । शालिग्रामशिलासंगात्सर्वं याति पवित्रताम् ॥ इति रुद्रयामले ॥ ( नैवेद्यल० ) अर्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते । पुनराचमनं दद्यात्करोद्वर्तनमेव च शुद्धाचमनं दत्वा सुगन्धैर्गन्धयेत्करौ । ततोदद्याच्च ताम्बूलं विष्णवे द्वादशाङ्गकम् । खदिरैलालवङ्गेन्दुचूर्णपर्णतमालकम् । जातिफलं जावित्रीकस्तूरीकेशरैर्युतम् । पौगफलमथ प्रोक्तं दशाङ्गं भास्करस्य तु । मृगनाभितमालाभ्यां हीनं विघ्नेश्वरस्य तु । पञ्चाङ्गं चूर्णखदिरपर्णपूगफलेन्दुकम् । शैवं देव्या जातिकोशयुतं तच्च महेशितुः । ( इति मेरुतन्त्रे ) लवङ्गजातिकक्कोलचूर्णं क्रमुकखादिरम् । कर्पूरसहितं पत्रं ताम्बूलं चसमर्पयेत् । इति चसङ्ग्रहे ॥ ( मर्दाक्षणाविचारः ) एका चण्ड्यां रवौ सप्त तिस्रोदद्यात् विनायके । चतस्रः केशवे दद्यात् शिवेत्वर्द्धं मर्दाक्षणम् ॥ इति वीर मित्रोदये ॥ एका चण्ड्यां

आरात्रि पार्थिवर्ठ रजः पितुरप्प्रायिधामभिः । दिवः सदाᳫंसि बृहतीवितिष्ठसऽआत्वेषं वर्त्तते तमः ॥ इदᳫंहविः प्रजननम्मेऽअस्तु दशवीरर्ठ सर्वगणर्ठ स्वस्तये । आत्मसनि पशुसनि लोकसन्यभयसनि अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयोरेतोऽअस्मासुधत्त । आरार्तिकंस० ।

---

रवौ सप्त तिस्रोदद्याद्विनायके । चतस्रः केशवे दद्यात् शिवे तिस्रः प्रदक्षिणाः ॥ इति लिङ्गार्चनचन्द्रिकायाम् ॥ ( अन्यच्च वीरमित्रोदये ) एकं गणाधिपे दद्यात् द्वेसूर्य्ये त्रीणि शङ्करे । चत्वारि केशवे दद्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥ पदान्तरे पदं न्यस्य करौ चलनवर्जितौ । स्तुतिर्वाचिहृदिध्यानं चतुरङ्ग प्रदक्षिणम् ॥ स्थाने चण्डस्य सङ्कल्प्य वृषभादौ प्रदक्षिणम् । सव्ये सव्यं विजानीयादपसव्येऽपसव्यकम् । वृषे चण्डे वृषे भूयः सोमसूत्रे पुनर्वृषे । चण्डे च सोमसूत्रे च पुनश्चण्डे पुनर्वृषे । नव प्रदक्षिणोपेतं यः कुर्य्यात्तु प्रदक्षिणम् । विंशत्सहस्रसङ्ख्याकप्रदक्षिणाफलं लभेत् ॥ ( अत्र चण्डस्थानमैशानीदिक् ) वृषस्थाने प्रदक्षिणं गत्वा वृषत आरभ्य अप्रादक्षिण्येन चण्डस्थानं गच्छेत् । ततो वृषं गच्छेत् । ततः प्रादक्षिण्येन सोमसूत्रं "उत्तरदिक्" गच्छेत् । प्रणालावधि । ततः अप्रादक्षिण्येन पुनर्वृषं गच्छेत् । ततस्तथैव चण्डं गच्छेत् ततः प्रादक्षिण्येन सोमसूत्रं गच्छेत् । ततः पुनरप्रादक्षिण्येन चण्डं गच्छेत् पुनर्वृषं गच्छेदिति नवसु स्थानेषु प्रदक्षिणकरणम् ( एवं नवविधत्वं प्रदक्षिणायाः ) शम्भोः प्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत् । लङ्घिते त्वेकमेवस्यादनुलङ्घेऽयुतत्रयम् ॥

अपसव्यं यतिः कुर्य्यात्सव्यं तु ब्रह्मचारिणः। सव्यापसव्यं गृहिणो नित्यं शम्भोः प्रदक्षिणम्। तृणैः काष्ठैस्तथापर्णैः पाषाणैर्लोष्ठिकादिभिः। अन्तर्द्धानं पुनः कृत्वा सोमसूत्रं तु लङ्घयेत्। प्रासादविस्तारसमान सूत्रं सोमस्य सूत्रं दिशि सोमसूत्रम्। सूत्राद्बहिर्लङ्घनतो न दोषः स्याद्दोष आभ्यन्तरलङ्घनेन॥ सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम्। अपसव्यं न कुर्वीत कुर्य्यादेवप्रदक्षिणम्। प्रदक्षिणात्रयं कृत्वा नमस्कारैश्चपञ्चभिः। पुनः प्रदक्षिणं कृत्वा शिवलोके महीयते॥ एकहस्तनमस्कारादेकस्माच्च प्रदक्षिणात्। अन्धकारे नमस्कारादर्द्धपुण्यं विनश्यति॥ पूजां कृत्वा च यःशम्भोर्नकरोति प्रदक्षिणाम्। सा पूजा निष्फला तस्य पूजकः सच दांभिकः॥ (शिवरहस्ये) प्रदक्षिणात्रयं कुर्य्यात्तथा पञ्चदशाथवा। अष्टौ-द्वादश वा कार्या ह्यधिकावापि शक्तितः। नैकां प्रदक्षिणां कुर्यात्साम्बस्य परमात्मनः। एकांप्रदक्षिणांकृत्वा शम्भोः पुण्या-त्प्रहीयते। प्रदक्षिणत्रयान्न्यूनं नैवकार्यं महेश्वरे। त्रिः प्रदक्षिणा माहात्म्यंवामनपुरा० । त्रिः प्रदक्षिणमावृत्य महाष्टाङ्ग प्रणामकम्। दशाश्वमेधस्य फलम्प्राप्नुयान्नात्र संशयः। (शिवरहस्ये) प्रातः शिवार्चनं देवि दशकार्य्याः प्रदक्षिणाः। मध्यान्हेद्वादशाथैका दशसायान्हि सादरं। (वटुकागमे) तिस्रः प्रदक्षिणा कुर्यात् शिवस्य परमेश्वरि। चतस्रः केशवस्योक्ताः रवेः सप्तप्रकीर्तिताः। तिस्रोगणेश्वरे देवि वटुकस्य तथैव च। एकं देव्याः सदाकुर्य्यात्प्रदक्षिणमपीश्वरि। (मन्त्रमहार्णवान्तर्गतवटुकपूजने।) यानि कानि० इति मन्त्रेण तिस्रः प्रदक्षिणाः इति। (स्कन्दपुराणे अ० ३१ भैरवप्रदक्षिणा) अष्टौप्रदक्षिणी कृत्य मत्यहं पापभक्षिणम्। नरोनपापैर्लिप्येत

( पुष्पाञ्जलिमन्त्रः ) ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् तेहनाकम्महिमानः सचन्त यत्र पूर्वे साद्ध्याः सान्तिदेवाः ॥ ओं राजाधिराजाय प्रसह्यसाधिने नमोवयं वैश्रवणाय कुर्म्महे समेकामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो दधातु । कुवेराय वैश्रवणाय महाराजाधिराजाय नमः । ओं स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यंपारमेष्ठयं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्य्यायैस्यात्सार्वभौमः सर्वायुषान्द्दातादापरार्द्धात्पृथिव्यै समुद्रपर्यन्तायाएकराडिति । तदप्येषश्लोकोऽभिगीतोमरुतः परि-

---

मनोवाक्काय सम्भवैः ॥ ( वटुकार्चनकल्पलतायां ) क्रूरकार्येषु सर्वेषु वटुके त्रिः प्रदक्षिणा । धर्म्मकर्मार्थसिद्ध्यर्थं वेदसंख्या विशेषतः । अत्र प्रदक्षिणा विषयेतत्तद्देवानां संख्याभेदे परस्परविरोधः । ( वस्तुनस्तु ) एकाचण्ड्याः रवेः सप्त तिस्रः कार्याविनायके । चतस्रः केशवे दद्यात् शिवस्यार्द्ध प्रदक्षिणम् इत्येवसिद्धान्तक्रमः । शेषनियमस्तु कामनावशाद्भिन्न इति सर्वशास्त्रलोचनान्निष्पद्यते ( भैरवस्यापि ) तिस्रः चतस्रः अष्टौ च प्रदक्षिणाविहिताः । तथा सर्वेषु क्रूरकार्य्ये० इति वटुकार्चनकल्पलतायामुपलब्ध वचनस्वीकारे चतस्रोपिविहिताः परं वहुसम्मतेरभावान्नादरणीयोऽयंवचनः । एक दैशिकत्वात् । तथा वटुकेमोक्षदानाधिकाराभावात् तस्य क्रूरत्वमेवसूचितं भवति । अथ च मंत्रमहार्णवादिग्रन्थपर्यालोचनया प्रदक्षिणाद्वयमेव सिद्ध्यति । वहुसम्मतिवाक्यात् । इति ॥ (पात्रासादनमकारः पुष्पसारसुधानिधौ ) अर्घपात्रं तु वायव्ये नैरृत्यां

वेष्टारोमरुतस्यावसन्गृहे आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासदऽइति॥ ओं विश्वतश्चक्षुरुतऽविश्वतोमुखोऽविश्वतोव्वाहुरुतऽविश्वतस्पात् । सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमिजनयन्देवऽएकः । पुष्पांजलिं समर्पयामि । (दक्षिणामन्त्रः) ओं हिरण्यगर्भ्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषाऽविधेम । (पौ० श्लो०) हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ कृतायाः पूजायाः साद्गुण्यार्थे दाक्षिणां सम० ॥ (अर्पण) अर्घ्यपात्रमादाय मूलमुच्चार्य देवस्य दक्षिणकरे अर्घ्योदकमुत्सृज्य समर्पयेत् । यद्दत्तं भक्तिमात्रेण पत्रं, पुष्पं, फलं, जलम् । निवेदितं च नैवेद्यं तद् गृहाणानुकम्पया । आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि त्वं गतिः परमेश्वर । ओं तत्सत् प्राणबुद्धिदेहधर्म्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा, वाचा, कर्म्मणाभ्यन्तरा, यच्चोदरेण, शिश्ना, यच्चस्मृतं, यदुक्तं, यच्चकृतं, तत्सर्वं, ब्रह्मार्पणं भवेत् । भूस्स्वाहा ।

---

पाद्यपात्रकम् । आग्नेय्यांस्नानकलशमैशे त्वाचमनीयकम् । मध्ये तु मधुपर्कस्यादित्येतत्पात्रलक्षणम् । अत्र तत्तदुपचाराश्रितानगुणकाभानापिद्रव्यसंस्कार कर्मसु परार्थकत्वात् । फलश्रुतिरर्थवादःस्यात् । इतिन्यायेन अङ्गफलश्रुतिरर्थवादः । उपचाराणां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां विनियोजका-

नामभावेन परस्परमङ्गाङ्गिभावात् । किन्तर्हि प्रधानफलान्येतानि । तत्र विधिभेदेन एकैकस्योपचारस्यफलवत्वेपि समुदितानामपि फलवत्वं पञ्चोपचारादिपूजायाः फलवत्वश्रवणात् ( तद्यथा ) अग्निहोत्रादिकर्म्मणां अग्निहोत्रं जुहुयात् स्वर्गकामइत्यादिप्रातिस्विकफलश्रवणेऽपि तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसा नाशकेन इति शतपथश्रुत्या यज्ञादीनां सर्वेषां विविदिषारूपफलवत्ता श्रुत्यावोधिता तद्वदिहापि नकाप्यनुपपत्तिरितिदिक् । ( सिन्दूरमन्त्रः) सिन्धोरिव प्रा० । (अञ्जनमन्त्रः) समिद्धोअञ्जन् । ( छत्रमन्त्रः ) इन्द्रछत्र० ( चामरम० ) ओं विकर्णेन । (वीजनमन्त्रः ) ओं वाजोवाज० । ( ध्वजमन्त्रः) त्वमिन्द्र० । ( दर्पणमन्त्रः ) प्रतिपदस्वि० ।

# शक्तिपूजने पौराणिकाः श्लोकाः

सर्वलोकस्य जननीं शूलहस्तां त्रिलोचनाम् । सर्वदेवमयीमीशां देवीमावाहयाम्यहम् ॥ श्रीमन्महालक्ष्मी, महाकाली, महासरस्वतीभ्योनमः । ( आवाहनं स० ) तप्तकाञ्चनवर्णाभं मुक्तामणिविराजितम् । अमलं कमलं दिव्यमासनं प्रतिगृह्यताम् । ( श्री मन्म० आसनंस० ) गङ्गादितीर्थसम्भूतं गन्धपुष्पादिभिर्युतम् । पाद्यं ददाम्यहं देवि गृहाणाम्बु नमोस्तुते । (पाद्यं स०) अष्टगन्धसमायुक्तं स्वर्णपात्रप्रपूरितम् । अर्घं ददाम्यहं देवि प्रसीद त्वं महेश्वरि । ( अर्घ्यं स० ) कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् । आचम्यतां महादेवि मया दत्तंहि भक्तितः । ( आचमनीयं स० ) स्नानं

तव महादेवि कर्पूरागुरुवासितम् । सुतीर्थेभ्यः समानीतं स्नानीयं प्रतिगृह्यताम् । ( स्नानं स० ) गोक्षीरममृतं शुभ्रं नानारत्नसमुद्भवम् । पृथिव्यौषधिसंपन्नं स्नानाय प्रतिगृह्यताम् । (पयस्ना०। पुनः शुद्धो०) दधिचन्द्रसमं कान्तं स्वच्छवारिविभूषितम् । किञ्चिदाम्लरसालं वै गृहाण दधिचोत्तमम् । (दधि० पुनः शुद्धो०) इदं घृतं महापुण्यं पवित्रं पापनाशनम् । गृहाण देवदेवेशि स्नानार्थं कृपया प्रभो । ( घृतस्ना० पुनः शुद्धो० ) नानातरुलतावृन्दरससारसमुद्भवम् । मधुस्वादूत्तमं देवि स्नानाय तव कल्पितम् । ( मधुस्ना० पुनः शु० ) रक्तश्वेतेक्षुसंजाता शर्करा तु मधुप्रिया । स्नेहाग्रमलनाशाय कल्पितासि दयानिधे । ( शर्करास्ना० पुनः शुद्धो० ) सर्वकालुष्यहीनायै परिपूर्णसुखाप्तये । मधुपर्कमिदं देवि कल्पयामि प्रसीद मे ( मधुपर्कस्ना० पुनः शुद्धो० ) स्नेहं गृहाण स्नेहेन लोकनाथे महाशये । सर्वलोकेषु देवेशि ददामि स्नेहमुत्तमम् ( सुगन्धि उद्वर्तनस्ना० ) दिव्याम्बरं नवं सूक्ष्मं क्षौमं चातिमनोहरम् । दीयमानं मया देवि गृहाण जगदम्बिके । ( वस्त्र० ) रत्नादिखचितं स्वर्णरजतादिविनिर्मितम् । रत्नसिंहासनं लोकनायिके स्वीकुरुव तत् । ( सिंहासनार्थेपुष्पं स० ) सरस्वतीप्रिये गौरि सर्वालङ्कारभूषणैः । सर्वसौभाग्यदे देवि कञ्चुकीं प्रतिगृह्यताम् ( कञ्चुकीं स० ) इदमाभरणं दिव्यं स्वर्णशङ्खादिनिर्मितम् । भूषणार्थं शरीरस्य गृहाण सुरनायिके । (आभरणं स०) चूर्णं हरिद्रारजनीसौभाग्यं सुखदं शिवे । गृहाण त्वं मया दत्तं सुसुगन्धं मनोहरम् । ( हरिद्राचूर्णं० ) देविदेविमहादेवि सुभगे शान्ततारके । अक्षिभ्यां कज्जलं दत्तं गृहाण परमेश्वरि ।

( कज्जलं स० ) सिन्दूरं श्रीमतं देवि सर्वमाङ्गल्यदायकम् । सर्वरत्नाधिकं दिव्यं सिन्दूरमुररीकुरु । ( सिन्दूरं स० ) श्रीखण्डागरुकर्पूरमृगनाभिसमन्वितम् । विलेपनं गृहाणाशु नमस्ते भक्तवत्सले । ( गन्धं० ) पारिजातोद्भवं रक्तचन्दनकुङ्कुमैर्युतम् । महादेवि गृहाण त्वं सुखसंपत्तिदायिनि । ( रक्त चन्दनं ) कुङ्कुमं सर्वसौभाग्यं सुराणां प्रीतिवर्द्धनम् । पवित्रं मङ्गलं देवि कुङ्कुमं प्रतिगृह्यताम् । ( कुङ्कुमं स० ) कण्ठसूत्रं च सौभाग्यं तवैव हृदि भूषितम् । नानामुक्तासुवर्णाढ्यं कुङ्कुमं चार्चितं मया ॥ ( कण्ठसूत्रं स० ) उग्रद्वारे चोग्रमपि दुष्टासुरनिवर्हिणि । पूजां करोमि चार्वङ्गि पल्लवैर्नन्दनोद्भवैः । ( पञ्चपल्लवान् स० ) *ततोऽङ्गपूजांकृत्वा* चम्पकङ्कजपापुष्पैः शतपत्रैर्विचित्रताम् । पुष्पमालां प्रयच्छामि गृहाण जगदम्बिके । ( पुष्पमालां स० ) आयुर्वृद्धिकरं चूर्णं सुगन्धं देवनाप्रियम् । गृहाण देवदेवेशि श्वेतचूर्णं मयाहृतम् । यच्चूर्णं रक्तवर्णाभं सुखसम्पत्तिकारकम् । गृहाण देवदेवेशि रक्तचूर्णं मया हृतम् ॥ ( सौभाग्यद्र० ) दशाङ्गं गुग्गुलं धूपं चन्दनागुरुसंयुतम् । एतेषामुत्तमं धूपं महादेव्यै निवेदये । (धूपमा०) घृतवर्तिसमायुक्तं महातेजोमयोद्भवम् । अज्ञानमन्धकारं च निवारयतु मे सदा । ( दीपं द० ) शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारोभक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ ( नैवेद्यंस० ) *नैवेद्यान्ते आचमनीयंस०* पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ( ताम्बूलंस० ) हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे । ( दक्षिणां० ) ओं तत्सत्" इतिनिवेदनम् ॥



( विशेषश्लोकाः द्वितीयभागे द्रष्टव्याः )

# श्री विष्ण्वादिपञ्चायतनानि ( धर्मसिन्धौ )

विष्णुर्मध्ये शिवेभास्यसूर्यार्याईशादिक्रमात् । [ मध्ये विष्णुः ईशानादिकोणे क्रमशः शिव, गजानन, सूर्य, अम्बिका] शम्भौमध्ये विष्णुसूर्यगजास्यार्यास्तथा क्रमात् । [ मध्ये शम्भुः विष्णु, सूर्य्य, गणेश, अम्बिका ] रवौ मध्यगते रुद्रगणेशाच्युतशक्तयः । मध्ये रवि, रुद्र, गणेश, अच्युत, शक्तिः ] मध्ये देवी, विष्णुशिवगणेशरवयः क्रमात् ॥ मध्येगणपतिर्विष्णुशिवसूर्याम्बिकास्तथा । ईशानादि क्रमेणैव पञ्चायतनपञ्चकम् ॥ ( वोपदेवः ) शम्भौ मध्यगते हरीनहरभूदेव्योहरशङ्करेभास्ये नागभूतारवौहरगणेशाजाम्बिकाः स्थापिता । देव्यां विष्णु हरैकदन्तरवयोलम्बोदरेऽजेश्वरेनाय्र्याः शङ्करभागतोऽतिसुखदाः व्यस्तास्तु ते हानिदाः । (आह्निकसूत्रावल्याम्) स्वस्थान वर्जितादेवाः शोकदुःखभयप्रदाः ॥ इति । शिवागारे झल्लकञ्च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशवाद्यम्माधुरीञ्च न वादयेत् ( इति पू० पं० भास्करे ) गृहे लिङ्गद्वयंनार्च्यं गणेशत्रितयं तथा । शक्तित्रयंतथा नार्च्यं शालग्रामद्वयंतथा । द्वौ शङ्खौ नार्चयेच्चैव भग्नांच प्रतिमांतथा । नार्च्चयेच्च तथा मत्स्यकूर्मादिदशकं तथा । द्वेचक्रे द्वारकायास्तु नार्च्यंसूर्यद्वयेतथा । शालग्रामाः समाः पूज्याः विषमा न कदाचन । विषमेषु त्रयं शस्तं समेषु द्वितयंनहि । ( इति भविष्यपुराणे )

इति श्री भाष्याचार्य पं० हरिनामदत्तशास्त्रितनयविद्यावाचस्पति पं० देवीप्रसादशास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य प्रथमखण्डे सविचारोपचारपूजनक्रमः ।

## इति अनुष्ठानदिनात्पूर्वकृत्यकर्मसंग्रहः

# अथ सूक्तसंग्रहः

श्रीवेदपुरुषाय नमः ॥ ओं हिरण्यवर्णांहरिणींसुवर्णरजतस्रूजाम् । चन्द्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥१॥ ताम्मऽआवहजातवेदोलक्ष्मीमनपगामिनीम् । यस्यांहिरण्यं विन्देयंगामश्वंपुरुषानहम् ॥ २ ॥ अश्वपूर्वांरथमध्यांहस्तिनांदप्रमोदि ( बोधि ) नीम् । श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥ ३ ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलन्तीं तृप्तांतर्पयन्तीम् । पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥ ४ ॥ चन्द्रांप्रभासांयशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदाराम् । तांपद्मनेमींशरणमहंप्रपद्येऽअलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ ५ ॥ आदित्यवर्णेतपसोऽधिजातोवनस्पतिस्तववृक्षोऽथ विल्वः । तस्यफलानितपसानुन्दतुमायान्तरायाश्चबाह्याऽअलक्ष्मीः ॥ ६ ॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह । प्रादुर्भूतोस्मिराष्ट्रेऽस्मिन्कीर्तिमृद्धिंददातुमे ॥ ७ ॥ क्षुत्पिपासामलाज्येष्ठामलक्ष्मीर्नाशयाम्यहम् । अभूतिमसमृद्धिंच सर्वांनिर्णुदमेगृहात् ॥ ८ ॥ गन्धद्वारांदुराधर्षांनित्यपुष्टां

( मदनरत्ने ) श्रीसूक्तं पावमानं च सोमसूक्तं सुमङ्गलम् । शान्त्यध्यायं चैन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ ॥ ( द्वारपालौ पठेतामितिशेषः )

करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥ कर्दमेन प्रजाभूता मयि सम्भव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नी च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् । सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो मम आवह ॥१३॥ आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मम आवह ॥ १४ ॥ तां म ऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥ १५ ॥ इति श्रीसूक्तम् ॥

## ❀ अथ पवमानसूक्तम् ❀

ओं स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥ वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥ अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥ त्वामच्छा चरामसि तदिदर्थं दिवे दिवे । इन्द्रो त्वे न आशसः ॥ ५ ॥ पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥

तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश । स्वसारःपार्येदिवि ॥ ७ ॥ तमींहिन्वंत्यग्रुवोधमंतिवाकुरंहृतिम् । त्रिधातुवारणंमधु ॥ ८ ॥ अभी३ममघ्न्याउतश्रीणंतिधेनवःशिशुम् । सोममिन्द्रायपातवे ॥ ९ ॥ अस्येदिन्द्रोमेदष्वाविश्वावृत्राणिजिघ्नते । शूरोमघाचमंहते ॥ १० ॥ । २ । पवस्वदेववीरतिपवित्रंसोमरंह्या । इन्द्रमिन्दोवृषाविश ॥ ११ ॥ आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः । आयोनिंधर्णसिःसदः ॥ १२ ॥ अधुक्षतप्रियमधुधारासुतस्यवेधसः । आपोवसिष्ठसुक्रतुः ॥ १३ ॥ महान्तंत्वामहीरन्वापोअर्षन्ति सिन्धवः । यद्गोभिर्वासयिष्यसे ॥ १४ ॥ समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः । सोमःपवित्रेअस्मयुः ॥ १५ ॥ । ३ । अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः । संसूर्येणरोचते ॥ १६ ॥ गिरस्तइन्दओजसामर्मृज्यन्तेअपस्युवः । याभिर्मदायशुंभसे ॥ १७ ॥ तन्त्वामदायघृष्वयउलोककृत्नुमीमहे । तवप्रशस्तयोमहीः ॥ १८ ॥ अस्मभ्यमिंदविंद्रयुर्मध्वःपवस्वधारया । पर्जन्योवृष्टिमाँइव ॥ १९ ॥ गोषाइन्दोनृषाअस्यश्वसावाजसाउत । आत्मायज्ञस्यपूर्व्यः ॥ २० ॥ ४ । एषदेवोअमर्त्यःपर्णवीरिवदीयति । अभिद्रोणान्यासदम् ॥ २१ ॥ एषदेवोविपाकृतोतिह्वरांसिधावति । पवमानोअदाभ्यः ॥ २२ ॥

एषदेवोविपन्युभिःपवमानऋतायुभिः। हरिर्वाजायमृज्यते ॥ २३ ॥ एषविश्वानिवार्याशूरोयन्निवसत्वभिः । पवमानःसिषासति ॥ २४ ॥ एषदेवोरथर्यतिपवमानोदशस्यति । आविष्कृणोतिवग्वनुम् ॥ २५ ॥ ५ । एषविप्रैरभिष्टुतोयोदेवोविगाहते । दधद्रत्नानिदाशुषे ॥ २६ ॥ एषदिवंविधावतितिरोरजांसिधारया। पवमानःकनिक्रदत् ।२७। एषदिवंव्यासरत्तिरोरजांस्यस्पृतः ।पवमानःस्वध्वरः ॥ २८ ॥ एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः । हरिःपवित्रेअर्षति ॥ २९ ॥ एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः । धारयापवतेसुतः ॥ ३० ॥ ६ । सनाचसोमजेषिचपवमानमहिश्रवः । अथानोवस्यसस्कृधि ॥ ३१ ॥ सनाज्योतिःसनास्वर्विश्वाचसोमसौभगा । अथानोवस्यसस्कृधि ॥ ३२ ॥ सनादक्षमुतक्रतुमपसोममृधोजहि । अथानोवस्यसस्कृधि ॥ ३३ ॥ पवीतारःपुनीतनसोममिन्द्रायपातवे । अथा० धि ॥ ३४ ॥ त्वंसूर्येनआभजतवक्रत्वातवोतिभिः । अथा० धि ॥ ३५ ॥ ७ तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यम् । अथा० धि ॥ ३६ ॥ अभ्यर्षस्वायुधसोमद्विबर्हसंरयिम् । अथा० धि ॥ ३७ ॥ अभ्यर्षानपच्युतोरयिंसमत्सुसासहिः । अ० धि ॥ ३८ ॥ त्वांयज्ञैरवीवृधन्पवमानाविधर्माणि । अथा० धि ॥ ३९ ॥

रयिंनश्चित्रमश्विनामिन्दोविश्वायुमाभर । अथा० धि ॥ ४० ॥ ८ । समिद्धोविश्वतस्पतिः पवमानोविराजति । प्रीणन्वृषाकनिक्रदत् ॥ ४१ ॥ तनूनपात्पवमानःशृंगेशिशानोअर्षति । अन्तरिक्षेणरारंजत् ॥४२॥ ईळेन्यः पवमानोरयिर्विराजति द्युमान् । मधोर्धाराभिरोजसा ॥ ४३ ॥ बर्हिःप्राचीनमोजसापवमानःस्तृणन्हरिः । देवेषुदेवईयते ॥ ४४ ॥ उदातैर्जिहतेबृहद्वारोदेवीर्हिरण्ययीः पवमानेनसुष्टुताः ॥ ४५ ॥ ६ सुशिल्पेबृहतीमहीपवमानोवृषण्यति । नक्तोषासानदर्शते ॥ ४६ ॥ उभादेवानृचक्षसाहोतारादैव्याहुवे । पवमानइन्द्रोवृषा ॥ ४७ ॥ भारतीपवमानस्यसरस्वतीळामही । इमंनोयज्ञमागमन्तिस्रोदेवीः सुपेशसः ॥ ४८ ॥ त्वष्टारमग्रजांगोपांपुरोयावानमाहुवे । इंदुरिंद्रोवृषाहरिःपवमानःप्रजापतिः ॥ ४९ ॥ वनस्पतिंपवमानमध्वासमङ्ग्धिधारया । सहस्रवल्शंहरितंभ्राजमानंहिरण्ययम् ॥ ५० ॥ १० । विश्वेदेवाःस्वाहाकृतिंपवमानस्यागत । वायुर्बृहस्पतिः सूर्य्योग्निरिन्द्रःसजोषसः ॥ ५१ ॥ मंद्रयासोमधारयावृषापवस्वदेवयुः । अव्योवारेष्वस्मयुः ॥ ५२ ॥ अभित्यंमद्यंमदामिन्दविन्द्रइतिक्षर । अभिवाजिनोअर्वतः ॥५३॥ अभित्यंपूर्व्यंमदंसुवानोऽर्षपवित्रआ । अभिवाजमुतश्रवः ॥५४॥ अनुद्रप्सासइंदवआपोनप्रवता

सरत् । पुनानाइंद्रमाशत ॥ ५९ ॥ ११ यमत्यमिववाजिनं मृजंतियोषणोदश । वनेक्रीडंतमत्यविम् ॥ ५६ ॥ तंगोभिर्वृषणंरसंमदायदेववीतये । सुतंभरायसंसृज ॥ ५७ ॥ देवोदेवायधारयेन्द्रायपावतेसुतः । पयोयदस्यपीपयत् ॥५८॥ आत्मायज्ञस्यरंह्यासुष्वाणःपवतेसुतः । प्रत्नंनिपातिकाव्यम् ॥ ५९ ॥ एवापुनानइंद्रयुर्मदम्मदिष्ठवीतये । गुहाचिद्दधिषेगिरः ॥ ६० ॥ १२ । असृग्रमिंदवःपथाधर्मन्नृतस्यसुश्रियः । विदानाअस्ययोजनम् ॥ ६१ ॥ प्रधारामध्वोअग्रियोमहीरपोविगाहते । हविर्हविष्षुवंद्यः ॥ ६२ ॥ प्रयुजोवाचोअग्रियोवृषावचक्रदद्वने । सद्माभिसत्योअध्वरः ॥ ६३॥ परियत्काव्याकविर्नृम्णावसानोअर्षति । स्ववार्जीसिषासति ॥ ६४ ॥ पवमानोअभिस्पृधोविशोराजेवसीदति । यदीमृण्वंतिवेधसः ॥ ६५ ॥ १३ । अव्योवारेपरिप्रियोहरिर्वनेषुसीदति । रेभोवनुष्यतेमती ॥ ६६ ॥ सवायुमिन्द्रमाश्विनासाकंमदेनगच्छति । रणायोअस्यधर्मभिः ॥ ६७ ॥ आमित्रावरुणाभगंमध्वःपवंतऊर्मयः । विदानाअस्यशक्मभिः ॥ ६८ ॥ अस्मभ्यंरोदसीरयिंमध्वोवाजस्यसातये । श्रवोवसूनिसंजितम् ॥ ६९ ॥ एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् । वर्धतोअस्यवीर्यम् ॥ ७० ॥ पुनानासश्चमूषदो

गच्छन्तोऽवायुमश्विना । तेनोधातुसुवीर्य्यम् ॥ ७१ ॥ इन्द्रस्यसोमराधसेपुनानोहार्दिचोदयऋतस्ययोनिमासदम् ॥ ७२ ॥ मृजंतित्वादशाचिपोहिन्वंतिसप्तधीतयः । अनुविप्राअमादिषुः ॥ ७३ ॥ देवेभ्यस्त्वा मदा यकंसृजानमतिमेष्यः । संगोभिर्वासयामसि ॥ ७४ ॥ पुनानःकलशेष्वावस्त्राण्यरुषोहरिः । परिगव्यान्यव्यत ॥ ७५ ॥ १५ । मघोनआपवस्वनोजहिविश्वाअपद्विषः । इंदोसखायमाविश ॥ ७६ ॥ वृष्टिंदिवपरिस्रवद्युम्नंपृथिव्या अधि । सहोनःसोमपृत्सुधाः ॥ ७७ ॥ नृचक्षसंत्वावयमिंद्र पीतंस्वर्विदम् । भक्षीमहिप्रजामिषम् ॥ ७८ ॥ परिष्ठिया दिवःकविर्वयांसिनप्त्योर्हितः । सुवानोयातिकविक्रतुः ॥ ७९ ॥ प्रप्रक्षयायपत्यंसेजनायजुष्टोअद्रुहे । वीत्यर्षचनिष्ठ या ॥ ८० ॥ १६ । ससूनुर्मातराशुचिर्जातोजातेअरोच यत् । महान्महीऋतावृधा ॥ ८१ ॥ ससप्तधीतिभिर्हितो नद्योऽजिन्वदद्रुहः । याएकमक्षिवावृधुः ॥ ८२ ॥ ताअभिसंतमस्तृतंमहेयुवानमादधुः । इंदुमिंद्रतवव्रते ॥ ८३ ॥ अभिवह्निरमर्त्यःसप्तपश्यतिवावहिः । क्रिविर्देवीरतर्पयत् ॥ ८४ ॥ अवाकल्पेषुनःपुमस्तमांसिसोमयोध्या । तानि पुनानजंघनः ॥ ८५ ॥ १७ । नूनव्यसेनवीयसेसूक्तायसा

घयापृथः । पूतवद्रोचयारुचः ॥ ८६ ॥ पवमानम हिश्रवोगामश्वंरासिवीरवत् । सनांमेधांसनास्वः ॥ ८७ ॥ प्रस्वानासोरथाइवार्वतोनश्रवस्यवः । सोमासो रायेऽअक्रमुः ॥ ८८ ॥ हिन्वानासोरथाइवदधान्विरेगभ-स्त्योः । भरासःकारिणामिव ॥ ८९ ॥ राजानोनप्रशस्तिभिःसोमासोगोभिरंजते । यज्ञोनसप्तधातृभिः ॥ १९ ॥ १८ परिसुवानासइंदवोमदायबर्हिणागिरा । सुताऽअर्षतिधारया ॥ ९१ ॥ आपानासोविवस्वतोजनंतउषसोभगम् । सूराअण्वं वितन्वते ॥ ९२ ॥ अपद्वारामतीनांप्रत्नाऽऋण्वंतिकारवः । वृष्णोहरसआयवः ॥ ९३ ॥ समीचीनासआसतेहोतारःस प्तजामयः । पदमेकस्यपिप्रतः ॥ ९४ ॥ नाभानाभिंनऽआ ददेचक्षुश्चित्सूर्य्येसचा । कुवेरपत्यमादुहे ॥ ९५ ॥ १९ । अभिप्रियादिवस्पदमध्वर्युभिर्गुहाहितम् । सूरःपश्यतिचक्षसा ॥ ९६ ॥ उपास्मैगायतानरःपवमानायेन्दवे । अभिदेवांइयक्षते ॥ ९७ ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः । देवंदेवायदेवयुः ॥ ९८ ॥ सनःपवस्वशंगवेशंजनायशमर्वते । शंराजन्नोषधीभ्यः ॥ ९९ ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे । सोमायगाथमर्चत ॥ १०० ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन । मधावाधावतामधु ॥ १०१ ॥

नमुसेदुपसीदतदुध्नेदुभिश्रीणीतनइन्दुमिन्द्रेदधातन॥१०२॥ अमित्रहाविचर्षणिःपर्वस्वसोमशंगवेंदेवेभ्योत्र्यनुकामकृत् १०३ इन्द्रायसोमुपातवेमदायपरिषिच्यसे । मनश्चिन्मनसस्पतिः ॥ १०४ ॥ पवमानसुवीर्यंरयिंसोमरिरीहिनः । इंदुविंद्रेणनो युजा ॥ १०५ ॥ २१ । सोमाश्रसृगमिंदवःसुताऋतस्यसादने । इन्द्रायमधुमत्तमाः१०६ आभिविप्राश्रनूषतगावोवत्संनमातरः । इन्दुंसोमस्यपीतये ॥ १०७ ॥ मदच्युत्क्षेतिसादने सिन्धोरुर्माविपाश्चित् । सोमोगौरीत्र्यधिश्रितः ॥ १०८ ॥ दिवोनाभाविचक्षणोत्योवारेमहीयते । सोमोयःसुक्रतुःकविः ॥ १०९ ॥ यःसोमःकलशेष्वाँत्र्यंतःपवित्रआहितः । तमिंदः परिषस्वजे ॥ ११० ॥ २२ । प्रवाचमिंदुरिष्यातिसमुद्रस्याधि विष्टपि । जिन्वत्कोशंमधुश्च्युतम् ॥ १११ ॥ नित्यस्तोत्रो वनस्पतिर्धीनामंतःसवर्दुघः । हिन्वानोमानुषायुगा ॥११२॥ आभिप्रियादिवस्पदासोमोहिन्वानोत्र्यर्षति । विप्रस्यधारया कविः ॥ ११३ ॥ आपवमानधारयरयिंसहस्रवर्चसम् । अस्मे इंदोस्वाभुवम् ॥११४॥ २३ । इति ऋग्वेदीयं पवमानसूक्तम् ॥

## ❀ अथ सोमसूक्तम् ❀

त्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपन्थाम् । तवप्रणीतिपितरोनइन्द्रोदेवेषुरत्नमभजन्तधीराः ॥ १ ॥

त्वंसोमक्रतुभिःसुक्रतुर्भूस्त्वंदक्षैःसुदक्षोविश्ववेदाः । त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ २ ॥ राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरंतवसोमधाम । शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योअर्य्यमेवासिसोम ॥ ३ ॥ यातेधामानिदिवियापृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नोविश्वैः सुमनाअहेलन्राजन्त्सोमप्रतिहव्यागृभाय ॥ ४ ॥ त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा । त्वंभद्रोअसिक्रतुः॥५॥ त्वंचसोमनोवशोजीवातुंनमरामहे । प्रियस्तोत्रोवनस्पतिः ॥ ६ ॥ त्वंसोममहेभगंत्वंयूनऋतायते । दक्षंदधासिजीवसे ॥ ७ ॥ त्वंनःसोमविश्वतोरक्षाराजन्नघायतः । नरिष्येत्वावतःसखा ॥ ८ ॥ सोमयास्तेमयोभुवऽऊतयःसन्तिदाशुषे । ताभिर्नोअविताभव ॥ ९ ॥ इमंयज्ञमिदंवचोजुजुषाणउपागहि । सोमत्वंनोवृधेभव ॥ १० ॥ सोमगीर्भिष्ट्वावयंवर्धयामोवचोविदः । सुमृडीकोनऽआविश ॥ ११ ॥ गयस्फानोऽअमीवहावसुवित्पुष्टिवर्द्धनः । सुमित्रःसोमनोभव ॥ १२ ॥ सोमरारन्धिनोहृदिगावोनयवसेष्वा । मर्यऽइवस्वओक्ये ॥ १३ ॥ यःसोमसख्येतवरारणद्देवमर्त्यः । तंदक्षःसचतेकविः ॥ १४ ॥ उरुष्याणोऽअभिशस्तेःसोमनिपाह्यंहसः । सखासुशेवऽएधिनः ॥ १५ ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् । भवावाजस्यसङ्गथे ॥ १६ ॥ आप्यायस्वमदिन्त

मसोमविश्वेभिरंशुभिः । भवानःसुश्रवस्तमःसखावृधे ॥ १७ ॥ सन्तेपयाᳬसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः । आप्यायमानोअमृतायसोमदिविश्रवाᳬस्युत्तमानिधिष्व ॥ १८ ॥ यातेधामानिहविषायजन्तिताते विश्वापरिभूरस्तुयज्ञम् । गयस्फानःप्रतरणःसुवीरोऽवीरहाप्रचरासोमदुर्य्यान् ॥ १९ ॥ सोमोधेनुᳬसोमोऽअर्वन्तमाशुसोमोवीरङ्कर्मण्यन्ददाति । सादन्यंविदथ्यᳬसभेयम्पितृश्रवणंयोददाशदस्मै ॥ २० ॥ अषाढंयुत्सुपृतनासुपप्रिᳬस्वर्षामप्सांवृजनस्यगोपाम् । भरेषुजाᳬसुक्षितिᳬसुश्रवसञ्जयन्तन्त्वामनुमदेमसोम ॥ २१ ॥ त्वमिमाऽओषधीःसोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः । त्वमाततन्थोर्व्वन्तरिक्षन्त्वंज्योतिषाවितमोववर्थ ॥ २२ ॥ देवेननोमनसादेवसोमरायोभागᳬसहसावन्नभियुध्य । मात्वातनदीशिषेवीर्य्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ इतिसोमसूक्तम् ॥

## ॥ अथ सुमङ्गलसूक्तम् ॥

ओं कनिक्रदज्जनुषम्प्रब्रुवाणइयर्तिवाचमरितेवनावम् । सुमङ्गलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ १ ॥ मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्तापित्र्यामनुप्रदिशङ्कनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥ २ ॥

अवंकंदंदद्विणतोगृहाण।सुमङ्गलोभद्रवादीशकुंते । मानः स्तेनईशतमाघशंसोवृहद्वदेमविदथेसुवीराः ॥ ६ ॥ इति सुमङ्गलसूक्तम् ॥

॥ अथ शान्तिकाध्यायः ॥

ओं शन्नइन्द्राग्नीभवतामवोभिःशन्नइन्द्रावरुणारातहव्या । शमिन्द्रासोमासुवितायशंयोःशन्नऽइन्द्रापूषणावाजसातौ ॥ १ ॥ शन्नोभगःशमुनःशंसोअस्तुशन्नःपुरंधिःशमुसन्तुरायः । शन्नःसत्यस्यसुयमस्यशंसःशन्नोअर्यमापुरुजातोअस्तु ॥ २ ॥ शन्नोधाताशमुधर्तानोअस्तुशन्नउरूचीभवतुस्वधाभिः । शंरोदसीवृहतीशन्नोअद्रिःशन्नोदेवानांसुहवानिसंतु ॥ ३ ॥ शन्नोअग्निर्ज्योतिरनीकोअस्तुशन्नोमित्रावरुणावश्विनाशम् । शन्नःसुकृतांसुकृतानिसन्तुशन्नइषिरोअभिवातुवातः ॥ ४ ॥ शन्नोद्यावापृथिवीपूर्वहूतौशमन्तरिक्षंदृशयेनोअस्तु । शन्नओषधीर्वनिनोभवन्तुशन्नोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ शन्नऽइन्द्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः । शन्नोरुद्रोरुद्रेभिर्जलाषः शंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ ६ ॥ शन्नःसोमोभवतुब्रह्मशन्नःशन्नोग्रावाणःशमुसन्तुयज्ञाः । शन्नःस्वरूणांमितयोभवन्तुशन्नःप्रस्वःशम्वस्तुवेदिः ॥ ७ ॥ शन्नः

सूर्य्यउरुचक्षाउदेतुशन्नश्चतस्रःप्रदिशोभवन्तु । शन्नःपर्वता ध्रुवयोभवन्तुशन्नःसिन्धवःशमुसन्त्वापः ॥ ८ ॥ शन्नोअदितिर्भवतुव्रतेभिःशन्नोभवन्तुमरुतःस्वर्काः । शन्नोविष्णुःशमुपूषानोअस्तुशन्नोभवित्रंशम्वस्तुवायुः ॥ ९ ॥ शन्नोदेवःसवितात्रायमाणःशन्नोभवन्तूषसोविभातीः । शन्नःपर्जन्योभवतुप्रजाभ्यःशन्नःक्षेत्रस्यपतिरस्तुशंभुः ॥ १० ॥ शन्नोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु । शमभिषाचःशमुरातिषाचःशन्नोदिव्याःपार्थिवाःशन्नोअप्याः ॥ ११ ॥ शन्नःसत्यस्यपतयोभवंतुशन्नोअर्वन्तःशमुसन्तुगावः । शन्नऋभवःसुकृतःसुहस्ताःशन्नोभवन्तुपितरोहवेषु ॥ १२ ॥ शन्नोअजएकपाद्देवोअस्तुशन्नोऽहिर्बुध्न्य꣡ःसंसमुद्रः । शन्नोअपांनपात्पेरुरस्तुशन्नःपृश्निर्भवतुदेवगोपाः ॥ १३ ॥ आदित्यारुद्रावसवोजुषन्तेदंब्रह्मक्रियमाणंनवीयः । शृण्वन्तुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥ १४ ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राअमृताऋतज्ञाः । तेनोरासंतामुरुगायमद्ययूयम्पातस्वस्तिभिःसदानः ॥ इति शान्तिकाध्यायः ॥

## ॥ अथेन्द्रसूक्तम्

ओंयोजातएवप्रथमोमनस्वान्देवोदेवान्क्रतुनापर्य्यभूषत् ।

यस्यशुष्माद्रोदसीअभ्यसेतांनृम्णस्यमह्नासजनासइन्द्रः ॥ १ ॥ यःपृथिवींव्यथमानामदृंहद्यःपर्वतान्प्रकुपिताँअरम्णात। योअन्तरिक्षंविममेवरीयोयोद्यामस्तभ्नात्सजनासइन्द्रः ॥ २ ॥ योहत्वाहिमरिणात्सप्तसिन्धून्योगाउदाजदपधावलस्य। योअश्मनोरन्तरग्निंजजानसंवृक्समत्सुसजनासइन्द्रः॥ ३ ॥ येनेमाविश्वाच्यवनाकृतानियोदासवर्णमधरंगुहाकः । श्वघ्नीवयोजिगीवाँल्लक्षमाददर्यःपुष्टानिसजनासइन्द्रः ॥ ४ ॥ यस्मापृच्छन्तिकुहसेतिघोरमुतेमाहुर्नैषोअस्तीत्येनम् । सोअर्यःपुष्टिर्विजइवमिनातिश्रदस्मैधत्तसजनासइन्द्रः ॥ ५ ॥ योरन्ध्रस्यचोदितायःकृशस्ययोब्राह्मणोनाधमानस्यकीरेः । युक्तग्राव्णोयोऽवितासुशिप्रःसुतसोमस्यसजनासइन्द्रः॥ ६ ॥ यस्याश्वासःप्रदिशियस्यगावोयस्यग्रामायस्यविश्वेरथासः । यःसूर्यंयःउषसंजजानयोअपांनेतासजनासइन्द्रः ॥ ७ ॥ यंक्रन्दसीसंयतीविह्वयेतेपरेवरउभयाअमित्राः । समानंचिद्रथिमातस्थिवांसानानाहवेतेसजनासइन्द्रः ॥ ८ ॥ यस्मान्नऋतेविजयन्तेजनासोयंयुध्यमानाअवसेहवन्ते । योविश्वस्यप्रतिमानंबभूवयोअच्युतच्युत्सजनासइन्द्रः ॥ ९ ॥ यःशश्वतोमह्येनोदधानानमन्यमानाञ्छर्वाजघान । यःशर्धतेनानुददा

तिशृध्यांयोदस्योर्हंतासजंनासइन्द्रः ॥ १० ॥ यःशंबरे पर्वतेषुक्षियंतंचत्वारिंश्यांशरद्यन्वविंदत् । योओजा यमानंयोअहिंजघानदानुंशयांनंसजंनासइन्द्रः ॥ ११ ॥ यः सप्तरांश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवेसप्तसिन्धून् । योरौहिणमस्फुंरद्वज्रंबाहुर्यामारोहंतंसजंनासइन्द्रः ॥ १२ ॥ द्यावाचिदस्मैपृथिवीनंयेतेशुष्मांचिदस्यपर्वताभयंते । यः सोमपानिचितोवज्रबाहुर्योवज्रहस्तःसजंनासइन्द्रः ॥ १३ ॥ यःसुन्वन्तमवंतियःपचंतंयःशंसंतंयःशंसमानमूती । यस्यब्रह्म वर्धनंयस्यसोमोयस्येदंराधःसजंनासइन्द्रः ॥ १४ ॥ यःसुन्वते पचंतेदुध्रआचिद्वाजंदर्दर्षिसाकिलासिसत्यः । वयंतइन्द्रविश्वहं प्रियासःसुवीरासोविदथमावंदेम ॥ १५ ॥ इतीन्द्रसूक्तम् ।

## ॥ अथ रक्षोघ्नसूक्तम् ॥

ॐ कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँ२॥ इभेन । तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तवंभ्रमासऽआशुयापतन्त्यनुःस्पृशधृषताशोशुंचानः । तपूंष्यग्नेजुह्वापतङ्गानसंन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृंजतूर्णितमोभवापायुर्विशोऽ अस्याअदंब्धः योनोदूरेअघशंसोयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ३उदंग्नेतिष्ठ

प्रत्यातंनुष्वन्युमित्रॉं२॥ ओषतातिग्महेतेयोनोअरातिंसमि धानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्ध्वोभवप्रतिवि ध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने । अवस्थिरातंनुहियातु जूनाँजामिमजामिंप्रमृणीहिशत्रून् । ( अग्नेष्ट्वातेजसासाद यामि ) ॥ ५ ॥

सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् । विश्वान्य स्मैसुदिनानिरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ ६ ॥ सेदग्नेअ स्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः । पिप्रिषतिस्वआ युषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः॥७॥अर्चामितेसुमतिंघोष्य र्वाक्संतेवावाजजरतामिपंगीः स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्रा णिधारयेरनूद्युत् ॥८॥इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनु द्यून्क्रीडंतस्त्वासुमनसःसमेषाभिद्युम्नातस्थिवांसोजनानाम्॥९॥यस्त्वा स्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेनतस्यत्राताभवसितस्यस खायस्तआतिथ्यमानुषग्जुजोषत् ॥१०॥ महोरुजामिबंधुतावचोभि स्तन्मापितुर्गोतमादन्वियाय । त्वंनोअस्यवचसश्चिकिद्धिहोतर्य विष्ठासुक्रतोदमूनाः ॥ ११ ॥ अस्वप्नजस्तरणयःसुशेवाअतंद्रासोऽ वृकाअश्रमिष्ठाः । तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूरः॥१२॥ येपायवोमामतेयंतेअग्नेपश्यन्तोअन्धंदुरितादरक्षन् । ररक्षताता न्त्सुकृतोविश्ववेदादिप्सन्तइद्रिपवोनाहदेभुः ॥ १३ ॥ त्वयावयंस धन्यस्त्वोतास्तवप्रणीत्यश्यामवाजान् । उभाशंसासूदयसत्यता तेऽनुष्ठुयाकृणुह्यह्रयाण ॥ १४ ॥ अथातेअग्नेसमिधाविधेमप्रति स्तोमंशस्यमानंगृभाय । दहाशसोरक्षसःपाह्यस्मान्द्रुहोनिदोमित्र महोअवद्यात् ॥ इतिरक्षोघ्नसूक्तम् ॥

## ॥ अथ जापकजप्यानिसूक्तानि ॥

(तत्रादौ रात्रिसूक्तं) ॐ रात्रीव्यख्यदायतीपुरुत्रा देव्यक्षभिः । विश्वाअधिश्रियोधित ॥ १ ॥ ओर्वप्राअमर्त्यानिवतोदेव्युद्वतः । ज्योतिषाबाधतेतमः ॥ २ ॥ निरुस्वसारमस्कृतोषसंदेव्यायती । अपेदुहासतेतमः ॥ ३ ॥ सानोअद्ययस्यावयंनितयामन्नविक्ष्महि । वृक्षेनवसतिंवयः ॥ ४ ॥ निग्रामासोअविक्षतनिपद्वन्तोनिपक्षिणः । निश्येनासश्चिदर्थिनः ॥ ५ ॥ यावयावृक्यंवृकंयवयस्तेनमूर्म्ये । अथानःसुतराभव ॥ ६ ॥ उपमापिपेशित्तमःकृष्णव्यक्तमस्थित । उपक्षणेवयातय ॥ ७ ॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः । रात्रिस्तोमंनजिग्युषे ॥ ८ ॥ इतिरात्रिसूक्तम् ॥

## ॥ अथ रौद्रसूक्तम् ॥

ओंइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसद्विपदेचतुष्पदे विश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ १ ॥ मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते । यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ २ ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः । सुम्नायन्निद्विशोऽअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ ३ ॥

त्वेषंव्वयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे । आरेअस्मद्दैव्यं हेडोअस्यतुसुमतिमिन्द्रयस्यावृणीमहे ॥ ४ ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे हस्तेविभ्रद्भेषजावार्याणि शर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ ५ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्द्धनम् । रास्वाचनोऽअमृतमर्तभोजनंत्मनेतोकायतनयायमृड ॥ ६ ॥ मानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् । मानोवधीः पितरम्मोतमातरम्मानःप्रियास्तन्वोरुद्ररीरिषः ॥ ७ ॥ मानस्तोकेतनयेमानआयौमानोगोषुमानोऽअश्वेषुरीरिषः । वीरान्मानोरुद्रभामिनोवधीर्हविष्मन्तःसदमित्वाहवामहे ॥ ८ ॥ उपतेस्तोमान्पशुपाइवाकंररास्वापितर्मरुतांसुम्नमस्मे भद्राहितेसुमतिर्मृडयत्तमाथावयमवइत्तेवृणीमहे ॥ ९ ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरायसुम्नमस्मेतेऽअस्तु । मृडाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छाद्विबर्हाः ॥ १० ॥ अवोचामनमोऽअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ ११ ॥ इतिरुद्रसूक्तम् ।

*रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् । जपेयुः पौरुषं सूक्तं पूर्वतोवह्वृचौ पृथक् । (जपेतामिति शेषः) ।

ततः पवमानं सुमङ्गलं च जपेत् । पवमानं स्वदिष्टया इत्यादि सुमङ्गलं कनिक्रदित्यादि । पुरुषसूक्तम् प्रसिद्धतरम् । सहस्रशीर्षा-पुरुष इत्यारभ्यषोडशर्चात्मकम् ॥

## ॥ अथ रुद्रसूक्तम् ॥

नमस्ते १ याते २ यामिषुम् ३ शिवेनत्वचसा ४ अध्यवोचत् ५ असौयः ६ असौयः ७ नमोस्तु ८ प्रमुञ्च ९ विज्ज्यन्धनुः १० याते ११ परिते १२ अवतत्यधनुः १३ नमस्ते १४ मानः १५ मानस्तोके १६ नमोहिरण्यबाहवे १७ नमोबभ्लुशाय १८ नमोरोहिताय १९ नमःकृत्स्नायतया २० नमोऽवञ्चते २१ नमऽउष्णीषिणे २२ नमोविसृजद्भ्यः २३ नमःसभाभ्यः २४ नमोगणेभ्यः २५ नमस्सेनाभ्यः २६ नमस्तक्षभ्यः २७ नमश्श्वभ्यः २८ नमः कपर्दिने २९ नमोह्रस्वाय ३० नमऽआशवे ३१ नमोज्ज्येष्ठाय ३२ नमस्सोभ्याय ३३ नमोवन्याय ३४ नमोविल्मिने ३५ नमोधृष्णवे ३६ नमस्स्रुत्याय ३७ नमःकूप्याय ३८ नमोवात्याय ३९ नमः शङ्गवे ४० नमःशम्भवाय ४१ नमः पार्याय ४२ नमःसिकत्याय ४३ नमोव्रज्याय ४४ नमः शुष्क्याय ४५ नमः पर्णाय ४६ द्रापेऽअन्धसः ४७ इमा

⊙ दक्षिणे द्वारपालौ तु रुद्रान् पुरुषसूक्तकम् । श्लोकाध्यायं शुक्रियश्च मण्डलाध्यायमेव च । ( यजुर्वेदिनो पठेतामिति शेषः )

रुद्राय ४८ यातेँ ४६ परिनः ५० मीढुष्टमशिवतम ५१ ॆविकिरिद्रविलोहित ५२ सहस्राणिसहस्रशः ५३ असङ्ख्यातासहस्राणि ५४ अस्मिन्महति ५५ नीलग्रीवाःशितिकण्ठाः ५६ नीलग्रीवाः शितिकण्ठाः ५७ येवृक्षेषु ५८ येभूतानाम ५६ येपथाम् ६० येतीर्थानि ६१ येन्नेषु ६२ यऽएतावन्तः ६३ नमोस्तु ६४ नमोस्तु ६५ नमोस्तु ६६ इतिरुद्र० ॥

## ॥ अथ पुरुषसूक्तम् ॥

सहस्रशीर्षापुरुषः१पुरुषऽएव२एतावानस्य३त्रिपादूर्ध्वः४ ततोविराट्५तस्माद्यज्ञात् ६ तस्माद्यज्ञात्७तस्मादश्वाः ८ तंयज्ञम् ६ यत्पुरुषम् १० ब्राह्मणोस्य ११ चन्द्रमामनसः १२ नाभ्याऽआसीत १३ यत्पुरुषेण १४ सप्तास्यासन् १५ यज्ञेनयज्ञम् १६ ॥ इतिपुरुषसूक्तम् ॥

## ॥ अथश्लोकाध्यायः ॥

देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय । दिव्योगन्धर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाचन्नःस्वदतु ॥ १ ॥ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् ॥ २ ॥ विश्वानिदेवसवितर्दुरितानिपरासुव । यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ विभक्तारंहवामहे

सौँश्चित्रस्युराधसः । सावितारन्नृचक्षसम् ॥ ४ ॥ ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्मरुद्भ्योवैश्यन्तपसेशूद्रन्तमसेतस्करन्नारकायवीरहणम्पाप्मनेक्लीवमाक्रयायाऽअयोगूङ्कामायपूँश्चलूमतिक्रुष्टायमागधम् ॥ ५ ॥ नृत्तायसूतङ्गीतायशैलूषन्धर्म्मायसभाचरन्नरिष्ठायैभीमलन्नर्म्मायरेभꣳहसायकारिमानन्दायस्त्रीषखम्प्रमदेकुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायतक्षाणम् ॥ ६ तपसेकौलालम्मायायैकर्म्मारꣳरूपायमणिकारꣳशुभेवपꣳशरव्यायाऽइषुकारꣳहेत्यैधनुष्कारङ्कर्म्मणेज्याकारन्दिष्टायरज्जुसर्जम्मृत्यवे मृगयुमन्तकायाश्वनिनम् ॥ ७ ॥ नदीभ्यःपौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रायदुर्म्मदङ्गन्धर्वाप्सरोभ्योव्रात्यम्प्रयुग्भ्यऽउन्मत्तꣳसर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्य्यतायाऽअकितवम्पिशाचेभ्योविदलकारीय्यातुधानेभ्यःकण्टकीकारीम् ॥ ८ ॥ सन्धयेजारङ्गेहायोपपतिमार्त्यैपरिवित्तन्निर्ऋत्यैपरिविविदानमराध्याऽएदिधिषुःपतिन्निष्कृत्यै पेशस्कारीꣳसञ्ज्ञानायस्मरकारीम्प्रकामोद्यायोपसदंवर्णायानुरुधम्बलायोपदाम् ॥१०॥ उत्सादेभ्यःकुब्जम्प्रमुदेवामनन्द्वार्भ्यःस्रामꣳ स्वप्नायान्धमधर्म्मायबधिरम्पवित्रायभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्य्यादायैप्रश्नविवाकम् ॥

॥१०॥अर्म्मेभ्योहस्तिपञ्जवायाश्वपम्पुष्ट्यैगोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशङ्कीलालाय सुराकारम्भद्रायगृहपꣳश्रेयसेव्वित्तधमाद्ध्यक्ष्यायानुक्षत्तारम् ॥११॥भायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यव्विष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकाय परिवेष्टारन्देवलोकायपेशितारम्मनुष्यलोकायप्रकरितारꣳसर्व्वेभ्योलोकेभ्यऽउपसेक्तारमवऽऋत्यैव्वधायोपमन्थितारम्मेधायव्वासꣳपल्पूलीम्प्रकामायरजयित्रीम्॥१२॥ऋतयेस्तेनहृदयंव्वैरहत्यायपिशुनंव्विविक्त्यैक्षत्तारमौपद्रष्ट्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दम्प्रियायप्रियवादिनमरिष्ट्याऽ अश्वसादꣳस्वर्ग्गायलोकायभागदुघंव्वर्षिष्ठायनाकायपरिवेष्टारम्॥ १३ ॥ मन्यवेयस्तापङ्क्रोधायनिसरंयोगाययोक्तारꣳ शोकायाभिसर्तारङ्क्षेमायविमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनंव्वपुषेमानस्कृतꣳशीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारींयमायासूम ॥ १४ ॥ यमाययमसूमथर्व्वभ्योऽवतोकाꣳसंव्वत्सरायपर्य्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्त्वरीमिद्वत्सरायातिष्क्कद्वरींव्वत्सरायव्विजर्ज्जराꣳ संव्वत्सरायपलिक्क्नीमृभुभ्योजिनसन्धꣳसाद्ध्येभ्यश्चर्म्मम्नम् ॥ १५ ॥ सरोभ्योधैवरमुपस्थावराभ्योदाशंव्वैशन्ताभ्योबैन्दन्नड्वलाभ्यꣳशौष्कलम्पारायमार्ग्गार

मवारायकेवर्तन्तीर्थेभ्य ऽआन्दंविषमेभ्योमैनालंस्वनेभ्यः पर्णकङ्गुहाभ्यः किरातंसानुभ्योजम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥ १६ ॥ बीभत्सायैपौल्कसंवर्णायहिरण्यकारन्तुलायैवाणिजम्पश्चादोषायग्लाविनंविश्वेभ्योभूतेभ्यः सिध्मलम्भूत्यैजागरणमभूत्यैस्वपनमार्त्यैजनवादिनंव्यृद्ध्या ऽअपगल्भंसंशरायप्रच्छिदम् ॥ १७ ॥ अक्षराजायकितवङ्कृतायादिनवदर्शन्त्रेतायैकल्पिनन्द्वापरायाधिकल्पिनमास्कन्दायसभास्थाणुम्मृत्यवेगोव्यच्छमन्तकायगोघातङ्क्षुधेयोगांविकृन्तन्तम्भिक्षमाण ऽउपतिष्ठतिदुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम् १८ प्रतिश्रुत्काया ऽअर्तनङ्घोषायभषमन्तायबहुवादिनमनन्तायमूकंशब्दायाडम्बराघातम्महसेवीणावादङ्क्रोशायतूणवध्ममवरस्परायशङ्खध्मं वनायवनपमन्यतोरण्यायदावपम् ॥ १९ ॥ नर्म्मायपुंश्चलूंहसायकारिंयादसेशाबल्याङ्ग्रामण्यङ्गणकमभिक्रोशंकन्तान्महसे वीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृतायानन्दायतलवम् ॥ २० ॥ अग्नयेपीवानम्पृथिव्यैपीठसर्पिणंवायवेचाण्डालमन्तरिक्षायवंशनर्तिनन्दिवेखलतिंसूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः किर्मिरञ्चन्द्रमसेकिलासमन्हे शुक्लम्पिङ्गाक्षंरात्र्यैकृष्णम्पिङ्गाक्षम् ॥ २१ ॥ अथैतानष्टौविरूपानालभतेतिदीर्घञ्चाति

ह्रस्वश्चातिस्स्थूलश्चातिकृशश्चातिशुक्लश्चातिकृष्णश्चातिकुल्व श्चातिलोमशश्च । अशूद्राऽअब्राह्मणास्तेप्राजापत्याः । मागधः पुँश्चलीकितवःक्लीवो शूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ २२ ॥ इति श्लोकाध्यायः । (अन्यत्र) । ओं देवसवितरेष तेसोमस्तꣳरक्षस्वमात्वादभन् । एतत्त्वन्देवसोमदेवोदेवाँ२।ऽउ पागाइदमहम्मनुष्यान्त्सहरायस्पोषेणस्वाहा निर्वरुणस्यपा शान्मुच्ये ॥ १ ॥ अग्नेव्रतपास्त्वेव्रतपायातवतनूर्मय्य भूदेषासात्वयियोममतनूस्त्वय्यभूदियꣳसामामयि । यथायथन्नो व्रतपतेव्रतान्यनुमेदीक्षान्दीक्षापतिरमꣳस्तानुतपस्तपस्पतिः ॥ २ ॥ उरुविष्णोविक्क्रमस्वोरुक्षयायनस्कृधिघृतङ्घृतयो नेपिबप्रप्रयज्ञपतिन्तिरस्वाहा ॥ ३ ॥ अत्यन्याँ२।। अगाना न्याँ२।। उपागामर्वाक्त्वापरेभ्योविदम्परोऽवरेभ्यः । त न्त्वाजुषामहेदेवव्वनस्पतेदेवयज्ज्यायैदेवास्त्वादेवयज्ज्यायैजु षन्तांविष्णवेत्वाओषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ द्या म्मालेखीरन्तरिक्षम्माहिꣳसीःपृथिव्यासम्भव । अयꣳहित्वा स्वधितिस्तेतिजानःप्रणिनायमहतेसौभगाय । अतस्त्वन्देव व्वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयꣳरुहेम ॥ इति श्लोकाध्यायः ।

## ❀ अथ शुक्रियम् ❀

ऋचंवाचम् १ यन्मे २ भूर्भुवः ३ कयानः ४ कस्त्वा ५ अभीषुणः ६ कयात्वम् ७ इन्द्रोविश्वस्य ८ शन्नोमित्रः ९ शन्नोवातः १० अहानिशम् ११ शन्नः १२ स्योनापृथिवी १३ आपोहि १४ योवः १५ तस्माअरम् १६ द्यौः शान्तिः १७ दृतेदृंहमा १८ दृतेदृंहमा १९ नमस्ते २० नमस्ते २१ यतोयतः २२ सुमित्रियानः २३ तच्चक्षुः २४ इति शुक्रियम् ॥

## ॥ अथ मण्डलाध्यायः ॥

ओंयदेतन्मंडलंतपतितन्महदुक्थन्ताऽऋचःसऋचांलोकोथयदेतदर्चिर्दीप्यतेतन्महाव्रतंतानिसामानिससाम्नाँल्लोकोऽथयऽएषऽएतस्मिन्मण्डलेपुरुषःसोऽग्निस्तानियजूंषिसयजुषांल्लोकः ॥ १ ॥ सैषात्रय्येवविद्यातपतितद्धैतदप्यविद्वांसऽआहुस्त्रयीवाऽएषाविद्यातपतीतिवाग्घैवतत्पश्यन्तीतिवदति ॥ २ ॥ सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डलेपुरुषोथैतदमृतं यदेतदर्चिर्दीप्यतेतस्मान्मृत्युर्नम्रियतेमृते ह्यन्तस्तस्मादुनदृश्यतेमृतेह्यन्तः ॥ ३ ॥ तदेषश्लोकोभवतिअन्तरंमृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतम्मृत्यावमृतमाहितमित्येतस्मिन्हिपुरुषऽएतन्मण्डलं प्रतिष्ठितंतपतिमृत्युर्विवस्वन्तंय

स्तऽइत्यसौवाऽ आदित्योऽविवस्वानेषह्यहोरात्रेविवस्तेतमेष
वस्तेसर्वतोह्यनेनपरिवृतोमृत्योरात्मा॥विवस्वतीत्येतस्मिन्हिम
ण्डलऽएतस्यपुरुषस्यात्मैतदेषश्लोकोभवति ॥ ४ ॥ तयोऽर्वा
ऽएतयोरुभयोरेतस्यचार्चिषः एतस्यचपुरुषस्यैतन्मण्डलंप्रति
ष्ठातस्मान्महदुक्थम्परस्मैनशꣳसेद्देतांप्रतिष्ठांछिनदाइत्ये
ताꣳहसप्रतिष्ठांछिन्तेऽ योमहदुक्थंपरस्मैशꣳसतितस्मादु
क्थशसंभूयिष्ठंपरिचक्षते प्रतिष्ठाछिन्नोहिभवतीत्यधिदैवतम
९(अथाधियज्ञं)यदेतन्मण्डलंतपत्ययꣳसरुक्मोऽथयदेतदर्चि
र्दीप्यतेइदंतत्पुष्करपर्णमापोह्येताआपःपुष्करपर्णमथयऽएषऽए
तस्मिन्मण्डलेपुरुषोयमेवसयोयꣳहिरण्मयःपुरुषस्तद्देतदवैत
त्त्रयꣳसंस्कृत्येहोपधत्तेतद्यज्ञस्यैवानुसꣳस्थामूर्द्धमुत्क्रामतितदे
तमय्येतियएषतपतितस्मादग्निन्नाद्रियेत परिहंतुममुत्रह्येषत
दाभवतीत्युएवाधियज्ञं॥अथाध्यात्मं।यदेतन्मण्डलंतपतियश्चैष
रुक्मइदंतच्छुक्लमक्षन्नथयदेतदर्च्चिर्द्दीप्यतेयच्चतत्पुष्करपर्णमिदंत
त्कृष्णमक्षन्नथयऽएषऽएतस्मिन्मण्डलेपुरुषोयश्चैषहिरण्मयः
पुरुषोयमेवसयोयंदक्षिणेक्षन्पुरुषः ॥ ७ ॥ सऽएषऽएवलो
कम्पृणातामेषसर्वोग्निरभिसम्पद्यतेतस्यैतन्मिथुनंयोयꣳसव्ये
क्षन्पुरुषोर्द्धमुहैतदात्मनोयन्मिथुनंयदावैसह मिथुनेनाथसर्वो

थकृत्स्नतायै तद्यत्तेद्वे भवतो द्वन्द्वꣳ हि मिथुनम्प्रजननं तस्माद्द्वे द्वे लोकम्पृण ऽउपधीयते तस्माद्द्वाभ्यां द्वाभ्यां चितिम्प्रणयन्ति ॥ ८ ॥ स ऽएष ऽएवेन्द्रः योयं दक्षिणेक्षन्पुरुषोथेयमिन्द्राणी ताभ्यां देवा ऽएतां विधृतिमकुर्वन्नासिकान्तस्माज्जायाया ऽअन्ते नाश्नीयाद्वीर्य्यवान्हास्माज्जायते वीर्य्यवन्तमु ह सा जनयाति यस्या ऽअन्ते नाश्नाति ॥ ९ ॥ तदेतद्देवव्रतꣳ राजन्यबन्धवो मनुष्याणामनुत्तमां गोपायन्ति तस्मादेतेषु ꣳवीर्य्यवाञ्जायते मृतवाकावयसाꣳ साक्षिप्रश्येनं जनयाति ॥ १० ॥ तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनी भवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोथ हैतत्पुरुषꣳ स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वासंविद ऽइव भवत्येवꣳ हैवैतदसंविद ऽइव भवाति दैवꣳ ह्येतन्मिथुनम्परमो ह्येष ऽआनन्दः ॥ ११ ॥ तस्मदेवं वित्स्वप्यात् । लोक्यꣳ हैतै ऽएव तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति तस्माद्दुहस्वपन्तं धुरवनुबोधयेन्नेदेते देवते मिथुनी भवन्त्यौ हिनसानीति तस्माद्दु हैतत्सुखुणुषः श्लेष्मणमिव मुखं भवत्येते ऽएव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस ऽइदꣳ सर्वꣳ सम्भवाति यदिदं किञ्च ॥ १२ ॥ स ऽएष ऽएव मृत्युः य ऽएष ऽएतास्मिन्मण्डले पुरुषो यश्चायं दक्षिणेक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाछिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मा दु हैतत्प्रेतमा

ह्वराच्छेद्यस्येति ॥ १३ ॥ एषऽउएवप्राणःएषहीमाःसर्व्वाः प्रजाः प्रणयतितस्यैतेप्राणाःस्वाःसुयदास्वपित्यथैनमेतेप्राणाः स्वाऽअपियन्तितस्मात्स्वाप्ययःस्वाप्ययोहवैतथ्ठंस्वप्नइत्याचक्ष तेपरोक्षंपरोक्षकामाहिदेवाः ॥ १४ ॥ सऽएतैःसुप्तोनकस्यच नवेदनमनसा सङ्कल्पयतिनव्वाचान्नस्यरसंव्विजानातिनप्रा णेनगन्धं व्विजानातिनचक्षुषापश्यतिनश्रोत्रेणशृणोत्येतथ्ठं ह्येतेतदापीताभवन्तिसऽएषऽएकःसन्प्रजासुबहुधव्याविष्ठस्त स्मादेकासतीलोकम्पृणासर्वमग्निमनुविभवत्यथयदेकऽ एवत स्मादेकः ॥ १५ ॥ तदाहुःएकोमृत्युर्वहवऽइत्येकश्चवहवश्चे तिहब्रूयाद्यदेहासावमुत्रतेनैकोऽथयदिहप्रजासुबहुधाव्याविष्ट स्तेनोवहवः ॥ १६ ॥ तदाहुःअन्तिकेमृत्युर्दूराऽइत्यन्तिकेच दूरेचेतिहब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथयदसावमुत्रते नोह्रूरे ॥ १७ ॥ तदेषश्लोकोभवतिअन्येभात्यपाश्रितोरसां नार्ठसंचरेऽ मृतइतियदेतन्मण्डलंतपतितदन्नमथयऽएषऽ एत स्मिन्मण्डलेपुरुषः सोत्तासएतस्मिन्नन्नेऽपाश्रितोभातीत्यधिदै वतम् ॥ १८ ॥ अथाध्यात्मम् । इदमेवशरीरमन्नमथयोऽय न्दक्षिणेक्षन्पुरुषःसोत्तासऽएतस्मिन्नन्नेऽपाश्रितोभाति॥१९॥ तमेतमग्निरित्यध्वर्य्यवउपासते । यजुरित्येषहीदर्ठसर्व्वंयुन

त्साम्मेतिच्छान्दोगा एतस्मिन्हीदꣳ सर्वꣳ समानमुक्थमिति बह्वृचा एष हीदꣳ सर्वमुत्थापयति यातुरिति यातुविद एतेन हीदꣳ सर्वं यतं विषमिति सर्पाः सर्प इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथायथोपासते तदेव भवति तद्धैनान् भूत्वावति तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत सर्वꣳ हैतद्भवति सर्वꣳ हैनमेतद्भूत्वावति ॥ २० ॥ स एष त्रीष्टको ऽग्निर्ऋगेका यजुरेका सामैका तद्याꣳ ह्यत्रर्चोपदधाति रुक्म एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथ याꣳ साम्ना पुष्करपर्णमेव तस्या आयतनमेवं त्रीष्टकः ॥ २१ ॥ ते वा एते उभे एष च रुक्म एतच्च पुष्करपर्णमेतम्पुरुषमपीत उभे ह्यृक्सामे यजुरपीत एवं वै केष्टकः ॥ २२ ॥ स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवंविद आत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति । मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ नैव वा इदमग्रे सदासीन्नैव सदासीत् ॥ २४ ॥ इति मण्डलाध्यायः ।

॥ शाक्रंसूक्तम् ॥

आशुः शिशानः १ । सङ्क्रन्दनेनानिमिषेण । २ ।

सऽइषुहस्तैः । ३ । बृहस्पतेपरि । ४ । बलविज्ञायस्थविरः । ५ । गोत्रभिदङ्गोविदम् । ६ । अभिगोत्राणि । ७ । इन्द्रऽआसाम् । ८ । इन्द्रस्यवृष्णः । ९ । उद्धर्षय । १० । अस्माकमिन्द्रः । ११ । अमीषाञ्चित्त । १२ । अवसृष्टापरा । १३ प्रेता । १४ । असौया । १५ । यत्रबाणाः । १६ । मर्म्माणिते । १७ । इति शाक्रंसूक्तम् ।

॥ अथ रौद्रं सूक्तम् ॥

इमारुद्राय । १ । याते । २ । परिनः । ३ । मीढुष्टमाशिवतम । ४ । विकिरिद्रविलोहित । ५ । सहस्राणि सहस्रशः । ६ । इति रौद्रं सूक्तम् ॥ अथ सौम्यं ॥ ओं सोमोधेनुꣳसोमोऽअर्वन्तमाशुꣳसोमोवीरङ्कर्म्मण्यन्ददाति । सादन्यंविदथ्यꣳसभेयम्पितृश्रवणंयोददाशदस्मै । १ । त्वमिमाऽओषधीःसोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः । त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषावितमोववर्थ ॥ २ ॥ देवेनानोमनसादेवसोमरायोभागꣳसहसावन्नभियुद्ध्य । मात्वातनदीशिषेवीर्य्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ ३ ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् । हिरण्याक्षःसवितादेवऽआगाद्दधद्रत्नादाशुषेवार्य्याणि ॥४॥ हिरण्यपाणिःसवितावि चर्षणिरुभेद्यावापृथिवीऽअन्तरीयते ।

अपामीवाम्बाधतेव्वेतिसूर्य्यमभिकृष्णेन रजसाद्यामृणोति ॥ ९ ॥ हिरण्यहस्तोऽअसुरःसुनीथःसुमृडीकःस्ववांयात्व र्वाङ्।अपसेधन्न्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषङ्गृणानः ॥ ६ ॥ इति सौम्यं सूक्तम् ॥

## ॥ अथ कौष्माण्डंसूक्तम् ॥

ओंयद्देवादेवहेडनन्देवासश्चकृमाव्वयम् । अग्निर्म्मा तस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदिदिवायदि नक्तमेनाꣳसिचकृमाव्वयम् । व्वायुर्म्मातस्मादेनसोवि श्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नऽएनाꣳसि चकृमाव्वयम् सूर्य्योमातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः॥३॥ यद्ग्रामेयदरण्येयत्सभायांयदिन्द्रिये । यच्छूद्रेयदर्य्येयदेनश्च कृमावयंयदेकस्याधिधर्म्मणितस्यावयजनमसि ॥ इतिकौ ष्माण्डंसूक्तम् ॥

## ॥ अथ जातवेदसं ॥

( आग्नेयं ) समास्त्वाग्नऋतवोवर्द्धयन्तुसंवत्सराऋष योयानिसत्या । सन्दिव्येनदीदिहिरोचनेनव्विश्वाऽआभा

---

शाक्तं रौद्रं च सौम्यं च कौष्माण्डं जातवेदसम् । सौरसूक्तं जपेरंस्ते दक्षिणे तु यजुर्विदो ।

हिप्रदिशश्चतस्रः ॥ १ ॥ सञ्चेद्ध्यस्वाग्नेप्रचबोधयैनमुच्च
तिष्ठमहतेसौभगाय । माचरिषदुपसत्तातेऽअग्नेब्रह्माणस्ते
यशसः सन्तुमान्ये ।२। त्वामग्नेवृणतेब्राह्मणाइमेशिवोऽअग्नेसंव
रणेभवानः सपत्नहानोअभिमातिजिच्चस्वेगयेजागृह्यप्रयुच्छन् ॥३
इहैवाग्नेऽअधिधारयारयिम्मात्वानिक्रन्पूर्वचितोनिकारिणः
क्षत्रमग्नेसुयममस्तुतुभ्यमुपसत्तावर्द्धतान्तेऽअनिष्टृतः ॥ ४ ॥
क्षत्रेणाग्नेस्वायुः संरभस्वमित्रेणाग्नेमित्रधेयेयतस्व । स
जातानाम्मद्ध्यमस्थाऽएधिराज्ञामग्नेविहव्योदीदिहीह ॥५॥
अतिनिहोऽअतिस्रिधोत्यचित्तिमत्यरातिमग्ने । विश्वाह्यग्नेदुरि
तासहस्वाथास्मभ्यं सहवीराँरयिन्दाः ॥ ६ ॥ अनाधृ
ष्योजातवेदाऽअनिष्टृतोविराडग्नेक्षत्रभृद्दीदिहीह । विश्वा
ऽआशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्यपरिपाहिनोवृधे ।७।
बृहस्पतेसवितर्बोधयैनं संशितञ्चित्सन्तराँ संशिशाधि ।
वर्द्धयैनम्महतेसौभगायविश्वऽएनमनुमदन्तुदेवाः ॥ ८ ॥
अमुत्रभूयादधयद्यमस्यबृहस्पतेऽअभिशस्तेरमुञ्चः । प्रत्यौहता
मश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिः ॥९॥उद्वयन्त
मस०.....रुत्तमम् । इति जातवेदसं ॥

॥ अथ सौरसूक्तम् ॥

विभ्राड्बृहत् । १ । उदुत्यम् । १ । येनापावक । ३ ।

दैव्यावद्ध्वर्य्यू३आगतं । ४। यदद्य ।५। तरणिर्विश्वदर्शतः । ६ । तत्सूर्य्यस्य । ७। तन्मित्रस्य । ८। बण्महान् । ९। बट्सूर्य्य । १० । आयन्तइवसूर्य्यम् । ११ । अद्यादेवाः । १२। आकृष्णेन । १३ । इतिसौरसूक्तम् ॥

## ॥ अथ वामदेव्यम् ॥

। औं ॥ का३ऽ४या५ । न५श्चा४ऽ३यि३त्रा२३आ४भू४वा५त्५ ॥ ऊतीसदावृध२ स्स । खा । अ२३हो३हा२यि२ । कया ऽ२३श३चा २, ७। ष्ठ३यौ३हो२३हुम्म४,२,७। वाऽ२३र्ता२ऽ३५हयि२ । ॥१॥ का३ऽ४स्त्वा५। स५त्यो२३मा२३दा४ना५म्५ । मा । हिष्ठो२मास्ताद २श्वा । सा । अ२३हो३हा२इ२। दृढाऽ२३चि३दा२,७रु३जौ३हो२३। हुम्मा४,२,७। वाऽ२३सो३२३४ । हा२ । यि२ ॥ २ ॥ आ३ऽ४ भी५। षु५ण४ऽ५स्स२३खि४ना५म् । ५ आऽविता२जरायितृ२ णाम् । अ२३हो२हा२यि२ । शताऽ२३म्भा२वा२,७सि१यौ३ हो२३हुम्मा४ २,७ । नाऽ२३यो२३ऽ५हा२। ३ ॥ ३ ॥ इतिवाम देव्यम् ॥

## ॥ अथ बृहत्साम ॥

( ऋग्द्वयमैन्द्रः प्रगाथःशम्युदृष्टः बृहत्साम्नोयोनिरध्वर्य्योगां-नस्योक्तेरार्च्यावृहतोद्वितीयासतोबृहतोबृहदुत्तरेपच्चेइतिश्रुतेः ) औं
१र २र ३ १ २र ३१२ २३ १ ३ १ २ ३ १
त्वामिद्धिहवामहेसातौवाजस्यकारवः । त्वांवृत्रेष्विन्द्रसत्पतिन्नर-
२ ३ ३ १ २ १र २र ३ २ ३ १ २३ १ २
स्त्वांकाष्ठास्ववर्वतः ॥१॥ सत्वन्नश्चित्रवज्रहस्त धृष्णुयामहस्तवानो
२र ३ २र ३ १ २ ३ २र ३ २ १ २
ऽअद्रिवः । गामश्वंरथ्यमिन्द्रसंकिरसत्रावाजेनजिग्युषे ॥ २ ॥
इति बृहत्साम ।

## ॥ अथ ज्येष्ठसाम ॥

३ १ २ ३१२३ १ २ ३ १ ३२ ३२उ ३२ ३
ओं मूर्द्धानन्दिवो अरतिम्पृथिव्व्या व्वैश्वानरमृत आजातम-
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ १ २ ३२
ग्निम् । कविठं सम्राजमतिथिं जनानामासन्नापात्रञ्जनयन्तदेवाः ।१।
१र २र ३ १ २ ३ २ ३ २ ३ २ ३ १र २र २३
त्वांविश्वेअमृतजायमानठं शिशुं न देवाअभिसंनवन्ते । तव
१ ३ ३ १ २ ३र ३ २ ३ १र १र २र १२ ३२३
क्रतुभिरमृतत्वमायन्वैश्वानरयत्पित्रोरदीदेः । २ । नाभियं ज्ञानाॅ
१२ ३२३ १२३ २ ३ १र २ ३ २ क२र
सदनठं रयीणां महा माहावमभिसंनवन्त । वैश्वानरठं रथ्य
३ २ २ ३ १ २ ३२
मध्वराणां यज्ञस्यकेतुंजनयन्तदेवाः । इति ज्येष्ठसाम ।

## ॥ अथ रथन्तरम् ॥

अभित्वाशूरनोनुमोऽदुग्धाइव धेनवः । ईशानमस्य जगतः स्वर्द्दशमीशानमिन्द्र तस्थुषः ।१। नत्वा वां अन्योदिव्व्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तोमघवन्निन्द्र व्वाजिनो गव्यन्तस्त्वा हवामहे ।२। त्वामिद्धि हवामहे सातौव्वाजस्य कारवः । त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वां काष्ठास्ववतः ।३। अभि-प्रवःसुराधसमिन्द्रमर्चयथाविदे । योजरितृभ्योमघवापुरूवसुसहस्रे-णेवशिक्षति ।४। तंव्वोदस्ममृतीषहंव्वसोर्म्मन्दानमन्धसः । अभि वत्संनस्वसरेषुधेनवइन्द्रगीर्भिर्न्नवामहे ।५। तरोभिर्वोविदद्वसु-मिन्द्रठं सबाधऽऊतये । बृहद्गायन्तःसुतसोमेअध्वरेहु वेभरंनका-रिणम् ।६। तरणिरित्सिषासतिवाजंपुरंध्या युजा । आवइन्द्रं पुरुहुतंनमेगिरानेमिंतष्टेवसुद्रवम् ।७। पिबासुतस्यरसिनोमत्स्वान

वामदेव्यं बृहत्साम ज्येष्ठसामरथन्तरम् । तथा पुरुषसूक्तं च रुद्रसूक्तमतः परम् । आज्यदोहानिसामानि शान्तिकं शाकुनानि च ।



॥ पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा ॥

इन्द्रगोमतः । आपिर्नोबोधिसधमाद्यैवृं धे३स्मांअवन्तुतेधियः । ८ । त्वञ्ह्यहिचेरवेविदाभगंवसुत्तमे । उद्वावृषस्वमघवन्नोविष्टयउदिन्द्राश्वमिष्टये । ९ । नहिवश्चरमंचनवसिष्ठःपरिमठंसते । अस्माकमद्यमरुतःसुतेसचाविश्वेपिबन्तुकामिनः । १० । माचिन्यद्विशठंसतसखायोमारिषण्यत । इन्द्रमित्स्तोतावृषणठंसचासुतेमुहुरुक्थाचशठंसत । ११ । इति रथन्तरंसाम ।

## ॥ अथ पुरुषसूक्तम् ॥

सहस्रशीर्षापुरुषःसहस्राक्षः सहस्रपात् । सभूमिठंसर्वतोवृत्वात्यतिष्ठद्दशाङ्गुलम् । १ । त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः । तथाविष्वङ्व्यक्रामदशनानशनेअभि । २ । पुरुषएवेदठंसर्वंयद्भूतंयच्चभाव्यम् । पादोस्यसर्वाभूतानित्रिपादस्याऽमृतंदिवि । ३ । एतावानस्यमहिमाततोज्यायांश्चपूरुषः । उतामृतत्वस्येशानोयदन्नेनातिरोहति । ४ । ततोविराडजायतविराजोअधिपूरुषः । सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः । ५ । कयानश्चित्रआभुवदूती सदावृधःसखा । कयाशचिष्ठयावृता । ६ । (इतिपुरुषव्रतयोः पठितंषडृचात्मकंपुरुषसूक्तं ।

## ॥ अथ रुद्रसूक्तम् ॥

आ४वो५रा५जा४ । न३मा२ध्वा३ । रा२,७ । स्य३रु४द्रा५म्२ । होता२ । राम् । स२त्य२य२जा२३म्३ । रो२,७दा ३सी४यो५अ२ग्निम्पुरा । त२न२यि३त्नो२.७र३चि४त्ता५त् ५ । हिरण्या२रूपा२३मवासा२३४ऽ३यि३का२३र्णु ४ऽ५ध्वा५६५६म्५ ॥ १ ॥ त५द्वो४हो४वा५गाया ऽ२,७ । सु३,ता२,७यि२,७ । सा२२३४वा५ । पुरूहू२ता२ । य२सात्वा२ऽना४ २,७यि । शंयत् । हा । अ२३हो२,७यि२,७आइ२३४वा५यि५ । नाऽ२,७शा ३२२३४अ५हो५वा५ए२३किनेऽ२३४५ ॥ २ ॥ त५द्वो२गा५या५ । सु२ता२यि२ । स२चा२३ । पुरुऽ२३४ । हूता२३४ । हा३हो२३ । यास२,७ । त्वा२ । २३४ना४यि५ । शं२

यद्गाऽ२३वे२ । न२शौ४ २,७ हौ४,२,७ हुवोऽ२३४वा५ । का४ऽ५ यि५नो५६हा५इ५ ॥ ३ ॥ त५द्वो५गा५य५सु५ते५स५चा५६ए५ । पु२रू२हू२तायसत्वाने२ । पुरूहूत२ता । यासत्वाऽ२३ना२३४यि ४ । शं४य्य५ । त्५ । गौ२वा२,७ओं३२३४वा५ । नाऽ२३शा४ऽ३का२३४५यि५नो५६हा५इ५ ॥ ४ ॥ त५द्वो५गा५य ५सु५ते५स५चा५६ए५ । पु२रू२हू२तायसत्वानायि । शयद्गाऽ २३वे२ । ए४ २,७हो२ऽआऽ२३यि३ही२ । न२शाऽ२३ । काऽ२,७यि २,७ना३२३४अ५हो५वा५इ३२३४अ५हो५वा५इ३२३४५ ॥ ५ ॥ इतिरुद्रसूक्तम् ।

## ॥ अथ आज्यदोहमन्त्रत्रयम् ॥

हा२ उ २ । ३ । आ२-७ ज्य३दो४ह५ मू५ । ३ । मूर्द्धानन्दा यि । वा२ःअर । ति२,७पृ३थि४व्या५ः ॥ वैश्वनाराम् । ऋतआ । जा२,७त३मा४ग्नी५मू५ । क२विठं सम्रा । जा२२मतिथिं२,७ज३ना ५ना२म् । आ२सन्नष्पा । त्रा२३ञ्जनायं२,७त३दे४वा५ःहा२उ२ । ३। आ२,७ज्य३दो४ह५म् । २ । आ२,७ज्य२दो४ऽ५हा५उ५ । वा५ । ए२। आ२ज्य२दोह२म् २ । २ । ए२ । आ२ज्य२दोहा२२३४५मू५ ॥ १॥ हा२उ२३ । हु२मू२ । चि२दोह२मू२ । चि२दोह२मू२ । २। मूर्द्धानन्दायि पूर्ववत् । हा२ उ२ । ३ । हु२मू२ । चि २ दोह २ । मू२ । २ । चि२दो३हा२उ२ । वा२३ । इ३२३४५ ॥ २ ॥ हा२उ२ । ३ । च्योह२ । मू २ । ३ । मूर्द्धानन्दायि । पूर्ववत् । हा२उ२ । ३ । च्योह२मू२ । २ । च्यो३२हा३उ२ । वा२३ । ए२३ ऋ२ । तम् । इतिसामवेदीयमाज्यदोहमंत्रत्रयम् ।

## ॥ अथ देवव्रतानि त्रीणि ॥

अधिप२ताइ । मित्रप२ । ताइ । क्षत्रप२ताइ । स्वष्प२ताइ । धनप२ता४,२,७यि२ । ना४,२,७माः । म२न्युनाम्‌वृत्रहासूर्य्येण२स्व२ राज्य२ने नम२ववा२दक्षिणा२स्य२प्रि२याता२ मूराज्ञा२विशन्दा२धा२

र२ । वृ२ष२भस्त्वष्टावृ२त्रेणाश२चीर२पतिर२न्नेन२गयप्पृ२थि२व्या
सू२णि२देकोग्निनाविस्वम्भू२तमा । म्यभा२वो२वा२युनाविस्वप्प्र२जा
भ्यप२व२था२व२ष२ट२का२रेणार्द्ध२भाक् । सोमेन२सो२म पास्यमि
त्यर२प२र२मे२ष्ठी । येदेवा२दे२वा२:दि२विषद२: । स्थतेभ्योवो२दे२वा२
दे२वेभ्यो२नमः । २ । येदेवा२दे२वा२:अ२न्त रि२क्ष२सद२: । स्थातेभ्यो
वो२दे२वा२देवेभ्यो२नमः२ । येदेवा२दे२वा२: । पृ२थि२वी२षदः । स्थते
भ्योवो२दे२वा । २दे२वे२भ्यो२नम२:येदेवा२दे२वा२: । अप्सु२षद२: ।
स्थतेभ्योवो२दे२वा२दे२वे२भ्यो२नमः२। येदेवा२दे२वा२:। दि२क्षु२सद२:।
स्थतेभ्योवो२दे२वा२दे वेभ्यो नम२:। येदेवा२दे वा२:आ२सा२शद२:
स्थतेभ्योवो देवा२दे२वेभ्यो२२नमः२ । अव२ज्यामिव२धन्वानो२वि
तेम२न्युन्नया२मसि२स्मृ२उतान्न । इहाअ२स्मभ्य२म्२२ । इडाऽ२३४
भा२ । यइदम्विश्वम्भूतम् । यूयो२३ । आउ । वाऽ२३ । ना३२३४
मा:५ । ॥ १ ॥ अधिप२ताइ । मित्रप २ । ताइ । क्षत्रप२ । ताइ ।
स्वष्य२ताइ । धनप-ता४ २,७इ२ । ना४ २,७मा: । नमउ२स्त२जि-
भ्यश्चो२त२न्वा नेभ्यश्च२नामोनी ष२ङ्गिभ्यश्च२प२वो२तिभ्याश्च२नमो
स्यद्भ्य२श्च२प्र२ति दधाने२भ्य२श्च२ नमप्र२विद्याभ्य२श्च२प्र२व्या२
धिभ्यश्च२नम२: । त्सर्द्भ्य२श्च२त्सा२रिभ्यश्च२नमश्रि२ । तेभ्यश्च२
श्रा२यिभ्यश्च२नम२तिष्ठाद्भ्य२श्चो२प२तिष्ठद्भ्ये२श्च२नमोपतेचवि२
पा२ते२च२नमष्पृ२थेच२विपथा२य२च२।अ२व२ज्यामिव२धन्वानो२
वीतेम२न्न्युन्नया२सिस्मृ२उतान् । इहाअ२स्मभ्य२म्२ । इडाऽ२३
भा२ । यइदम्विश्वम्भूतम् ।युयो२३ । आउ ।वाऽ२३ । ना३२३४ ।
मा५: । ॥ २ ॥ अधिपा२ ।ताइ । मित्रप२ताइ । क्षत्रप२ताइ स्वष्प२
२ताइ । धनप२ताइ४,२,७इ । ना२ ७मा: । नमोन्नाय२नमोन्नय२प
२ल२य२ए२का२ । क्षयाचा२वा२प२न्ना२दायच२नमो२नम: ।
रुद्रायाती२२२सदे भ्यमृस्थि२रा२य२स्थि२ध२न्वानेनमप्प्रतिप२दा
२च२प२ट२रिणेच२नम२स्त्र्यम्ब२का२य२च२२क२ । प२र्दिनेच२नमआ
२ । अ२येभ्यश्च२प्र२त्य२अ२येभ्यश्च२नमष्क२व्येभ्यश्च२वि२रि२म्फे
२भ्यश्च२नमस्स२भूतेच२वि२भूते२च२ । आव२ज्यामिव२धन्वनो२

वितेमः२न्न्युन्नया२मः२सि२म्रू२डातान्२इ२हअ२स्मभ्य२म्२इडा२३भा २। य३इदम्विश्वम्भूतम्। युयो२३आउ। वा२३। ना३२३४मा५:। इतिदेवव्रतानि। अथ शान्तिकाध्यायः। अवोध्यग्निः समिधा-जनानाम्प्रतिधेनुमिवायतीमुषासम्। यह्वाऽइवप्रवयामुज्जिहानाः प्रभानवः सिस्रतेनाकमच्छ। १। इत्यस्यत्रिधाजपः। अवोध्य-ग्निर्ज्म उदेति सूर्य्योव्युऽ२षाश्चन्द्रामह्यावोअर्चिषा। आयुक्षाता मश्विना यातवे रथं प्रासावीद्देवः सविताजगत्पृथक्॥ २॥ यद्यु-ञ्जाथेवृषणमश्विनारथं घृतेननोमधुनाक्षत्रमुक्षतम्। अस्माकं ब्रह्म-पृतनासुजिन्वतं वयंधनाशूरसाताभजेमहि। ३। अर्वाङ्त्रिचक्रो-मधुवाहनोरथोजीराश्वो अश्विनोर्यातु सुष्टुतः। त्रिवन्धुरोमघवावि-श्वसौभगः शंन आवक्षद्द्विपदे चतुष्पदे। इति शान्तिकाध्यायः। अथभारुण्डसाम। ओं इमः स्तोममर्हते जातवेदसे रथमिव सम्मे हमा मनीषया॥ भद्राहिनः प्रमतिरस्य सꣳसद्यग्नेसख्येमारिषाम वयं तव। १। मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजा-तमग्निम्। कविꣳसम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः २। वित्वदायो नपर्व्वतस्य पृष्ठादुक्थेभिरग्नेजनयन्तदेवाः तंत्वागिरः सुष्टुतयो वाजयन्त्याजिनेगिर्वाहोजिग्युरश्वाः। ३। आवोराजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः। अग्निं पुरातनयित्नोरचिताद्धिरण्यरूपमवसे कृणुध्वम्। ४। इन्द्धेराजासमर्य्योनमोभिर्यस्य प्रतीकमाहुतं घृतेन। नरो हव्येभि-रीडते स वाध अग्निरातमुषसामशोचि। ५। प्रकेतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति। दिवश्चिदन्तादुपमामुदान उपामुपस्थे महिषोववर्द्ध। ३। अग्निनरोदीधितिभिररण्योर्हस्त-च्युतं जनयत प्रशस्तम्। दूरेदृशं गृहपतिमथर्व्यम्॥ ७॥ इत्येषांत्रिधाजपः। भरामेध्मं कृणवामाहवींषितेचितयन्तः पर्वणा पर्वणावयम्। जीवातवे प्रतराꣳसाधयाधियोऽग्ने सख्ये मारिषा मावयंतव। १। शकेमत्वासमिधꣳसाधयाधियस्त्वे देवाहविरद-न्त्याहुतम्। त्वमादित्यांऽआवहतान्ह्यऽ३ऽश्मस्यग्ने सख्येमारिषा-

मावयंतव । २ ॥ इतिआरुन्डानि । अथवैराजंसूक्तम् । पिवासोम मिन्द्रमन्द तु त्वायंते सुषावहर्य्यश्वाद्रिः सोतुर्वाहुभ्याꣳसुयतो-नार्वा ॥ १ ॥ यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्य्यश्वहꣳसि । सत्वामिन्द्रप्रभूवसोममत्तु ॥ २ ॥ वोधासुमेमघवन्वाचमेमायान्ते वसिष्ठोअर्चतिप्रशस्तिम् । इमाब्रह्मसधमादेजुषस्व ॥ ३ ॥ इति वैराजम् ॥ ततः पूर्वलिखितंसहस्रशीर्षेत्यादिषड्ऋचात्मकंपुरुषसूक्तं जपेताम् । अथसौपर्णसूक्तम् । उद्घेदभिश्रुतामघंवृषभंनर्य्याप-सम् । अस्तारमेषिसूर्य्य । १ । नवयोनवतिंपुराविभेदवाह्वोजसा । अहिंचवृत्रहाऽवधीत ॥ २ ॥ सनइन्द्रः शिवः सखाश्वावद्गोमद्य वमत् । उरुधारेवदोहते ॥ ३ ॥ इतिसौपर्णम् ॥ ततोरुद्रसंहितां । आवोराजानमित्यादिवर्गद्वयं पूर्वं लिखितम् ॥ अथशैशवं । उच्चाते जातमन्धसोदिविषद्भूम्याददे । उग्रꣳशर्म्ममहिश्रवः । १ । सन इन्द्राययज्यवेवरुणायमरुद्भ्यः । वरिवोवित्परिस्रव । २ । एनावि-श्वान्यर्यआद्युम्नानिमानुषाणाम् । सिषासन्तोवनामहे । ३ । इतिशैशवं । ततः पञ्चनिधनंसूक्तंरहस्यावीतं ॥ अथगायत्रंसू-क्तम् ॥ ओं तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि । धियोयोनः प्रचो-दयात् । १ । सोमानाꣳस्वरणङ्कृणुहिब्रह्मणस्पते । कक्षीवन्तंय औशिजः । २ । अग्नऽआयूꣳषिपवसआसुवोर्जमिषञ्चनः । आरेवा-धस्वदुच्छुनाम् । ३ । इतिगायत्रं । ततोज्येष्ठसामपूर्वलिखितंमूर्द्धान न्दिवइत्यादि । वामदेव्यम् कयानश्चित्रेत्यादि । वृहत्सामत्वामि-द्धिहवामहइत्यादि (पूर्वलिखितानिएतानिपठितव्यानि) अथरौरवं सूक्तम् । पुनानः सोमधारयाऽपोवसानोअर्षसि । आरत्नधायो निमृतस्यसीदस्युत्सोदेवहिरण्ययः । १ । दुहानऊधर्दिव्यंमधुप्रियं प्रत्नꣳ सधस्थमासदत् । आपृच्छ्यंधरुणंवाज्यर्षसिनृभिर्धूतो-

वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् । शैशवं पंचनिधनं गायत्रं ज्येष्ठ-साम च । वामदेव्यं वृहत्साम रौरवं सरथन्तरम् । गवावृतं विकर्णं च रक्षोघ्नं च यशस्तथा । गायेयुः सामगाराजन् पश्चिमे द्वारमाश्रिताः ॥

विचक्षणः । २ ॥ इतिरौरवम् । ततोरथन्तरं । अभित्वाशूरनोनुम इत्यादि ॥ गवावृतं । तेमन्वन्तरं प्रथमम् । अग्निमीले इत्यनयोगीतंसामद्वयम् ॥ अथविकर्णं सूक्तम् । ओं विभ्राड्बृहत्पिबतु सौम्यं मद्ध्वायुर्द्दधद्यज्ञपताविविहृतम् । वातजूतोयोऽभिरक्षति त्मनाप्रजाः पिपर्तिवहुधाव्विराजति । १ । विभ्राड्बृहत्सुभृतं वाजसात्तमं धर्म्मंदिवोधरुणेसत्यमर्पितम् । अमित्रहावृत्रहादस्युहन्तमं ज्योतिर्ज्ज्ञेअसुरहासपत्नहा । २ । इदꣳश्रेष्ठंज्योतिषाज्योतिरुत्तमंविश्वजिद्धनजिदुच्यते बृहत् । विश्वभ्राड्भ्राजोमहि सूर्य्योदृशउरुषप्रथेसहओजो अच्युतम् । ३ । इतिविकर्णम् । अथरक्षोघ्नम्। ओं अग्नेरक्षाणोअꣳहसः प्रतिस्मदेव रीषनः तपिष्ठैरजरोदह । १ अग्नेयुक्ष्वाहियेतवाश्वासो देवसाधवः । अरं वहन्त्यासवः । २। इतिरक्षोघ्नम् । अथयशः । बृहदिन्द्राय गायतमरुतो वृत्रहन्तमम्। येनज्योति रजनयन्नृतावृधोदेवन्देवायजागृवि । १ ॥ इतियशः ॥

## ❀ अथर्वाणसूक्तम् ❀

ओं अथर्व्वाणांपितरंदेवबन्धुंमातुर्गर्भंपितुरसुंयुवानम् । यइम यज्ञंमनसाचिकेतप्रणोवोचस्तमिहेहब्रवः । १ इति केचित् । ओं छन्दोगाय (दोषोगाय) बृहद्गायोद्युमद्धेह्याथर्व्वण । स्तुहिदेवं सवितारम् । १ । तुमुष्टुहियोअन्तः सिन्धौसूनः सत्यस्ययुवानम् अद्रोघवाचंसुशेवम् । २ । अधानोदेवः सवितासाविषदमृतानिभूरिउभेसुष्टुती सुगातवे । ३ । २ । इन्द्राय सोममृत्विजः सुनोताचधातव । स्तोतुर्योवचः शृणवद्धवंचमे । १ । आपंविशन्तीन्दवो वयोनवृक्षमन्धसः । विरफ्शन्विमृधोजहिरक्षस्विनीः । २ । सुनोतासोमपावेसोममिन्द्राय वज्रिणे । युवाजेतेशानः सपुरुष्टुतः । ३ । ३ । पातं न इन्द्रापूषणादितिः पांतु मरुत अपानपात्सिन्धवः सप्तपातनपातुनोविष्णुरुतद्यौः । १ । पातांनोद्यावापृथिवी अभीष्टये पातुग्रावापातुसोमोनोअंहसः । पातुनोदेवी सुभगा

सरस्वती पात्यानिः शिवाये अस्यपायवः । २ । पातांनो देवाश्विना शुभस्पतीउषासानक्तोतनऊरुष्यताम् अपांनपादभिहुतीगयस्य चिदेवत्वष्टर्वर्धयसर्वतातये । ३ । ४ त्वष्टामेदैव्यंवचःपर्जन्योब्रह्म-णस्पतिः । पुत्रैर्भ्रातृभिरदितिर्नुपातुनोदुष्टरंत्रायमाणंसहः । १ । अंशोभगोवरुणोमित्रोअर्य्यमादितिः । पान्तुमरुतः अपतस्यद्वेषोग मेदभिहुतोयावयच्छत्रुमुन्तितम् । २ । धियेसमश्विनाप्रावतंनउरुष्या णाउरुज्मन्नप्रयुच्छन्द्यौ । पितर्यावयदुच्छुनाया । ३ । ५ । उदेनमु त्तरनयाग्नेघृतेनाहुत । समेनंवर्चसासृजप्रजयाचवहुङ्कृधि । १ इन्द्रेमंप्रतरंकृधिसजातानामसद्वशी । रायस्पोषेणसंसृजजीवातवे जरसेनय । २ । यस्यकृण्मोहविर्गृहेतमग्नेवर्द्धयात्वम् । तस्मै सोमोअधिब्रवदयंचब्रह्मणस्पतिः । ३ । ६ । यो स्मान्ब्रह्मणस्पते देवोअभिमन्यतेसर्वेतंरन्धयासिमेयजमानायसुन्वते । १ । योनः सोमसुशंसिनोदुःशंसआदिदेशति । व्रज्रेणास्यमुखेजहिससपिष्टो अपायति । २ । योनः सोमाभिदासतिसनाभिर्यश्चनिष्टयः । अप तस्यवलंतिरोमहीवद्यौर्वधत्मना । ३ । ७ । येनसोमादितिःपथामि त्रावायन्त्युद्रुहः । तेनानोऽवसागहि । १ । येनसोमसाहन्त्यासुरा न्रन्धयासिनः । तेनानोअधिवोचत २ । येनदेवाअसुराणामोजांस्य वृणीध्वम् । तेनानः शर्म्मयच्छत् । ३ । ८ । यथावृक्षंलिबुजासमन्तं परिषस्वजे । एवापरिष्वजस्वमांयथामांकामिन्यसोयथामन्नापगा-असः । १ । यथासुपर्णंप्रपतन्पक्षौनिहन्तिभूम्याम् । एवानिहन्मिते मनोयथामाम् । २ । यथेमेद्यावापृथिवीसद्यः पर्य्येतिसूर्य्यः । एवापर्य्येमितेमनोयथामांकामिन्यसोयथामन्नापगाअसः । ३ । ६ । वांछमेतन्वं १ पादौवाञ्छाक्ष्यौ ३ वाञ्छसक्थ्यौ । अक्ष्यौवृषण्य न्त्याः केशामांतेकामेनशुष्यन्तु । १ । ममत्वादोषणीश्रियंकृणोमि हृदयश्रियम् । यथाममक्रतावसोममचित्तमुपायसि । २ । यासां

अथर्वाङ्गिरसं नीलरुद्रं देव्यपराजिता । मधुसूक्तं रोधसं च शान्तिका-ध्यायमेव च । अथर्वाणौ द्वारपालो पठेतामुत्तराश्रितौ ॥ ७ ॥

नाभिरारेहणंहृदिसंवननंकृतम् । गावोघृतस्यमातरोऽमूंसंवानयन्तुमे । ३ । १० । पृथिव्यैश्रोत्रायवनस्पतिभ्योऽग्नयेऽधिपतयेस्वाहा । १ । प्राणायान्तरिक्षायवयोभ्योवायवेऽधिपतये स्वाहा । २ । दिवेचक्षुषेनक्षत्रेभ्यःसूर्य्यायाधिपतये स्वाहा । इति अथर्वणषष्ठकाण्डेप्रथमोऽनुवाकः । इत्याथर्वणसूक्तम् ॥

## ॥ अथाङ्गिरसं ॥

ॐअङ्गिरसोनःपितरोनवग्वाऽअथर्वाणोभृगवःसोम्यासः । तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ १ ॥ अङ्गिरोभिर्यज्ञियैरागहीहयमवैरूपैरिहमादयस्व । विवस्वन्तंहुवेयःपितातेऽस्मिन्वर्हिष्यानिषद्य ॥ २ ॥ इमंयमप्रस्तरमाहिरोहाङ्गिरोभिःपितृभिः संविदानः । आत्वामंत्राःकविशस्तावहन्त्वेनाराजन्हविषोमादयस्व ॥ ३ ॥ इतएतउदारुहन्दिवस्पृष्ठान्यारुहन् । प्रभूर्जयोयथापथाद्यामङ्गिरसोययुः ॥ ४ ॥ (इतिवहवः) ( अङ्गिरोसिजन्मनेत्यादिकंपाठ्यमितिकेचित् ) इत्याङ्गिरसं ।

## ॥ अथ नीलरुद्रं ॥

यातेरुद्रइषुमास्यदङ्गेभ्योहृदयायच । इदंतामद्यत्वद्वयंविषूचींविवृहामसि ॥ १ ॥ यास्तेशतंधमनयोऽङ्गान्यनुविष्ठिताः । तासांतेसर्वासांवयंनिर्विषाणिह्वयामसि ॥ २ ॥

नमस्तेरुद्रास्यतेनमः प्रतिहितायैनमोविसृज्यमानायैनमोनिप तितायै । इतिनीलरुद्रं ।

## ।। अथपराजितादेवीसूक्तम ।।

परिवत्मीनिसर्वतइन्द्रः पूषाचसस्रुतुः । मुह्यन्त्वा द्यामूःसेनाअमित्राणांपरस्तराम ।। १ ।। मूढाअमित्राश्चर ताशीर्षाणइवाहयः तेषांवोअग्निमूढानामिन्द्रोहन्तुवरंवरम२ एषुनह्यवृषाजिनंहरिणस्यभयंकृधि । पराङमित्रएषत्वर्वाची गौरुपेषतु । इत्यपराजितादेवीसूक्तम् । ( अथमधुसूक्तम् ) मधुव्वाता ।। १ ।। मधुनक्तम् । २ । मधुमान्नः । ३ । इति मधुसूक्तम् । (अथरोधसं) ओं अभयंद्यावापृथिवीइहास्तुनो ऽभयंसोमःसवितानःकृणोतु । अभयंनोऽस्तूर्वन्तरिक्षंसप्त ऋषीणां च हविषाभयंनोअस्तु । १ । अस्मैग्रामायप्रदिशश्च तस्रूर्जंसम्भूतं स्वास्तिसवितानः कृणोतु । असाविन्द्रोअ भयंनःकृणोत्वन्यत्रराज्ञामभियातुमन्युः । २ । अनमित्रंनो अधरादनमित्रंन उत्तरात् । इन्द्रानमित्रंनःपश्चादनमित्रंपुर स्कृधि । इतिरोधसं । (अथ शान्तिकाध्यायः) शन्नइन्द्रा ग्नीभवतामवोभिःशन्नइन्द्रावरुणारातहव्या । शमिन्द्रा सोमासुवितायशंयोःशन्नइन्द्रापूषणावाजसातौ ।। १ ।। श

न्नोभगः शमुनः शंसोऽअस्तु शन्नः पुरन्धिः शमु सन्तु रायः । शन्नः सत्यस्य सुयमस्य शंसः शन्नोऽअर्यमा पुरुजातोऽअस्तु ॥२॥ शन्नो धाता शमु धर्ता नोऽअस्तु शंन ऊरूची भवतु स्वधाभिः । शंरोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु ॥३॥ शन्नोऽअग्निर्ज्योतिरनीकोऽअस्तु शन्नो मित्रावरुणावश्विना शम् । शन्नः सुकृतां सुकृतानि शन्तु शन्न इषिरोऽअभिवातु वातः । ४ । शन्नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु । शंन ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥ शन्न इन्द्रो वसुभिर्देवोऽअस्तु शमादित्येभिर्वरुणः सुशंसः । शन्नो रुद्रो रुद्रेभिर्जलाषः शंनस्त्वष्टाग्नाभिरिह शृणोतु ॥ ६ ॥ शंनः सोमो भवतु ब्रह्म शंसः शन्नो ग्रावाणः शमु सन्तु यज्ञाः । शन्नः स्वरूणां मितयो भवन्तु शंनः प्रस्वः शम्वस्तु वेदिः । ७ । शंनः सूर्य्य उरुचक्षा उदेतु शन्नो भवन्तु प्रदिशश्चतस्रः । शन्नः पर्वता ध्रुवयो भवन्तु शंनः सिन्धवः शमु सन्त्वापः । ८ । शन्नोऽअदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः । शन्नो विष्णुः शमु पूषा नोऽअस्तु शन्नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥ शन्नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः । इति शान्तिकाध्यायः । इति द्वारपालजाप्यसूक्तानि ।

शान्तिकपौष्टिकानि । शन्नइन्द्राग्नीत्यादि । प्रधानसूक्तंस्वशाखोयम् । यद्वासर्वेपुण्डरीकाक्षंध्यायन्तः वैष्णवान्मन्त्राञ्जपेयुरितिकेचित् ।

॥ अथ शान्तिकानिमन्त्राणि ॥

शान्ताद्यौःशान्तापृथिवीशान्तमिदमुर्वन्तरिक्षम् । शान्ताउदन्वतीरापःशान्तानःसन्त्वोषधीः ॥ १ ॥ शान्तानि पूर्वरूपाणिशान्तन्नोअस्तुकृताकृतम् । शान्तंभूतञ्चभव्यञ्च सर्वमेवशमस्तुनः ॥ २ ॥ इयंयापरमेष्ठिनीवाग्देवीब्रह्मसंशिता । ययैवसस्रृजेघोरंतयैवशान्तिरस्तुनः ॥ ३ ॥ इदंयत्परमेष्ठिनंमनोवाब्रह्मसंशितम् । येनैवसस्रृजेघोरंतेनैवशान्तिरस्तु नः ॥ ४ ॥ इमानियानिपञ्चेन्द्रियाणिमनःषष्ठानिमेहृदिब्रह्मणासंशितानि । यैरेवसस्रृजेघोरंतैरेवशान्तिरस्तुनः ॥ ५ ॥ शन्नोमित्रःशंवरुणःशंविष्णुःशम्प्रजापतिः । शन्नऽइन्द्रोबृहस्पतिःशन्नोभवत्वर्य्यमा ॥ ६ ॥ शन्नोमित्रःशम्वरुणःशम्विवस्वाञ्छमन्तकः । उत्पाताःपार्थिवान्तरिक्षाच्छन्नोदिविचराग्रहाः ॥ ७ ॥ शन्नोभूमिर्वेपमानाशमुल्कानिर्हतंच यत् । शंगावोलोहितक्षीराःशम्भूमिरवतीर्यती ॥ ८ ॥ नक्षत्रमुल्काभिहतंशमस्तुनःशन्नोऽभिचाराःशमुसन्तुकृत्याः शन्नोनिखातावल्गाःशमुल्कादेशोपसर्गाःशमुनोभवन्तु ॥९॥ शन्नोग्रहाश्चन्द्रमसाःशमादित्याश्चराहुणा । शन्नोमृत्युर्धू

मकेतुःशंरुद्रास्तिग्मतेजसः ॥ १० ॥ शंरुद्राशंवसंवःशमादि
त्याःशमुग्नयः । शन्नोमहर्षयोदेवाः शंदेवीःशम्बृहस्पतिः ॥
११ ॥ ब्रह्मप्रजापतिर्धातालोकावेदाःसप्तऋषयोग्नयः ।
तैर्मेकृतंस्वस्त्ययनमिन्द्रोमेशर्म्मयच्छतुब्रह्मामेशर्म्मयच्छतु ।१२।
विश्वेमेदेवाः शर्मयच्छन्तुसर्वेमेदेवाः शर्म्मयच्छन्तुयानिकानि
चिच्छान्तानिलोकेसप्तऋषयोविदुः । सर्वाणिशंभवन्तुमेशंमे
अस्त्वभयंमेअस्तु ॥ १३ ॥ पृथिवीशान्तिरन्तरिक्षंशान्ति
र्द्यौःशान्तिरापःशान्तिरोषधयः शान्तिर्वनस्पतयः शान्ति
र्विश्वेदेवाःशान्तिःसर्वेमेदेवाःशान्तिः शान्तिःशान्तिभिः ।
ताभिः शान्तिभिः सर्वशान्तिभिःशमयाम्यहंयादिहघोरंयादि
हक्रूरंयादिहपापंतच्छान्तंछिवंसर्वमेवशमस्तुनः ।

इति शान्तिसूक्तम् ॥

इति श्रीभाष्याचार्यपं०हरिनामदत्तशास्त्रितनयविद्यावाचस्पति
पं०देवीप्रसादशास्त्रिप्रणीतशतचण्डीयज्ञविधानस्य
प्रथमखण्डे सूक्तसंग्रहः ॥

## समाप्तश्चायंप्रथमखण्डेपूर्वोभागः

# विषयानुक्रमणिका

# शुद्धाशुद्धपत्रम्

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| नत्त्वा | नत्वा | ३ | १५ |
| पार्श्वँ | पार्श्व | " | २० |
| वेन् | वेन | ४ | २२ |
| वृत्र | वृत्त | " | ३ |
| लान् | लात् | ५ | ३ |
| लान्तु | लानान्तु | ६ | २ |
| ज्य | ज्यं | ७ | ९ |
| गसे | गेस | ८ | ६ |
| वजि | वीज | २१ | ३ |
| भूला | मूला | " | ७ |
| करेर | करैर | ३७ | २२ |
| ओ | औ | ४१ | ७ |
| दपि | दीप | ५८ | ११ |
| तत | ततः | ८२ | १४ |
| कस्पा | कर्प्या | " | १७ |
| न।मके | नायके | " | २२ |
| धिद्वे | धितद्वे | " | २३ |
| श्वँआ | श्वँमा | ८३ | २ |
| णसा | णासा | " | १८ |
| न्यार्थं | न्यार्घं | " | २३ |
| त्रास्या | त्रस्या | ८५ | १४ |
| मँध्य | मँध्ये | " | १७ |
| सव | सर्वं | " | " |
| अघ्य | अर्घ्यं | " | २२ |
| कम्वा | काम्वा | ८७ | ३ |
| श्रुतिःप्रा | श्रुतिप्रा | ८८ | २ |
| रसाका | रसका | " | ८ |
| क्तिः | क्तीः | ९१ | १३ |
| षोडश | द्वादश | ९५ | २ |
| धुँतिः | धृतिः | ९८ | २२ |
| पन्ति | यन्ति | ९९ | १७ |
| मांत्रत | मन्त्रित | १०५ | १३ |
| दुरुत्य | दुरुद्धृत्य | " | १४ |
| रात्रे | रात्रं | १०६ | ८ |

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| न्तात्या | न्तीत्या | " | ११ |
| ग्रान्थ | ग्रन्थ | १०९ | १४ |
| वासा | वाण | " | २० |
| जहुः | जह्नुः | १२३ | ६ |
| ऊमि | ऊर्मि | १२५ | २१ |
| पुप्पां | पुष्पां | " | २५ |
| तत | तत् | " | " |
| तगर | तगरं | १२६ | २६ |
| नैर | नैचर | १२७ | १६ |
| श्रष्ठ | श्रेष्ठ | १२९ | १६ |
| मुक्ति | मुक्ता | " | २२ |
| द्धात्री | द्धात्रि | १३० | ५ |
| णौन्मा | णौर्मा | १३१ | १९ |
| स्मध्ये | र्स्मध्ये | १३२ | १ |
| णवे | र्णवे | " | १४ |
| पूव | पूर्वं | " | २४ |
| अग्न्यं | अग्र्यं | " | " |
| लायै | लाय | १३७ | ४ |
| त्यग्रेः | त्यग्नेः | " | १४ |
| गोगिनी | योगिनो | १४२ | " |
| क्रत | क्रूत | १४६ | २२ |
| न्तग | न्तरग | १४९ | ११ |
| पूव | पूर्वं | " | १७ |
| श्रोतो | श्रौतो | १५४ | १३ |
| मूलंमं | मूलमं | १५६ | १८ |
| णोवा | णोर्वा | १५९ | २३ |
| दशनं | दर्शनं | १६२ | २३ |
| ष्णोद्द | ष्णोद्द | १६३ | १४ |
| स्तर | स्तनरजो | १६५ | २१ |
| दुर्गा | दुर्गा | १६६ | १७ |
| रिंभिः | रंभिः | १६७ | ८ |
| णेशे | णेशो | " | १४ |
| रिक्ता | रीक्ता | " | १६ |
| न्दरि | न्दरी | " | १८ |

## अथ शान्तिसारोक्तशतचण्डीविधानम् ॥

शतचण्डीविधानंतेयथावत्कथयाम्यहम् । सुघोरायामनावृष्ट्यां भूकम्पे च सुदारुणे । परचक्रागमे गात्रे क्षये विंशतियोजने । देशे सर्वत्र शान्त्यर्थं शतचण्डीमखे चरेत् । शिवाभ्यासे समेदेशे चतुर्द्वारं सतोरणम् । पताकासंस्कृतं कुर्यान्मण्डपं वेदिभूषितम् । तत्र कुण्डं प्रकर्तव्यमुक्तलक्षणसंयुतम् । सदाचाराः कुलीनाये श्रीमंतः सत्यवादिनः । चण्डिकापाठसम्पूर्णा दयावन्तो जितेन्द्रियाः [ ईदृग्लक्षणसम्पन्नाद्दम्भमोह विवर्जिताः ] दशविप्रान्समभ्यर्च्य महालक्ष्मीस्वरूपिण. । मधुपर्कविधानेन यथावत्तद्वदाम्यहम् ॥ श्रीपर्णी वृक्षपीठानि हस्तमानानि मानतः । अष्टाङ्गुलसमुच्छ्रायसहितानि समानि च । स्रुवः स्रुचासमायुक्तः खादिरोलक्षणान्वितः । सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितः । विष्टरःसर्वयज्ञेषु लक्षसां परिकीर्तितम् । शुद्धोदकेन सम्पूर्णाः पादार्घ्यार्थं समाहृताः । शंखा अर्घ्यप्रदानाय गन्धपुष्पयवान्विताः । दूर्वोदक समायुक्ताः स्थापनीयाः पृथक् पृथक् । महान्त्यर्हाणि वस्त्राणि मुद्रिकाद्यं सुभूषणम् ॥ मयूरपत्रछत्राणि सोष्णीषाणि समाहरेत् । पादुकाश्च हरेत्तत्र ताम्रभूषणभूषिताः । अन्यत्सर्वं यदस्त्युक्तं मधुपर्कस्य पूजनम् ॥ शतचण्डीमखे कर्ता प्रयत्नेन तथा हरेत् । स्मार्तोक्तविधिना सर्वं मधुपर्कस्य पूजनम् । कृत्वा फलमवाप्नोति महायज्ञार्णवोपमी अन्येभ्योमधुपर्कस्य विप्रेभ्यः पूजनं समम् । दद्यात्तद्द्विगुणं तत्र आचार्याय सुभक्तिमान् । अन्यैर्द्विजैः स्वयं मंत्रदेशिकस्य प्रपूजनम् ॥ तस्मिन्यज्ञे फलं सत्यमनावृष्टिविनाशनम् । अर्चितास्ते द्विजः श्रेष्ठाः सन्तुष्टापूर्णमानसाः । यजमानं सपत्नीकं सुतबंधुसमन्वितम् । उपविश्यासने शुद्धे कलशाग्रविभूषिते । वेदमन्त्राक्षतैः पूर्णं कुर्वन्ति स्वस्तिवाचनम् । कृतस्वस्त्ययनो विप्रैर्वेदवादित्रनिस्वनैः । चण्डिका मण्डलं चापि परिवारविभूषितम् । पश्चिमद्वारमार्गेण प्रविश्य क्रतुमण्डपम् । ददाति पूजनेऽनुज्ञां देशिकाय कृताञ्जलिः । देशिकः सर्वमंत्रज्ञोनवभिर्ब्राह्मणैः सह । दिग्देवताग्रहांश्चैव लोकपालसमन्वितान् । दिशापालांश्च सम्पूज्य कलशं स्थाप्य पूज्यच । मण्डपस्य चतुर्दिक्षु दत्वा भूतबलिं वहिः । मण्डपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् । मालिनौ जलसम्पूर्णावाम्रपल्लवशोभितौ । उपस्पृश्योदकं धृत्वा चण्डिकां देववन्दिताम् । उपविश्यासने वेद्यां वद्ध्वा पद्मासनं दृढम् । प्राणायामविशुद्धात्मा दशैकन्यासभूषितः । चण्डिकापूजनं कुर्याद्विशेषेण समन्वितम्

कस्तूरी कुङ्कुमं जाप्यं सकर्पूरं च चन्दनम् । पलद्वयसुसम्पूर्णमनुलेपनमाहरेत् । दिव्यवस्त्रमलङ्कारं हेमगद्याणकत्रियम् । चतुष्पुष्प चतुर्थांशं गुग्गुलस्य पलत्रयम् । दीपानां द्विशतं श्रेष्ठं मण्डपे जपसाधनम् । कुम्भौ द्वौ हविष्यान्नं नैवेद्यं सरसं शुचि । ताम्बूलानां सकर्पूरशतद्वयमनुत्तमम् ॥ नवचण्डीविधानोक्तं महालक्ष्मी प्रपूजनम् । नवभिर्ब्राह्मणैः सार्द्धं कृत्वाचार्य्यो द्विजोत्तमः । ददाति नव विप्रेभ्यो आचार्य्यश्चण्डिकामयः । कार्य्यं जाप्यप्रसिद्ध्यर्थमतुलस्नानपूर्वकम् । ततोऽनुज्ञामनुप्राप्य वेद्यामाचार्यसन्निधौ । मृद्वासनेषु सन्तुष्टाः उपविष्टाः सुनिश्चलाः । न्यासध्यानसमायुक्तानासाग्रमवलोकिनः । सुगन्धपुष्पमालाभ्यां चण्डिकाचरितत्रयम् । सरहस्यमृषिश्छन्दो देवताशक्तिसंयुतम् । जपेयुः पूर्णमेकं वा मौनिनस्त्यक्तमत्सराः । समुत्थाय ततः कुर्युरेका सर्वे प्रदक्षिणम् । चण्डिकांसुनमस्कारैः परितोष्य पुनः पुनः । उपविश्यासनेषु कुशलैः सर्वार्थसाधकैः । प्रार्थयेयुः प्रार्थ्यफलं महालक्ष्मीं दृढव्रताः । कुमार्य्योदशसम्भोज्याभोज्याविप्रादशोत्तमाः । महाकालीं महालक्ष्मीं सरस्वतीं जपञ्जपन् । भोजयेत्परयाभक्त्या देशिकादिदशद्विजान् । ततोभक्तिसमायुक्तोभुञ्जीयाद्यज्ञकृत्पुमान् । सत्कथाभिः सुगीतैश्च सर्ववादित्रनिस्वनैः । पूजनैः प्रोक्षणीयैश्च वेदपाठैर्निशां नयेत् । द्वितीयेदिवसे स्नात्वा विधिवत्ते द्विजादश । चण्डिकातर्पणं कुर्युः सम्पूर्णं ध्यानतत्पराः । सर्वं पृथक्पृथक्कृत्वा दिग्देवीपूजनादिकम् । वहिर्भूतबलिं दत्वा कृत्वा वेदिं प्रदक्षिणाम् । पुष्पागारे महारम्ये खेखे च आसने स्थिताः । जपन्ति जयचण्डीति यावद्दुर्गा प्रपूजनम् । पूर्वस्मात्पूजनात्कुर्याद्द्विगुणं पूजनं क्रमात् । आचार्य्यः सुस्थिरः शान्तश्चण्डिकायाः प्रतोषणम् । सुकृते पूजने विप्राजपेयुर्द्विगुणं जपम् । द्विगुणं च प्रकर्तव्यं कुमारीद्विजतोषणम् । कार्य्यं जागरणं रात्रावुच्चैः सर्वैर्महोत्सवैः । चण्डिकापूजनं जाप्यं कुमारीद्विजपूजनम् । तृतीयेऽहनि कर्तव्यं त्रिगुणं च सजागरम् । चतुर्थे दिवसे सर्वं सम्यक्कुर्युश्चतुर्गुणम् । महाजागरणोपेतं होमः स्यात्पञ्चमेहनि । पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् । जुहोत्युक्तविधिं कृत्वा दशांशेन नृपोत्तम । रुद्राध्याये यथाहोमं मंत्रेणैकेन साधयेत् । तथा स्तोत्रजपे होमं मन्त्रेणैकेन साधयेत् । चण्डीसप्तशतीजाप्ये होममंत्रोनवाक्षरः । कथितः पूजनाध्याये तस्माद्धोमोभवेदसौ । नमोदेव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ अथवा च भवेद्धोमे श्लोकस्तत्र निरूपितः । जपहोमे सुसम्पूर्णं दिग्देवीनां शतम् ... शतम् । होतव्यं नाममंत्रैश्च

हविष्यान्नेन सादरम् । शतं शतं क्रमाद्देयं समिदाज्यचरूंस्तिलान् । ग्रहेभ्योवैदिकैर्मन्त्रैः फलपुष्पंशतं शतं । लोकपालदिशापाल होमे सर्पिश्च रुस्तिलाः । आचार्य्याश्च द्विजाः सर्वे जुहुयुश्च शतं शतम् । होमे सम्पूर्णतां याते नमस्कृत्वेष्टदेवताम् । चण्डिकां देवदेवानामृषीणां वन्दितां पराम् । स्तम्भद्वये स्रुचं कृत्वा यजमान स्वलंकृतः । घृतकुम्भदशांशेन दद्यात्पूर्णाहुतिं स्वयम् । मूर्द्धानमन्त्रपाठेन नवाक्षरजपेन वा । प्राशनं मार्जनाद्यं च नवदुर्गाविधानवित् । जपे हुतं समावेद्य चण्डिकायै मनोरथम् । ब्राह्मणे निष्कषट्कायं दद्याद्गोमिथुनद्वयम् । यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृताञ्जलिः । दद्याद् गोमिथुनान्यष्टावाचार्य्याय सुभक्तिमान् । चतुर्विंशतिसंख्याकैर्हैमगद्याणकैः सह । एकैकमष्टविप्रेभ्यो दद्याद्गोमिथुनं स्वयम् । निष्कत्रयसमायुक्तं वस्त्रालङ्कारभूषितम् । सुस्थितं स्वासने शान्तं यजमानं महोत्सवम् । कुङ्कुमोक्ता कृतादूर्वा सुगन्धिचन्दनं दधि । आदाय दीयते विप्र आचार्य्यादिः सुपूजितः । स्तोत्राणां चतुर्णां च महालक्ष्मीपरायणः । एकैकश्लोकमुच्चार्य्य दद्युराशिषमुत्तमाः । धनाढ्यःससुतः पूर्णोलब्धाशीः कृतमङ्गलः । रक्तपुष्पाञ्जलिं दद्याच्चण्डिकायै विसर्जनम् । भूरिदानं ततः कुर्य्यात्पुण्यवादित्रनिःस्वनैः । प्रविशच्छान्तिपाठैश्च तोरणाढ्यस्वमालयम् । शतचण्डीविधानस्य कृतेन सुकृतेन हि । महालक्ष्मीर्ददात्यस्मै त्रैलोक्यसुखमुत्तमम् । यद्यत्कार्य्यं समुद्दिश्य क्रियते शतचण्डिकाम् । तत्तत्कार्य्यं महालक्ष्मीः सत्यमाशुः प्रयच्छति ॥ इति ॥

चरितत्रयजाप्यस्य चण्डिकाया नरोत्तम । सरहस्यनामानि ब्रह्मोक्तानि वदाम्यहम् । महाविद्या महामंत्रश्चण्डीसप्तशतीति च । मृतसञ्जीवनीनाम चतुर्थम्परिकीर्तितम् । पञ्चमं च महाचण्डी चतुःषष्टिपदीपरम् । एतानि यो विजानाति नामानि नृपनन्दन । जपं विना भवेच्चण्डी वरदा स्यात्तु सर्वदा । शतमादौ शतं चान्ते जपेन्मंत्रं नवाक्षरम् । चण्डी सप्तशती मध्ये सम्पुटोऽयमुदाहृतः । सकामः सम्पुटे जाप्योनिष्कामः सम्पुटं विना । एतद्धोम्यतरं तत्वं चण्डिकाजपसिद्धिदम् ।

## ॥ वैदिकं दुर्गाराधनम् ॥

शान्तिसारे । शौनकः । जातवेदसइत्येतत्सूक्तं सर्वार्थसाधकम् । आयुरारोग्यसुखदं भूमिदं शत्रुनाशनम् । यद्यद्वाञ्छति वा विप्रस्तत्तदाप्नोत्यसंशयम् । सूक्तेनानेन जुहुयाच्छुक्लाम्बरधरः शुचिः । जपेद्वानियतोमंत्रं हविष्याशी जितेन्द्रियः ।

पशुपुत्रधनार्थी च प्रत्येकं लक्षमभ्यसेत् । सर्वेषामेव देवानां विशिष्टं देवतालयम् । तस्माद्देवालये कुर्वन्विशिष्टं फलमश्नुते । ततः प्राची प्रशस्तादिगाग्नेयी च विशेषतः प्रतीची वा यवीया च श्रेष्ठा सौम्यादिशाऽथवा । पैशाचिकाभिचारे च विजयेऽपि विदिष्यते । कुण्डे वा स्थण्डिले वापि होमं कुर्यादतन्द्रितः । चतुरस्रं भवेत्कुण्डं "मेखलाद्वय" संयुतं । स्थण्डिलाद्याज्यभागांतं यज्ञतंत्रं प्रकल्पयेत् । महाद्विजः शुचिर्दान्तः सर्वभूतहितेरतः । दुर्गामावाहयेत्कुम्भे सायुधाष्टमहाभुजाम् । नीलोत्पलदलश्यामां किरीटाद्यैर्विभूषिताम् । ततश्चाराध्य तां देवीं तस्मिंस्तीर्थोदकान्विते । आवाहनेन हविषा समिद्भिश्च पृथक् पृथक् । मंत्रेणानेन जुहुयादष्टोत्तर शताहुतीः । ततः स्विष्टकृतं चैव होमशेषं समाचरेत् । उत्थाप्याथ जपेन्मंत्रमेतं श्रद्धासमन्वितः । यदा दुर्गा च वरदा त्वत्प्रसादाच्च पार्वती ॥

ऋषिरुवाच । नित्यचण्ड्यादि जाप्यस्य विधानं ते वदाम्यहम् । क्रमेण सर्वकार्याणां सिद्धये सर्वपुण्यदम् । पूर्वोक्तविधिना स्नात्वा चण्डिकातर्पणादिकम् । शुक्लभूतामथाष्टम्यां मासं प्रतिदिनं जपेत् । सकृद्रहस्यसंयुक्तं चण्डिकाचरितत्रयम् । दशांशहोमसहितं यो वर्तेत नित्यचण्डिकाम् । धनपुत्रयशोदात्री महाव्याधिविनाशिनी । महाभयमहादुःखहंत्री सौख्यप्रदायिनी । शुक्लाष्टमीमथारभ्य यावच्छुक्लचतुर्दशी । नवदुर्गाविधातव्या सर्वकार्यफलार्थिता । सम्पूज्य विधिवद्देवीं चण्डिकांकृततर्पणैः । कलशं पञ्चरत्नाढ्यं सहकारदलान्वितम् । सवस्त्रं संप्रतिष्ठाप्य चण्डिकाग्रेऽम्भसामृतम् । समन्तात्पूजयेद्दिक्षु दिशापालान्यथाक्रमम् चन्दनेन विलिप्तांगः स्रग्वीन्यासपरायणः । नवाहं भूय एकैकं मौनी वद्ध्वासनी जपेत् । प्रणवादिरहस्यान्तं चण्डिकाचरितत्रयम् ॥ चतुरस्रे समे कुण्डे समन्तान्न्यस्तमातृके । "एकावरण" संयुक्ते योनिमण्डलमण्डिते । दशांशविधिनाहोममुक्हव्येन साधयेत् । नवदुर्गामखे कुण्डमेवं जानीहि भूपते । नित्यचण्डीविधानस्थे कुण्डमीदृक्प्रकीर्तितम् । नवचण्डीमखे कुण्डमीदृग्लक्षणमुच्यते । एतद्द्विगुणितं कुण्डे "शतचण्ड्यांप्रकीर्तिम्" ॥ कृष्णाष्टमीमवष्टभ्य नवदुर्गाविधानवित् । यद्वायं क्रियतेजाप्यंकालरात्रिर्दुरत्यया । महाकालोद्भवं दुःखं कालरात्रिर्व्यपोहति । संस्कारैरष्टभिः कुण्डैः संस्कृत्याग्नि प्रतिष्ठपेत् । मांयावीजसमायोगंकुर्यात्तन्मन्त्रसाधकः । कुण्डमध्येभुवंदर्भैः परिमृज्योपलेपयेत् । प्रागग्रस्त्रुवमूलेन रेखास्तिस्त्रः समुल्लिखेत् । पांशुमुद्धृत्यरेखाणामभ्युक्षणमतः परम् । कुण्डस्य रजनंषष्ठं सप्तमं चक्रमुद्रया अत्रावतुं [illegible] कुण्डे संस्कारश्चाष्टमः स्मृतः । 'शतमङ्गल'नामानं कुंडेग्निसम्प्रतिष्ठपेत् ।

चण्डिकापीठसम्पूर्णं ब्रह्माणं दक्षिणे द्विजः। ततस्तत्साग्निकं कुण्डं नवसूत्रेण वेष्टयेत्। कुंडस्यांतरतः स्थाप्या प्रणीता वारिपूरिता। प्रणीतापात्रयोर्मध्ये उत्तरे वैश्वदेवतः। स्थापयेत्प्रोक्षणीपात्रं प्रणीतोदकपूरितम्। ......इत्यादि विदध्यात् कल्पितं होमयुक्तेन हविषाशनैः। तेन स्विष्टकृतं दद्याद्धविषा सोज्ज्वले नले। मायाबीजं च ब्रह्माणी माहेश्वरी कौमारी वैष्णवी वाराही नारसिंह्यै ऐन्द्र्यै चामुण्डायै विच्चे स्विष्टकृते स्वाहा। मंत्रः। स्विष्टकृदाहुतेः। आज्यस्य नवकं दद्यान्मायाबीजादिनामभिः। तत्र नंदा भगवती द्वितीया रक्तदन्तिका। शाकम्भरी तृतीया च दुर्गाभीमा च तत्परम्। भ्रामरी कालिका चैव शिवदूती प्रजापतिः। गन्धपुष्पफलोपेतां कृत्वा यज्ञात्मकां स्रुचम्। ततः पूर्णाहुतिं दद्यात् घृतस्याच्छिन्नधारया। नवाक्षरेण मंत्रेण महालक्ष्मीपरायणः। ध्यात्वा नवपुरोडाशमनन्तं देवदुर्लभम्। प्रोक्षणीपात्रमध्यस्थं मंत्रेणाश्नंति संस्रवान्। यस्माद्यज्ञरसात्पूतो यज्ञानं ब्रह्मरूपिणम्। संस्राव तत्पुरोडाशं प्राश्नाति सुखपुण्यदम्। सलिलेन प्रणीताथास्तीर्य्यध्यानपरायणः। करोति मार्जनं दर्भैः शतेन श्लोकपाठकः॥ याः शिवासक्तयोगाश्च याभिश्चैव विना सह। या आपः संदधानास्तायेवै कृण्वन्तु भेषजम्। अभिषिंचेद्यदात्मानं चतुर्भिश्चण्डिकास्तवैः। दानं दद्याद्विधानेन हेमधेन्वंबराणि च। नवदुर्गा तवाख्याता पापतापप्रणाशिनी। सर्वैश्वर्य्यप्रदाभूय कुर्वे नामविलंवितम्। नवदुर्गाविधानेस्मिन्यत्फलं परिकीर्तितम्। कालरात्रिविधानेऽपि तत्फलं लभते ध्रुवम्। एतत्त्रिगुणितं सर्वं नवदुर्गाजपे फलम्। कथितं तदवाप्नोति नित्यं चण्डीजपे कृते।

ऋषिरुवाच। शरदृताविषेमासि शुक्लपक्षे नृपोत्तम। प्रतिपात्तिथिमारभ्य नवचण्डीं समारभेत्। तोरणाढ्ये शुभे स्थाने सुविताने स्वलंकृते। पूर्वादिक्रमयोगेन दिग्देवेभ्योवलिं हरेत्। गन्धपुष्पाक्षतैर्धूपदीपैश्च सुमनोहरैः। कादम्बरी गजारूढा पुनरुक्ता च दृष्टगा। कराली महिषारूढा रक्ताक्षी प्रेतसंस्थिता। श्वेत कौभीरगा श्वेता हरिता मृगवाहना। यक्षिणी सिंहपृष्ठस्था कंकाली वृषबाहना। हंसपृष्ठा सुरज्येष्ठा सर्पराजा हि वाहना। अनेन विधिना दत्वा दिग्देवेभ्योवलिं जयी। नवग्रहलोकपालान्दिशापालांश्च पूजयेत्। कलशं सर्वरत्नाढ्यं हेमवस्त्रोदकान्वितम्। संप्रतिष्ठाप्य संपूज्य चण्डिकार्चनमारभेत्। पूर्वोक्तेन विधानेन गन्धपुष्पैरनुत्तमैः। वस्त्रालङ्कारकस्तूरी हरिद्राभिश्च कुंकुमैः। धूपैर्बहुविधैर्दीपैर्नैवेद्यैर्बहुसंस्थया। कृत्वान्यत्पूर्ववत्सर्वं जयेदेकाग्रमानसः। सहस्रमयसंयुक्तं चण्डिका-

चरितत्रयम् । कुमारीविप्रमुख्यांश्च भोजयेद्विधिपूर्वकम् । यदाद्ये दिवसे कुर्याच्च-ण्डिकापूजनादिकम् । द्विगुणं तद्द्वितीयेऽन्हि त्रिगुणं तत्परेहनि । नवमीतिथिपर्यन्तं वृद्धया पूजाजपादिकम् । एकाहारं व्रतीकुर्यादहिंसादियमैर्युतः । कृत्वाहोमादिकं सर्वं नवदुर्गाविधानवत् । वित्तशाठ्यं परित्यज्य कुर्य्यादाचार्य्यतोषणम् । वस्त्रांगुलीयभूधेनुवाजिहेमप्रदानतः । विदधाति विधानं च य एनां नवचण्डिकाम् । ऐन्द्रब्रह्मादयोभोगास्तमायान्ति प्रसेवितुम् । अपुत्रोलभते पुत्रमधनः सधनी भवेत् । व्याधयश्च क्षयं यान्ति शत्रवश्च सुदारुणाः । न तस्यास्ति भयं किंचिच्च चौराग्निजवारिजम् । इति ।

## अथ मन्त्रमहोदध्युक्तं शतचण्डिविधानम् ।

शतचण्डीविधानं तु प्रवक्ष्ये प्रीतये नृणाम् । नृपोपद्रवआपन्ने दुर्भिक्षे भूमिकम्पने ॥ १ ॥ अतिवृष्ट्यामनावृष्टौ परचक्रभयेक्षये । सर्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते ॥ २ ॥ रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः । शंकरस्य भवान्या वा प्रासादन्निकटे शुभम् ॥ ३ ॥ मण्डपद्वारवेद्याढ्यं कुर्य्यात्सध्वजतोरणम् । तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोपि वा ॥ ४ ॥ स्नात्वा नित्यकृतिं कृत्वा वृणुयाद्दशवाडवान् । जितेन्द्रियान्सदाचारान्कुलीनान्सत्यवादिनः ॥ ५ ॥ व्युत्पन्नांश्चण्डिकापाठरताँल्लज्जादयावतः । मधुपर्कविधानेन वस्त्रस्वर्णादिदानतः ॥ ६ ॥ जपार्थमासनं मालां दद्यात्तेभ्योपि भोजनम् । ते हविष्यान्नमश्नन्तोमन्त्रार्थगतमानसाः ॥ ७ ॥ [ मन्त्रार्थगतेति वचनेन मन्त्रार्थज्ञाएव वृणुयात् ] भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् । मार्कण्डेयपुराणोक्तं दशकृत्वः सुचेतसः ॥ ८ ॥ नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक् । यजमानः पूजयेच्च कन्यानां दशकं शुभम् ॥ ९ ॥ वेद्यां विरचिते रम्ये सर्वतोभद्रमण्डले । घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ १० ॥ तदग्रे कन्यकाश्चापि पूजयेद्द्‌ ब्राह्मणानपि । उपचारैस्तु विविधैः पूर्वोक्तावरणान्यपि ॥ ११ ॥ एवं चातुर्दिनंकृत्वा पञ्चमे होममाचरेत् । पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलैरपि ॥ १२ ॥ मातुलिङ्गै रिक्षुखण्डैर्नारिकेलैः पुरैस्तिलैः । जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥ १३ ॥ सप्तशत्या दशावृत्या प्रतिश्लोकहुतं चरेत् । अयुतं च नवार्णेन स्थापिताग्नौ विधानतः ॥ १४ ॥ कृत्वावरण देवानां होमं तन्नाममन्त्रदः । कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसर्ज्य च ॥ १५ ॥ अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः । निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् ॥ १६ ॥ भोजयेच्च शतं विप्राः भक्ष्यभोज्यैः पृथग्विधैः । तेभ्योऽपि

दक्षिणां दत्वा गृह्णीयादाशिषस्ततः ॥ १७ ॥ एवं कृते जगद्वश्यं सर्वे नश्यन्त्युपद्रवाः । राज्यं धनं यशः पुत्रानिष्टमन्यल्लभेत सः ॥ १८ ॥ इति ॥

## ३ अथ रुद्रयामलोक्तं शतचण्डीविधानम् ।

शतचण्डीविधानं च प्रोच्यमानं शृणुष्व तत् । सर्वोपद्रवनाशार्थं शतचण्डीं समारभेत् ॥ १ ॥ षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्वलम् । वसुकोणयुतां वेदीं मध्ये कुर्य्यात्त्रिभागतः ॥ २ ॥ सुपक्वेष्टकचितां रम्यामुच्छ्राये हस्तसम्मिताम् । पञ्चवर्णरजोभिश्च कुर्य्यान्मण्डलकं शुभम् ॥ ३ ॥ [ पञ्चवर्णवितानं च किङ्किणीजालमण्डितम् ] आचार्य्येण समं विप्रान्वरयेद्दशसुव्रताम् । ऐशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिना हरेत् ॥ ४ ॥ वारुण्यां च प्रकर्तव्यं कुण्डलक्षणलक्षितम् । मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य फलेनवै ॥ ५ ॥ तदर्द्धेन तदर्द्धेन तदर्द्धेन महीपते । [ महामते ] अष्टादशभुजां देवीं कुर्य्यादष्टकरामपि ॥ ६ ॥ पट्टकूलयुगच्छन्नां वेदीमध्ये निधापयेत् । [ आयुधानि वैकृतिकरहस्ये ] आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः करक्रमात् । अक्षमाला च कमलं वाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शङ्खोघण्टा च पाशकः । दण्डं शक्तिश्चर्म चापं पानपात्रं कमण्डलुः । अलङ्कृतभुजामेभिरायुधैः कमलासनाम् इति ॥ तत्रैव । दधौ चाष्टभुजावाणमुसले शूलचक्रभृत् । शङ्खं घण्टां लाङ्गलं च कार्मुकं वसुधाधिप इति ] देवीं सम्पूज्य विधिवज्जपं कुर्युर्दशद्विजाः ॥ ७ ॥ शतमादौ शतंचान्ते जपेन्मंत्रं नवार्णकम् । चण्डी सप्तशतीमध्ये सम्पुटोऽयमुदाहृतः ॥ ८ ॥ एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् । रूपाणि क्रमशस्तद्वत्पूजनादिक्रमाचरेत् ॥ ९ ॥ पञ्चमे दिवसे प्रातर्होमं कुर्य्याद्विधानतः । गुडाज्यपायसं दूर्वां तिलाञ्छुक्लान्नवानपि ॥ १० ॥ चण्डीपाठस्य होमश्च प्रतिश्लोकं दशांशतः । होमं कुर्य्याद्ग्रहादिभ्यः समिधाज्यचरुं क्रमात् ॥ ११ ॥ हुत्वा पूर्णाहुतिं दद्यात् विप्रेभ्यो दक्षिणां क्रमात् । कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे ॥ १२ ॥ अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः । एवं कृतेऽमरेशान सर्वसिद्धिः प्रजायते ॥ इति ॥

## ४ अथ क्रोडतन्त्रस्थशतचण्डीविधानम् ।

यदा यदा सतां हानिरात्मनोग्लानिरेव च । तदा कार्य्या शतावृत्ती रिपुघ्ना भूमिवर्द्धता ॥ १ ॥ दुःस्वप्न दर्शने घोरे महामारीसमुद्भवे । पुष्टिप्रदा शतावृत्तिः कार्य्या चायुक्षये तथा ॥ २ ॥ महाभये छेदयोगे दुर्भिक्षे मरणेऽपि च । कुर्यात्तत्र

शतावृत्तिं देवीमाहात्म्यमुत्तमम् ॥ ३ ॥ अद्भुते च समुत्पन्ने बान्धवानां महोत्सवे। कुर्य्याच्चण्डीं शतावृत्तिं सर्वसम्पत्तिकारणम् ॥ ४ ॥ शतावृत्या भवेदायुः शतावृत्या समागमः । वश्या भवन्ति राजानः श्रियमाप्नोति सम्पदाम् ॥ ५ ॥ धनार्थीप्राप्नुयाद्‌थं पुत्रकामोलभेत्सुतम् । विद्यार्थी प्राप्नुयाद्विद्यां रोगीरोगात्प्रमुच्यते ॥ ६ ॥ चतुर्वर्गफलावाप्तिकारणं रिपुनाशनम् । चण्डीशतावृत्तिफलं नास्ति यज्ञे वरानने ॥ ७ ॥ विधिमत्र प्रवक्ष्यामिश्शृणुष्व वरवर्णिनि । निमन्त्रयेत पूर्वेद्युर्विप्रान्विद्यासमन्वितान् ॥ ८ ॥ अलोलुपानृजून् शान्तान् देव्या भक्तिसमन्वितान् । मन्त्रोपतंत्रतन्त्रज्ञान् शतावृत्तौ नियोजयेत् ॥ ९ ॥ उत्तराशास्थिते हंसे शुक्लपक्षे तथा शुभे । ज्ञार्केन्दुभृगुजीवेषु सुयोगे सुतिथौ तथा ॥ १० ॥ पातक्रकचघण्टादिदोषहीने स्थिरोदये । स्थापयेदव्रणं कुम्भमुत्तराभिमुखं स्वयम् ॥ ११ ॥ नविदध्याद्धरौ सुप्ते भूकम्पाकालवर्षणे । वज्रपाते महोत्पाते गुर्वादित्यादिके तथा ॥ १२ ॥ महागुरौ विपन्ने च संवेशे कार्य्यवस्तुनः । शतावृत्यादियागं तु न विदध्यात्कदाचन ॥ १३ ॥ त्रिपञ्चसप्तभिर्वापि नवैकादशभिस्तथा । अदीर्घदिवसैः क्षिप्रं विदध्याच्चण्डिकामखम् ॥ १४ ॥ अयुग्मब्राह्मणैः कार्या शतावृत्तिः सुसिद्धये । त्रिपञ्चसप्तभिर्वापि विप्रैः पञ्चदशैरपि ॥ १५ ॥ देवीमाहात्म्यपठनं युग्मविप्रकृतं तु यत् । निष्फलं च भवेत्सर्वं भूतिनाशः प्रजायते ॥ १६ ॥ ( त्रिपञ्चेत्यारभ्य प्रजायते इत्यन्तं यद्वचनं क्रोडतन्त्रनाम्ना पठ्यते तत्तु निर्मूलम् । तन्त्रानुपलभ्यादनेकतन्त्र विरोधाच्चेति पुरश्चर्यार्णवे ) पृ० ११७६) अष्टमी नवमी वाऽपि यदि स्याद्वा चतुर्दशी। शतावृत्तिर्नवावृत्तिः पञ्चावृत्तिः क्रमेण च ॥ १७ ॥ शताश्वमेध गोमेध वाजपेय फलप्रदा । अतःकिम्बहुनोक्तेन चण्डीपाठफलं प्रिये ॥ १८ ॥ प्रत्येकावर्तनं देवि हयमेधेन सम्मितम् । त्रिरावृत्या लभेत्कामान् पञ्चावृत्यारिपूञ्जयेत् ॥ इति ॥

## अथ रुद्रयामलोक्तसहस्रचण्डीविधिः ।

सहस्रचण्डींविधिवच्छृणुविष्णो महामते । राज्यभ्रंशे महोत्पाते जनमारे महाभये । राजमारेश्वमारे च परचक्रभये तथा । इत्यादिविविधे दुःखे ,क्षयरोगादिजे भये । सहस्रचण्डिकापाठं कुर्याद्वाकारयेत्तथा । जापकास्तु शतं प्रोक्ताविंशद्धस्तश्च मण्डपः । भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणादिशेत् । गुरवे द्विगुणं देयं शय्यादानं तथैव च । सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरम् । पञ्चनिष्कमितामूर्त्तिः कर्तव्या वाधमानतः । अष्टादशभुजां देवीं सर्वायुधविभूषिताम् ।

अवारितान्नं दातव्यं सहस्रं प्रत्यहं विभो । शतं वा नियताहारः पयः पानेन वर्तयेत्। एवं यश्चण्डिकापाठं सहस्रं तु समाचरेत् । तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्यविचारणा । (अन्येपि विशेषाः योगिनीभैरवीवाराहीतन्त्रेषु देवीकालिकापुराणयोश्चानुसन्धेयाः । ते च प्रयोगे स्पष्टाः । वयं तु यामलायुक्तं नानुष्ठेयम् । यामलस्य मोहनशास्त्रत्वेनाप्रामाण्यत्वात्। तथाचस्मार्तनिबन्धेकौर्मे देवीवाक्यम्)। यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन्विविधानि च। श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा हि तामसी । कापालं भैरवं वापि यामलं वा मम व्रतम् । एवं विधानि चान्यानि मोहनार्थानि यानि तु। मयासृष्टान्यनेकानि मोहायेषां भवार्णवे । तत्रैव पाद्मे। चकारमोहशास्त्राणिकेशवोऽपि शिवेरितः । अर्हतं यामलं वामं पञ्चरात्रं तथाव्रतम्। (इति दिनकरभट्टः । स्वनिर्मितं शान्तिसारे)



—* श्रीमहालक्ष्म्यै नमः *—

# मंगलाचरणम्

गणेशं गुरुं भास्करं सर्वदेवान् नमस्कृत्य चण्डीविधानं समस्तम् ।
प्रवक्तुं प्रवृत्तोऽस्मि कल्याणहेतुं तदर्थं सुशक्तिम्विदध्युःसुरेन्द्राः ॥ १ ॥

यस्याः प्रभावमतुलं परिचिन्त्य देवा-ब्रह्मादयोऽपि परिवद्धकरा भवन्ति ।
तामादिसृष्टिजननीं हृदि सन्निधाय वक्ष्ये विधानममलं शतचण्डिकाख्यम् ॥ २ ॥

वीकानेराधिनाथस्य श्रीगंगासिंहभूपतेः ।
सदाज्ञयानिर्ग्रथनं जातमस्य सुनिर्मलम् ॥ ३ ॥

खण्डत्रयेण पूर्तिश्च संजातास्य पृथक् पृथक् ।
तत्राद्यान्तिमखण्डे द्वे भाष्याचार्यस्य धीमतः ॥ ४ ॥

श्रीहरिनामदत्तस्य सूनुना शब्दशास्त्रिणा ।
देवीप्रसादकृतिना यज्ञसिद्धौ विनिर्मिते ॥ ५ ॥

द्वितीयस्यास्य खण्डस्य विष्णुदत्तेन संग्रहः ।
कृतोऽत्र ज्यौतिषाचार्याह्वयेन विदुषाम्मुदे ॥ ६ ॥

द्वितीय इह खण्डके सकलतंत्रमतिसम्मते विविच्य वहुशोह्यहं प्रथितचण्डिकापूजनम् ।
ब्रवीमि सुपरिस्फुटं प्रवरतंत्रवित्तोषदम् यदत्र मम चापलं किमपि तत्क्षमध्वं बुधाः ॥ ७ ॥

सुजनाः सत्कृतिम्बुद्ध्वा तुष्यन्तु मदुदीरिताम् ।
अवोधेन हसन्तोमां तोषमायान्तु दुर्जनाः ॥ ८ ॥

सूक्तिभिः सरलाभिश्च पद्धतिरचिता मया ।
विदुषां किमपूर्वेयं याज्ञिकानां सुखावहा ॥ ९ ॥

सुरम्या पद्धतिश्चैषा सुजनानन्ददायिनी ।
भूयाद्भूयादितिवरं विद्वद्भ्यः प्रार्थयाम्यहं ॥ १० ॥
क्वचिद्गद्यैः क्वचित्पद्यैः प्रमाणवचनैर्युता ।
कारिकाभिश्च संयुक्ता सुपूर्णाकलितामया ॥ ११ ॥
मार्कण्डेयपुराणोक्तं डामरोक्तं च तान्त्रिकं ।
क्रोडतंत्रविधानं च दुर्गाकल्पविधानकं ॥ १२ ॥
तंत्रेषु च विशेषं यत् मेरुतंत्रादिके कृतं ।
तंत्रसारे शान्तिसारे मंत्राणां च महोदधौ ॥ १३ ॥
पुरश्चर्यार्णवे प्रोक्तं सिंहसिद्धान्तसिन्धुके ।
गणेशादिविमर्षिण्यां तथा शान्तिसुधाकरे ॥ १४ ॥
एवं वामनके तंत्रे तंत्रे चापि कुलार्णवे ।
दक्षमार्गविधाने च वाममार्गविधानके ॥ १५ ॥
तत्सर्वं युक्तिवचनमाकलय्यनिबन्धिता ।
इयम्पुरः पद्धतिकामुदेसम्यग्विपश्चितां ॥ १६ ॥
शतचण्डीसुयज्ञस्य विधानं लिखितं मया ।
पद्धत्यां तत्क्रमं ज्ञात्वा सूचीमार्गावलोकनात् ॥ १७ ॥
पूजाक्रमे सन्निविष्टेयज्ञकर्म्मणि दीक्षितः ।
प्रमादरहितोविद्वान्नावसीदेत् कदाचन ॥ १८ ॥

घण्टावादनकृत्तथासनगतोगुर्वर्चनापूर्वकं ।
प्राणायामसुसँस्कृतोथ प्रणमेद्दीपं तथा भैरवं ॥
तस्याज्ञां हृदि सन्निधाय कुशलोशुद्धिं विदध्याततः ।
दिग्बन्धादिकभूतशोधनमथोप्राणप्रतिष्ठां सुधीः ॥ १९ ॥
कुर्यादन्तरबाह्यदेशकलितां नानाविधां मातृकां ।
तत्तन्यासमपि त्रिशोऽसुयमनं कृत्वा यथा शास्त्रतः ॥
आधारादिचतुष्कभावनमथो मूलानुमंत्रादिकं ।
न्यस्यारुद्धमरुत्कराङ्गजनिजन्यासं स्मरेद्देवतां ॥ २० ॥
कृत्वार्घादिकपात्र... परेत्पीठार्चनं पूर्ववत् ।

स्वात्मार्चाजपवैश्वदेवहवनन्यासार्पणं मंत्रतः ॥
अर्चाशोधनपीठपूजनविधिं कृत्वा तमावाहयेत् ।
मुद्रादर्शनमासनाद्युपहूतीः पुष्पान्तमभ्यर्पयेत् ॥ २१ ॥
संपाद्यावरणार्चनं च विधिवद्धूपादिकं चार्पयेत् ।
नैवेद्यं च निवेद्य पूर्ववदथोतद्वैश्वदेवादिकं ॥
गण्डूषाचमदन्तशोधनमथो भूयः प्रसन्नार्चनं ।
कृत्वा रात्रिकवन्दनं क्रमुकयुक्ताम्बूलमभ्यर्पयेत् ॥२२॥
चण्डार्चावहुवर्तियुक्तरजनीकान्तादिनीराजनं ।
साष्टांगावनतिं स्तुतिं विरचयेद्विज्ञाप्य तं संहरेत् ॥
प्राप्नोतीप्सित सिद्धिमृद्धिजननीमन्तेचयात्यव्ययं ।
एषा श्लोकचतुष्टयी निगदिता पूजाक्रमोद्देशिका ॥२३॥

# ॥ अथ तान्त्रिकपूजाविधानम् ॥

तत्र प्रथमं कृतनित्यक्रियोयजमानो यज्ञस्थानं समागत्य यज्ञशालाम्परिक्रम्य हस्तौ चरणौ प्रक्षाल्य आचान्तः मण्डपद्वारदेशे स्थित्वा गुरुं देवं दिक्पतिं च नत्वा सर्वपापक्षयार्थं मंत्रद्वयं पठेत् यथा हे देवि प्राकृतं चित्तं पापाक्रान्तमिदं मम । तन्निःसारय चित्तान्मे पापं फट् फट् च ते नमः ॥ सूर्यः सोमोयमः कालोमहाभूतानि पंच च । एते शुभाशुभस्येह कर्म्मणोमम साक्षिणः ॥ इति मंत्रद्वयं पठित्वा हुँ फट् इति ब्रुवन् क्रोधदृष्ट्या स्वपार्श्वेद्वयं पश्यन् सर्वं पापं शरीरान्निर्गतमिति भावयेत् । ततः मण्डपद्वार-

देशे आसने उपविश्य आचमनप्राणायामौ विधाय सामान्यार्घस्थापनं कुर्यात् तत्प्रकारः अस्त्रजलेन भूमिं सम्प्रोक्ष्य त्रिकोणवृत्तचतुरस्रमण्डलं विलिख्य ॐ आधारशक्त्यै नमः इति मण्डलं सम्पूज्य तदुपरि आधारं संस्थाप्य रँ वह्निमण्डलाय दशकलात्मने नमः इत्याधारं सम्पूज्य फट् इति मंत्रेणार्घपात्रं प्रक्षाल्य; आधारोपरि संस्थाप्य ॐ सूर्यमण्डलाय द्वादशकलात्मने नमः इत्यर्घपात्रं सम्पूज्य नमः इति जलेनापूर्य सँ सोममण्डलाय षोडशकलात्मने नमः इति जलं सम्पूज्य आधारपूजने क्रमेण मँ उँ अँ वा वोध्यम्।

---

एतदर्थं सिद्धान्तसंग्रहोक्ता कारिका। यज्ञवाटं परिक्रम्य प्रक्षाल्य चरणौ करौ। आचान्तो द्वारदेशस्थो गुरुर्देवं च दिक्पतिम्॥ नत्वा पापापनोदार्थं मन्त्रद्वयमुदीरयेत्। हे देव प्राकृतं चित्तं पापाक्रान्तमिदं मम॥ तन्निःसारय चित्तान्मे पापं फट् फट् च ते नमः। सूर्यः सोमो यमः कालो महाभूतानि पंच च॥ एते शुभाशुभस्येह कर्म्मणो मम साक्षिणः। हुँ फट् इति ब्रुवन् क्रोधदृष्ट्या पश्येच्च पार्श्वयोः॥ एवं कृते महापापं यत्तद्दूरेऽवतिष्ठते। तत्क्षणादेव नश्यन्ति पापान्यन्यानि मंत्रिणः॥ पूजने त्यक्तपापस्य काममिष्टं क्षणाद्भवेत्। ततः आचमनं कृत्वा सामान्यार्घं प्रकल्पयेत्॥ इति। (सामान्यार्घस्थापनविधिः गौतमीये) त्रिकोणवृत्तभूबिम्बं मण्डलं रचयेत्ततः। आधारशक्तिं सम्पूज्य तत्राधारं विनिःक्षिपेत॥ अस्त्रेण पात्रं संशोध्य हृन्मंत्रेण प्रबोधयेत्। निःक्षिपेत तीर्थमावाह्य गन्धादीन् प्रणवेन तु॥ दर्शयेद्धेनुमुद्रां वै सामान्यार्घमिदं स्मृतम्। मंत्रयेत् प्रणवेन वै⋯इति च॥ (मेरुतंत्रे) अर्घोदकेन सम्प्रोक्ष्य द्वारपूजां समाचरेत्। इति (द्वारपूजाविधिस्तत्रैव)

तस्मिन् जले ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इत्यङ्कुश मुद्रया सूर्यमण्डलान् तीर्थमावाह्य प्रणवेन गन्धपुष्पे नि- धाय तेनैव सम्पूज्य तेनैवाष्टधा दशधा वाभिमंत्र्य धेनुमुद्रां प्रदर्शयेत् ततस्तज्जलेन फट् इति द्वारमभ्युत्त्य द्वारपूजां कुर्यात् ॥ तद्यथा ॐ विघ्नेशायनमः इति द्वारस्योर्द्ध्वे मँ महालक्ष्म्यैनमः इति तद्दक्षिणे । सँ सरस्वत्यैनमः इति तद्वामे । द्वारश्रियैनमः इति मध्ये ॥ ततः द्वारस्य दक्षिण शाखायां वाम शाखायां चोर्ध्व भागादारभ्य तलपर्य्य- न्तमेताद्वारदेवताः पूजयेत् । तद्यथा गँ गणपतये नमः इति दक्षिणे क्षँ क्षेत्रपालायनमः इति वामे शँ वसुन्धरा- युक्तायशंखनिधयेनमः इति पुनर्दक्षिणे पँ वसुमतियुक्तायै पद्मनिधयेनमः इति वामे मँ मायाशक्त्यैनमः इति दक्षिणे चँ चिच्छक्त्यैनमः इति वामे गँ गङ्गायैनमः इति दक्षिणे यँ यमुनायैनमः इति वामे । धँ धात्रेनमः इति दक्षिणे वँ विधात्रेनमः इति वामे । दँ देहल्यैनमः अँ अस्त्रायनमः इति वा देहल्याम् एवं पश्चिमद्वारमारभ्य प्रतिद्वारं सम्पूज्य

---

द्वारमर्घाम्बुना प्रोक्ष्य तन्मध्ये विघ्नपं यजेत् । तद्दक्षिणे महालक्ष्मीं वामे चापि सरस्वतीम् ॥ द्वारे श्रियं च तन्मध्ये शाखयोर्दक्षिणा- न्ययोः । ऊर्ध्वभागात् तलं यावत् पञ्चपञ्चविभागके ॥ नाम्नश्चा- द्यक्षरं विन्दुयुक्तं नाम च ङेन्तकम् । समुच्चार्य हृदन्तं च देवा- नेतान् प्रपूजयेत् ॥ गणपतिं क्षेत्रपालं ततश्च वसुन्धरया । युक्तं

द्वारपालान् पूजयेत् ॥ यथा पश्चिमद्वारमारभ्य प्रतिद्वारं द्वौ द्वौ द्वारपालौ क्रमेण पूजयेत द्वारपालान्तु देवभेदेनानेकभेदाः अत्र तु देवीमण्डपस्य द्वारपालाः द्वारेषु क्रमेण पूज्याः । यथा पश्चिमद्वारे ब्राह्मीं माहेश्वरीं उत्तरे कौमारीं वैष्णवीम् पूर्वे वाराहीम् इन्द्राणीम् । दक्षिणे चामुण्डाम् महालक्ष्मीमिति । ततः मूलमंत्रेण दिव्यदृष्ट्याऽवलोकनात् दिव्यान् विघ्नानुत्सार्य्य अस्त्राय फट् इति जलक्षेपेण अन्तरिक्षगान्विघ्नानुत्सार्य्य तेनैव मंत्रेण त्रिभिर्वामपार्ष्णिघातै भौमान् विघ्नानुत्सारयेत् । ततोदक्षिणाङ्गं किंचित् संकोच्य द्वारस्य वामशाखां स्पृशन् उत्सारितभूतानां निर्गमनार्थं दक्षिणमार्गे ददन् दक्षिणपादपुरःसरं मण्डपान्तः प्रविशेत् । वाममार्गे तु शक्तिवामपादपुरःसरं मण्डपान्तःप्रवेशः ॥ ततोनैर्ऋत्यां दिशि ॐ वास्तुपुरुषाय नमः ॐ वास्त्वधीशाय ब्रह्मणे नमः इति पुष्पाक्षतैः सम्पूज्य प्रणम्य पंचगव्यसामान्यार्घतोयाभ्याम् मण्डपाभ्यन्तरं सम्प्रोक्ष्य

---

शंखनिधिं दक्षे वामे वसुमतीयुतम् ॥ पूजयित्वा पद्मनिधिं तदधोदक्षवामतः । मायाशक्तिं च चिच्छक्तिं गङ्गां च यमुनां तथा ॥ धातारं च विधातारं दँ देहल्यै नमस्त्वधः । आदौ तु पश्चिमद्वारे पूजाचेयं प्रकाशिता ॥ इति ( देव्याद्वारपालाश्चापि मेरुतंत्रोक्ताः) देव्याः सूर्यस्य योगिन्योऽष्टावेताद्वारपालकाः । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह । तथा (विघ्नोत्सारणप्रकारं चापि तन्त्रैवोक्ताः) ततश्च देशिकोविघ्नान् दिव्यानालोकनेन च । अन्तरिक्ष-

संस्कारचतुष्टयं कुर्य्यात् ॥ तद्यथा मूलमंत्रं समुच्चरन् मण्डपाभ्यन्तरं पश्येत् । फट् इति सामान्यार्घजलेन तत्प्रोक्षणं कुर्य्यात् तेनैव मंत्रेण दर्भैस्ताडयेत् । हुँ इति सिञ्चेत् । ततः श्रीखण्डागुरुकर्पूरादिधूपेन मण्डपाभ्यन्तरं प्रधूप्य लाजाचन्दनसिद्धार्थभस्मदूर्वाक्षतकुशानिति सप्तविकरानेकीकृत्य फट् इतिमंत्रेण सप्तधा अभिमंत्र्य ॐ अपसर्प्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया इति पठन् त्रिधा विकरेत् । ततस्तान् विकिरान् अस्त्रमंत्रमुच्चरन् दर्भमुष्टिना संमाज्य, वर्धन्यासनार्थमीशानकोणे पूञ्जीकृत्य स्थापयेत् ॥ ततः पुण्याहं वाचयित्वा विप्रान् संतोषयेत् ॥ एवं द्वारपूजां मण्डपशुद्धिं विधाय

---

तानस्त्रोदकैरुत्सादयेत् क्रमात् ॥ पार्थिवान् पार्ष्णिघातैश्च त्रिभिरुत्सार्य यत्नतः । अङ्गंसंकोच्य किंचित्तु शाखां वामगतां स्पृशन् ॥ उत्सारितानां विघ्नानां ददद्वर्त्मंतु दक्षिणे । पादेन दक्षिणेनाथ प्रविशेद्यागमण्डपम् ॥ वाममार्गेऽथवा शाक्ते वामपादपुरः सरम् । ब्रह्माणं वास्त्वधीशं नैर्ऋत्यां दिशि पूजयेत ॥ ( मेरुतंत्रे ) वीक्षणाद्यैस्ततः शुद्धिं चतुर्वारां समाचरेत् । संवीक्ष्य मूलमनुना ह्यस्त्रेण प्रोक्षयेत्ततः ॥ कुर्य्यात्ताडनमस्त्रेण कवचेनावसेचयेत । श्रीखण्डागुरुचन्द्रैश्च धूपितेऽस्त्रेण सप्तधा ॥ जप्तांश्चन्दनसिद्धार्थदूर्वांभस्माक्षतानकुशान् । सलाजान्विकरेन्मंत्री प्रत्यूहघ्नान् हि मण्डपे ॥ (तंत्रान्तरे) आदौ विघ्नं समुत्सार्य पश्चादासनकल्पनम् । अथवा चासनेस्थित्वा विघ्नानुत्सारयेत्सुधीः ॥ ( शारदायाम् ) लाजाचन्दनसिद्धार्थभस्मदूर्वाक्षताः कुशाः । विकिरा इति निर्दिष्टाः सर्वविघ्नौघनाशकाः ॥ ( विघ्नोत्सारणमंत्रो मेरुतंत्रे ) नाराच-

आत्मशुद्ध्यर्थं देवतासम्मुखमागत्य नातिदूरे प्रदेशे स्वासनं परिकल्प्य तत्रोपविश्य मूलेनाचम्य प्राणायामाँश्चापि मूलेनैव कृत्वा दीपनाथं सम्पूज्य भैरवप्रार्थनां कुर्यात् तद्यथा ॐ दीपनाथभैरवाय नमः इति तन्नामकं भैरवं सम्पूज्य बध्वाञ्जलिः प्रार्थयेत् । अस्मिन् यज्ञे दीपनाथ निर्विघ्नसिद्धिहेतवे । देवीयागसमृद्ध्यर्थमनुज्ञां दातुमर्हसि ॥ अतितीक्ष्णमहाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यं ह्यनुज्ञां दातुमर्हसि ॥ इति भैरवाज्ञामादाय सङ्क-

मुद्रया सम्यगस्त्रमंत्रेण देशिकः । अपक्रामन्तु भूतानि पिशाचाः प्रेतगुह्यकाः ॥ येचात्र निवसन्त्यन्ये देवताभुविसंस्थिताः ॥ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ ये भूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । श्लोकयोरन्तरतश्चास्त्रं पठन् नाराचमुद्रया ॥ क्षिप्त्वा तान्मण्डपस्य·········इति ( तत्रैव ) मार्जयेदस्त्रमंत्रेण तान्मंत्रीदर्भमुष्टिना । आसनाय तु वर्द्धन्याईशाने स्थापयेच्च तान् ॥ पुण्याहं वाचयित्वा च विप्रान् संतोष्य यत्नतः । वेदिकायां लिखेत् पश्चात् सर्वतोभद्रमण्डलम् ॥ सर्वतोभद्रार्थे प्रथमखण्डमवलोक्यम् अत्रैव प्रसङ्गात् पंचशुद्धिविधानं लिख्यते तत्र ( श्यामारहस्य ) धृतवचनानि । पञ्चशुद्धिं विना पूजा अभिचाराय कल्पते । आत्मशुद्धिः स्थानशुद्धिः मन्त्रस्य शोधनं तथा ॥ द्रव्यशुद्धिर्देवशुद्धिः शुद्धिः पञ्चविधेरिता । सस्नानभूतसंशुद्धिः प्राणायामादिभिः प्रिये ॥ षडङ्गाद्यखिलन्यासैरात्मशुद्धिरितीरिता । ( मेरुतंत्रे ) पञ्चगव्यार्घतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् । संमार्जनोपलेपाद्यैर्दर्पणोदरवत्कृतम् ॥ विमलैर्धूपदीपादिपुष्पदामादिशोभितम् । पञ्चवर्णमयं चित्रं स्थानशुद्धिरियंमता ॥ गृहीत्वा मातृकावर्णान् मूलमंत्राक्षराणि च । क्रमात् क्रमाद्द्विरावृतिमन्त्रशुद्धिरियं मता ॥

ल्पं कुर्यात् । सङ्कल्पोयथा ॐ अद्येत्यादिसर्वम्पठित्वा श्री महाकाली महालक्ष्मी महासरस्वती स्वरूपिणी त्रिगुणात्मिका श्रीदुर्गाप्रीत्यर्थं अष्टोत्तरशतनवार्णमंत्रेणाद्यन्तसम्पुटितस्य रात्रिसूक्तादिदेवीसूक्तान्तस्य कवचार्गलकीलकादिरहस्यत्रयान्तस्य शापोद्धारोत्कीलनादिविहितसर्वाङ्गसम्पन्नस्य सप्तशत्याः स्तोत्रस्य पाठकर्म्मण्यधिकारप्राप्त्यर्थं पूजनाधिकारसिद्ध्यर्थं चात्मशुद्धिकरणार्थं भूशुद्ध्यादि सर्वन्यासान्तं कर्म करिष्ये ॥ इति संकल्प्य ततो फट् इति मंत्रमुच्चरन् वेदिकोपरि गत्वावेदिकायां मृदा चतुरस्रं मण्डलं विधाय सर्वतोभद्रादिमण्डलं अभिमतं विलिख्य पूजोपक-

---

पूजाद्रव्यादि सम्प्रोक्ष्य मूलास्त्राभ्यां विधानतः । दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥ पीठेदेवीं प्रतिष्ठाप्य सकलीकृत्य मंत्रवित् । मूलमंत्रेण दीक्षात्मा अभिभाव्योदकेन च ॥ त्रिवारं प्रोक्षयेद्विद्वान् देवशुद्धिरितीरिता । पञ्चशुद्धिं विधायेत्थं पश्चाद्यजनमारभेत् । पंचशुद्धिविहीनेन यत्कृतं न च तत्कृतम् । (तत्रैव) अर्घ्याम्बुना च गव्येन यागस्थाने सुसिञ्चिते । गव्येनेति पंचगव्येन । तदुक्तम् (गौतमीये) पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते । घृतं च पलमात्रं स्यात् गोमयं तोलकद्वयम् ॥ दधिप्रसृतिमात्रं स्यात् पंचगव्यमिदं स्मृतम् । अथवा पंचगव्यानां समानोभाग इष्यते ॥ मूलमंत्रेण संमंत्र्य कुशाग्रेण च शोधयेत् । तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनम् ॥ (तद्विधिश्चब्रह्मकूर्चप्रकरणे) आचमनप्राणायामसंकल्पाश्च सर्वेषां कार्य्याणामारंभे कार्य्या एवेति सम्प्रदायः । तांत्रिकपूजा तु भैरवानुग्रहविरहान्न सिद्धिं समधिगच्छतीति सर्वप्रथममाज्ञागृहीतुं भैरवप्रार्थनाविहिता ततएव पूजनारंभश्च

रणानि यथास्थानं निवेश्यासनमास्तीर्य्य वामभागस्थजलमादाय जलशोधनं कुर्य्यात्। तद्यथा यँ इति वायुबीजेन संशोध्य रँ इत्यग्निबीजेन सन्दह्य वँ इति वरुणबीजेनाप्लाव्य गायत्र्या सम्प्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य तेन जलेन ॐ आत्मतत्वाय स्वाहा, ॐ विद्यातत्वाय स्वाहा ॐ शिवतत्वाय स्वाहा इति त्रिराचम्य अस्त्राय फट् इति आसने सम्प्रोक्ष्य तदुपरि अष्टदलकमलं विलिख्य (तदधः त्रिकोणं जलादिना वा विलिख्येति कुत्रचित्पाठः) (आसनार्थं कूर्मशोधनं यदि

तदर्थं ( यामले ) आरक्तवर्णं तद्वर्णं शक्तिद्वादशसंयुतम्। सम्पूज्य दीपनाथं च भैरवं प्रार्थयेदिति ॥ अतितीक्ष्णमहाकाय कल्पान्तदहनोपम। भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ कान्तं चास्त्रं समुच्चार्य्य पूजावेदीन्ततो विशेत्। ( वैष्णवीकल्पे ) संस्कृत्य चासनस्थान आस्तीर्य विहितासनं। जलमानीय सव्येन संस्कुर्य्यात्तद्यथाविधि इति। ( जलसंस्कारस्तत्रैवोक्तः। ) वायुबीजेन संशोध्य वह्निबीजेन सन्दहेत्। प्लावयेज्जलबीजेन गायत्र्या प्रोक्षयेत्ततः ॥ ततोधेन्वामृतीकृत्य प्रणवेनाभिमंत्रयेत्। ( तथा ) आत्मविद्याशिवैस्तत्वैः प्रणवादिशिरोन्तकैः। तज्जलेन त्रिराचम्य आसनं शोधयेत्ततः ॥ ( तथा ) मेरुपृष्ठऋषिः प्रोक्तः सुतलं छन्द ईरितम्। कूर्मोऽत्रदेवता प्रोक्ता आसनोपनिवेशने ॥ विनियोगश्च पठितः पठेत्धृत्वासनं ततः। अत्र प्रसंगात् आसनार्थं शास्त्रोक्तानि वचनानि यथा-त्रिकोणस्वस्तिकाष्टदलानि क्वचिदासनाधः क्वचिदुपरीति भद्रचिह्नत्वादेव विहितम् परन्तु दीपस्थापनं वा साधकासनं कूर्मचक्रे कर्तव्यं तदर्थं यामलोक्तवचनं संगृह्य लिख्यते यथा, दीपस्थानं समाश्रित्य कृतं कर्म शुभावहम्। चतुरस्रां भुवं भित्वा कोष्ठानां नवकं लिखेत् ॥ पूर्वादिकोष्ठे

संभवेत्तदप्यत्रैव कार्यम्) आसनप्रसङ्गात। ततः ॐ पृथिव्या मेरुपृष्ठऋषिः सुतलं छन्दः कूर्मोदेवता आसनपरिग्रहे विनियोगः इति विनियोगं कृत्वा आसनं धृत्वा।

---

विलिखेत् सप्तवर्गाननुक्रमात्। लक्ष्मीशस्वरान् युग्मक्रमाच्चैव लिखेत्ततः। दिक्षु पूर्वादितोयत्र क्षेत्राख्याद्यक्षरं स्थितम्। मुखन्तस्य तु जानीयात् हस्तावुभयतः स्थितौ ॥ कोष्ठे कुक्षी उभे पादौ द्वौ शिष्टम्पुच्छमीरितम्। क्रमेणानेन विभजेन्मध्यस्थमपि साधकः ॥ मुखस्थोलभते सिद्धिं करस्थः स्वल्पजीवनः। उदासीनः कुक्षिसंस्थः पादस्थोदुःखमाप्नुयात् ॥ पुच्छस्थः पीड्यते मंत्री वन्धनोच्चाटनादिभिः। (गौतमस्तु) मुखे सर्वार्थसिद्धिः स्यात्करयोरल्पसिद्धयः। कुक्षौ तु नित्यं नैष्फल्यं पादयोर्नैव सिद्धयः ॥ पुच्छे मृत्युस्तु नियतः पृष्ठे सर्वार्थसिद्धयः। तस्मात्तत्साधु विज्ञाय कुर्यात्सर्वं जपादिकम् ॥ (मेरुतन्त्रे) कूर्मचक्रमविज्ञातुर्महाविघ्नोऽभिजायते ॥ (सारसंग्रहे) तच्चतुर्धा स्थितं लोके तत्प्रकारस्तथोच्यते। प्रथमस्तु परः कूर्म्मचक्रोदेशगतस्तथा। ग्रामगो गृहगश्चेति चतुर्धा सव्यवस्थितः (तन्त्रराजे) व्यञ्जनं देशकूर्म्मे स्याद् गृहकूर्म्मे स्वरास्तथा। ग्रामकूर्म्मे तद्द्वितयं परकूर्म्मे न तदुभयम्। (गौतमीये) देशं ग्रामं गृहं वापि नवधा विभजेन्नरः। प्रागादिपश्चिमान्तं तु कादिमान्तानि विन्यसेत्। अक्षराण्यथ यादीनि तथाष्टौ कोष्ठयोर्न्यसेत्। ईशद्वयमधो मध्ये स्वरान् प्रागादिविन्यसेत्। शसान्तास्तु दिशः पश्चान्नामाद्यक्षरतोभवेत्। तन्मुखं पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः। पुच्छमेकमथो मध्यं पृष्ठमेवं षडङ्गवान्। (मेरुतन्त्रे) परदेशग्रामगृहभेदात् कूर्मश्चतुर्विधः। वृत्तद्वयं प्रकुर्वीत नवकोष्ठकभेदितम्। कवर्गाद्याः सप्तलेख्याः पूर्वाशादिषु लक्षकौ। ऐशान्यां विलिखेन्मध्ये वृत्तकोष्ठे द्वयं द्वयम्। स्वराणां पूर्वतोलेख्यं श्रीवीजं मध्यकोष्ठके। प्राङ्मुखः परकूर्मस्तु सर्वदैव प्रजायते। देश-

गामादिमोवर्णोयस्यां दिशि व्यवस्थितः। देशकूर्म्ममुखं तस्यां दिशि-स्याद् ग्रामकूर्मके। मुखद्वयंतु विज्ञेयं स्वराद्व्यञ्जनतस्तथा। गृहकूर्म्मस्य वदनमुदग्द्वारमुखं भवेत् । मुखस्य पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः। पुच्छमेकमथो मध्ये पृष्ठमेवं षडङ्गवान् । गृहकूर्मे गृहनामज्ञानप्रकारस्तु ( ज्योतिः शास्त्रे ) विस्तारआयामगुणैश्च भक्ते यच्छेषमायः सभवेद्ध्वजादिः । ध्वजोधूम्रश्च सिंहः श्वा सारमेयः खरोगजः। ध्वाङ्क्षश्चेति क्रमेणैव आयाष्टकमुदाहृतम् ॥ ( प्रकारान्तरमपि ) विस्तारं च तथाऽऽयाममेकीकृत्य त्रिधा पुनः। मन्त्रसाधकगेहानामेकं चेत् प्रथमाक्षरम्। किं तदा पुण्यतीर्थेन पुण्यक्षेत्राटनेन वा। ( प्रयोजनमितिशेषः ) ( मेरुतन्त्रे ) क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम्। यदि स्यात् सध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः। ( गौतमीये ) मन्त्राक्षरेण मैत्रश्च दीपनाम्नोभवेद्यदि। साधकस्य च नाम्ना च किं न सिद्ध्यन्ति मन्त्रिणः। पञ्चाशद्वर्णरूपेण क्षेत्रेशा भुविविग्रहाः। तस्मात तत् सगुणं क्षेत्रं सिद्धये स्यान्नचान्यथा । विगुणश्चेन्मुखस्थोऽपि न तेन सिद्धिमाप्नुयात। तस्माच्चक्रं विचार्य्यैव मित्रं च सर्वसिद्धिदम् । यस्मिन्देशे द्वीपपतिः सगुणं नाममन्त्रयोः। तत्र यत्नेन गन्तव्यं सः पीठोदुर्लभो मतः। [ कालिकोद्भवे ] स्थानसाधकयोर्नाम्नोरमैत्रं यत्र विद्यते । तदक्षशास्त्रतोज्ञात्वा तत्तत्स्थानं परित्यजेत्। [ मैत्रमुक्तं तन्त्रान्तरे ] अरित्वमद्वयस्योक्तं गकारेण परस्परम्। ऋद्वयस्य चकारेण मकारस्य खकारतः। लृद्वयस्य यकारेण पकारस्य च लृद्वये। ओ द्वयस्य पकारेण षकारस्यौयुगेन तु। जकारस्य ढकारेण ऊकारस्य खकारतः । उकारस्य तकारेण फकारस्य धकारतः । मकारस्य च रेफेण यकारस्य सकारतः। अरित्वमेषां वर्णानामन्येषां मित्रभावना। स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते । तदक्षशास्त्रतोज्ञात्वा साधकोयत्नतस्त्यजेत् । यथा गर्गस्य वैरी स्यादट्टहासं महापुरम्। औड्डियानं षण्मुखस्य ऋजुभद्रस्य चक्रकम् । जयन्ती ढक्कणस्यापि संचार कुम्भकस्य च। उकदेवस्य ताराख्यं फजेर्घूमा-

व्ययमेव च । भद्रस्य रम्यकं सोमनगरं यज्ञशर्म्मणः । एवं क्रमेण विज्ञाय रिपुस्थानं त्यजेद् बुधः ॥ ( मेरुतन्त्रे ) महारित्वे जीवनाशोवैरेस्याद्धननाशनम् । किञ्चिद्वैरे सुखाल्पत्वं तदिदानीं निगद्यते । अगौ ऋचौ ऋषौ जहौ मखौ जथौ इवौ उतौ । फधौ भरौ यसौ चेति महारी परिकीर्तितौ । ऋच्छौ ओढयषौ तद्वज्जटौ ऊषौ वधौ ढलौ । वैरं तु पञ्चमे वर्गे तत्किञ्चित् कटयोर्भवेत् । चटयोः पचयोश्चापि तढयोर्ढशयोरपि । एकवर्गे यदाप्रीतिः स्ववर्गं द्विगुणं कुरु । स्थानवर्गयुतं तष्टमष्टभिश्चाप उच्यते । स्थानवर्गोद्विगुणितः स्ववर्गश्चाष्टशेषितः । स्थानाय उभयोः कार्य्यमन्तरं यस्य शेषकम् । यावत् स्थितं सोऽर्थदः स्यात् साधकोऽर्थप्रदो न सः । वैरंतु पञ्चमे... इति । (तदुक्तंज्योतिः शास्त्रेऽपि) अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् । सर्पाखुमृगावीनां निजपञ्चमवैरिणामष्टौ । (स्ववर्गादेर्द्विगुणीकरणादौ स्वरज्ञानप्रकारोऽपि तत्रैवोक्तः) । गजशरर्तयुगाश्च महीगुणा । द्विसहितामघवादिदिशः क्रमात् ॥ गृहपतेरभिधापुरदिङ् मिता । नवहृता भवनस्य दशा च सा इति । (तन्त्रान्तरे) रिपुत्वे निश्चिते तस्य द्वितीयार्णादि शोधयेत् । इत्थं स्थानगृहं कृत्वा तत्र मन्त्री वलिं हरेत् । (गौत्तमीये) दीपनाथं लिखेन्मध्ये पूजयेत तं विभावयेत् । ( तन्त्रे ) पूर्वादिनवकोष्ठेषु क्षेत्रेशांस्तत्र पूजयेत् । अमृतः प्रथमे प्रोक्तोद्वितीये वृषभस्तथा । शैलराजस्तृतीयेस्याच्चतुर्थे वासुकिः स्मृतः । अर्थकृत् पञ्चमे प्रोक्तः शक्तिकृत् षष्ठ ईरितः । पद्मयोनिः सप्तमे स्यान्महाशङ्खोऽष्टमे स्मृतः । छायाछत्रगणः प्रोक्तोनवमे मन्त्रिनायकैः (मेरुतंत्रे) अमृतोवृषभः शैलराजोवासुकिरेव च । अर्थकृच्छक्तिकृत् पूर्वं काष्ठादौ वलिनाचयेत् । पद्मयोनिं महाशङ्खं छायाख्यं चापि मध्यमे । कूर्मपृष्ठे गृहं कृत्वा गृहस्थोजपमाचरेत् । (यामले) महापीठेषु शाक्तेषु कामरूपादिकेषु च । यदि कुर्य्यात् पुरश्चर्य्यां तदा कूर्म्मं न चिन्तयेत् । (कामरूपादिपीठान्युक्तानि (योगिनीहृदयादौ) कामरूपं च काशीं च नैपालं पौण्ड्रवर्धनम् । काश्मीरं कान्यकुब्जं च पूर्णशैलं तथार्बुदम् ।

आम्रातकेश्वरैकाम्रत्रिस्रोतं कामकोटकम् । कैलासं भृगुनगरं केदारश्चन्द्रपूरकम् । श्रीपीठमोङ्कारपीठं जालन्धरं च मालवम् । कुलान्तकं देवीकोटं गोकर्णं मारुतेश्वरम् । अट्टहासं च विरजं राजगृहं महापथम् । कोलागिरिर्मेलापुरं कालेश्वरं जयन्तिका उज्जयिनी विचित्रं च क्षीरकं हस्तिनापुरम् । उड्डीशं च प्रयागाख्यं षष्ठीमायाजलेश्वरम् । मलयश्चैव श्रीशैलोमेरुर्गिरिवरस्तथा । माहेन्द्रं वामनं चैव हिरण्यपुरमेव च । महालक्ष्मीरुड्डियानं छाया-छत्रमतः परम् । एते पीठाः समुद्दिष्टाः मातृकारूपमास्थिताः । (तन्त्रान्तरे) दाक्षायिण्या इत्यधिकृत्य । योनेर्हृदो गुदाद्वामनेत्रा-द्वामश्रुतेरथ दक्षकर्णात् तथा प्राणाद्वामवक्षोरुहादपि दक्षगण्डान्न-खेभ्यश्च वलीपरिसरादथ । नाभेस्तथाङ्गुलीभ्यश्च दन्तेभ्योदक्ष-पाणितः । वामगण्डान्मस्तकाच्च बाहोर्दक्षस्तनादपि । स्कन्धात दक्षिणात् कक्षाद्वामकक्षात् तथोदरात् । तत ऊर्ध्वं वलेर्मध्यवले-स्तलवलेरथ । ततोवस्तेर्नितम्बाच्च जघनाद्दक्षिणोरुतः । वामोरुतो दक्षिणाच्च जानुतो वामजानुतः । जङ्घाकाण्डात् ततो दक्षाद्वामाच्च दक्षगुल्फतः । वामगुल्फाद्दक्षनेत्राद्दक्षाद्वामाच्च पार्ष्णितः । रक्तात् पित्तात् तथा मेदोजिह्वामज्जाभ्य एव च । दक्षिणात् पादुकाङ्गुष्ठा-द्वामादपि च तेजसः । नाडीततेश्च छायायाः केशपाशादिति क्रमात् तत्तत्स्थानेषु पतितात् सर्वसिद्धिकराणि वै । पीठानि चैकपञ्चा-शत् कामरूपादिकानि च । अकारादिक्षकारान्तवर्णरूपाणि जज्ञिरे । अङ्गान्तरास्थिलोमभ्योभूषणानां च संहतेः । उपपीठान्यथंख्यानि प्रादुर्भूतानि सर्वतः । ( मेरुतंत्रे ) कुरुक्षेत्रे प्रयागे च गङ्गासा-गरसङ्गमे । महाकाले च काश्यां च कूर्मस्थानं न चिन्तयेत् । ( गौतमीये ) पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे । यदि कुर्य्यात् पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत् । [ यामले ] अष्टाष्टके शक्तिपीठे तीर्थे क्षेत्रेषु वा पुनः अरण्ये पर्वते पुण्ये कूर्म-चक्रं न चिन्तयेत् । [ पुरश्चरणचन्द्रिकायाम् ] कूर्म्मचक्रमिति प्रोक्तं मन्त्राणां सिद्धिसाधकम् । इति । मायाबीजं समुच्चार्य्य आधार-

ॐ पृथ्वित्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् । इति पठित्वा ह्रीं आधारशक्तिकमलासनाय नमः इत्यासनं सम्पूज्य तदुपरि आत्ममंत्रमुच्चरन् स्वस्तिकपद्मासनादिक्रमेणोपविश्य ओं ह्रां ह्रीं सः सग्रहराशिनक्षत्रयोगकरण परिवृतासनस्थित श्री सूर्याय एषतेर्घः स्वाहा इति सूर्यायार्घं दत्वा पूजाद्रव्याणि सँस्कुर्य्यात् । तद्यथा नाराचमुद्रां वध्वा ह्रां हूं फट् इति मंत्रमुच्चरन् गन्धपुष्पनैवेद्यादीनि समदृष्ट्या विलोकयेत् । ततः रं इति मंत्रेण दीपशिखां स्पृशेत् । ततः ओं वीजमुच्चरन् देवतीर्थेन जलं संस्पृश्य जलपात्रं वामहस्ते धृत्वा । जं जलाधारपात्राय नम इति मंत्रं पठेत् जलपूर्णकलशं स्ववामभागे स्थापयेत् पूजोपकरणानि च

---

शक्तये ततः । कमलासनमाभाष्य ङे नमोन्तं प्रपूजयेत ॥ आत्ममंत्रेणोपविशेदासने देशिकोत्तमः । दुःशिल्पिरचितत्वादिनानादोषोपशान्तये ॥ (आत्ममंत्रस्तु) स्वनामाद्यक्षरं पुंसः सोमसामिसमन्वितम् । आत्ममंत्रं विजानीयात्……… ॥ इति सिद्धान्तसंग्रहेप्रोक्तः । [ सोमसामीति चन्द्रार्धमित्यर्थः ] ( मेरुतंत्रे ) वेदिकायामासने सः प्राङ्मुखः संविशेदथ । वद्धपद्मासनोमौनी ऋजुकायोजितेन्द्रियः ॥ देशिकेन्द्रस्तु संस्थाप्य पूजोपकरणानि च । दक्षिणे वामभागे तु स्थापयेत् कलशं शुभम् ॥ सुगन्धिजलसंपूर्णं हस्तप्रक्षालनाय च । पश्चात्पात्रं निधायाथ दीपान् प्रज्ज्वालयेच्छुभान् ॥ व्यजनं मुकुरं छत्रं चामरं दिक्षु मंत्रवित् । उदङ्मुखः प्राङ्मुखोवा स्वस्तिकासनमास्थितः ॥ [ इति भैरवोक्तेः ] ( निवन्धे ) ततः संकल्पविधिवत्सूर्य्यायार्घं निवेदयेत् । सूर्यार्घदा-

नमंत्र उक्तो ( मेरुतंत्रे ) ह्राँ ह्रीँ सः सग्रहराशिनक्षत्रपदमुच्चरेत्। ततश्चयोगकरणपरिवृतासनेति च ॥ सँस्थित श्रीसूर्यायैष तेऽर्घः स्वाहा मनुः स्मृतः । चतुस्त्रिंशदक्षरोयं सूर्यस्यार्घनिवेदने ॥ तत्रैव पूजासंभारानुपक्रम्य । यथायथं तु संस्थाप्य संस्कुर्य्यात्तानि चात्मवान् । पुष्पनैवेद्यगन्धादीन् ह्राँ हुँ फडितिमंत्रतः ॥ नाराचमुद्रया दृष्ट्या समया च विलोकयेत् । दृष्टं वाचात्मनि ज्ञातं सम्यक्पुष्पादिदूषणम् ॥ अस्पृश्यस्पर्शनं वापि यदन्यायार्जितं च वा । तथा निर्माल्यसंसृष्टं कीटाद्यारोहणं च यत् ॥ तत्सर्वं नाशमायाति नैवद्याद्यवलोकनात् । ततोरमितिमंत्रेण शिखां दीपस्य संस्पृशेत् ॥ सतुस्याच्छुभदोदीपो निष्कव्याद: सुखप्रदः। पतंगकीटकेशादिदाहात्क्रव्यादिसंहृतेः ॥ वसामज्जादिसंभूतैर्घृताद्यैरुपयोजितम् । अज्ञानरूपं तत्सर्वं दोषं स्पर्शाद्विनश्यति ॥ वौँ वीजमुच्चरन्मंत्री देवतीर्थेन संस्पृशेत् । पानीयं घटमध्यस्थं दृष्ट्वा सम्यक्च साधकः ॥ वामेन पाणिनाधृत्वा वामपार्श्वस्थितं घटम् । पात्राधारेण मंत्रेण संस्कुर्वन् संस्पृशेज्जलम् ॥ खसंज्ञाक्षरं विन्दुं चन्द्रार्धपरियोजितम् । तत्पात्रनाम ङेन्तं च हृदन्तः पात्रमंत्रकः ॥ यदज्ञानादमेध्यादि संसृष्टिरिहसंगता । यदन्यदूषणं तोये पात्रे वाज्ञानतोभवेत ॥ जलाशयशवस्पर्शाज्जलस्थानाच्च संगतम् । इत्यादिदूषणं नश्येत् तत्प्रिये देवपूजने ॥ ततः कृतांजलिपुटोवामदक्षिणपार्श्वयोः । गुरुं गणपतिं नत्वा पुरतः स्वेष्टदेवताम् । ( यामले ) अखण्डमण्डलाकारं···तस्मैश्रीगुरवेनमः ॥ इति नत्वा गुरुं मंत्रीकरशुद्ध्यादिकं चरेत् । करशुद्धिप्रकारस्तु ( मेरुतंत्रे ) सुगन्धिपुष्पाण्यादाय चन्दनाक्तानि मंत्रवित् । हसौँ मंत्रेण करयोः अस्त्रमंत्रेण मर्दयेत् ॥ तत्पुष्पं वामहस्तेन समादाय च मस्तकम् । भ्रामयेत्परितस्तारं जपन्नाघ्राय तत्पुनः ॥ ह्रौँ ओं पूर्वं पठेत् श्लोकमिमं स च निगद्यते । ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ॥ मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके । अस्त्रमंत्रेण नाराचमुद्रयैशादिशि त्यजेत् ॥

करशुद्धौ ततोऽस्त्रेण कुर्य्यात्तालत्रयं ततः । ऊर्ध्वोर्ध्वमस्त्रमंत्रेण दिग्बन्धमपि देशिकः ॥ तेन संजनितं तेजो वन्हिप्राकारमुद्रया । रक्षेदात्मनिमूलेन प्राणायामत्रयं चरेत् ॥ प्राणायामलक्षणमुक्तं (सारसमुच्चये) प्राणोवायुः शरीरस्य आयामस्तस्य निग्रहः । प्राणायाम इति प्रोक्तोद्विविधः कथ्यते हि सः ॥ स गर्भोमंत्रजापेन निगर्भोमात्रया भवेत् । ( मात्राकारलक्षणं चागस्त्यसंहितायाम् ) नलिनीपत्रसंहत्यां सूक्ष्मसूच्यग्रभेदने । दले दले च यः कालः सकालोलववाचकः ॥ लवैस्त्रुटिस्तु त्रिंशद्भिः कला तावत्त्रुटिं विदुः । काष्ठा तावत्कलाज्ञेया यावत्काष्ठा निमेषकः ॥ स्वाङ्गुलिस्फोटतुल्यश्च मात्राष्टादशभिः स्मृताः ।(मेरुतन्त्रे)मध्यमूलाद्यावदग्रमंगुष्ठेन निपीड्यते । मात्रा सा प्रोच्यते सद्भिर्योगेभीष्टं प्रयच्छति ॥ जानुप्रदक्षिणीकुर्य्याद्यावत्कालेन हस्तकः । तावत्कालमिता मात्रा स्वनिःश्वाससमापि च ॥ ( अगस्त्यसंहितायामपि ) वामजानुनि हस्तस्य भ्रमणं यावता भवेत् । कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ॥ ( तत्रैव ) प्राणायामैर्विना यद्यत्कृतं कर्म निरर्थकम् । अतो यत्नेन कर्त्तव्याः प्राणायामाः शुभार्थिभिः ॥ अत्र प्राणायामा इति वहुवचनम् । कपिञ्जलाधिकरणन्यायेन त्रिपरत्वम् । तथाच–प्राणायामत्रयंकुर्य्यात्............इति । ( कालीक्रमे ) प्राणायामत्रयं कुर्य्यान्मूलेन प्रणवेन वा । अथवा मंत्रवीजेन यथोक्तविधिना सुधीः ॥ ( क्वचित् ) प्राणायामं ततः कुर्यात् वाग्भवेन समाहितः । इत्युक्तम् । ( मेरौ ) पूरकः कुंभकश्चैव रेचकश्चेति सत्रिधा । तत्प्रकारमाह ( यामले ) दक्षांगुष्ठेन दक्ष च घ्राणं संपीड्य मंत्रवित् । ईडया पूरयेद्वायुं मात्राषोडशभिः क्रमात् ॥ अंगुष्ठानामिकाभ्यां च धृत्वा नासाद्वयं ततः । ततस्तु पूरयेद्वायुं पूरकाणां चतुर्गुणैः ॥ अनामया तथा वामनासां धृत्वा तु दक्षिणे । द्वात्रिंशद्भिस्तु मात्राभिर्वायोश्च रेचनं भवेत् ॥ स्वचित्तं मूलचक्रे तु निधायासून् समभ्यसेत् । ( महाकालसंहितायामपि ) वामनासापुटेनैव पूरमूलमंत्रस्य जापेन मात्राषोडशकेन हि ।

स्वदाक्षिणे स्थापयेत्। ततः हस्तप्रक्षालनाय पात्रान्तरं निधाय पुनः स्वशिरस्यंजलिमाधाय वामे ॐ गुरुभ्योनमः ॐ परमगुरुभ्योनमः ॐ परापरगुरुभ्योनमः इति गुरुत्रयं नत्वा दाक्षिणे ॐ गगणपतयेनमः मध्ये श्रीदुर्गादेव्यैनमः इति प्रणम्य अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ इति गुरुं पुनर्नत्वा करशुद्धिं कुर्य्यात्। यथा ह्सौः—इति मंत्रेण चन्दनाक्तं पुष्पमादाय फट् इति मंत्रेण कराभ्यांसंमर्द्य तत्पुष्पं वामहस्तेनादाय शिरासि परिभ्राम्य प्रणवं जपन्नाघ्राय हौँ ॐ ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः। मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥ इति पठित्वा फट् इति मंत्रेण नाराचमुद्रया ईशाने त्यजेत्। ततोऽस्त्रमंत्रेणोर्द्ध्वोर्द्ध्वक्रमेण तालत्रयपुरःसरं छोटिकाभिर्दशादिग्बन्धनं विधाय तज्जनिततेजोवन्हिप्राकारमुद्रया संरक्ष्य मूलेन तद्बीजेन प्रणवेन वा प्राणायामत्रयं कृत्वा भूतशुद्धिं कुर्य्यात्॥

---

यित्वाऽनिलं वलात् ॥ पुनस्तस्य चतुःषष्ट्याऽऽवृत्त्या वायुं विकुंभ्य च। पुनर्द्वात्रिंशदावृत्या मूलमंत्रस्य पार्वति ॥ नासापुटेन दक्षेण रेचयेत्सकलानिलम्। प्रकारेणेदृशेनैकः प्राणायामोहि जायते ॥ आवश्यकं तत्र यं हि फलाधिक्यं समुच्चये। द्वितीयप्राणायामो ( यामले ) ततोरेचनमार्गेण प्राणायामं प्रपूरयेत्। पुनः षोडशमात्राभिः कुंभकं च समाचरेत् ॥ चतुः षष्टितमैर्मंत्री नासापुटौ विधृत्य च पुनश्च रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः ॥ ( वामनासापुटेनेतिशेषः ) तृतीयप्राणायामस्तत्रैवोक्तः। वामेनैव

# अथ भूतशुद्धिः

यथा स्वाङ्के उत्तानौ करौ कृत्वा सोहम् इति जीवात्मानं प्रदीपकालिकाकारं हृत्पद्मासनमूलाधारास्थितकुण्डलिन्या सह सुषुम्णावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यषट्चक्राणि भित्वा शिरोऽवस्थिताधोमुखसहस्रदलकर्णिकान्तर्गतपरमात्मनि संयोज्य तत्र पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थप्रकृतिमनोबुद्ध्यहंकाराख्यानिचतुर्विंशतितत्वानि उत्क्रमेणलीनानि विभावयेत। तत्प्रकारश्च प्रथमं पृथिव्यादिपंचमहाभूतानां शरीरे कुत्र२ कीदृगवस्थानं किंरूपमिति चिन्तयेत्। यथा पृथिवीमण्डलं पादतोजानुप-

---

पिबेद्वायुं मात्राषोडशकैः क्रमात्। नासापुटौ निपीड्याथ पूरकस्य चतुर्गुणैः ॥ दक्षेण रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः। ( तन्त्रान्तरे) ईडयाऽऽकर्षयेद्वायुं मात्राषोडशकैः क्रमात्। नासापुटौ निपीड्याथ पूरकस्य चतुर्गुणैः ॥ दक्षेण रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः। (पुनश्चतन्त्रान्तरे ) ईडयाऽऽकर्षयेद्वायुं बाह्यं षोडशमात्रया। सुषुम्णामध्यगं सम्यग्द्वात्रिशन्मात्रया शनैः ॥ नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः। भूयोभूयः क्रमात् तस्य रेचनं च समाचरेत् ॥ ( तस्येतिपूर्वप्राणायामस्य व्यत्यासेन वैपरित्येन ) तदुक्तम् ( सनत्कुमारसंहितायाम्। येनैषरेचयेद्वायुं तेनैव पूरयेत्पुनः। इति। [ यामले ] प्राणायामं विधायेत्थं भूतशुद्धिं समाचरेत्। इति।

र्य्यन्तं चतुरस्रं सवज्रकं मध्ये लँ वीजयुतं सर्वं मण्डलं पीतवर्णं ब्रह्मदैवतानिवृत्याख्यकलया सहितं जीवानां उत्पत्तिस्थानं चिन्तयेत्। ततः जान्वोरानाभिपर्य्यन्तं अर्धचन्द्रनिभं श्वेतवर्णं भृङ्गद्वयविभूषितं यथाकाशं शुक्लपक्षाष्टम्यां चन्द्रमसिशुक्लं भृङ्गद्वयं सम्पद्यते तदन्तः पद्माकृतिं तन्मध्ये षट्कोणचक्रं प्रतिकोणं षड्भिर्विन्दुभिर्युतं तन्मध्ये वँ वीजं प्रतिष्ठाकलया सहितं विष्णुदैवत्यं साक्षात् शशिप्रभमेव जलमण्डलं विभावयेत्। तत ऊर्द्ध्वं नाभ्यादिकण्ठपर्य्यन्तं त्रिकोणं चक्रं मध्ये स्वास्तिकचिन्होपेतं तन्मध्ये रँ वीजांकितं महाप्रलयसंस्थानं विद्याकलायुक्तं रुद्रदैवतं

---

(मेरौ) भूतशुद्धिं ततः कुर्य्यात्तत्प्रकारमथ ब्रुवे। तल्लक्षणंच (शारदायाम्) शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसंयोगाद्भूतशुद्धिरियं मता॥ तन्मुद्राच (तंत्रान्तरतः) विनिधाय निजाङ्के तु समुत्तानं करद्वयम्। मूलाधारस्थया शक्त्या चक्रभेदक्रमेण च॥ हंसेन ब्रह्ममार्गेण जीवं ब्रह्मणि योजयेत्। (चक्रभेदक्रमस्तु महाप्रयाससाध्यः सतु निरन्तरं अविकलभक्त्यागुरुसेवनात्तथा हठयोगेन योगतरङ्गिण्याद्युपदिष्टषट्कर्म्मादिना शरीरं संशोध्याचलासनेनानवरतं प्राणायामाभ्यासे कृते पूर्वजन्मार्जितपुण्ययोगेन वर्षत्रयादूर्ध्वं सिद्ध्यतीति प्रत्यक्षानुभवः) ततः (महाकालसंहितोक्तरीतितः हृत्पुण्डरीकादात्मानं ज्वलद्दीपशिखाकृतिम्। सुषुम्णा वर्त्मना ब्रह्मवीजमंत्रेण मस्तके॥ सहस्रदलमध्यस्थे संयोज्य परमात्मनि। तत्कारणंच (यामले) भूतशुद्धिलिपिन्यासौ विनायस्तु प्रपूजयेत्। विपरीतफलं दद्यादभक्त्या पूजनं यथा॥ (भूतानांपृथिव्यादीनां परब्रह्मणिलयं

दीप्तिमन्तं वन्हितत्वं विचिन्तयेत् । कण्ठाद्भ्रूमध्यपर्य्यन्तं षट्कोणकारतां गतम् । षड्विन्दुलांछितं वृत्तवेष्टितं कृष्ण-वर्णं शान्तिकलाधिष्ठितं शिवदैवतम् । यँ बजियुक्तं सर्वेषां प्राणरूपम् वायुमण्डलं विचिन्तयेत् ॥ भ्रूमध्याद्ब्रह्मरन्ध्रान्तं आकाशस्थानं वृत्ताकारं धूम्रवर्णं महाध्वजलांछितम् । शान्त्यतीताख्यकलाधिष्ठितं हँ बीजयुक्तं शिवदैवतम् । ध्यायेत् । एवं देहे भूतानि संचिंत्य भूलादूर्ध्वे नवांगुलमिते देशे नाभिदेशादधस्त्र्यंगुले धर्म्मकन्दः तस्मात्समुत्पन्नंज्ञान-नालं हृत्पद्मगं विचिंत्य तत्कार्णिकायां हृत्पद्मस्य मध्ये वि-राजितं प्रदीपकलिकाकारं जीवं योगयुक्तविधिना मूलाधा-रात् सुषुम्णामार्गेणागतया कुण्डलिन्या सहैक्यं विभाव्य

---

पञ्चमहाभूतानां शरीरे कीदृक्संस्थानमिति ( मेरुतंत्रे ) पादतो-वशिष्यत इति अतएव कारिकासु मेरुतन्त्रशारदादौ कुत्रापि मातृकालयस्य कारिकापि न दृष्टा तदर्थं विद्वद्भिर्विचारणीयम् विभाव्य पुनरुत्पादनमेव भूतशुद्धिः । लिपिन्यासस्तु मातृकावर्णा-नां यक्ष्यमाणविधिना स्वशरीरे देवशरीरे वा न्यासः भूतशुद्धिः लिपिन्यासश्च पृथक् २ क्रिया ये च भूतशुद्धेः पूर्वं मातृकोपसंहार-विधिना प्रथमं मातृकावर्णानां लयं भावयन्ति ते च यदि सप्र-माणं कुर्वन्ति तदा तदर्थं प्रमाणवचनमपेक्षितं भवति वस्तुतस्तु सर्वेषां प्राकृतिकवस्तूनां पञ्चभूतेभ्यएवोत्पत्तिः तेषामेव लयो-यदि भवेत्तदा पृथिव्यप्तेजोवाय्वाकाशैः सहतज्जन्य गन्धरसरूप-स्पर्शशब्दानां गुणानां तद्ग्राहकनासिकाजिह्वाचक्षुस्त्वक्श्रोत्राणां ज्ञानेन्द्रियाणां तथा वाक्पाणिपादपायूपस्थपञ्चकर्मेन्द्रियाणां एवं प्रकृतिमनोबुद्ध्यहंकाराणांचापि लयः । कुतस्तत्रमातृकालयो

हृदयादूर्ध्वंचक्रेचाज्ञाविशुद्ध्याख्ये भेदयित्वा षष्ठं सहस्रारं नीत्वा तत्र परमात्मानि योजयेत् । एवं मूलाधारस्वाधिष्ठानमणिपूरकहृत्पद्माज्ञाविशुद्धिसहस्रदलानां भेदनं भवति ततः सहस्रारे अधोमुखे तन्मध्यकर्णिकायां वर्त्तमाने परब्रह्मणि किंचित्कालं विरम्य पूर्वचिन्तितानि भूतान्यैकैकशः लयंगतानि भावयेत् यथा उक्तं भूतत्वं पृथिवीमण्डलं शशिमण्डले अप्सु प्रविलापयेत् ततः शशिमण्डलं वह्नितत्वे तेजोमण्डले तेजोमण्डलं वायुतत्वाख्ये वायुमण्डले वायुमण्डलमाकाशतत्वाख्ये नभोमण्डले लयं विभाव्य पश्चादाकाशं प्रकृतौ प्रकृतिं मायाशक्तिं परमात्मानि च लयं कृत्वा तथा समस्त देहादिप्रपंचं च परमात्मनि प्रविलाप्य तत्रैव कियत्क्षणं तिष्ठेत ।। ततः स्वशरीरे वामकुक्षिस्थितं पाप-

---

जानुपर्य्यन्तं चतुरस्रं सवज्रकम् । लंयुतं पीतवर्णं च भूस्थानं ब्रह्मदैवतम् ।। अधिष्ठितं निवृत्याख्यकलया स्थानमुच्यते । उत्पत्तेस्तत्तु।जीवानां एवं रूपं विचिन्तयेत ।। ज्वान्वोरानाभिपर्य्यन्तं अपां स्थानं सितप्रभम् । अर्धचन्द्रनिभं शृङ्गद्वयं तत् पद्मलाञ्छितम् ।। षट्कोणं विन्दुभिः षड्भिर्युक्तं वँ वीजसंयुतम् । प्रतिष्ठाकलया युक्तं ध्यायेत्तद्विष्णुदैवतम् ।। नाभ्यादिकंठपर्य्यन्तमारक्तं रुद्रदैवतम् । रंवीजयुक्तं कलया युतं विद्याख्यया तथा ।। दोप्तिमत्स्वस्तिकोपेतं त्रिकोणाकारतां गतम् । महाप्रलयसंस्थानं वह्नितत्वं विचिन्तयेत् ।। कण्ठाद्भ्रूमध्यपर्य्यन्तं षट्कोणाकारतांगतम् । षड्विन्दुलांछितं वृत्तवेष्टितं कृष्णवर्णकम् ।। वायुस्थानं शान्तिकलाधिष्ठितं शिवदैवतम् । यँ वीजयुक्तं सर्वेषां प्राणरूपं विचिन्तयेत् भ्रूमध्यादब्रह्मरन्ध्रान्तं आकाशस्थानमुच्यते । वृत्ताकारं

पुरुषं चिन्तयेत् ॥ तद्रूपम् यथा पापपुरुषः कृष्णवर्णः ब्रह्महत्याशिरस्कः स्वर्णस्तेयं भुजः सुरापानहृदयः गुरुतल्पं कटिः तत्संसर्गीपदद्वन्द्वः इति पंचमहापातकातिरिक्तानि पापानि तस्याङ्गप्रत्यङ्गानि उपपातकानि च तस्य रोमश्मश्रु-विलोचनानि एवं महापातकपातकोपपातकमयः पापपुरुषः हस्ताभ्यां खड्गचर्मधरः अङ्गुष्ठपरिमाणकः महाक्रूरोमहाभीमः रुक्षः नतमस्तकः एवंरूपं पापपुरुषं ध्यायेदिति । ततः यँ इति वायुवीजं धूम्रवर्णं वामनासापुटे विचिन्त्य तस्यषोडश-वारजपेन वायुना देहमापूर्य्य नासापुटौ धृत्वा पंचाशद्वार-जपेन चतुष्षष्टिवारजपेन वा कुंभकं कृत्वा वामकुक्षिस्थ

---

धूम्रवर्णं महोच्चध्वजलांछितम् ॥ शान्त्यतीताख्यकलयाऽधिष्ठितं शिवदैवतम् । हँ वीजयुक्तं ध्यात्वेत्थं देहे भूतानि विन्यसेत् ॥ धर्मकन्दसमूद्भूतं ज्ञाननालसुशोभितं । पद्मं तत्कर्णिकासंस्थं प्रदीप-कलिकानिभम् ॥ सुषुम्णावर्त्मनाजीवं परमात्मनि योजयेत् । योगयुक्तेन विधिना सोहं मंत्रेण साधकः ॥ तत्रैव सर्वभूतानि विलीनानि विचिन्तयेत् । इति (सिद्धान्तसंग्रहे) ततः समस्ततत्वा-नि तत्रैव प्रविलापयेत् । पृथ्वीमप्सु च तावह्नौ वन्हिं वायौ समी-रणम् प्रविलाप्य तथाऽऽकाशे आकाशं प्रकृतौ ततः । अपरब्रह्म-रूपां तां मायाशक्तिं परात्मनि ॥ एवं समस्तदेहादिप्रपंचं परमा-त्मनि । प्रविलाप्य परब्रह्मरूपेतिष्ठेत्कियत्क्षणम् ॥ इति ॥ वस्तु-तस्तु पंचभूतात्मकशरीरस्य पञ्चभूतेषु स्वस्वस्थानाल्लयं गतेषु शेष-स्य तद्विकारजदेहस्य तत्कृतपापेन सह शोधनमिच्छुस्तत्रकर्ता देहे पंचमहापातकपातकोपपातकानां पूर्वजन्मनीहजन्मनिकृतानां समष्टिरूपं पापमयमेवैकं सूक्ष्मससाधारणं विग्रहं कल्पयति

कृष्णवर्णपापपुरुषेण सह देहं संशोध्य पंचाशद्वारजपेन द्वात्रिंशद्वारजपेन वा दक्षनासया वायुं रेचयेत्। एवमग्रेऽपि संख्याविकल्पोवोध्यः॥ ततोदक्षनासापुटे रं इति वन्हिवीजं रक्तवर्णं ध्यात्वा तस्य षोडशवारजपेन देहमापूर्य नासापुटौ धृत्वा चतुःषष्टिवारजपेन कुंभकं कृत्वा पापपुरुषं तत्रैव दग्ध्वा तस्य द्वात्रिंशद्वारजपेन वामनासया भस्मना सह वायुं रेचयेत् ततः ठं इति चन्द्रवीजं शुक्लवर्णं वामनासिकायां धृत्वा तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा सहस्रदलकमलकार्णिकान्तं परमात्मानं चन्द्ररूपं विभाव्य वँ इति वरुणवीजस्य चतुःषष्टिवारजपेन तस्माल्ललाटचन्द्राद्गलितसुधया

---

तथा वक्ष्यमाणविधिना तं देहस्थं प्राणवायुना संशोष्य सहस्रारगचन्द्रमण्डलजसुधावृष्ट्या सम्प्लाव्य शरीरं शोधयति ततः शुद्धे शरीरे पुनर्भूतानुत्पादयति च चतुर्विंशतिभिः पञ्चभूतजतत्वैः सहेति। महापातकादिपापानां वर्णनन्तु प्रथमखण्डस्थ प्रायश्चित्तप्रकरणे द्रष्टव्यम्। पापशोधनव्यवस्थातु (मेरुतन्त्रे) शरीरे वामकुक्षौ तु चिन्तयेत्पापपूरुषम्। वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्॥ ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्। सुरापानहृदायुक्त गुरुतल्पकटिद्वयम्॥ तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम्॥ खड्गचर्मधरंक्रूरमङ्गुष्ठपरिमाणकम्। अधोमुखं महाभीमं रूक्षं पापं विचिन्तयेत॥ इति (महाकालसंहितायाम्) वामनासापुटेनाथ पूरयित्वा समीरणम्। सविन्दुवायुवीजं च धूम्रवर्णं विभाव्य च॥ तदेववीजं देवेशि पञ्चाशद्वारमीरयेत्। तदुत्पन्नेन वातेन शुष्कं देहं विचिन्त्य च॥ सहैव रेचयेद्वायुं ततोनासापुटेन च। वामेन वायुमुत्तोल्य सहस्रदलमध्यगम्। विभाव्य परमात्मानं चन्द्ररूपे

मातृकावर्णात्मिकया समस्तदेहमाप्लाव्य लँ इति पृथ्वीवी-जस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत्। ततः परमात्मनि लीनानि पंचभूतान्युक्तक्रमेण यथास्थानं निवेश्य देवताराधनयोग्यं तेजोरूपं देहमुत्पन्न-मिति विभावयेत् तद्यथा सहस्रकमलकर्णिकास्थितपरब्रह्मणः प्रकृतिरुत्पन्ना जगन्मातुः प्रकृतेराकाशः आकाशाद्वायुः वायोरग्निरग्नेर्ज्जलं जलान्महीमह्यास्तेजोरूपं देवताराधन-योग्यं कलेवरम्। एवं भूतानि कलेवरे यथास्थानं स्थापयि-त्वा हँसः इति अहंकारादिचतुर्विंशतिभिस्तत्त्वैः सह जीवा-त्मानं कुण्डलिनीं देवीं च परमात्मनः समाकृष्य जीवात्मानं हृदयाम्बुजे कुण्डलिनीं मूलाधारदेशनिकटे कन्दे तथा तत्वानि च यानि येभ्यः समुद्गतानि तेषु तेषु भूतेषु स्था-पयेत्। एवं सर्वं यथोक्तं कृत्वा देवतारूपमात्मानं भावयेत्।

---

वरानने॥ सानुस्वारं वायुवीजं पंचाशद्वारमुच्चरन्। तस्माच्चन्द्रा-त्सुधावृष्ट्या देहमाप्लाव्य सुन्दरि॥ भूवीजेन सनादेन शुद्धं संयोज्य विग्रहम्। लीनीकृतानि यानीह पंचभूतानि वै पुरा। यथास्थानं स्थापयित्वा ब्रह्मवीजम्पुनर्गृणन्॥ अहंकारादिभिस्तत्त्वैः सहैव परमात्मनि। जीवात्मानं समाकृष्य स्थापयित्वा हृदम्बुजे॥ देवीरूपमथात्मानं चिन्तयेत्क्षणमूर्जितः। अत्र वायुवीजादेः पञ्चाशद्वारजपेन पूरकादिकमुक्तम्। (यामलादौ तु) नाभिदेशे च यं कारं धूम्रं वायुं विचिन्तयेत्। तेनैव शोधयेल्लिङ्गतनुं षोडश-मात्रया॥ कर्मात्मकं चतुःषष्ठ्या कुंभयित्वा समाचरेत्। द्वात्रिं-शन्मात्रया दक्षे रेचनं तेन वा पुनः॥ इति षोडशादिमात्राभिः पूरकादिकमुक्तम्। इतिसङ्ख्याविकल्पोऽत्र [illegible]। (सिद्धान्तसंग्रहे)

इति भूतशुद्धिः ॥ भूतशुद्धेः संक्षिप्तप्रकारः यथा (उड्डीशे) कुण्डलिनीं देवीं स्वस्थानादुद्बोध्य पंचभूतैः सह परमात्मनि संयोज्य जीवात्मपरमात्मनोरैक्यं विभाव्य ध्यानयोगेन मनसा सोहं सोहं विभावयेत् । पुनर्भूतानामुत्पादनम्जीवस्य हृदये स्थापनम् इति भूतशुद्धिः ॥ इत्थं भूतशुद्धिं विधाय ज्ञानार्णवकृता प्राणप्रतिष्ठापि संक्षिप्ता कार्या यथा आं सोहं मम प्राणा इह प्राणाः इहस्थिताः आं सोहं ममजीव-इहजीव इह स्थितः । आं सोहं मम सर्वेन्द्रियाणि वाङ्म-नश्चक्षुः श्रोत्रघ्राणानि इहागत्य सुखं चिरं तिष्ठन्तु

---

पुनरुत्पादयेद्देहं पवित्रं परमात्मनः । परब्रह्मात्मिका विद्या प्रकृतिर्मातृकापरा ॥ अजायत जगन्मातुराकाशं नभसोऽनिलः । समीरणादभूद्वह्निर्वह्ने रापस्ततोमही॥स्वीयमेभ्योपिभूतेभ्यस्तेजोरूपं कलेवरम् । देवताराधने योग्यमुत्पन्नमिति भावयेत ॥ भूतशुद्धिरियंप्रोक्ता महापापौघनाशिनी ॥ ( मेरौ ) भूतशुद्धिविहीने तु कृतापूजाभिचारवत् । विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥ इति भूतशुद्धिः । भूतशुद्धिविषये तु क्वचिच्छक्तिविशेषे हंस इति बीजादिकं परशिवे संय्योज्य सोहमितिमंत्रेण स्वस्थानमानयेदित्युक्तम् ॥ ( मेरौ ) भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेदित्युक्तम् । तेन भूतशुद्धेरनन्तरं प्राणप्रतिष्ठैव कार्या ॥ प्राणप्रतिष्ठाविषये ( ज्ञानार्णवे ) तु प्राणप्रतिष्ठया पश्चाज्जीवं देहे नियोजयेत मुखवृत्तं समुच्चार्य हंसस्तु विपरीततः ॥ उद्धरेत्परमेशानि विंदयं त्र्यक्षरीभवेत् । प्राणप्रतिष्ठा मंत्रोयं सर्वकर्मणि साधयेत् ॥ इति संक्षिप्तविधिरुक्तः प्राणप्रतिष्ठान्ते प्राणायामस्यावश्यकतेति ( मेरुतन्त्रे ) प्राणायामत्रयं कृत्वा मातृकान्यासमाचरेदिति ॥

स्वाहा ॥ इति स्वहृदि प्राणं स्थापयेत् ततोमातृकान्यासं कुर्य्यात् ।

# अथ प्राणप्रतिष्ठाविधानम्

ॐ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानिच्छन्दांसि चैतन्यस्वरूपाप्राणशक्ति-र्देवता प्राणस्थापने विनियोगः ॥ ( अथांगन्यासः ) ब्रह्म-विष्णुमहेश्वरेभ्योऋषिभ्योनमः शिरसि ऋग्यजुःसामछन्दो-भ्योनमो मुखे । प्राणशक्त्यै देवतायैनमो हृदि । आं वीजाय नमोगुह्ये । ह्रीँ शक्तये नमः पादयोः । क्रोँ कीलकाय नमः सर्वाङ्गे ॥ ( अथ हृदयादिन्यासः ) ओं आं ह्रीं क्रों अं कं

---

प्राणप्रतिष्ठाविषयकारिकाः ( मेरुतन्त्रोक्ताः ) प्राणप्रतिष्ठामंत्रस्य मुनयोजेशपद्मजाः । ऋग्यजुःसामच्छन्दांसि प्राणशक्तिस्तु देवता ॥ ऋषो ञ्छिरसिवक्त्रे तु छन्दांसि हृदि देवताम् । आंवीजायनमो-गुह्ये पादेह्रींशक्तयेनमः ॥ नाभौनमः क्रोंकीलाय नियोगोसुस्थि-तावपि । ओं आँ ह्रीँ क्रोँ अङ्कवर्गं सानुस्वारं नमोहृदि ॥ पञ्च-तत्वं समुचार्य दीर्घाकारं तथैव च । ईंचवर्गंच शब्दादि शिरसे वह्निगेहिनी ॥ तानि वीजानि उं तादृक्टवर्गं श्रोत्रकादि च । प्रोक्त्वा तदात्मनेत्रैव शिखायैव च वषड्वदेत् । तानि वीजानि एं तं च वर्गादीनि तदात्मने ॥ ऐंमुक्त्वा कवचायेति हुं वदेत्तदन-न्तरम् चतुर्वीजं च पूर्वोक्तमोंपवर्गं च तादृशम् ॥ वाण्याद्यात्मन-औं नेत्रायवौषट् च तथा वदेत् । चतुर्वीजं च अं तादृक् यवर्गं मनआदि च ॥ तदात्मने स्वरश्चान्त्योऽस्त्रायफट्चेति संवदेत् ।

खं गं घं ङं आकाशवायुवन्हिजलपृथिव्यात्मने आं हृदयाय नमः । ओं आं ह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरसरूपगंधात्मने ईं शिरसे स्वाहा । ओं आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट् । ॐ आं ह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुं । ॐ आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादानगमनाविसर्गानन्दात्मने औं नेत्रत्रयाय वौषट् ॥ ॐ आं ह्रीँ क्रोँ अं यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट् ॥ (अथ करन्यासः) ॐ आं ह्रीँ क्रों अं कं खं गं घं ङं आकाशवायुवन्हिजलपृथिव्यात्मने आं अङ्गुष्ठाभ्यां नमः । ॐ आं ह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां स्वाहा ।

---

अंगुष्ठादौ हस्ततलान्ते न्यसेदेवमेव हि ॥ नाभ्यधश्चापिकंठाधो मूर्धाधोथतदन्तकम् ॥ आँ ह्रीँ क्रोँ क्रमतोन्यस्य हृत्पद्माष्टदलेषु च । अत्रतु सप्तधातूनां न्यासोयउद्धृतः सतु अन्यत्र दृष्टोद्धृतः वस्तुतस्तु मेरुतन्त्रादिग्रन्थे तस्य कारिका न प्राप्ता दृपणकारेण प्राणशक्तिं ध्यात्वा हृत्पीठे पीठपूजां विधाय तत्र प्राणशक्तेरावरणदेवतां विन्यस्य प्राणशक्तियोगपीठायनमः इत्यारभ्य ध्यानं कृत्वा मानसोपचारैः प्राणशक्तिपूजनं तदावरणपूजनं च कृतम् नास्यापि कारिकोपलब्धा । अस्मिन्प्रकरणे । ( मेरौ ) आं ह्रीं क्रौं इतिशरीरत्रिभागे विन्यस्य हृत्कमलेष्टदले कर्णिकायां च पूर्वादितः लादिक्षान्तानां न्यासः कृतः सतु कारिकायुक्तोयथा पूर्वतः क्रमतोवर्णाकर्णिकायां हृदन्तकान् । लं रं हं षं वं सं शं क्षं इतिवर्गतः ॥ दिक्षु न्यस्य ततोध्यायेत्प्राणशक्तिं हृदिस्थिताम् ।

ॐ आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां वौषट् । ॐ आं ह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थानात्मने ऐं अनामिकाभ्यां हुं । ॐ आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादानगमन विसर्गानन्दात्मने औं कनिष्ठिकाभ्यांवौषट् । ओं आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहंकारचित्तात्मने अः करतलपृष्ठाभ्यां फट् । इति ॥ ततोदेहन्यासः आं नमोनाभेरारभ्य पादान्तम् । ह्रीं नमोनाभितः हृदयपर्य्यन्तम् क्रों नमोहृदयान्मस्तकान्तम् इति । ततः सप्तधातूनां

---

तस्याध्यानं यदत्रैव तद्ब्रवीमि शृणु प्रिये ॥ रक्ताब्धिपोतारुणपद्मसंस्थां.........इति ( मंत्रमहोदध्युक्तः प्राणप्रतिष्ठामंत्रो यथा ) पाशं मायां शृणिं प्रोच्य यादीन्सप्तेन्दुसंयुतान् । तारान्वितं नभः ससवर्णमंत्रं ततोजपन् ॥ ममप्राणाइहप्राणाममजीव-इहस्थितः । मम सर्वेन्द्रियाण्युक्त्वा ममवाङ्मनईरयेत् ॥ चक्षुः श्रोत्रं घ्राणपदं प्राणाइह समीर्य्य च आगत्य सुखमुच्चार्य चिरन्तिष्ठन्त्विदं पठेत् ॥ वह्निजायां च ससार्णमंत्रमेतं पुनर्वदेत । प्राणप्रतिष्ठामंत्रोयं स्मृतः प्राणनिधापने ॥ सबिन्दवोमेरुहंसाकाशाः सर्गीभृगुः पुनः । मायेतितारुद्रोयं मंत्रः ससाक्षरोमतः ॥ एतेभ्यः श्लोकेभ्यः उद्धृतोयथा आं ह्रीँ क्रोँ यं रं वं लं शं षं सं हों ओं क्षं सं हं सः ह्रीँ ओं सोहं ममप्राणाइहप्राणाममजीव-इहस्थितः । मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रं घ्राणं प्राणाइहागत्य सुखंचिरान्तिष्ठन्तु स्वाहा ओं क्षं सं हं सः ह्रीं ओम् इति । (मेरुतंत्रे)एवंप्राणान्प्रतिष्ठाप्य मातृकान्यासमाचरेत् । प्राणायामस्त्रिधाप्रोक्तास्तान्त्रवैदिकयौक्तिकाः । ससिद्धिः पापनाशाय योगसिद्धिः

न्यासः यथा यं त्वगात्मने नमोहृदि रं असृगात्मने नमोदक्षिणांसे लं मांसात्मने नमः ककुदि । वं मेद आत्मने नमोवामस्कंधे। शं अस्थ्यात्मने नमोहृदयाद्दक्षिणभुजाग्रान्तं। षं मज्जात्मने नमोहृदयाद्वामभुजाग्रान्तम् । सं शुक्रात्मनेनमो हृदयाद्दक्षिणपादाग्रान्तम् । हौं ओजआत्मने नमोहृदयाद्वामपादाग्रान्तम् ॥ हं प्राणात्मने नमोहृदयान्नाभ्यन्तम् । सं- जीवात्मने नमोहृदयान्मस्तकान्तम् । इति सप्तधातून् विन्यस्य अकारादिक्षकारान्तमातृकावर्णैर्व्यापकं कुर्य्यात् ॥ इत्थमुक्तन्यासान्विधाय हृत्कमलस्याष्टदलेषु कर्णिकायां च पूर्वादिक्रमेण लं रं तं षं वं मं शं क्षं इमान्वर्णान्विन्यस्य

---

फलं क्रमात् ॥ मातृकाख्यश्चमंत्राख्यस्तांत्रिकोद्विविधोमतः । मातृकाख्योजपस्यादौ जपस्यान्ते कृतोयदि ॥ वर्णव्यत्यासादिदोषानशेषान्हन्ति तं शृणु । वामया पूरयेद्वायुं स्वरैः काद्यैश्च कुंभके। रेचयेद्यादिभिर्दक्षनासायां मातृकादिभिः ॥ यावच्छक्तोनियम्यासुं मनसैव मनुं जपेत् । कनिष्ठानामिकाङ्गुष्ठैर्नासां धृत्वा तु मांत्रिकः ॥ प्राणायामत्रयं प्रोक्तं यदन्यन्मन्मनसाकृतम् । जपपूजादिकं तस्य दोषमेषव्यपोहति ॥ गायत्री शिरसा सार्धं सप्तव्याहृतिपूर्विकाम् । प्रतिप्रणवसंयुक्तां त्रिर्जपेत्सइहोत्तमः ॥ मात्रा सा प्रोच्यते सद्भिर्योगेभीष्टं प्रयच्छति । जानु प्रदक्षिणांकुर्य्याद्यावत्कालेन हस्तकः ॥ तावत्कालमितामात्रा स्वनिश्वाससमापिच जघन्योरविमात्रः स्याज्जिनमात्रास्तु मध्यमः ॥ श्रेष्ठः षड्वर्गमात्रः स्याद्योगत्रयसुधारकः । केवले कुंभकेसिद्धे सिद्धिः स्याद्राजयोगजा ॥ वीर्यस्तंभश्च वह्वायुर्वलीपलितनाशनम् । पूरके कुंभकेसिद्धे क्रियायोगस्य सिद्धयः ॥ पूर्वोक्ता न च शीतोष्णबाधाक्षुत्तृड्भवाअपि । पूरकः कुंभकारेचायदातुल्यः प्रजायते ॥

तदन्तरं ध्यानं विदधीत । ध्यानं यथा रक्ताब्धिपोतारुण पद्मसंस्थांपाशांकुशेष्वासवरासिवाणान् । शूलं कपालं दधतीं कराब्जैरक्तां त्रिनेत्रां प्रणमामि देवीम् ॥ इति प्राणशक्तिध्यानम् ॥ ततः हृदये हस्तं निधाय ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं मम प्राणाः इह प्राणाः । ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहम् मम जीव इह स्थितः ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः मम वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणाः इहा गत्य सुखं चिरं तिष्ठन्तु स्वाहा इति त्रिवारं पठेत् । ततः ओमिति जपेत् प्रणवस्य पंचदशवारजपेन शरीरस्य पंचदश-संस्काराः सम्पद्यन्त इति केचित् । ततः ज्योतिर्म्मयं शरीरं ध्यात्वा प्राणायामत्रयं कुर्य्यात् । इति प्राणप्रतिष्ठा ।

---

हठयोगस्तदासिद्धोह्यणिमाद्यष्टसिद्धये । ईषत्फलंजघन्ये तु मध्यं मध्यं परेखिलम् ॥ निरन्तराब्दत्रितयाभ्यासात्सर्वं भवेत्फलम् ॥ प्राणायामविधिः प्रोक्तोमया तुभ्यं वरानने ॥ इति ( अथऋष्यादिविचारस्तत्रैवेति ) ऋषिर्गुरुत्वाच्छिरसि वर्णत्वाच्छन्दआनने । चित्तज्ञादेवतायास्तु हृदये धारणं मतम् ॥ ऋगताविति धातुस्तु श्रवणः प्रापकोमतः । षिः षणार्थस्तु विज्ञानं अतस्तत्प्रापकस्तु सः ॥ छदिर्धातुरितीच्छायामत्र यस्मात्प्रवर्तते । मुखमिच्छापद च्छन्दोमंत्रार्थच्छादनात्तुवा ॥ क्रीडार्थकोदिविधातुः सम्पूर्णदेवता-पदम् । साधकेष्टं ददातीति देवता परिकीर्तिता ॥ रक्षमाणोयदा-त्मीयहृदयेस्तिचिदात्मकः ॥ तस्मात्तं च नमस्कुर्य्यान्मुख्याङ्गुष्ठेन संस्पृशेत् ॥ स्वाहया क्रियते सम्यगिष्टपाहरणं यतः । अनामातर्जनीभ्यां साचाकृष्टाभ्यामिहेष्यते ॥ शिखावषट्पदं यच्च

# अथ अन्तर्मातृकान्यासः

स्वस्थोयोगासनस्थः प्राप्तकुण्डलिकोऽधोधः मूलाधारादुत्थितां ध्वनिमेकाग्रमनसा श्रुत्वा विद्युदाकृतिं ज्वलदग्निशिखासदृशीं तेजः स्वरूपिणीं सूक्ष्मतन्तुनिभां कुण्डलीं शक्तिं प्रबोध्य तां मूलाधारादुत्थाय शिरः सांस्थित सहस्रदलकर्णिकास्पृशन्तीं कृत्वा तयास्पृष्टशिरःपद्मात्स्रवदमृतविन्दुरूपान्मातृकावर्णान् सुषुम्णावर्त्मना निर्गतान् संचित्य तान् देहमभिव्याप्यास्थितान् ध्यात्वा कण्ठस्थितविशुद्धषोडशदलकमलेषु पूर्वादिक्रमेण प्रणवादिमोन्तान् सविन्दून् अकारा·

---

शिखयात्मतनुग्रहः । यस्मात्तस्याद्वषडिति क्रियतेऽङ्गुलिमध्यमा ॥ ग्रहणार्थः कवचधातुर्हुं हस्तेन गृह्यते । शरीरतस्तुकवचं तर्ज्जन्यानामयापितत ॥ यथार्थज्ञानकृद्वोषट्तन्नेत्राभ्यां प्रजायते । तस्मात्तदुक्तं तत्र वौषट् तर्ज्जन्याद्यैस्तु तत्स्मृतम् ॥ एकात्वात्कुवेरादिदेवेष्वेकं तमुच्चरेत । भ्यान्तं विष्णवादिके रुद्रादौ तु नेत्रत्रयात्मकम् ॥ अध्यात्मिकादिरूपं यत् साधकस्य विनीयते । अविद्याजातमस्त्रं तत्फट्काराभ्यां प्रपंच्यते ॥

( मेरुतंत्रे ) प्राणायामत्रयं कृत्वा मातृकान्यासमारभेत् इति क्रमः तत्कारणंच ( फेत्कारिणीतन्त्रे ) मंत्रामूकत्वमायान्ति विन्यासेन विना लिपेः । सर्वमंत्रप्रसिद्ध्यर्थं तंस्मादादौ लिपिं न्यसेत ॥ लिपिन्यासोद्विधा अन्तर्लिपिन्यासोवहिश्च लिपिरेवमातृकातत्रान्तर्मातृकान्यासः ( मेरुतन्त्रे ) अथान्तर्मातृकान्यासं वक्ष्येन्तःशुद्धिकारकम् । यंकृत्वा योगिनो चित्ते पातकं न प्रवर्तते ॥

दिषोडशस्वरान् मनसा विन्यसेत् विन्यासक्रमस्तु ॐ अँनमः इत्यादि । कमलन्तु ऊर्ध्वास्यमिति । ततोहृदये अनाहताख्य द्वादशदलकमलेषु तेनैव क्रमेण ककारादिठकारान्तान् वर्णान् न्यसेत् । ततोनाभिस्थमणिपूरकाख्यदशदलकमल-दलेषु डकारादिफकारान्तान् दशवर्णान् न्यसेत् ततोलिङ्ग-मूलस्य स्वाधिष्ठानाख्यषड्दलकमलदलेषु वकारादिलकारा-न्तान् षड्वर्णान् न्यसेत् । ततोमूलाधाराख्यचतुर्दलकमल-दलेषु वकारादिसकारान्ताश्चतुरोवर्णान् विन्यसेत् । ततो

---

मूलाधारध्वनिं श्रुत्वा प्रबुद्धाशक्तिकुण्डली । ज्वलत्पावकसंका-शा सूक्ष्मातेजः स्वरूपिणी ॥ मूलाधाराच्छिरः पद्मं स्पृशन्ती विद्युदाकृतिः । तया स्पृष्टशिरः पद्मादमृतौघस्वरूपिणः ॥ निर्ग-तान्मातृकावर्णान् सुषुम्णावर्त्मना तनुम् । स्थापयतित्वास्थिता-नेतानेवं ध्यात्वा प्रविन्यसेत् ॥ कंठे विशुद्धिचक्राख्यं पद्मं षोड-शपत्रकम् । ऊर्ध्वास्यं प्राग्दलात्तत्र संस्थिताः षोडशस्वराः ॥ एवं संचिन्त्य तारादिं विन्दुयुक्तं नमोन्तकम् । वदेत्स्वरंच सर्वेषु वर्णे-ष्वेषपद्धतिः ॥ हृदये नाहतं चक्रं ध्यायेद्द्वादशपत्रकम् । पूर्वपत्रा-न्तर्दलेषु प्राग्वत्कादीन्प्रविन्यसेत् । मणिपूरकं ततश्चक्रं चिन्तयेन्ना-भिमण्डले ॥ दशपत्रं तत्रडादिवर्णान् प्राग्वद्विचिन्तयेत् स्वा-धिष्ठानं लिङ्गमूले चक्रं षड्दलमुच्यते ॥ चिन्तयेद्बादिलांस्तत्र षड्वर्णानपि पूर्ववत् । मूलाधाराभिधं चक्रं पद्माकृतिचतुर्दलम् । वँ शँ षँ सँ तत्रचिन्त्यं पूर्वाशादिदलेषु च ॥ आज्ञाख्यचक्रंभ्रूमध्ये द्विदलं कमलाकृति । हं क्षं ध्यायेदयंकार्य्योमनसाकेवले न तु । स्वदेहेऽनामयाकार्यः पुष्पेण सुमूर्तिषु ॥ अनादित्वान्नऋष्यादि ब्रह्मबुद्ध्या नमस्य तु ॥ इत्यन्त र्मातृकान्यासविधानम् । ज्वल-

भ्रूमध्यस्थाज्ञाख्यद्विदलकमलदलयोर्द्धौवर्णौ हकारक्षकारौ विन्यसेत् । इत्यन्तर्मातृका । नास्याध्यानं न ऋष्यादिकमनादित्वादिति ।

# अथ बहिर्मातृकान्यासः

ओमस्य श्रीमातृकासरस्वतीमन्त्रस्य ब्रह्माऋषिर्गायत्री छन्दोमातृकासरस्वतीदेवता हलोबीजानि स्वराः शक्तयः अव्यक्तयः कीलकानि शरीरशुद्धिपुरस्सरमभीष्टासिद्ध्यर्थे लिपिन्यासे विनियोगः। ततोऽङ्गन्यासः शिरसि ब्रह्मणे ऋषये नमः मुखे गायत्रीछन्दसे नमः हृदि मातृकासरस्वतीदेवतायै नमः गुह्ये हल्भ्योबीजेभ्योनमः । पादयोः स्वरेभ्यः शक्तिभ्योनमः। सर्वाङ्गेषु अव्याक्तिभ्यः कीलकेभ्योनमः । ततः कराङ्गन्यासौ अँ कं खं गं घं ङं आँ अङ्गुष्ठाभ्यां नमः इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं । ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां अस्त्राय फट् । हृदयादिषु । ओं अं कं खं गं घं ङं आं हृदयाय नमः । इं चं छं जं झं ञं ईं शिरसे स्वाहा । उं टं ठं डं ढं णं ऊँ शिखायैवषट् एँ तं थं दं धं नं ऐं कवचाय हुँ । ओं पं फं बं भं मं औंनेत्रत्रयाय वौषट् । अं यं रं लं वं शं षं सं हं ळं क्षं अः अस्त्राय फट् ॥ इति । ( अत्र तु न्यासः सृष्टिस्थितिसंहारक्रमेण

त्रिविधस्तत्रापि यति ब्रह्मचारिगृहस्थाद्याश्रमाविभेदात्पृथक् त्रैविध्यम न्यासस्य तु सर्वेषामावश्यकता ऋषिकराङ्गन्यासाश्च क्रमत्रयेप्येकरूपा एव केवलं ध्यानभेदान्मात्राभेदाच्च न्यासपार्थक्यम् तत्सर्वं टिप्पण्यां विचिन्तयेदत्र तु पद्धतिक्रमेणैव न्यासानुद्धरिष्ये ) (प्रथमं सृष्टिक्रमः) एवं न्यासादिकं ऋष्यादिजातं कृत्वा कृतबद्धांजलिकः संमाहितमनाः सृष्टिक्रमोदितां मातृकासरस्वतीं देवतां ध्यायेत् ध्यानं यथा पंचाशल्लिपिभिर्विभक्तमुखदोहृन्मध्यवक्षस्थलीं भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम्। मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः विभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ एवं ध्यात्वा केवलान् सविसर्गान् अकारादिक्षकारान्तान् वर्णान् ललाटादिषु स्थानेषु न्यसेत् ।

अः नमः ललाटे आः नमः मुखवृत्ते इः नमः दक्षनेत्रे ईः नमः वामनेत्रे उः नमः दक्षकर्णे ऊः नमः वामकर्णे ऋः नमः दक्षनासापुटे ॠः नमः वामनासपुटे ऌः नमः दक्षगंडे ॡः नमः वामगण्डे एः नमः ओष्ठे ऐः नमः अधरे ओः नमः ऊर्ध्वदन्ते औः नमः अधोदन्ते अंः नमः ब्रह्मरन्ध्रे अः नमः मुखे कः नमः दक्षबाहुमूले खः नमः दक्षकूर्परे गः नमः दक्षमणिबन्धे घः नमः दक्षाङ्गुलिमूलेषु ङः नमः दक्षाङ्गुल्यग्रेषु चः नमः वामबाहुमूले । छः नमः वामकूर्परे । जः नमः वाममणिबन्धे । झः नमः वामाङ्गुलिमूलेषु । ञः नमः वामाङ्गुल्यग्रेषु । टः नमः दक्षपादमूले । ठः नमः दक्षजानुनि । डः नमः दक्षगुल्फे । ढः नमः दक्षपादाङ्गुलिमूलेषु । णः नमः दक्षपादाङ्गुल्यग्रेषु । तः नमः वामपादमूले । थः नमः वामजानुनि । दः नमः वामगुल्फे । धः नमः वामपादाङ्गुलिमूलेषु । नः नमः वामपादाङ्गुल्यग्रेषु । पः नमः

दक्षपार्श्वे। फः नमः वामपार्श्वे। बः नमः पृष्ठे। भः नमः नाभौ मः नमः उदरे। यः नमः हृदये। रः नमः दक्षांशे। लः नमः ककुदि। वः नमः वामांशे। शः नमः हृदयादिदक्षिणकरे। षः नमः हृदयादिवामकरे सः नमः हृदयादिदक्षिणपादे। हः नमः हृदयादिवामपादे। ळः नमः हृदयाद्युदरे। क्षः नमः हृदयादिमुखे व्यापकम्।

इति सृष्टिक्रमान्न्यासः

(स्थितिक्रमः) न्यासादिकन्तु सृष्टिक्रमोक्तमेव ध्यानं यथा सिन्दूरकान्तिमामिताभरणां त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरान् दधानाम्। पार्श्वे स्थितां भगवतीमपि कांचनाभां ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम्॥ एवं ध्यात्वा मातृकावर्णानधः क्रमानङ्गेषु न्यसेत्।

---

त्पावकसंकाशा सूक्ष्मातेजः स्वरूपिणीतिश्लोकान्तरं सर्वाः कारिका आधुनिक मेरुतन्त्रे न दृश्यन्ते सर्वत्रेति।

वहिर्मातृकान्यासः। (शारदायाम्) ऋषिर्ब्रह्मा समुद्दिष्टो गायत्रीछन्दईरितम्। सरस्वती समाख्याता देवता देशिकोत्तमैः॥ अक्लीवह्रस्वदीर्घान्तर्गतैः षड्वर्गकैः क्रमात् षडङ्गानिविधेयानि जातियुक्तानि देशिकैः॥ (मेरुतन्त्रे) वहिन्र्यासमथोवक्ष्ये पूर्वोक्तब्रह्मरन्ध्रके। वर्णारविन्देसंध्यायेन्मातृकाख्यां सरस्वतीम्॥ (ध्यानमपि तत्रैव) पंचाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षो देशां भास्वत्कपर्द्दाकलितशशिकलामिन्दुकुन्दावदाताम्। अक्षस्रक्कुंभचिन्ता लिखितकरतलां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनयुगलभरां भारतीं तां नमामि॥ ललाटे मुखवृत्ते क्षिश्रवोनासासुगण्डयोः। ओष्ठयोर्दन्तपंक्त्योश्च मूर्ध्नि वक्त्रे न्यसेत्स्वरान्॥ बाह्वोः सन्धिषु साग्रेषु कचवर्गौन्यसेत्सुधीः।

डँः नमः दक्षगुल्फे। ढँः नमः दक्षपादाङ्गुलिमूलेषु। णँः नमः दक्षपादाङ्गुल्यग्रेषु। तँः नमः वामपादमूले। थँः नमः वामजानुनि। दँः नमः वामगुल्फे। धँः नमः वामपादाङ्गुलिमूलेषु। नँः नमः वामपादाङ्गुल्यग्रेषु। पँः नमः दक्षपार्श्वे। फँः नमः वामपार्श्वे। बँः नमः पृष्ठे। भँः नमः नाभौ। मँः नमः उदरे। यँः नमः हृदये। रँः नमः दक्षांशे। लँः नमः ककुदि। वँः नमः वामांशे। शँः नमः हृदयादिदक्षिणकरे। षँः नमः हृदयादिवामकरे। सँः नमः हृदयादिदक्षिणपादे। हँः नमः हृदयादिवामपादे। लँः नमः हृदयाद्युदरे। क्षँः नमः हृदयान्मुखम्। अंः नमः ललाटे। आँः नमः मुखवृत्ते। इँः नमः दक्षनेत्रे। ईँः नमः वामनेत्रे। उँः नमः दक्षकर्णे। ऊँः नमः वामकर्णे। ऋँः नमः दक्षनासापुटे। ॠँः नमः वामनासापुटे। लृँः नमः दक्षगण्डे। लॄँः नमः वामगण्डे। एँः नमः ओष्ठे। ऐँः नमः अधरे। ओँः नमः ऊर्द्धदन्ते। औँः नमः अधोदन्ते। अँः नमः ब्रह्मरन्ध्रे। अः नमः मुखे। कँः नमः दक्षबाहुमूले। खँः नमः दक्षकूर्परे। गँः नमः दक्षमणिबन्धे। घँः नमः दक्षाङ्गुलिमूलेषु। ङँः नमः दक्षाङ्गुल्यग्रेषु। चँः नमः वामबाहुमूले। छँः नमः वामकूर्परे। जँः नमः वाममणिबन्धे। झँः नमः वामाङ्गुलिमूलेषु। ञँः नमः वामाङ्गुल्यग्रेषु। टँः नमः दक्षपादमूले। ठँः नमः दक्षजानुनि।

॥ इतिस्थितिन्यासः ॥

(सँहारक्रमः) अत्रापि ऋषिकराङ्गानि पूर्ववत् ध्यानं यथा अक्षस्रजं हरिणपोतमुदग्रटङ्कविद्यां करैरविरतं दधतीं त्रिनेत्राम्। अर्धेन्दुमौलिमरुणामरविन्दभासां वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥

रतवर्गौपदोस्तद्वत् पार्श्वयोः पृष्ठदेशतः ॥ नाभौ कुक्षौ पवर्गं च हृदंशककुदं ततः। न्यस्य यादिचतुर्वर्णान् शादिपञ्चकं ततोन्यसेत् ॥

एवं ध्यात्वा न्यासमाचरेत् यथा । क्षँ नमः हृदादिमुखे । लँ नमः हृदाद्युदरे । हँ नमः हृदादिवामपादे । सँ नमः हृदादिदक्षिणपादे । षँ नमः हृदादिवामकरे । शँ नमः हृदादिदक्षिणकरे । वँ नमः वामांशे । लँ नमः ककुदि । रँ नमः दक्षांशे । यँ नमः हृदये । मँ नमः उदरे । भँ नमः नाभौ । वँ नमः पृष्ठे । फँ नमः वामपार्श्वे । पँ नमः दक्षपार्श्वे । नँ नमः वामपादाङ्गुल्यग्रेषु । धँ नमः वामपादाङ्गुलिमूलेषु । दँ नमः वामगुल्फे । थँ नमः वामजानुनि । तँ नमः वामपादमूले । णँ नमः दक्षपादाङ्गुल्यग्रेषु । ढँ नमः दक्षपादाङ्गुलिमूले । डँ नमः दक्षगुल्फे । ठँ नमः दक्षजानुनि । टँ नमः दक्षपादमूले । ञँ नमः वामाङ्गुल्यग्रेषु । झँ नमः वामाङ्गुलिमूलेषु । जँ नमः वाममणिबन्धे । छँ नमः वामकूर्परे । चँ नमः वामबाहुमूले । ङँ नमः दक्षाङ्गुल्यग्रेषु । घँ नमः दक्षाङ्गुलिमूलेषु । गँ नमः दक्षमणिबन्धे । कँ नमः दक्षबाहुमूले । अँः नमः मुखे । अं नमः ब्रह्मरंध्रे । औँ नमः अधोदन्ते । ओँ नमः ऊर्ध्वदन्ते । ऐँ नमः अधरे । एँ नमः ओष्ठे । ॡँ नमः वामगण्डे । ऌँ नमः दक्षगण्डे । ॠँ नमः वामनासापुटे । ऋँ नमः दक्षनासापुटे । ऊँ नमः वामकर्णे । उँ नमः दक्षकर्णे । ईँ नमः वामनेत्रे । इँ नमः दक्षनेत्रे । आँ नमः मुखवृत्ते अं नमः ललाटे । ॥ इति संहारक्रमन्यासः

(अथैषां न्यासानामधिकारिक्रमेण क्रमनिर्णयः । न्यासास्त्रय एव कार्य्याः । तत्र यतयोवानप्रस्थाश्च पूर्वं सृष्टिक्रमेण ततः स्थितिक्रमेण ततः संहारक्रमेण न्यासान् कुर्य्युः । ब्रह्मचारिणस्तु पूर्वं स्थितिक्रमेण ततः संहारक्रमेण ततः सृष्टिक्रमेण न्यासान् विदध्युः । तथा गृहस्थाश्च प्रथमं संहारक्रमेण ततः सृष्टिक्रमेण ततः स्थितिक्रमेण इति ॥ (अयंत्रिविधोपिन्यासोमातृकैवेति ।

हृदादिकरयोरंघ्र्योर्जठरे वदने तथा। न्यासस्त्वयं वर्णमात्राहीन-पाठप्रपूरकः ॥ ( शारदायाम् ) न्यसेत्सर्गान्वितान् सृष्ट्या ध्यायेद्देवीं यथाविधि। इति। स्थितौ (शारदावचनम्) सर्गविन्दन्तिका-न्न्यस्य डार्णाद्यान्स्थितिववर्त्मना। विद्यात्पूर्वोदितान् विद्वान् ऋष्यादीनंगसंय्युतान् ॥ ( मेरौ ) विन्दुसर्गयुतान्वर्णान् डादि-ठान्तान् स्थितौ न्यसेत्। पूर्वोक्ताएवमुन्याद्याः षडङ्गं ध्यान-मुच्यते ॥ ध्यानन्तु सिन्दूरकान्तिमित्यादिपूर्वंयदुद्धृतन्तद्देवेति स्थितिः। ( मेरुतंत्रे ) क्षमारभ्य अकारान्तोन्यासश्चेत् क्रियते यदि। संहारन्यासनामास्याद्विन्दुन्यास इतीरितः इति। ध्यानन्तु अक्षस्रजमित्यादिपूर्वोक्तं मेरुतन्त्रीयमेवान्यत्स्पष्टमिति। उक्तं च (मेरौ) न्यासाः कार्यास्तु वटुभिः स्थितिसंहारसृष्टयः। संहार-सृष्टिस्थितयोगृहस्थस्तु न्यसेत् क्रमात् ॥ वानप्रस्थाश्रयतयः सृष्टिस्थितिलयाःक्रमात्। न्यासान् कुर्युरितिप्रोक्तः स्थितिन्यासः सविस्तरः इति। अथ न्यासविषये विशेषतां प्रकटयति ( नि-बन्धकारः ) ओमाद्यन्तोनमोन्तोवा सविन्दुर्विन्दुवर्जितः। पञ्चा-शद्वर्णविन्यासः क्रमादुक्तोमनीषिभिः ॥ चतुर्धामातृकाप्रोक्ता केवला विन्दुसंयुता। सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥ विद्याकरी केवला च सोभया मुक्तिदायिनी। सविसर्गा पुत्र-दात्री सविन्दुर्वित्तदायिनी ॥ ( कुलावतारे ) मायालक्ष्मीवीज-पूर्वोवाग्भवाद्योऽथवा पुनः। त्रितारायोरमाद्योवा न्यस्तव्यः सा-धकोत्तमैः ॥ ( त्रितारश्च ) वाग्भवं कामराजश्च श्रीवीजं च त्रितारकम्। शक्तिश्रीकामवीजं वा त्रितारं मुनयोविदुः ॥ इति तंत्रान्तरे प्रोक्तम्। ( वीजकोशेतु ) वाग्भवं भुवनेशानि श्रीवीजं च त्रितारकम्। इत्युक्तम्। ( सिद्धान्तसारे ) वाग्भवाद्यावाक्-प्रदास्यात् त्रितारात्यातु कामदा। श्रीवीजाद्या महैश्वर्यदायिनी मातृकास्मृता ॥ ( वीरचूडामणौ ) मातृकात्रितयं कुर्य्यात् सृष्टि-संहारकस्थितम्। न्यासं कुर्य्यान्महेशानि कल्पोक्तं च विशेषतः ॥ ( कुलावतारे ) सृष्टेस्तु सुतपुष्ट्यादि स्थितेस्तत्पालनं भवेत्।

# अथ कलामातृकान्यासः

ओमस्य श्रीकलामातृकान्यासस्य प्रजापतिर्ऋषिः गायत्रीछन्दः मातृकाख्यासरस्वतीदेवता अभीष्टसिद्धये विनियोगः।

संहृतेर्दोषसंहारं तस्मात्त्रितयमाचरेत् ॥ ( सिद्धान्तसारे ) सर्गं सर्गान्वितान् न्यसेत संहृतौ च सबिन्दुकान् । डादिठान्तान्न्यसेद्वर्णान् स्थितौ तदुभयान्वितान् ॥ ( त्रिशक्तिरत्नेतु ) अकथादित्रिभेदेन विभज्य मनुवल्लिपिम् । कवर्गं प्रथमं न्यसोद्वर्गं च ततः परम् ॥ तवर्गं विन्यसेत्पश्चात् स्थितिरेषाप्रकीर्तिता इत्युक्तम् । अथमातृकान्यासमुद्रा उक्तास्तंत्रान्तरे । ललाटेऽनामिकामध्यं न्यसेच्च मुखवृत्तके । तर्जनीमध्यमाऽनामा वि ·यसेच्चैव नेत्रयोः । तर्ज·यानामेसंयोज्य न्यसेत्साधकसत्तमः ॥ अङ्गुष्ठंकर्णयो·र्यस्य कनिष्ठाङ्गुष्ठकौ नसोः । मध्यमांगंडयोर्न्यस्य मध्यमामोष्ठयोर्न्यसेत् ॥ अनामांदन्तयोर्न्यस्य मध्यमामुत्तमांगके । मुखेऽनामां मध्यमां च हस्ते पादे च पार्श्वयोः । कनिष्ठानामिकामध्या न्यस्तव्याः पृष्ठतस्तथा ॥ ताः साङ्गुष्ठानाभिदेशे सर्वाः कुक्षौ च विन्यसेत । हृदये साधकः सर्वमंशयोश्च ककुत्स्थले ॥ हृत्पूर्वहस्तपत्कुक्षिमुखेषु तलमेव च । एतास्तु मातृकामुद्राः क्रमेण परिकीर्तिताः ॥ अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्यनिष्फलः । ( मंत्रतंत्रप्रकाशे ) पुष्पैरनामयावापि मनसा वा न्यसेन्मनून् । ( अनामयेत्यस्य साङ्गुष्ठयेति ) अङ्गुष्ठानामिकाभ्यान्तु न्यासः सर्वत्र संमतः ॥ इति ( पद्मवाहिनी ) वचनात् । तेन च । पुष्पैर्देवतामूर्तौ अङ्गुष्ठानामिकाभ्यां स्वदेहे । मनसा मूलाधारादिषु न्यासोवोध्यः । इदं च ऋष्यादिकरषडङ्गन्यासवहिर्मातृकादिव्यतिरिक्तेषु तत्र मुद्रान्तराभिधानात् । ( डामरेतंत्रे ) कृत्वा तु मातृकान्यास न्यासानन्यान् समाचरेत । मूलमंत्रस्य ऋष्यादिकराङ्गादि ततान्यसेत् ॥

(अथ करन्यासः) अं ॐ आं अङ्गुष्ठाभ्यान्नमः। इं ॐ ईं तर्जनीभ्यांस्वाहा। उं ॐ ऊं मध्यमाभ्यां वषट्। एं ॐ ऐं अनामिकाभ्यां हुं। ओं ॐ औं कनिष्ठिकाभ्यां वौषट्॥ अं ॐ अः करतलकरपृष्ठाभ्यामस्त्राय फट् (एवं हृदयादिन्यासः) अं ॐ आं हृदयायनमः इं ॐ ईं शिरसे स्वाहा। उं ॐ ऊँ शिखायैवषट्। एं ॐ ऐं कवचाय हूँ। ओं ॐ औं नेत्रत्रयाय वौषट् अं ॐ अः अस्त्राय फट् (अथ ध्यानम्) हस्तैः पद्मं रथाङ्गं गुणमथहरिणं पुस्तकं वर्णमालां टंकं शुभ्रं कपालं दलममृतलसद्धेमकुंभं वहन्तीम् मुक्ताविद्युत्पयोदस्फटिकमणिजपावन्धुरैः पंचवक्त्रैस्त्र्यक्षैर्वक्षो-जनम्रां सकलशशिनिभां शारदां तां नमामि॥ इति)

---

अथ कलामातृकान्यासः (मेरुतन्त्रे) वक्ष्ये कलामातृकायाःन्यासं तस्य ऋषि स्मृतः प्रजापतिश्च गायत्री छन्दस्तस्यास्तु देवता सरस्वती मातृकाख्या नियोगोऽभीष्टसिद्धये तारैः षडङ्गं कुर्वीत ह्रस्वदीर्घान्तसंस्थितैः। ध्यानम्। हस्तै प०...........तां नमामि ध्यात्वैवं तारपूर्वां तामकाराद्यां च मातृकाम् विन्दुयुक्तां ङेन्त-कलानामाद्यां नमसान्विताम् पूर्वोक्तशुद्धमात्राणां न्यासस्थानेषु विन्यसेत् (एतेन अंनिवृत्यैनमः इत्यादयः प्रयोगाः संपन्नाः) (कलानामानि) निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथेन्धिका दीपिका रेचिकाः चापि मोचिका च पराभिधा सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी ततः व्यापिनी व्योमरूपा चानन्ता सृष्टिः समृद्धिका स्मृतिर्मेधा ततः कान्तिर्लक्ष्मीर्द्युतिः स्थिरा स्थितिः सिद्धिर्जया पालिनी च शान्तिरीश्वरिका रतिः कामिका वरदा

## ❀ अथ न्यासः ❀

ॐ अं निवृत्यैनमः ललाटे। ॐ आं प्रतिष्ठायैनमोमुखवृत्ते। ॐ इं विद्यायैनमोदक्षनेत्रे। ॐ ईं शान्त्यैनमोवामनेत्रे। ॐ उं इन्धिकायैनमोदक्षकर्णे। ॐ ऊं दीपितायैनमोवामकर्णे। ॐ ऋं रेचिकायैनमोदक्षनासायाम्। ॐ ॠं मोचिकायैनमोवामनासायाम्। ॐ लृं परायैनमोदक्षकपोले। ॐ लॄं सूक्ष्मायैनमोवामकपोले। ॐ एं सूक्ष्मामृतायैनमओष्ठे। ॐ ऐं ज्ञानामृतायैनमः अधरे। ॐ ओं आप्यायन्यैनमउर्द्धदन्ते। ॐ औं व्यापिन्यैनमः अधोदन्ते। ॐ अं व्योमरुपायैनमः मूर्ध्नि। ॐ अः अनन्तायैनमः मुखे। ॐ कं सृष्टयै नमोदक्षबाहुमूले। ॐ खं समृद्धिकायैनमो दक्षिणकूर्परे। ॐ गं स्मृत्यैनमोदक्षिणमणिबन्धे। ॐ घं मेधायैनमोदक्षिणाङ्गुलिमूलेषु। ॐ ङं कान्त्यैनमोदक्षिणाङ्गुल्यग्र-

---

चान्या ह्लादिनो प्रीतिसंयुना दीर्घा तीक्ष्णा तथा रौद्री भया निद्रा च चन्द्रिका क्षुधा स्यात् क्रोधिनी पश्चात् क्रियोत्कारी समृत्युका पीता श्वेता सिता पश्चादसिताऽनन्तयान्विता उक्ता कलामातृकैवं स्थानेऽकारादिके न्यसेत्। इति। ( अथासामुत्पत्तिमाह ) तत्र नदात्मनोजाताः स्वरजास्तु सदाशिवात् अक्षमालां पुस्तकं च पाशं चापि कपालकम् हस्तैर्दधत्यः श्वेताभाः श्वेताभरणभूषिताः अकाराद्ब्रह्मणोजाताः कचवर्गकलादश पीता अक्षस्रजं पद्ममभयं च कमण्डलुम् हस्तैर्दधत्यो ध्येयास्ताः पीतगन्धानुलेपनाः विष्णोरुकारात्संजाताष्टतवर्गकलादश श्यामा अभयशङ्खारिवरहस्ताः समीरिताः मकाराद्रुद्रतोजातापयवर्गकला नव शरच्चन्द्रनिभा हस्तैरभयं शूलमेव च कपाले च वरं ध्येया दधत्यइति साधकैः शकारादिकपञ्चानामीश्वराद्बिन्दुतोऽभवत् अभयं हरिणं टङ्कं वरं व करपल्लवैः दधत्योरक्तवर्णाश्च ध्येयान्यासे कलात्मके इति॥

ग्रेषु । ॐ चं लक्ष्म्यैनमोवामवाहुमूले । ॐ छं द्युत्यैनमोवामकूर्परे। ॐ जं स्थिरायैनमोवाममणिवन्धे । ॐ झं स्थित्यैनमोऽङ्गुलिमूलेषु । ओं ञं सिद्ध्यै नमोवामाङ्गुल्यग्रेषु । ओं टं जयायैनमोदक्षपादमूले । ओं ठं पालिन्यैनमोदक्षजानुनि । ओं डं क्षान्त्यैनमोदक्षगुल्फे । ओं ढं ईश्वर्य्यैनमोदक्षपादाङ्गुलिमूलेषु । ओं णं रत्यैनमोदक्षपादाङ्गुल्यग्रेषु । ओं तं कामिकायैनमोवामपादमूले । ओं थं वरदायैनमोवामजानुनि । ओं दं ह्लादिन्यैनमोवामगुल्फे । ओं धं प्रीत्यैनमोवामाङ्गुलिमूलेषु । ओं नं दीर्घायैनमोवामाङ्गुल्यग्रेषु । ओं पं तीक्ष्णायैनमोदक्षपार्श्वे । ओं फं रौद्र्यै नमोवामपार्श्वे। ओं बं मायायैनमः पृष्ठे । ओं भं निद्रायैनमोनाभौ । ओं मं तन्द्रिकायैनमोजठरे । ओं यं क्षुधायैनमोहृदये । ओं रं क्रोधिन्यैनमोदक्षांशे । ओं लं क्रियोत्कार्य्यैनमः ककुदि । ओं वं मृत्युकायैनमोवामांशे । ओं शं पीतायैनमोहृदयादक्षभुजाग्रान्तम् । ओं षं श्वेतायैनमोहृदयाद्वामभुजाग्रान्तम् । ओं सं अरुणायैनमोहृदयाद्दक्षिणपादाग्रान्तम् । ओं हं असितायैनमः हृदयान्मस्तकान्तम्। ओं क्षं अनन्तायैनमः हृदयान्मुखपर्य्यन्तम् । इति ॥

# ॥ अथैकादशन्यासाः ॥

तत्र तावत्प्रथमं मूलेन ऋष्यादिकरषडङ्गान् विधाय ततोन्यासानारभेत् तद्यथा अत्र मूलमन्त्रोनवार्णः। तेनाचम्य प्राणानायम्य विनियोगः कार्योयथा (शान्तिसुधाकरे) ओं अस्य श्री नवार्णमन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः महाकालीमहालक्ष्मीमहासरस्वत्योदेवताः गायत्र्युष्णिगनुष्टुप्छन्दांसि नन्दजाशाकंभरीभीमाः शक्तयः रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निवायुःसूर्यस्तत्वानि एकादशन्यासे

विनियोगः। (अथऋषिन्यासः) ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि। गायत्र्युष्णिगनुष्टुप् छन्दोभ्योनमो मुखे। महाकाली महालक्ष्मी महासरस्वती देवताभ्योनमो हृदि। नन्दा शाकम्भरीभीमाशक्तिभ्योनमःस्तनयोः। अग्निवायु सूर्येभ्यस्तत्त्वेभ्यो नमः पुनर्हृदि । (अथकरन्यासः) ॐ ऐं अङ्गुष्ठाभ्यांनमः ह्रीं तर्ज्जनीभ्यां स्वाहा क्लीं मध्यमाभ्यां वषट् चामुण्डायै अनामिकाभ्यां हुँ विच्चे कनिष्ठिकाभ्यां वौषट्। ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां फट्। (अथाङ्गन्यासः।) ऐं हृदयायनमः ह्रीं शिरसेस्वाहा क्लीं शिखायै वषट् चामुण्डायै कवचाय हुं विच्चेनेत्रद्वयाय वौषट् ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्। इति॥

(मन्त्रमहोदधौ) नवार्णोद्धारस्तदृष्यादि च। अथोनवाक्षरं मंत्रं वक्ष्ये चण्डीप्रवृत्तये। वाङ् माया, मदनो, दीर्घा लक्ष्मीस्तन्द्रीश्रुतीन्दुयुक्॥ डायैसदृग्जलं कूर्मद्वयं झिण्टीशसंयुतम्। नवाक्षरोऽस्यऋषयोब्रह्मविष्णुमहेश्वराः॥ छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः। देव्यः प्रोक्तामहापूर्वाः कालीलक्ष्मीः सरस्वतीः॥ नन्दाशाकंभरीभीमाशक्तयोऽस्यमनोः स्मृताः। स्याद्रक्तदन्तिकादुर्गाभ्रामर्य्योबीजसंचयः। अग्निवायुभगास्तत्व फलं वेदत्रयोद्भवम्॥ सर्वाभीष्टप्रसिद्ध्यर्थं विनियोगः उदाहृतः ऋषिछन्दो दैवतानि शिरोमुखहृदि न्यसेत्॥ शक्तिबीजानिस्तनयोः तत्वानि हृदये पुनः। ततएकादशन्यासान्कुर्वीतेष्टफलप्रदान्॥ प्रथमं मातृकान्यासः कार्यः पूर्वोक्तमार्गतः। कृतेन येन देवस्य सारूप्यं यातिमानवः॥

## ❀ अथैकादशन्यासाः दुर्गोपासनाकल्पस्थाः ❀

ओं अं नमोमूर्ध्नि । आं नमोललाटे । इं नमो दक्षिणनेत्रे । ईं नमोवामनेत्रे । उं नमोदक्षकपोले । ऊं नमोवामकपोले । ऋं नमोदक्षिणकर्णे । ॠं नमोवामकर्णे । लृं नमोदक्षनासापुटे । ॡं नमोवामनासापुटे । एं नमः ओष्ठे । ऐं नमः अधरे । ओं नमः उद्र्ध्वदन्तपंक्तौ । औं नमः अधोदन्तपंक्तौ । अं नमः जिह्वायाम् अः नमस्तालूनि । कं नमोदक्षिणबाहुमूले । खं नमोदक्षिणकूर्परे । गं नमोदक्षिणमणिबन्धे । घं नमोदक्षिणांगुलिमूले । ङं नमोदक्षिणाङ्गुल्यग्रे चं नमोवाहुमूले । छं नमोवामकूर्परे । जं नमोवाममणिबन्धे । झं नमोवामाङ्गुलिमूले । ञं नमोवामाङ्गुल्यग्रे । टं नमोदक्षिणपादमूले । ठं नमोदक्षिणजानुनि । डं नमोदक्षिणपादगुल्फे । ढं नमोदक्षिणपादाङ्गुलिमूले । णं नमोदक्षपादाङ्गुल्यग्रे । तं नमोवामपादमूले । थं नमोवामजानुनि । दं नमोवामपादगुल्फे । धं नमोवामपादाङ्गुलिमूले । नं नमोवामपादाङ्गुल्यग्रे । पं फं बं भं मं हृदि । यं नमस्त्वचि । रं नमअसृजि । लं नमः मांसे । वं नमः स्नायुषु । शं नमः अस्थिनि । षं नमः मज्जायाम् । सं नमः मेदसि । हं नमः शुक्रे । क्षं नमः सर्वत्र इति ।

---

दुर्गोपासनाकल्पे । ऋषिरुवाच पूजानां जपहोमानां सर्वमाङ्गल्यकर्मणाम् न्यासं ब्रवीमि भूपाल सर्वकामार्थसिद्धिदम् स्थिरासने स्थिरोभूत्वा निरहंकारनिर्म्ममः स्वगुरोश्चरणौ नत्वा महालक्ष्मीं च पूर्ववत् ध्यानपूर्वं नमस्कृत्य न्यासकर्मसमारभेत् क्षिप्त्वा क्षिप्त्वा न्यसेत्तत्वं विन्दुनोपरिभूषितम् मातृकान्यासविज्ञानां शिरः प्रथमपल्लवः प्रथमं विन्यसेन्मूर्ध्नि ललाटे तत्परं न्यसेत् नेत्रयोर्द्वितयं भूप द्वयमन्यत्कपोलयोः श्रुत्योः स्वरद्वयं न्यस्य द्वयं नासापुटद्वयोः । ओष्ठयोर्विन्यसेद्द्वन्द्वं द्वन्द्वं दशनलेखयोः जिह्वायां विन्यसेदेकं तालुस्थाने च तत्परम् विन्यसेत्प्रथमं

# अथ द्वितीयः सारस्वतोन्यासः

ॐ ऐँ ह्रीँ क्लीँ कनिष्ठिकाभ्यान्नमः
„ „ „ „ अनामिकाभ्यान्नमः
„ „ „ „ मध्यमाभ्यांनमः
„ „ „ „ तर्जनीभ्यांनमः
„ „ „ „ अङ्गुष्ठाभ्यांनमः
„ „ „ „ करतलाभ्यांनमः
„ „ „ „ करपृष्ठाभ्यांनमः
„ „ „ „ स्फाराभ्यांनमः
„ „ „ „ मणिवन्धाभ्यांनमः
„ „ „ „ हृदयायनमः
„ „ „ „ शिरसेनमः
„ „ „ „ शिखायैनमः
„ „ „ „ कवचायनमः
„ „ „ „ नेत्रद्वयायनमः
„ „ „ „ अस्त्रायनमः
„ „ „ „ पूर्वस्मैनमः
„ „ „ „ आग्नेयायनमः
„ „ „ „ दक्षिणायनमः
„ „ „ „ निर्ऋतयेनमः
„ „ „ „ पश्चिमायनमः
„ „ „ „ वायवेनमः
„ „ „ „ उत्तरायैनमः
„ „ „ „ ईशानायनमः
„ „ „ „ ऊर्द्ध्वेनमः
ॐ ऐँ ह्रीँ क्लीँ अधस्तात्
इति द्वितीयः सारस्वतोन्यासः

अनेन दुरितं जाड्यं वाक् पाप संचयं विलयं याति ॥

वर्गं भूपते दक्षिणे भुजे वामे परं न्यसेद्वर्गं तृतीयं दक्षिणे पदे चतुर्थं वामपादे च पञ्चमं हृदये न्यसेत् शेषाक्षराणां नवकं न्यसेद्वै सर्वधातुषु त्वचि रक्ते च मांसे च स्नायुष्वस्थिषु पञ्चकम् मज्जामेदांसि शुक्रे च तृतीयं तत्परं न्यसेत् अयं ते मातृकान्यासः प्रथमं परिकीर्तितः साङ्गवेदसमोभाति भूषितोयेन मांत्रिकः ॥ इति ॥

अथ सारस्वतोन्यासोद्वितीयस्ते प्रकथ्यते ऊक्तमंत्रस्य वीजानां त्रयाणां देवतार्चने ॥ आद्यं वीजत्रयं कृत्वा प्रणवादिनमोन्तकम् । कनिष्ठिकादिसर्वासु पंचस्वङ्गुलिषु न्यसेत् ॥ करमध्ये च पृष्ठे चः स्फारे च मणिवन्धने । हृदिमूर्ध्नि शिखायां च कवचे चक्षुरत्रयोः ॥ ... सचैदिक्षु पृथक् पृथक् । भूशं सार-

## ❀ अथ तृतीयोन्यासः ❀

ॐ ह्रीँ ब्रह्माण्यैनमः पूर्वे । ॐ ह्रीमाहेश्वर्य्यैनमः अग्नौ । ॐ ह्रीँ कौमार्य्यैनमोदक्षिणे । ॐ ह्रीँ वैष्णव्यैनमोनिर्ऋतौ । ॐ ह्रीँ वाराह्यैनमः पश्चिमायाम् । ॐ ह्रीँ नारसिंह्यैनमोवायौ । ॐ ह्रीँ ऐन्द्र्यै नमः उत्तरस्याम् । ॐ ह्रीँ चामुण्डायैनमः ऐशान्याम् । ॐ ह्रीँ व्योमेश्वर्य्यैनमः उद्र्ध्वे । ॐ ह्रीँ सप्तद्वीपेश्वर्य्यैनमः भुवि । ॐ ह्रीँ नागेश्वर्य्यैनमः पाताले ॥

इति तृतीयोन्यासः

अस्मिन्न्यासे कृते कर्ता त्रिषु लोकेषु निर्भयः सर्वदेवप्रियोभवति ।

## ❀ अथ चतुर्थोन्यासः ❀

कमलाङ्कुशमण्डिता नन्दजा पूर्वाङ्गम्पातु । खड्गपात्रकरा रक्तदन्तिका दक्षिणाङ्गम्पातु । पुष्पपल्लवमूलादिहस्ता शाकम्भरी पश्चिमाङ्गम्पातु । धनुर्बाणधरा दुर्गार्तिहारिणी दुर्गा उत्तराङ्गम्पातु । शिरः पात्रकरा भीमा मस्तकाच्चरणावधि पातु । चित्रकान्तिभृत भ्रामरी चरणान्मस्तकावधि पातु ।

इति चतुर्थोन्यासः

॥ अस्मिन्कृते मान्त्रिकाः अग्निवारिभ्यान्निर्भयोभूत्वा जरामरणवर्जितोभवति ॥

---

खते न्यासे महत्यस्मिन्कृते सति ॥ दुरितं विलयं यान्ति जाड्यं वाक्पापसंचयम् । इति ।

तृतीयं ते प्रवक्ष्यामि न्यासं मातृगणान्वितम् । मायाबीजेन संयुक्ता ब्रह्माणी पातु पूर्वतः ॥ एवमीशानपर्य्यन्तम् अष्टौ मातृः प्रपूजयेत् । ब्राह्मी माहेश्वरी चैव कौमारीवैष्णवी तथा ॥ वाराहीनारसिंह्यैन्द्री चामुण्डाचाष्टमातृकाः । उद्र्ध्वे व्योमेश्वरी पातु सप्तद्वीपेश्वरी भुवि ॥ नागेश्वरी च पाताले न्यासकर्ता च निर्भयः जायते त्रिषु लोकेषु सर्वदेवप्रियोयतः ॥

## ❀ अथ पञ्चमोन्यासः ❀

पादादिनाभिपर्य्यन्तं ब्रह्मामाम्पातु । नाभेर्विशुद्धिपर्य्यन्तं जनार्दनः माम्पातु । विशुद्धे शिखापर्य्यन्तं रुद्रोमाम्पातु । हंसोमेपदद्वन्द्वम्पातु । वैनतेयोमेकरद्वन्द्वम्पातु । वृषभः चक्षुषीमे पातु । गजाननः सर्वाङ्गम्मे पातु । आनन्दमयोहरिः परापरौ देहभागौ मे पातु ।

॥ अनेन न्यासेन कर्ता महापापातिपापाभ्याम्मुक्तोभवति ॥

## ❀ अथ षष्ठोन्यासः ❀

ॐ अष्टादशभुजा महालक्ष्मीः मध्यमाङ्गं मां पातु । ॐ अष्टभुजासरस्वती ऊर्ध्वम्माम्पातु । ॐ त्रिंशल्लोचना महाकाली अधोमाम्पातु । ॐ सिंहोहस्तद्वयं माम्पातु । ॐ परहंसोऽक्षिम-

---

षड्देवीनां पुनर्न्यासं चतुर्थं शृणु भूमिप पूर्वाङ्गं नन्दजापातु कमलाङ्कुशमण्डिता खड्गपात्रकरा पातु दक्षिणेरक्तदन्तिका पुष्पपल्लवमूलाद्दिहस्ता शाकम्भरी सदा धनुर्बाणधरा दुर्गा वामे दुर्गार्तिहारिणी शिरः पात्रकरा भीमा मस्तकाच्चरणावधि चरणाभ्यां शिरोयावत् भ्रामरी चित्रकान्तिभृत् । अनेन न्यासयोगेन जरामरणवर्जितः निर्भयश्चाग्निवारिभ्याम् मान्त्रिकस्तत्क्षणाद्भवेत् ॥ इति ॥

( अथ पञ्चमः ) पादाभ्यान्नाभिपर्य्यन्तं ब्रह्मापातु समन्ततः नाभेर्विशुद्धिपर्य्यन्तं पातुनित्यो जनार्दनः विशुद्धेस्तु शिखां यावत्पातु रुद्रस्त्रिलोचनः हंसः पादद्वयं पातु वैनतेयः करद्वयम् चक्षुषी वृषभः पातु सर्वाङ्गानि गजाननः एवं परापरौ पातु सर्वानन्दमयो हरिः अभेद्यः पञ्चमोन्यासः कर्तुः कामदुघाफलः महापापातिपापाभ्यस्प्रायश्चित्तमसौभवेदिति ।

ण्डलं माम्पातु । ॐ महिषारूढः प्रेतः पदद्वयं माम्पातु ( कुत्रापि यम इति पाठः । ॐ महेशश्चण्डिकायुक्तः सर्वाङ्गम्माम्पातु । इति षष्ठः ।

॥ अयं वैकुण्ठसुखकृत् सर्वकष्टोपशान्तये षष्ठोन्यासः ॥

## ॥ अथ सप्तमोन्यासः ॥

ॐ एँ नमोब्रह्मरन्ध्रे । ओं ह्रीँ नमोदक्षिणनेत्रे । ओं क्लीं नमोवामनेत्रे । ओं चांनमोदक्षनेत्रे । ओं मुंनमोवामनेत्रे । ओं डांनमोदक्षिणनासापुटे । ओं यैंनमोवामनासापुटे । ओं विंनमोमुखे । ओं च्चैंनमोगुह्ये । इति सप्तमः ।

❀ अस्मिन्न्यासे सर्वरोगक्षयोभवति ❀

## ❀ अथाष्टमोन्यासः ❀

ओं च्चैंनमोगुह्ये । ओं विंनमोमुखे । ओं यैंनमोवामनासापुटे । डांनमोदक्षिणनासापुटे । ओं मुंनमोवामनेत्रे । ओं चांनमोदक्षनेत्रे । ओं क्लीँ नमोवामनेत्रे । ओं ह्रीँ नमोदक्षिणनेत्रे । ओं ऐँ नमोब्रह्मरन्ध्रे । इत्यष्टमः ।

इमौ सप्ताष्टमौ गोप्यौ कृतेस्मिन्नष्टमेन्यासे सर्वदुःखं विनश्यति ।

---

मध्यम्पातु महालक्ष्मीरष्टादशभुजा ध्रुवम् । ऊर्ध्वं सरस्वती पातु भुजैरष्टाभिरूर्जिता ॥ अधः पातु महाकाली त्रिंशल्लोचनमण्डिता । सिंहोहस्तद्वयं पातु परहंसोक्षिमण्डलम् ॥ महिषेण समायुक्तः प्रेतः पातु पदद्वयम् । सर्वाङ्गानिमहेशानश्चण्डिका च परस्परम् ॥ वैकुण्ठसुखकृन्न्यासः षष्ठः कष्टोपशान्तये । उक्तमंत्रस्य वीजानि-प्रणवाद्यं पृथक् पृथक् ॥ पायुतोब्रह्मपर्यन्तं विन्न्यसेत्तानि ब्रह्मणः पायुपर्य्यन्तं नवद्वारेषु विन्यसेत् । पूर्ववत् । न्यासद्वयमिदंप्रोक्तं सुगोप्यं सप्तमाष्टमम् ॥

## ❀ अथ नवमोन्यासः ❀

ॐ ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे इति मूलमंत्रः । इमं स्वपुरः दक्षिणे पश्चिमे वामे च अनुलोम विलोम विधिना मस्तकाच्चरणावधि चरणान्मस्तकावधि न्यसेत् । इति नवमः । कृतेस्मिन्न्यासे साधकोदेववद्भवेदिति ।

## ❀ अथ दशमः ❀

ॐ ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे इति हृदयायनमः ।
" शिरसेस्वाहा ।
" शिखायैवषट् ।
" कवचायहुँ ।
" नेत्रत्रयायवौषट् ।
" अस्त्रायफट् ।

इति दशमः । कृतेस्मिन्दशमे न्यासे साधकोयद्वदति तदेवभवति यद्दृष्ट्या पश्यति तत्तथैव भवति ।

---

महाभयमहाव्याधिशत्रु चौरविघातनम् । महारक्षोगणानां च कल्पान्ताग्निसमं भवेदिति ।

पूर्वाङ्गं विन्न्यसेन्मंत्रं मस्तकाच्चरणावधि । दक्षिणे पृष्ठतोवामे तथालोमविलोमयोः ॥ अस्मिन्न्यासे कृते राजन् नवमे देववद्भवेत् ।

हृन्मस्तकशिखास्वे नं कवचे लोचनद्वये । अस्त्रे सर्वकनिष्ठादि पृथङ् मंत्रं विनिःक्षिपेत् ॥ नमोन्तं प्रथमं प्रोक्तं स्वाहान्तं तत्परे भवेत् वषडन्तं हुमन्तं च वौषडन्तं फडन्तकम् ॥ पूज्यस्त्रैलोक्यदेवानां दशमेऽस्मिन्कृते कृती । दशन्यासप्रविष्टो वै यद्वदेत्तत्था भवेत् ॥ यत्पश्यति यया दृष्ट्या तद्भवेत्तादृशं किल । तेन सार्द्धं महालक्ष्मीः स्वयं वदति सर्वदा ॥ भविष्यमभविष्यं च

## ॥ अथैकादशः ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा शंखिनी चापिनी वाणा भुशुंडी परिघायुधा ॥ सौम्या सौम्यतराशेष-सौम्येभ्यस्त्वतिसुन्दरी परापराणां परमा त्वमेव परमेश्वरी ॥ २ ॥ यच्चकिंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके तस्य सर्वस्य या शक्ति सात्वं किं स्तूयसे मया ॥ ३ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति योजगत् सोऽपि निद्रा वशं नीतः कस्त्वां स्तोतु-मिहेश्वरः ॥ ४ ॥ विष्णुः शरीरग्रहणमहमीशानएव च कारितास्ते यतोतस्त्वां कस्तोतुं शक्तिमान् भवेत् ॥ ५ ॥ इति ॥

पञ्चश्लोकं पठित्वा आद्यं वीजम् ऐं कृष्णतरं ध्यात्वा सर्वाङ्गं विन्यसेत्

---

तं पालयति पुत्रवत् । ब्रह्मविष्णुशिवास्त्वेनं पालयन्त्यात्मव-त्सदा ॥ त्रिषुलोकेषु पश्यन्ति यदाधिक्यं न किंचन । दशन्यासैः कृतं पापं दशजन्मार्जितं क्षणात् ॥ सुतीव्रं विलयं यान्ति ता-मिस्रं रविणा यथा । सन्नद्धोदशभिर्न्यासैः चण्डीं सप्तशतीं जपेत् ॥ असाध्यं साधयत्याशु कार्यं लोकत्रयेऽपि यत् । माधवे मासि मध्याह्ने तपन्तं निर्मलं रविम् ॥ दिवान्धास्तं न पश्यन्ति सर्वदा सर्वथा यथा । चण्डीसप्तशतीजाप्यं दशन्यासैः समुज्ज्वलं ॥ त्रैलोक्ये सर्वदुष्टास्तं न पश्यन्ति च सर्वथा ॥ इति दशमः ॥

शूलेन पाहिनोदेवि पाहिखड्गेन चाम्बिके घण्टास्वनेन नः पाहि चापज्यानिःस्वतेन च ॥ १ ॥ प्राच्यांरक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि सौ-म्यानि यानि रूपाणि त्रैलोक्ये बिचरन्ति ते यानि चात्यन्तघो-राणि तैरक्षास्मांस्तथा भुवम् खड्गशूलगदादीनि यानि चास्त्राणि तेम्बिके करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्वतः इति श्लोकचतुष्टयं पठित्वा सूर्य्यसदृशं द्वितीयं मायावीजं ह्रीँ ध्यात्वा सर्वाङ्गं न्यसेत् सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते भयेभ्यस्त्राहिनो देवि दुर्गेदेवि

नमोस्तुते एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तुते ज्वालाकरालमत्युग्रमशेषासुरसूदनम् त्रिशूलं पातु नोभीतेर्भद्रकालि नमोस्तुते हिनस्ति दैत्यतेजांसि स्वनेनापूर्य्य या जगत् सा घण्टा पातु नोदेवि पापेभ्योनः सुतानिव असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः शुभाय खड्गोभवतु चण्डिके त्वांनतावयम् इति श्लोकपञ्चकं पठित्वा स्फटिकाभासं तृतीयं कामवीजं क्लीं ध्यात्वा सर्वाङ्गं न्यसेदित्येकादशन्यासः एवमेकादशन्यासान्कृत्वा षडंगन्यासं कुर्य्यात् ततोमूलेनाष्टशः व्यापकं कृत्वा योनिमुद्राम्प्रदर्शयेदिति ॥

---

चण्डीसप्तशतीजाप्ये सरहस्ये नृपोत्तम न्यासंते सम्प्रवक्ष्यामि ब्रह्मविष्णुशिवैः कृतम् अङ्गेषु सर्वसिद्ध्यर्थं चन्द्रामृतमनः सुखम् [ अत्र वज्रामृतमनः इति पाठः गोविन्दार्चने ] अस्मिन्न्यासे दशश्लोको ब्रह्मविष्णुशिवोदिताः खड्गिनी शूलिनी घोरमाद्यं कृष्णतरं न्यसेत् नाभ्यादि चरणान्तं तु न्यासं शत्रु विनाशनम् शूलेन पाहिनोदेवि पुनः श्लोक चतुष्टयम् बालार्क सदृशं न्यासं चिन्तनीयं महत्तरम् तद्विशुद्धादि पर्य्यन्तं न्यासं तिमिरनाशनम् सर्वस्वरूप इत्यादि श्लोकान्तं पंचकं पुनः शुद्धस्फटिकसंकाशं न्यासं त्रैलोक्यकामदम् मौलौ मुखे तथा नेत्रे श्रोत्रे नासाद्वये तथा लिङ्गं चैव गुदं चैव दशस्थानं प्रकीर्तितम् मूर्ध्नोविशुद्धि पर्य्यन्तं श्लोकान्तं पंचकं पुनः अयमेकादशोन्यासो दशन्याससमोभवेत् नवाक्षरस्य मन्त्रस्य जाप्ये सर्वफलप्रदे एतेन्यासाः प्रकर्तव्याश्चण्डीं सप्तशतीं पठेत् एवं न्यासविधिं कृत्वा सृष्टिमुद्रां विलोकयेत् तस्यावलोकने राजन् कृते न्यासःस्थिरोभवेत् परिषिंचतिपूजार्थं द्रव्याणि। नववीजतः दशन्यासैः कृतैर्यस्य जपकर्ता फलं लभेत् तत्फलं लभते सत्यमस्मिन्नेकादशे कृते तलपृष्ठोद्भवां मुद्रां दत्वाऽस्त्रेणावगुण्ठयेत् ॥ इति ॥ अर्घपात्रं प्रतिष्ठाप्य पूरयेच्छुभवारिणा गन्धपुष्पाक्षतास्तत्र निक्षिप्य नृपनन्दन ध्यात्वा सर्वाणितीर्थानि

# अथान्तर्यजनविधानम्

अथैवमुक्तैकादशन्यासेन परिपूतोदेवतापूजने सुतरामर्होयजमानः मूलमन्त्रस्य ऋष्यादिन्यासं कृत्वा स्वदेहे पीठन्यासं कुर्य्यात् तद्यथा ॐ अस्य श्रीनवार्णमंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः गायत्र्युष्णिगनुष्टुपछन्दांसि महाकालीमहालक्ष्मीमहासरस्वत्योदेवताः नन्दजाशांकंभरीभीमाः शक्तयः रक्तदान्तिकादुर्गाभ्रामर्य्योबीजानि अग्निर्वायुः सूर्यस्तत्वानि अन्तर्यजनार्थे विनियोगः (अथ ऋष्यादिन्यासः) शिरसि ब्रह्माविष्णुमहेश्वरऋषिभ्योनमः । मुखे गायत्र्युष्णिगनुष्टुपछन्दोभ्योनमः । हृदि महाकालीमहालक्ष्मी

---

हस्तं दत्वाभिमन्त्रयेत् रक्षार्थे तस्य कर्तव्या चक्रमुद्रास्त्रसंयुता अर्घोदकस्य संस्कारं पूजाद्रव्यस्य पूर्ववत् कृत्वालोमविलोमाभ्यामात्मानं सम्यगर्च्चयेत् प्रत्यर्घं सम्प्रतिष्ठाप्य मध्ये पीठार्घपात्रयोः षट्कोणचक्रमध्यस्थां मध्यबीजव्यवस्थिताम् महाकाल्या सरस्वत्याऽलंकृतांदक्षवामयोः संयुक्तां दक्षिणेवामे सिंहेन महिषेण च अष्टादशभुजां ध्यात्वा महालक्ष्मीं प्रणम्यचपीठादिपूजनं कुर्य्यात् स्वबीजेन पृथक् पृथक् ।

उक्तंच ( डामरेतंत्रे ) कृत्वा तु मातृकान्यासं न्यासानन्यान्समाचरेत् न्यासानन्यान्स्वकल्पोक्तानिति । मूलमंत्रस्य ऋष्यादि कराङ्गादि ततोन्यसेत् ॥ अङ्गन्यासस्य नित्यता उक्ता (ज्ञानार्णवे) पूजाजपार्चनाहोमाः सिद्धमंत्रकृता अपि । अङ्गन्यासेन विधुरा न दास्यन्ति फलान्यमी ॥ ( मेरुतंत्रे ) षडङ्गं विन्यस्येन्मंत्री

महासरस्वतीदेवताभ्योनमः पादयोः। नन्दाशाकंभरीभीमा-शक्तिभ्योनमः गुह्ये । रक्तदन्तिकादुर्गाभ्रामरीभ्योनमः सर्वाङ्गेषु। ऐं ह्रीँ क्लीं चामुण्डायै विच्चेनमः॥ (अथ कर-न्यासः) ऐं अङ्गुष्ठाभ्यांनमः ह्रीं तर्जनीभ्यां नमः क्लीं मध्यमाभ्यां नमः चामुण्डायै अनामिकाभ्यां नमः। विच्चे-कनिष्ठिकाभ्यां नमः । ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः। (अथाङ्गन्यासः) ऐं हृदयाय नमः ह्रीं शिरसे स्वाहा क्लीं शिखायैवषट् चामुण्डायै कवचाय हुँ ऐंह्रींक्लींचामुण्डायै विच्चे अस्त्राय फट्॥ अथ ध्यानम् । खड्गंचक्रगदेषुचापपरिघान् शूलं भुशुण्डीं

---

पञ्चाङ्गं वा यथाविधि यस्य मंत्रस्य पञ्चाङ्गं नेत्रं तस्य विहीयते॥ अङ्गैर्विहीनस्य मनोरङ्गं तेनैव कल्पयेत् । ( योगिनीतंत्रे ) ऋष्यादीन्विन्यसेन्मंत्री चतुर्थी हृदयान्तकान् ( बृहन्मत्स्यसूक्ते ) ऋषिन्यासोमूर्ध्निदेशे छन्दस्तु मुखपङ्कजे । देवता हृदये चैव वीजन्तु गुह्यदेशके॥ शक्तिं च पादयोश्चैव। सर्वाङ्गे कीलकं न्य-सेत्। ( अथ ऋषिच्छन्दोदेवतानां न्यासे मुद्राः। ) ऋषिच्छन्दो-देवतानां न्यासे चाङ्गुलयः स्मृताः। चतस्रोऽङ्गुष्ठरहिताः श-क्त्यन्तं विन्यसेत् ततः। अथाङ्गमुद्राः ( तंत्रान्तरे ) हृदये मध्य-मानामातर्जनीभिर्न्यसेद्बुधः । मध्यमातर्जनीभ्यां च शिरसि न्यासमाचरेत । अङ्गुष्ठेन शिखायां च दशभिर्कवचे न्यसेत् । नेत्रेषु तिसृभिश्चस्यादस्त्रमूर्ध्वोर्द्ध्वगंत्रिशः॥ मध्य-मातर्जनीभ्यां स्यादङ्गमुद्राः स्मृता इति । ( अथषडङ्गार्थः ) हृदयायेतिशब्देन हृत्स्थोदेवः सविग्रहः । उच्यते नमइत्यस्य ज्ञानं तद्विषयं परम्॥ शिरःशब्दो देवताया उत्कृष्टत्वाभिधायकः।

शिरः पाशान् सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौ-त्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ इति कालीध्यानम् ॥ अक्षस्रक्परशूगदेषुकुलिशं पद्मं धनुःकुण्डिकां दण्डं शक्तिमसिं च चर्मजलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां सेवे सैरभमर्दि-नीमिहमहालक्ष्मीं सरोजास्थिताम् ॥ इति महालक्ष्मीध्या-नम् ॥ घंटाशूलहलानिशंखमुशले चक्रं धनुःसायकम् हस्ता-ब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभां । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतामहापूर्वामत्रसरस्वतमिनुभजे शुंभादि-दैत्यार्दिनीम् ॥ इति महासरस्वतीध्यानम् ॥ एवं ध्यात्वा

---

स्वाहेतिविषयाः सर्वे देवतायां समर्पिताः ॥ शिखायै तत्स्वरूपत्वं वषट्वापि तदुच्यते । देवतायाव्यापकत्वं कवचायाभिधीयते ॥ हुमितिव्यापकं तेजोदेवतायाः प्रकाश्यते । नेत्रशब्देन देवस्य नित्य ज्ञानं प्रकाश्यते ॥ वौषडितितदेवोक्तमस्त्रशब्देन वारणम् । अनि ष्टस्य फट्शब्देन दाहकं तेजउच्यते ॥ ज्ञात्वैवमङ्गमंत्रार्थमङ्गन्यासं करोति यः । करगास्तस्यशब्दार्थाः पूज्यते त्रिदशैरपि ॥ अत्र विशेषो [ मेरुतंत्रे ] तत्पूर्वमेकादशन्यासे प्रकाशितम् । अवश्य-मेवन्यासाः कर्तव्याः इति [ मेरुतंत्रे ] आगमोक्तेन मार्गेण न्या-सान्नित्यं करोति यः । देवताभावमाप्नोति मंत्रसिद्धिः प्रजायते ॥ योन्यासकवचच्छन्नोमंत्रं जपति तं प्रिये । दृष्ट्वाविघ्नाः पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ अकृत्वान्यासजालं योमूढात्मा कुरुते जपम् । विघ्नैः सबाध्यते नूनं व्याघ्रैर्मृगशिशुर्यथा ॥ न्यासानां प्रचुरत्वेन फलानामपि भूरिता । उक्तन्यासमानादित्यासमपि[illegible]

ततः स्वशरीरं योगपीठं विभाव्य पीठन्यासं कुर्यात ॥

## ॥ पीठन्यासः ॥

( १ ) ॐ आधारशक्तयेनमः । ( २ ) ॐ मूलप्रकृतयेनमः । ( ३ )ॐ कूर्मायनमः । ( ४ ) ॐ अनन्तायनमः । ( ५ ] ॐ वराहायनमः । [ ६ ] ॐ पृथिव्यैनमः । ( ७ ) ॐ क्षीरसमुद्रायनमः । ( ८ ) ॐ रत्नद्वीपायनमः । ( ९ ) ॐ मणिमण्डपायनमः । ( १० ) ओं कल्पवृक्षायनमः । ( ११ ) ओं मणिवेदिकायैनमः । ( १२ ) ॐ रत्नसिंहासनायनमः । ( एतत्सर्वंहृदि ) ( १ ) ओं धर्म्मायनमः दक्षिणस्कन्धे । । ( २ ) ओं ज्ञानायनमोवामस्कन्धे । ( ३ ) ओं वैराग्यायनमोवामोरौ । ( ४ ] ओं ऐश्वर्य्यायनमोदक्षिणोरौ । [ ५ ) ओं अधर्मायनमोमुखे । [ ६ ] ओं अज्ञानायनमोवामपार्श्वे । [ ७ ] ओं अवैराग्यायनमोनाभौ । [ ८ ] ओं अनैश्वर्य्यायनमोदक्षिणपार्श्वे । [ ९ ] ओं अनन्तायनमोहृदि । [ १० ] ओं पद्मायनमः । [ ११ ] ओं आनन्दकन्दायनमः । [ १२ ] ओं संविन्नालायनमः । ओं [ १३ ] सर्वतत्वात्मकपद्मायनमः ।

---

कामतश्चरेत् ॥ करन्यासविधिस्तु मातृकान्यासे उक्तोद्रष्टव्यः । तथाप्यत्र नवार्णमंत्रस्य प्राधान्यात्तन्मंत्रविभागात् कराङ्गन्यासावुच्येते यथा ( डामरे ) एकेनैकेन वर्णेन चतुर्भिर्युगलेन च । समस्तेन च मंत्रेण कुर्य्यादङ्गानि षट्सुधीः ॥ अत्राङ्गानीत्युपलक्षणम् तेनकराङ्गयोरिति बोध्यम् । तथाच ( यामले ) न्यसेदङ्गुष्ठमुख्येषु जातिभिर्नमसाऽथवा । हृदादिषु षडङ्गेषु जातिषट्केन विन्यसेत । नमः स्वाहा वषट् हुँवौषट् फडेताश्चजातयः । अन्यत्रापि । जातिषट्कमितिप्रोक्तं हृदाद्यस्त्रान्तसंयुतम् । तथाच ( शारदायाम् ) हृदयादिषु विन्यसेदङ्गमंत्राँस्ततः सुधीः । हृदयायनमः पूर्वं शिरसे वह्निवल्लभाम् ॥ शिखायै वषडित्युक्त कवचाय हुमीरितम् नेत्रत्रयाय वौषट्स्यादस्त्राय फडिति

( १४ ) ओं प्रकृतिमयपत्रेभ्योनमः । ( १५ ) ओं विकारमयकेशरेभ्योनमः । ( १६ ) ओं पञ्चाशद्वर्णबीजाढ्यकर्णिकायैनमः । ( १७ ) ओं अंसूर्यमण्डलायद्वादशकलात्मनेनमः । ( १८ ) ओं उंसोममण्डलायषोडशकलात्मनेनमः । ( १९ ) ओं मं वह्निमण्डलायदशकलात्मनेनमः । ( २० ) ओं सं सत्वायनमः । ( २१ ) ओं रं रजसेनमः । ( २२ ) ओं तं तमसेनमः । ( २३ ] ओं आं आत्मनेनमः । [ २४ ] ओं अं अन्तरात्मनेनमः । [ २५ ] ओं पं परमात्मनेनमः । [ २६ ] ओं ह्रीँ ज्ञानात्मनेनमः ।

इत्यन्तं विन्यस्य ततः हृत्पद्मस्य पूर्वादिकेशरेषु स्वकल्पोक्तपीठशक्तीर्विन्यस्य स्वेष्टदेवतायोगपीठाय नमः इति देवतायोगपीठं न्यसेत् ॥ यथा पूर्वे । आग्नेय्यां । दक्षिणे । निर्ऋतौ । पश्चिमकेशरे । वायव्ये । उत्तरे । ईशान्याम् । मध्ये । जया च विजया चैवजयन्ती चापराजिता । नित्या विलासिनी दोग्ध्री, अघोरासर्वमङ्गला ( इति पीठशक्तयः ) महाकाली महालक्ष्मी महासरस्वती स्वरूपा शक्तित्रयात्मिका श्री दुर्गादेवता योगपीठाय नमः । इति योगपीठं स्वहृदि चिन्तयेत् ।

---

क्रमात् । षडङ्गमंत्रानित्युक्तान् षडङ्गेषु नियोजयेत् इति ॥

उक्तं च ( यामले ) ततस्तुयोगपीठाख्यं स्वदेहे न्यासमाचरेत् । आधारशक्तिं प्रकृतिं तथा कूर्ममनन्तकम् ॥ ततश्चमूलप्रकृतिं रुद्रं कालानलाह्वयम् । वाराहं पृथिवीं क्षीरसिन्धुं द्वीपं च रत्नजम् ॥ मणिजं मण्डपं कल्पपादपं मणिवेदिकाम् । रत्नपीठं तथैतानि मंत्री हृद्येव विन्यसेत् ॥ ( शारदायाम् ) अंशोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः । धर्मं ज्ञानं च वैराग्यं ऐश्वर्यं विन्यसेत् क्रमात् ॥ धर्मादयः स्मृताः पादाः पीठगात्राणि चापरे । मुखपार्श्वनाभिपार्श्वेषु अधर्मादीन् प्रकल्पयेत् ॥ अनन्तं हृदये पद्मं यस्मिन् सूर्येन्दुपावकम् । एषु स्वस्वकलान्यस्येन्नामाद्यक्षरपूर्विकः ॥ अकाराद्यं न्यसेत्सूर्य्यं उकाराद्यं निशाकरम् । मका-

एवं योगपीठं विभाव्य स्वदेहात्मके पीठे योगपीठाधीश्वरीं स्वेष्टदेवतां सगुणरूपां निर्गुणरूपां वा स्वाभिलषितां कियत्क्षणं ध्यात्वा ध्यानदार्ढ्यं विधाय देवतामुद्राःप्रदर्शयेत् अत्र शतचण्डीविधाने श्रीदुर्गाएवेष्टदेवीतन्मुद्राश्च पाशः अंकुशःवरः अभयम् खड्गः चर्म धनुः शरः मुशलं इति दशमुद्राः ताः प्रदर्शयेत् । मुद्राप्रदर्शनेन देवता भोगामोददायिनी पापौघनाशिनी भवतीति चिन्तयेत् ततोमानसपूजामारभेत तत्रायं क्रमः प्रथमं उक्तपीठन्यासक्रमेण स्वदेहे आधार- शक्त्यादियोगपीठान्तं मनसैव मानसोपचारैः सम्पूज्य योगपीठे यथोक्तां देवतां ध्यात्वा तया सहैक्यं विभाव्य गन्धपुष्पधूपदीपनैवेद्यादीन् मानसोपचारान् समर्प्य मानस होमं कुर्य्यात् ॥ इति क्रमः ॥ यथा देवतां ध्यात्वा प्रथमं

---

राद्यं न्यसेद्वह्निं कलामण्डलसंय्युतम् ॥ कलानामानि ( महानि- र्वाणतंत्रे ) तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः । सुधूम्राभोगदा विश्वा बोधिनी धारिणी क्षमाः ॥ ॐ सूर्य मण्ड- लायेति द्वादशान्ते कलात्मने । नमोन्तेनार्घपात्रे तु पूजयेत् सूय मण्डलम् ॥ इति सूर्यस्य । अमृता मानदा पूषा तुष्टिः पुष्टिः रति- र्धृतिः । शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीप्रीतिरङ्गदा । पूर्णा पूर्णामृता कामदायिन्यः शशिनः कलाः ओं सोममण्डलायेति षोडशान्ते कलात्मने नमोन्तेन यजेन्मन्त्री पूर्ववत्सोममण्डलम् ।

( १ ) मेरुतंत्रे तु कालाग्निरुद्रानन्तरम् मूलप्रकृतिः ।
( २ ) वैष्णवे तु क्षीरसिन्धुस्थले श्वेतद्वीपम् ।
( ३ ) कचिन्मणिमण्डपानन्तरं नन्दनोद्यानमिति इत्यादिग्रन्थकाराणामत्रभिन्नोनिर्देशः ।

ईडया वायुमाकर्ष्य गुदं किंचिदाकुंच्य जिह्वां तालुगतां विधाय मूलाधारात्कुंडलीमुत्थाप्य सहस्रदलकमलकर्णिकान्तर्गतपरमशिवेन सह तां संयोज्य प्रोक्तपीठे देवतामर्चयेत् स्वशिरसि पुष्पं धृत्वा हृत्पद्ममध्यस्थदेवतायै आसनं दद्यात्। तस्मिन्नासने सुस्थिताया देवतायाः स्वशिरस्संस्थितसहस्रदलकमलकार्णिकास्थितचन्द्रबिम्बतोनिर्गलितामृतेन चरणयोः पाद्यमुकल्पयेत् । ततः स्वकीयं मन एव अर्घ्यं नियोजयेत् । पुनस्तेनैवामृतेनाचमनं कारयेत् । ततः स्नानमपि तेनैवामृतेन कल्पयेत् । ततः हं बीजं आकाशतत्वं वस्त्रं परिधापयेत् । पृथिव्यात्मकं गन्धतत्वं गन्धार्थमुपकल्पयेत् ।

---

(इति शशिनः षोडश) धूम्रार्चिर्ज्वलिनी सूक्ष्माज्वालिनी विस्फुलिङ्गिनी सुश्रीः सुरूपा कपिला हव्यकव्यवहा तथा सचतुर्थीनमोन्तेन पूज्या वन्हेः कलादश । ( इति वन्हेर्दश० ) ततः शारदोक्तविधिना सत्वादींस्त्रीन् गुणान्न्यसेत्तथैवात्र गुरूत्तमः । सत्वंरजस्तम इति यस्यभेदाः समीरिताः आत्मानमन्तरात्मानं परमात्मानमेव च आदिवीजं त्रयं न्यस्य शक्तिवीजपुरस्सरम् ज्ञानात्मानं प्रविन्यस्य न्यसेत्पीठमनुं ततः एवं देहमये पीठे चिन्तयेदिष्टदेवताम् देवताध्यानस्य द्वैविध्यमुक्तम् ( मेरुतन्त्रे ) ध्यानं कुर्यात्तत्कल्पोक्तेनैववर्त्मना तदपि द्विविधं प्रोक्तं सगुणं निर्गुणं तथा आत्मनोहृदयाम्भोजे कर्णिकाकेशरोज्ज्वले प्रफुल्ले सोमसूर्याग्निमण्डलेन विराजिते स्वीयेष्टदेवतां तत्र विद्यादागमवोधिताम् एवं यद्वेदनं तद्धि सगुणं ध्यानमुच्यते यज्जीवब्रह्मणोरैक्यं सोहं स्यामितिवेदनम् तदेव निर्गुणं ध्यानमिति ब्रह्मविदोविदुः शारदायां न्यासानन्तरं ध्यानात्प्राक् एव मुद्राप्रदर्शनमुक्तम् ।

वा लं पृथिव्यात्मकं गन्धं समर्पयामीति वदेत् । चित्तात्मकं पुष्पं परिकल्प्य समर्प्पयेत् । प्राणात्मकं यं वीजं धूपं

मेरुतंत्रे । कराङ्गन्यासमुख्यांस्तु न्यासानन्यान्समाचरेत् । तत्तत्कल्पोदिताम् पश्चात्तत्तन्मुद्राः प्रदर्शयेत् इति ॥ ( अन्यत्र तु ) एवं ध्यात्वा महेशानि ततोमुद्राः प्रदर्शयेत् । इति ध्यानानन्तरं (महार्णवरहस्ये तु) न्यासध्यानान्तर्यागमुक्त्वा ततश्च तन्मयोभूत्वा मुद्रा एताः प्रदर्शयेत् इत्युक्तम् ॥ तत्र कालविकल्पोबोध्यः । मुद्रावन्धने तत्प्रदर्शनत्यागयोश्च मन्त्रभेदाः ( मेरुतंत्रे ) उक्ताः श्रोंह्रीमितिवीजाभ्यां मुद्रायावन्धनं भवेत् । दर्शयेन्मूलमंत्रेण ह्स्ूं वीजेन संत्यजेत् ॥ अथ मुद्राः तदर्थः उक्तः ( कुलार्णवे ) मुदं कुर्वन्ति देवानां मनांसि द्रावयन्ति च । तस्मान्मुद्रा इति ख्याताः दर्शितव्याः कुलेश्वरि । ( मेरुतंत्रेऽपि ) मुदं स्वरूपलाभाभ्यां देहद्वारेण चात्मनः । या अर्पयन्त्ययत्नेन मुद्रास्ताः शक्तयोमताः । मोदयन्ति ग्रहादिभ्यः पापौघं द्रावयन्ति च । मोदनं द्रावणं यस्मादतोमुद्राः प्रकीर्तिताः । (यामले) मोदनात्सर्वदेवानां द्रावणात्पापसन्ततेः । तस्मान्मुद्रेयमाख्याता सर्वकामार्थसाधिनी । अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः । याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः । अर्चयेज्जपकाले च ध्याने काम्ये च कर्मणि । ( काम्ये इति कथनात् अन्यत्रैच्छिकम् ) स्नाने चावाहने शङ्खे प्रतिष्ठायां च रक्षणे । नैवेद्ये च तथान्यत्र तत्तत्कल्पप्रकाशिते । स्थाने मुद्रादर्शितव्याः स्वस्वलक्षणलक्षिताः । आवाहनादिका मुद्रा नवसाधारणीमताः । तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् । ( केवलदर्शनेमुद्राः ) पाशाङ्कुशवराभीतिखड्गचर्मधनुः शराः । मौशलीमुद्रिकादौर्गीमुद्राः शक्तेः प्रियङ्कराः । आसां लक्षणमुक्तं ( ज्ञानार्णवे ) वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम् । संयोज्याङ्गुष्ठकाग्रे तु तर्जन्यग्रे स्वके क्षिपेत् । एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्तिता । ऋज्वीं च मध्यमां कृत्वा तर्जनीमध्यपर्वणि । संकोच्याकुञ्चयेत् किञ्चित् मुद्रैषाङ्कुशसंज्ञिका । अधः स्थितोदक्षहस्तः प्रसृतावरमुद्रिका । ऊर्ध्वीकृतोवामहस्तः प्रसृताभयमुद्रिका । वामस्य मध्यमाग्रं तु तर्जन्यग्रेण योजयेत् अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् । दर्शयेद्वामस्कन्धे धनुर्मुद्रेयमीरिता ॥ ( इति यामल ) तत्रैव दक्षमुष्टिस्थतर्जन्यादीर्घया वाणमुद्रिका ( ज्ञानार्णवे ) कनिष्ठिकानामिके वध्वा स्वाङ्गुष्ठेनैव [illegible]हस्ततः । श्लिष्टाङ्गुली तु प्रसृते संसृष्टे खड्ग-

परिकल्प्य धूपमाघ्रापयामीति धूपं दर्शयेत । ततस्तेजस्तत्वं रँ दीपं परिकल्प्य दीपं दर्शयामीति भावयेत् । ततः वँ सुधासिन्धुं नैवेद्यं परिकल्पयेत् । पुनः पूर्वोक्तममृतं पानीयमिति भोजनमध्ये परिकल्पयेत । भोजनान्ते आचमनीयमपि तेनैवामृतजलेन कारयेत् ततः सँ सोमात्मकं वीजं ताम्बूलमुपकल्पयेत् । तत अनाहतध्वनि घण्टानादं परिकल्प्य श्रावयेत् । वायुतत्वं चामरं देवतामस्तकोपरि भ्रामयेत् । इन्द्रियकर्म्माणि मनसश्चांचल्यं च देवताग्रे नृत्यं

## ❀ अन्तर्यागविधिः ( वृहदुत्तरतन्त्रे ) ❀

हृत्पद्मकर्णिकामध्ये योगपीठापरिस्थिताम् । ध्यात्वा तां गन्धपुष्पाद्यैर्मानसैरुपचारकैः । सम्पूज्य विधिवत्पश्चान्मानसं होममाचरेत् । ( मेरुतंत्रे विशेषः ) वामनाडीं समाकृष्य किंचिदाकुञ्चयेद् गुदम् । रेचयेत्सममार्गेण जिह्वां तालुगतां चरेत् । शक्तिं शिवपदे योज्य किंचिदाकुंचयेदधः । कृत्वैवं तु यजेत्पीठं न्यासमार्गेण मंत्रविद् । तस्मिन्पीठे स्थितामिष्टदेवतां मूर्तिविग्रहाम् । ध्यात्वा यजेच्चन्दनाद्यैर्म्मानसैर्भोजनान्तकैः । भोजनान्तरेत्वन्तर्वैश्वदेवं समाचरेत् । तदन्ते तन्मयोभूत्वा जपेदष्टोत्तरं शतम् । मूलं तत्सर्वसम्पत्यै देवतायै

मुद्रिका । वामहस्तं तथा तिर्य्यक् कृत्वा चैव प्रसार्य च । आकुंचिताङ्गुलिं कुर्याच्चर्ममुद्रे यमीरिता । मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् । कुर्यान्मुशलमुद्रेयं सर्वविघ्नविनाशिनी । ( दुर्गामुद्रा मेरुतंत्रे ) दुर्गामुद्रा तु करयोर्मुष्टिं कृत्वा नियोजयेत् । वामस्योपरि दत्तं चशिरसि स्थापयेदिति ॥ इति शक्तेर्दशमुद्राः) यामले चक्रं मेरौ चर्म उक्तं तदर्थं चक्रमुद्रा मेरौ चक्रमुद्रा करतले विपरीते विधाय च अङ्गुष्ठौ वेशयेच्चैव कनिष्ठिकानामिकान्तरे । इति । ( सनत्कुमारसंहितायाम् ) अकृत्वा मानसं यागं न कुर्य्याद्बहिरर्चनम् ॥

परिकल्पयेत् । एवं ( राजोपचारविधिना छत्रचामरदर्पण-मुकुटादिसर्वं श्रद्धया परिकल्पयेत् ) सर्वं यथोपदेशं कृत्वा आत्मनोभावसिद्धये नानाविधानि पुष्पाणि च वक्ष्यमाणपंचदशजातीनि पुष्पांजलौ दापयेत् । तत्र अमायं प्रथमं पुष्पं अनहंकारं द्वितीयम् । अरागः तृतीयम् । अमदं चतुर्थं पुष्पं अमोहकम् पंचमम् । अदंभं षष्ठम् । अद्वेषा-

---

निवेदयेत् । ( मातृकार्णवे ) मालापञ्चाशिका प्रोक्ता सूत्रं शक्ति शिवात्मकम् । ग्रन्थिः कुण्डलिनी प्रोक्ता कलान्ते मेरुसंस्थितिः । (कुमारीकल्पे तु ) होमात्प्राक्जपः ततोवैमानसं जापं कुर्य्याद्धो-मादिमेव च । नमस्कृत्य तथास्तुत्वा वह्नियागमथाचरेत् । ( चन्द्रिकायाम् ) इत्यन्तर्यजनं कृत्वा साक्षाद् ब्रह्मसमो भवेत् । न तस्य पापपुण्यानि जीवन्मुक्तोभवेद्भुवि । इति ।

## ❀ अथ मानसपूजाप्रकारः ( महानिर्वाण तन्त्रे ) ❀

एवं ध्यात्वा, तु शिरसि पुष्पं दत्वा तु साधकः पूजयेत्परया भक्त्या मानसैरुपचारकैः हृत्पद्ममासनं दद्यात्सहस्रारच्युतामृतैः पाद्यं चरणयोर्दद्यान्मनस्त्वर्घं निवेदयेत् । तेनामृतेनाचमनं स्नानी-यमपि कल्पयेत् आकाशतत्वं वसनं गन्धन्तु गन्धतत्वकम् चित्तं प्रकल्पयेत्पुष्पं धूपं प्राणान्प्रकल्पयेत् तेजस्तत्वन्तु दीपार्थे नैवेद्यञ्च सुधाम्बुधिम् अनाहतध्वनिं घण्टां वायुतत्वं च चामरम् नृत्य-मिन्द्रियकर्म्माणि चांचल्यं मनसस्तथा पुष्पं नानाविधं दद्यादा-त्मनोभावसिद्धये अमायमनहंकारमरागममदन्तथा अमोहक-मदंभं च अद्वेषाक्षोभके तथा अमात्सर्य्यमलोभं च दशपुष्पं प्रकी-र्तितम् अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः दयाक्षमाज्ञान-पुष्पं पञ्चपुष्पं ततः परम् इति पञ्चदशैः पुष्पैः भावरूपैः प्रपूजयेत् ।

वाममार्गे नैवेद्यं । [ सुधाम्बुधिं मांसशैलं भर्जितं मीनपर्वतम् । मुद्गराशिं सुभक्तं च घृताक्तं पायसं तथा । कुलामृतं च तत्पुष्पं पीठक्षालनवारि च । ]

क्षोभके सप्तमाष्टमे द्वेपुष्पे । अमात्सर्य्यम् नवमम् । अलोभम् दशमम् । एवं दशपुष्पाणि मनसा परिकल्प्य प्रत्येकं सत्यश्रद्धया समर्प्पयेत् । तदनन्तरं मंत्रपुष्पांजलिं क्षिपेत्। पुष्पाञ्जल्यर्थे पुष्पाणि अहिंसा प्रथमम् । इन्द्रियानिग्रहम् द्वितीयम् । दया तृतीयम् । क्षमा चतुर्थम् । ज्ञानं पंचमं पुष्पम् ॥ एतानि परमोत्कृष्टानि पंच पुष्पाणि मनसैव देवमस्तके क्षिपेत् । एवं पंचदशैः पुष्पैर्भावरूपैः प्रपूजयेत् । इति दक्षिणमार्गक्रमः ।

वाममार्गपूजने तु नैवेद्यम्, सुधाम्बुधिम् १ मांसशैलम् २ मीन पर्वतम् ३ मुद्गराशिः ४ भक्तम् ५ घृताक्तं पायसम् ६ कुलामृतम् ७ कुलपुष्पम् ८ पीठक्षालनजलञ्चेति ९ इति नवविधानि वसूनि देव्यै निवेदयेत् ॥

ततोवालिदानम् । अत्र कामक्रोधौ द्वौ पशू इमावेव मनसा वालिमर्प्पयेत् । इति पुष्पांजलिस्त्वत्रापि सैवेति । ततोभयमार्गे जपः । मानसपूजायां जपार्थं वरमाला मातृकावर्णानाम् । तत्रानुलोमेनाकारादिलकारान्तम् । सवि-

---

वलिदान प्रकारस्तत्रैव कामक्रोधौ विघ्नकृतौ वलिं दत्वा जपं चरेत् । जपविधानम् । मालावर्णमयीप्रोक्ता कुण्डली सूत्रयंत्रिता । सविन्दुं मन्त्रमुच्चार्य्यमूलमंत्रं समुच्चरेत् ॥ अकारादिलकारान्तमनुलोम इति स्मृतः । पुनर्लकारमारभ्य श्रीकंठान्तं मनुं जपेत् । विलोमइति विख्यातः क्षकारोमेरुरुच्यते ॥ अष्टवर्गान्तिमैर्वर्णैः सहमूलमथाष्टकम् । एवमष्टोत्तरशतं जप्त्वानेन समर्प्पयेत् ॥ (समर्प्पणविधिः) सर्वान्तरात्मनिलये स्वान्तज्ज्योतिः स्वरूपिणि गृहाणान्तर्जपं मातर्दुर्गे देविनमोस्तुते ॥ समर्प्यजपमेतेन साष्टाङ्गमणमेद्विधा । इत्यन्तर्यजनं कृत्वा ... समारभेत् इति ।

न्दुं पुनर्विलोमेन लकाराद्यकारान्तं सविन्दुम् । विन्यस्य लकारयोर्म्मध्ये क्षं निवेश्य शतसंख्यकाः मणयः मालार्थं संकलिता भवन्ति तत्र क्षकारोमेरुः एते मणयः कुण्डालिनी सूत्रे ग्रथित्वा वर्णमयीं मालां विधाय तत्र मनसैव मूलमंत्रं जपित्वा देवतायै निवेदयेत् । यद्यष्टोत्तरशतमणयः अपेक्षितास्तदा विलोममातृकान्ते वर्गाणामन्तिमवर्णान् अं ङं ञं णं नं मं बं लं एतान् संकलय्य ततोमेरुं क्षं प्रकल्प्य पूर्ववत् ग्रथ्नीयात्तदाष्टोत्तरशतमणिसम्पन्नवर्णमाला निष्पन्ना भवति । अस्यामपि वा जपं विधाय देवीमर्प्पयेत् । जपप्रकारश्च अं ऐं ह्रीं क्लीं चामुण्डायै विच्चे आं ऐं ह्रीं क्लीं चामुण्डायै विच्चे एवं इं ऐं ह्रीं क्लीमित्यादि । समर्प्पणविधिश्च हे सर्वान्तरात्मानिलये ? अन्तज्ज्योतिस्वरूपिणि मातः मूर्तित्र्याधिष्ठात्रि देविदुर्गे इममन्तर्जपं गृहाण तुभ्यं मनसा समर्पयामि ॥ नमः ॥ एवं जपं समर्प्य मानसहोमं कुर्यात् ।

अथान्तर्होमः ( मेरुतंत्रे ) मूलाधारे चतुष्कोणमग्निकुण्डं विचिन्तयेत् । तत्राग्निं कुण्डलीरूपं ध्यायेन्मूलं समुच्चरेत् ॥ धर्म्माधर्म्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा । सुषुम्णावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ पुण्यं जुहोमिस्वाहेति श्लोकान्ते प्रोच्चरेत्पुनः । पुनर्मूलं पुनः श्लोकं पुनः पापं जुहोमि च ॥ कृत्याकृत्ये च संकल्पो विकल्पोधर्म एव च । हुत्वा पृथक्चस्वाहान्तं पुनः श्लोकमिमं पठेत् ॥ प्रकाशामर्षहस्ताभ्यामवलम्ब्योन्मनीस्रुवम् । धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥ स्वाहान्तेनाहुतिं दत्वा प्राणायामनिरोधतः । निरस्तनिखिलोपाधिमात्मानं । चिन्मयं स्मरेत् ॥

# अथान्तर्होमक्रमः

अहङ्कारासत्यपैशून्यकामक्रोधलोभमोहमदमात्सर्य्यादि-रूपं हविः मनोरूपम् स्रुवं सुषुम्णा रूपां स्रुचं परिकल्प्य मूलाधारे आत्मान्तरात्मपरमात्मज्ञानरूपं चतुष्कोणमग्नि-कुण्डं विचिन्त्य तत्रकुण्डलिनीरूपं ज्वलद्वह्निं ध्यात्वा मनसैव मूलमंत्रमुच्चार्य तदन्ते श्लोकम्पठित्वा पुण्यादि-द्रव्येण सप्ताहुतयोदेयाः तत्प्रकारोयथा ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे धर्माधर्महाविर्दीप्ते स्वात्माग्नौ मनसास्रुचा सुषुम्णा वर्त्मनानित्यमक्षवृत्तीर्जुहोम्यहम् पुण्यं जुहोमि स्वाहा इति प्रथमाहुतिः ॥ ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे धर्मा-धर्महाविर्दीप्ते स्वात्माग्नौ मनसास्रुचा । सुषुम्णा वर्त्मना

---

श्यामारहस्यादौतु । मूलान्ते नाभिचैतन्यरूपादौ हविषा मनसा स्रुचा । ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ स्वाहा ॥ इति-प्रथमा० पुनर्मूलान्ते धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा । सुषुम्णावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् । स्वाहा । इति द्वितीया पुनर्मूलम् पुनः प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनी स्रुचा । धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् स्वाहा । इतितृती० पुन-र्मूलान्ते अन्तर्निरन्तरनिरिन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्नौ । कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ विश्वं जुहोमि वसु-धादिशिवावसानम् स्वाहा । इति चतुर्थी । इति श्लोकचतुष्टये-नाहुतिचतुष्टयमुक्तम् ॥ इति ॥

नित्यमक्षवृत्तीर्जुहोम्यहम् । पापं जुहोमि स्वाहा इति द्वितीयाहुतिः । ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे धर्माधर्म-हविर्दीप्ते स्वात्माग्नौ मनसास्रुचा । सुषुम्णा वर्त्मना नित्य-मक्षवृत्तीर्जुहोम्यहम् कृत्यं जुहोमि स्वाहा ॥ इति तृतीया-हुतिः ।

ॐ ऐं ह्रीं क्लीं० धर्माधर्म० अकृत्यंजुहोमि स्वाहा इतिचतुर्थी ।

| | | | | |
|---|---|---|---|---|
| एवं मूलं | ,, | संकल्पं | ,, | इति पंचमी । |
| ,, | ,, | विकल्पं | ,, | इति षष्ठी । |
| ,, | ,, | धर्म्मम् | ,, | इति सप्तमी । |

एवमाहुतीर्हुत्वा पूर्णाहुतिं कुर्य्यात् ।

पूर्णाहुतिमंत्रः । ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे । प्रकाशामर्षहस्ताभ्यामवलम्ब्योन्मनीस्रुवम् । धर्माधर्मकला-स्नेहं पूर्णवन्हौ जुहोम्यहं स्वाहा । इति पूर्णाहुतिं विधाय समस्तोपाधिविनिर्मुक्तं सच्चिदानन्दात्मकमात्मानं स्मृत्वा मूलमंत्रं अष्टोत्तरशतं प्रजप्य देवतायै निवेदयेत् । परन्त्वत्र होमान्ते जप उक्तः (महानिर्वाणादितन्त्रे) मानसपूजनान-न्तरं मानसजपस्यैव विधिदर्शनात्तथा सर्वत्र जपान्ते हवन-स्य प्रसङ्गाच्चात्रापि यदि पूर्वं जपस्तदन्ते होमोभवेत्तदा क्रमः साधीयान् इति अन्तर्यागाविधिः ॥

# ॥ अथ पात्रासादनं ॥

तत्र साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलांभूमिं सम्माप्य तस्यास्त्रिभागः कार्य्यः एवं मध्ये भागत्रये वक्ष्यमाणरीत्या पात्राण्यासादयेत् । इति । अथार्घ्यपात्रन्तु द्विविधं सामान्यं विशेषं च तत्र प्रथमं साधारणार्घपात्रस्य मण्डपदेवद्रव्यादि-सेचनेऽत्यावश्यकत्वात् तस्यैव स्थापनप्रकारोनिरूप्यते । प्रथमं त्रिकोणवृत्तं भूविम्बं मन्डलमुत्पाद्य तत्र आधारशक्तिं गन्धाक्षतैः सम्पूज्य तत्राधारं निवेशयेत् । ततः अस्त्रमंत्रे-

## ❀ अथवाह्यपूजायाम्पात्रासादनम् ❀

तत्रादौ पात्रस्थाननिर्णयः। (यामले) साध्यसाधकयोमध्ये षट्-त्रिंशदङ्गलं भवेत द्वादशाङ्गुलमूर्ध्वं च तदधोद्वादशाङ्गुलम् द्वाद-शाङ्गुलमध्यस्थं तत्र संस्थापयेद् बुधः ( मेरुतन्त्रे ) अथार्घ्यादिक पात्राणां फलं वक्ष्ये शुभाशुभम् सर्वकामप्रदं स्वर्णं रौप्यमायुः सुत-प्रदम् सौभाग्यं ताम्रपात्रेण धर्मवृद्धिस्तु मृन्मये नारिकेले देवतुष्टिः पुष्टिकृत् काचसम्भवम् लक्ष्मीप्राप्तिर्विल्वपात्रे ब्राह्मण्यं ब्रह्मवृक्षजे मारणोच्चाटने लौहं स्तम्भे पाषाणजं भवेत् मन्त्रस्याराधने काष्ठं वाममार्गे तु तौम्बिकम् रत्नादीनान्तु पात्राणि शुभरेखाङ्कितानि च अर्घनैवेद्यपूजार्थं वलिदाने प्रकल्पयेत् ( महाहारतन्त्रे ) कन्या-कोटि प्रदानानि तथा हेमशतानि च यो ददाति महेशानि राहु ग्रस्ते दिवाकरे तत्फलं कोटिगुणितं नारिकेलार्घपात्रतः ( इदं तु शक्ति विषयम् ) ( मेरौ ) पात्राणामादरः कार्य्यः पात्राण्येवोक्त-

णार्घपात्रं संशोध्य हृन्मंत्रेण शुद्धाम्भसा परिपूरयेत् । ततो र्घपात्रे तीर्थमावाह्य प्रणवेन गन्धादीन् क्षिपेत् एवं योनिमुद्रां च दर्शयेत् इति सामान्यार्घस्थापनप्रकारः ॥ तदेव विशदीकृत्य पद्धतिमार्गेण प्रदर्शयामि यथा । प्रथमं आचार्य्यः आचमनप्राणायामौ विधाय सामान्यार्घस्थापनं कुर्य्यात । तद्यथा अस्त्रजलेन भूमिं सम्प्रोक्ष्य त्रिकोणवृत्त चतुरस्रमण्डलं विलिख्य ओं आधारशक्त्ये नमः । इति मण्डलं सम्पूज्य तदुपरि आधारं संस्थाप्य 'रं' वन्हिमण्डलाय दशकलात्मने नमः इति गन्धाक्षतैराधारं सम्पूज्य

---

मानि तु बलिहोमक्रियाद्यन्तु विनापात्रं न सिद्ध्यति ( पात्रपरिमाणम् ) षट्त्रिंशदङ्गुलं पात्रमुत्तमम्परिकीर्तितम् मध्यमन्तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम् वस्वङ्गुलविहीनं तु न पात्रं कारयेत्क्वचित् नाभिविवररूपाणि पुण्डरीकाकृतानि च शङ्खनीलोत्पलाभानि पात्राणि परिकल्पयेत् श्वेतादीन्यतिशस्तानि विप्रादीनां क्रमेण च शङ्खं ज्ञानप्रदं मुक्तासुक्तिर्विद्याप्रदायिनी ( समयाचारे ) सामान्यार्घं ततः कृत्वा पयसा साधकोत्तमः तज्जलैमण्डलं कृत्वा पात्राणि स्थापयेत्ततः सामान्यार्घस्थापनम् ( गौतमीये ) त्रिकोणवृत्तभूविम्बं मण्डलं रचयेत्सुधीः आधारशक्तिं सम्पूज्य तत्राधारं विनिःक्षिपेत् अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण प्रपूरयेत् निःक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु दर्शयेद्योनिमुद्रांवै सामान्यार्घमिदं स्मृतम् ( मेरुतंत्रे ) प्रागवत्तीर्थं समावाह्य मूलमंत्रेण तत्रतु संयोज्य नेत्रमंत्रेण पुष्पं न्यस्य शिखाणुना प्रदर्श्य गालिनीं मुद्रां मुद्रया धेनुसंज्ञया अमृतीकृत्य विधिवत् सुधाबीजेन साधकः ध्यात्वेष्टदेवतां तत्र सकलीकरणं चरेत् अङ्गन्यासेन चास्त्रेण कलयेच्च दिशोदश नेत्रमंत्रेण संवीक्ष्य मुद्रया

'फट्' इति मन्त्रेणार्घपात्रं प्रक्षाल्याधारोपरि संस्थाप्य अं सूर्य्यमण्डलाय द्वादशकलात्मने नमः इति अर्घपात्रं सम्पूज्य नम इति जलेन परिपूर्य्य सं सोममण्डलाय षोडशकलात्मने नम इति जलं सम्पूज्य तस्मिञ्जले ओं गङ्गे च यमुने चैव गोदावरि सरस्वाति नर्मदेसिन्धुकावेरि जलेऽस्मिन्सान्निधिं कुरु। इत्यङ्कुशमुद्रया सूर्यमण्डलात्तीर्थमावाह्य प्रणवेन गन्धपुष्पं निधाय तेनैव सम्पूज्य तेनैवाष्टधा दशधा वाभिमंत्र्य शक्तिपूजने योनिमुद्रां प्रदर्शयेदिति सामान्यार्घस्थापनाविधिः ॥

## ॥ अथ कलशस्थापनम् ॥

तद्यथा स्ववामे अस्त्राय फट् इति। सामान्यार्घजलेन भूमिं सम्प्रोक्ष्य तत्र विन्दुषट्कोणवृत्तचतुरस्रात्मकं मण्डलं

---

शंखसंज्ञया अवष्टभ्य ततोदीपमुद्रया योनिरूपया गन्धपुष्पादिस्तत्र पूजयेदिष्टदेवताम् षडङ्गानि च सम्पूज्य मन्त्रयेन्मूलमन्त्रतः अष्टकृत्वस्ततश्चार्घ्यं छादयेन्मत्स्यमुद्रया इति ॥

## अथ कलशस्थापनविधिः ( सिद्धान्तसारे )

अस्त्रेण भूमिं सम्प्रोक्ष्य सामान्यार्घोदकेन च स्ववामे विन्दुषट्कोणवृत्तवेदास्रमण्डलम् संलिख्यमूलमन्त्रान्ते देवतानामकीर्तयेत् पूजयेत् कलशाधारमण्डलाय नमोऽणुना आधारं स्थापयेत्तत्र क्षालितं हेति मंत्रतः यजेद्दशकलाभिस्तु व्याप्तं तत्राग्निमण्डलम् प्रभाव्य कलशं तत्र स्थापयेद्देवताधिया सूर्य्यविम्बं यजेत्तत्र कलाद्वादशसंयुतम् शुद्ध न पाथस्य कुंभ मूलमन्त्रेण पूरयेत् ( वाममार्गे )

विलिख्य मूलान्ते श्रीदुर्गादेवीकलशाधाराय नमः इति सम्पूज्य "फट्" इत्याधारं प्रक्षाल्य मूलम्पाठित्वा श्रीदुर्गा-कलशाधारं स्थापयामि नमः इत्याधारं संस्थाप्य 'मं' वह्नि-मण्डलाय दशकलात्मने नम इति सम्पूज्य पूर्ववत् फडिति मन्त्रेण कलशं प्रक्षाल्य वस्त्रमाल्यादिभिरलङ्कृत्य मूलं प्रप-ठन् श्रीदुर्गाकलशं स्थापयामि नमः इति संस्थाप्य ओं सूर्य्यमण्डलाय द्वादशकलात्मनेनमः इति सम्पूज्य मूलमंत्रमु-च्चरन् शुद्धजलेन कलशं पूरयेत् ( वामाचारे तु हेतुद्रव्येण पूरयेत् श्यामारहस्य महानिर्वाणादौ चक्रपूजनावसरे दर्श-नात् ) ततः ओं सोममण्डलाय षोडशकलात्मने नमः इति तज्जलं सम्पूज्य गङ्गे यमुने चैव इत्यादि सर्वं पाठित्वा ऽङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्यास्त्रेण संरक्ष्य कवचे-नावगुण्ठ्य मूलमंत्रेण संवीक्ष्य तेनैवाभ्युक्ष्य पुनर्मूलम्प्रपठन् श्रीदुर्गादेवीकलशामृताय नमः इति गन्धपुष्पादिभिरभ्य-र्च्य मत्स्यमुद्रयाच्छादयेत् । ततः ओं कलशस्यमुखेविष्णुः

( शुद्धेन हेतुना मंत्री मूलमंत्रेण पूरयेत् इति सुधार्णवादौ लि-खितम् तत्र शुद्धेन संस्कृतेन हेतुना मद्येनेति शब्दार्थः ) एवं चन्द्र-बिम्बं यजेत्तत्र कलाषोडशसंयुतम् तारभागैस्त्रिभिर्मंत्री बिम्ब-त्रितयमर्चयेत तीर्थं तत्र समावाह्य हेतिवर्मस्वमूलकैः मन्त्रैः संर-क्ष्यावगुण्ठ्य संवीक्ष्याभ्युक्ष्य मंत्रवित् पूजयेद्गन्धपुष्पाद्यैश्छादये-न्मत्स्यमुद्रया मन्त्रेणानेन देवेशि कलशं चाभिमंत्रयेत् । कलशस्य-मुखेविष्णुः कण्ठेरुद्रः समाश्रिता........इत्युक्त्वा मूलमंत्रेण मन्त्रयेद्घटम् कुम्भमुद्रां प्रदर्श्याथ भावयेद्देवतात्मकम् ॥

कण्ठे रुद्रः समाश्रितः। कुक्षौ तु सागराः सर्वे सप्तद्वीपा-वसुन्धरा इत्यादि पठित्वा मूलमंत्रमष्टधाजापित्वा कुंभमुद्रां प्रदर्श्य कलशं देवतात्मकं भावयेत। इति क० स्था०।

## अथ शङ्खस्थापनविधिः

कलशाद्दक्षिणे स्ववामे अस्त्राय फट् इति सामान्या-र्घजलेन भूमिं सम्प्रोक्ष्य तथा त्रिकोणवृत्तचतुरस्रमण्डलं मत्स्यमुद्रया विलिख्य ॐ जगदाम्बिकाभगवती श्रीदुर्गादे-वताशंखाधारमण्डलाय नम इति गन्धपुष्पाभ्यां मण्डलं सम्पूज्य चतुरस्राग्नेयादिषु चतुर्षुकोणेषु पुरतोदिक्षु च

### अथ शङ्खस्थापनम्

विष्णुपूजायामेव शङ्खस्य प्राधान्यमिति न शक्तिपूजायामपि तस्य प्राधान्यम् । यतः नवपात्रासादनासामर्थ्ये त्रिशक्तिरत्ने उक्तम्। अथवा कलशं शङ्खं शक्तिपात्रं त्रयं भवेदिति। मेरावस्य विधि रुक्तो यथा। वृत्तेन वेष्टितं सम्यक् त्रिकोणं चन्दनाम्भसा तद्बहिश्चतुरस्रं च विदध्यान्मत्स्यमुद्रया सम्पूज्य गन्धैर्देवार्घ्य-मण्डलायनमोऽणुना अङ्गानि चतुरग्न्यादिकोणेषु पुरतस्तथा दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत आधारेण विना भ्रंशेन तृप्यन्ति च मातरः तस्माद्विधिवदाधारं त्रिपदं वा चतुष्प-दम् पद्माभवं त्रिकोणं वा योन्याभं धातुजन्तुतत् मूलान्ते चामु-काधारपात्रं संस्थापयामि च उक्त्वा शङ्खादिकाधारं मण्डले स्थापयेदथ मं रं धर्मप्रदेत्युक्त्वा वदेद्दशकलात्मने ङन्तं वन्हेर्मण्डलं च देवनाम च कीर्तयेत् ततोऽर्घपात्राधाराय नमः प्रोक्त्वा प्रपूजयेत्

षडङ्गमंत्रैः सम्पूजयेत् । यथा ओं ऐं हृदयायनम इत्यग्नौ ओं ह्रीं शिरसे स्वाहा इति ऐशान्याम् ओं क्लीं शिखायै वषट् इति निर्ऋतौ । ओं चामुण्डायै कवचाय हुं इति वायव्ये ओं विच्चेनेत्रत्रयाय वौषट् इति पुरतः मूलेन अ-स्त्राय फट् इति चतुर्दिक्षु फट् इत्याधारं जलेन प्रक्षाल्य मूलं पठित्वा श्रीत्रिगुणात्मिका दुर्गादेवता शंखाधारं स्थापयामि नमः इत्याधारं संस्थाप्य मं रं धर्मप्रददशकला-त्मने वन्हिमण्डलाय श्रीत्रिगुणात्मिकादुर्गादेवताशंखाधा-राय नमः इत्याधारं सम्पूज्य पूर्वादितः प्रादक्षिण्यक्रमेण वन्हेर्दशकलाः पूजयेत् तद्यथा यं धूम्रार्चिषे नमः रं उष्मायै नमः लं ज्वलिन्यै नमः वं ज्वालिन्यै नमः शं विस्फुलिङ्ग्यै नमः षं सुश्रियै नमः सं सुरूपायै नमः हं कपिलायै नमः लं हव्यवाहायै नमः क्षं कव्यवाहायै नमः एवं पृथक्पूजने अशक्तश्चेत् वन्हेर्धूम्रार्चितादिदशकलात्मने नमः इति वा

वन्हेर्दशकला पूज्यास्तत्र प्रोक्ताः प्रदक्षिणम् "अत्रशङ्खार्घयोरभि-धानमुक्तम् शङ्खविशेषार्घस्थापनसाधरण्यादितिवोध्यम्" अस्त्रमंत्रेण च ततः कनकादिविनिर्मितम् अर्घ्यादिपात्रमथवा शङ्खमस्त्राणुना जलैः प्रक्षाल्यामुकदेवार्घपात्रं प्रतिष्ठापयामि एवमुक्त्वा तदाधारे संस्थाप्यैवं वदेत्पुनः अर्थप्रदद्वादशेति कलात्मने वदेत्ततः सूर्य्य-मण्डलमुच्चार्य्य ङेन्तं देवस्य नाम तु अर्घपात्राय च नमोमनुनानेन पूजयेत् तत्पात्रमथ तत्रैव भावयेद्भूमिमण्डलम् षट्कोणं तत्र चाङ्गानि पूजयेत् पूर्ववत् ततः कलादशसूर्य्यस्य प्रोक्ताः पात्रे प्रदक्षिणम् ततः सुधामयैस्तोयैर्मूलान्ते मातृकास्पठन् विलोमा-म्पूरयेत् तत्रिम पूजकामनुनामुना सं कामप्रदेत्युक्त्वा षोडशे-

पूजयेत ततः शंखं फट् इति मंत्रेण प्रक्षाल्य मूलं पठित्वा श्रीत्रिगुणात्मिकादुर्गादेवताशंखं स्थापयामि नमः इत्याधारोपरि शंखं संस्थाप्य अं अर्थप्रदद्वादशकलात्मने सूर्य्यमण्डलाय श्रीदुर्गादेवताशंखपात्राय नमः इति शंखं सम्पूज्य शंखे षट्कोणं भूविम्बं च सम्भाव्य षट्कोणेषु षडङ्गमंत्रैः सम्पूज्य पूर्वादितः प्रादक्षिण्येन सूर्य्यस्य तापिन्यादि द्वादश कलाः पूजयेत षट्कोणपूजनं यथा ऐं हृदयायनमः । प्रथमे ह्रीं शिरसे स्वाहा द्वितीये कोणे ओं क्लीं शिखायै वषट् तृतीये ओं चामुण्डायै नेत्रत्रयाय वौषट् इति चतुर्थे । विच्चे नेत्रत्रयाय वौषट् पंचमे । ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् इति षष्ठे । पूर्वादितः कलापूजनम् यथा। कं भं तपिन्यैनमः खं वं तापिन्यैनमः गं फं धूम्रायै नमः घं पं मरीच्यैनमः ङं नं ज्वालिन्यैनमः

---

तिकलात्मने नमः पञ्चदशार्णोयं मन्त्रः शङ्खप्रपूरणे ( तन्त्रान्तरे ) "कर्णचन्द्रौ विन्दुयुक्तौ कामप्रदपदं ततः षोडशान्ते कलाशब्दमात्मान्ते हृदयाणुना धन्धपुष्पैः समभ्यर्च्य कलाषोडशकं यजेत् (अत्र कर्णः उकारः चन्द्रोऽर्धचन्द्रोविन्दुरनुस्वारस्तेन उमित्येकमेववोजं विधाय मुक्तावल्यामुद्‌धृतम् सएव प्रकारोन्नृसिंहठक्कुरैरप्यविचार्य्य स्वीयग्रन्थे "ताराभक्तिसुधार्णवे" धृतः वस्तुतः कर्णः उकारः चन्द्रः सकारः तयोर्विन्दुयोगाच्च उंसं इति वीजद्वयमेव सकारः शक्तिनामा च चन्द्रपीयूषशीतलः, इति वर्णकोशात् पुनः । शिवः शक्तिः कामः क्षितिरथरविः शीतकिरणः स्मरो हंसः शक्रस्तदनु च परामारहरयः अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता भजन्त वर्णास्ते तव जननि नामावयवताम् ॥

चं धं रुच्यैनमः छं दं सुषुम्णायैनमः जं थं भोगदायै नमः झं तं विश्वायै नमः ञं णं बोधिन्यै नमः टं ठं धारिण्यै नमः डं ढं क्षमायै नमः इति अशक्तश्चेत्सूर्य्यस्य तपिन्यादिद्वादशकलाभ्योनम इत्येव वदेत् पूजयेत्। ध्यानावाहनादिसर्वं यथोपचारम् ततोमूलं पठित्वा क्षं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं लृं ॠं ऋं ऊं उं ईं इं आं अं इति विलोममातृकावर्णानुच्चार्य्य श्रीत्रिगुणात्मिकाभगवतीदुर्गादेवीशंखममृतेन पूरयामि नमः इति विमलजलेन शंखमापूर्य्य उं सं कामप्रदषोडशकलात्मने चन्द्रमण्डलाय नमः इति गंधपुष्पादिभिः शंखजलं सम्पूज्य उक्तक्रमेण चन्द्रस्यामृतादिषोडशकलाः संपूजयेत तद्यथा अं अमृतायै नमः आं मानदायै नमः इं

---

इत्यादौ चन्द्रवाचक शीतकिरणपदस्य सकारपरत्वदर्शनाच्च। नच चन्द्रपदस्य क्वचिदर्धचन्द्रपरत्वदर्शनादत्रैकमेव बीजमस्त्विति वाच्यम्। बीजद्वयप्रकाशकमेरुतंत्रविरोधात् तथा तत्तोयं गन्धपुष्पाद्यैः पूजयित्वा समर्चयेत कलाषोडशकं चान्द्रं पश्चात्सर्वकलासु च प्राणप्रतिष्ठां कुर्वीत पूजान्ते साधकस्ततः वन्ह्यर्कचन्द्राणां कलाः प्राक्अन्तर्यागविधौ उक्ताः तत्पूजनप्रकारश्च (कुलार्णवे) आग्नेय्याः यादिवर्णोत्थाः दशधर्म्मप्रदाः कलाः कमाद्याः वसुदाः सौरा टठडान्ताः द्वादशेरिताः सौम्याः कामप्रदायिन्यः षोडश स्वरजाः कलाः विन्दुयुक्तान् यादिदशवर्णान् पूर्वं दत्वाग्निकलाः (कादिठान्तान् भातिडान्तान् प्रतिलोमवर्णांश्च विन्दुयु-

पूषायै नमः ईं पुष्ट्यै नमः उं तुष्ट्यै नमः ऊं रत्यै नमः ॠं धृत्यै नमः ॠं शशिन्यै नमः लृं चन्द्रिकायै नमः लॄं कान्त्यै नमः एं ज्योत्स्नायै नमः ऐं श्रियै नमः ओं प्रीत्यै नमः औं अङ्गदायै नमः अं पूर्णायै नमः अः पूर्णामृतायै नमः अशक्तश्चेत् चन्द्रस्यामृतादिषोडशकलाभ्योनमः इत्येकमेव पूजयेत् शक्तश्चेत् पृथक् पृथक् प्रत्येकमावाह्य प्राणप्रतिष्ठां कृत्वा पाद्यादिभिः पूजयेत् ततोगन्धाक्षत यवकुशाग्रतिलसर्षपदूर्वास्तत्रानिःक्षिप्य ओं गङ्गे च यमुने...... कुरु इत्यादिनाङ्कुशमुद्रया सूर्य्यमण्डलात् तीर्थमावाह्य मूलमंत्रेण तीर्थं तस्मिन्जले संयोज्य वौषडिति पुष्पं निःक्षिप्य वषट् इति गालिनीं मुद्राम्प्रदर्श्य वं इति धेनुमुद्रयामृतीकृत्य मूलान्ते त्रिगुणा०...... दुर्गे इहागच्छेहतिष्ठ इति हृदयाद्देवतां तत्रावाह्यावाहनादिमुद्राः प्रदर्श्य षडङ्गमंत्रैः सकलीकृत्य दिक्षु अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य वौषडिति संवीक्ष्य शंखमुद्रयावष्टभ्य योनिमुद्रया प्रदीप्य मूलमंत्र-

---

क्तानादौ कृत्वा सूर्य्यकलाः अकारादि षोडशस्वरान्विन्दुयुक्तानादौ दत्वा चन्द्रकला इत्यर्थः ) ( मेरुतंत्रे ) प्राग्वत्तीर्थं समावाह्य मूलमंत्रेण तत्र तु संयोज्य नेत्रमंत्रेण पुष्पं न्यस्य शिखाणुना प्रदर्श्य गालिनीम्मुद्रां मुद्रया धेनुसंज्ञया अमृतीकृत्य विधिवत् सुधावीजेन साधकः ध्यात्वेष्टदेवतां तत्र सकलीकरणं चरेत् अङ्गन्यासेन चास्त्रेण कलयेच्च दिशोदश नेत्रमंत्रेण संवीक्ष्य मुद्रया शङ्खसंज्ञया अवष्टभ्य ततोदीप्यमुद्रया योनिरूपया गन्धपुष्पादि-

णेष्टदेवतां गन्धपुष्पादिभिस्तत्र सम्पूज्य षडङ्गानि च सम्पूज्य मत्स्यमुद्रयाच्छाद्य मूलमंत्रमष्टधाजपेदिति शंखस्थापनविधिः। ततः शंखजलं किञ्चित्कलशजले निक्षिप्य सामान्यार्घस्य दक्षिणे पार्श्वे पाद्यपात्रार्थं किञ्चित्स्थलं त्यक्त्वा प्रोक्षणीपात्रं स्थापयेत। तद्यथा सामान्यार्घोदकेन त्रिकोणवृत्तात्मकं मण्डलं कृत्वा नमः इति प्रपूज्य साधारं प्रोक्षणीपात्रमस्त्रमन्त्रितजलेन प्रक्षाल्य तदुपरि संस्थाप्य ओं गङ्गे च यमुने चैव इत्यादिना जलेनापूर्य्य नमः इति गन्धपुष्पाभ्यां सम्पूज्य प्रणवेन कुशपुष्पयवादिकं प्रक्षिप्य प्रणवेनैव

---

भिस्तत्र पूजयेदिष्टदेवताम् षडङ्गानि च सम्पूज्य मन्त्रयेन्मूलमंत्रतः अष्टकृत्वस्ततश्चार्घ्यं छादयेन्मत्स्यमुद्रया तच्छङ्खस्थं जलं किञ्चित्कुम्भतोये विनिः क्षिपेत्। इति अथान्येषां पात्राणां क्रमः। (यामले) स्वदक्षे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् किञ्चिदर्घ्याम्बुसंगृह्य प्रोक्षण्यम्भसि योजयेत ततः साधारकं पात्रं पुरतः स्थापयेद्बुधः तत्पार्श्वे पाद्यदानं च तत्पार्श्वेऽर्घप्रदानकम् आचमनीयन्तु तत्पार्श्वे तद्वामे मधुपर्ककम् पुनराचमनीयं च स्नानीयं तत्क्रमान्न्यसेत्। [ अर्घ्याम्बु इति सामान्यर्घोदकमित्यर्थः सामान्यार्घोदकस्य पात्रासादनात् पूर्वमेव स्वदक्षिणे स्थापनीयत्वात् अत एव तद्दक्षिणपार्श्वे पाद्यपात्रस्थापनार्थे किंचितस्थलं परित्यज्य प्रोक्षणीपात्रं स्थापयेदिति। तत्पार्श्वेऽर्घप्रदानकम्। इति पाद्यपात्रवामभागेअर्घपात्रकमित्यर्थः ] (मेरुतन्त्रादौ) अर्घस्योत्तरदिग्भागे पाद्यमाचनीयकम्। मधुपर्कं च संस्थाप्य त्रिकोणेषु यथाक्रमम्॥ इत्यर्घपात्रस्थापनानन्तरं तद्वामभागे पाद्यादिपात्रस्थापनमुक्तम्। उपचारसमर्पणसमयेऽपि पाद्यदानात्पूर्वं अर्घदानं तत्रोक्तम् (नवरत्नेश्वरे) एकपात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः मन्त्राः परा-

त्रिधाभिमंत्र्य धेनुमुद्रां प्रदर्श्य किंचित्सामान्यार्घजलं तज्जले निःक्षिपेत् । इति प्रोक्षणीपात्रस्थापनाविधिः ॥ ततस्तद्वामपार्श्वे सामान्यार्घस्थापनवत् पाद्यपात्रं संस्थाप्य उशीरगोलोचनश्यामाकदूर्वाब्जविष्णुक्रान्तादिद्रव्याणि तज्जलेनिःक्षिप्य तद्वामपार्श्वस्थितसामान्यार्घवामपार्श्वे स्वपुरतोविशेषार्घस्थापनं कुर्य्यात् । तद्विधिस्तु शंखस्थापनवत् गालिन्यादिमुद्रास्थाने योन्यादि मुद्रा प्रदर्शनम् । अयं च साधारणो विधिः । श्यामादि विद्यायां तु विशेषः । यथा सा-

---

ङ्मुखायान्ति आपदश्च पदेपदे इहलोके च दारिद्र्यं मृते च पशुतां व्रजेत् पात्रद्वयमभावाद्वा कुर्य्यान्न्यूनं नचाचरेत् ( गौतमीये तन्त्रे ) अर्घपात्राणि च त्रीणि पाद्यस्यापि त्रयं तथातथैवाचमनीयानि पात्राणि च विभागशः तथाकरणदौर्बल्यादेकमेव प्रशस्यते पाद्यादिद्रव्याण्युक्तानि ( फेत्कारिणीतन्त्रे ) उशीरं रोचनं चैव पाद्यपात्रे च कल्पयेत् कुशाग्रानक्षताश्चैव यवव्रीहितिलानपि आज्यसिद्धार्थपुष्पाणि क्षिपेदर्घ्यस्य पात्रके जातिकर्पूरकङ्कोलबहुमूलतमालकम् । चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके माक्षिकं शर्करासर्पिर्दधिक्षीरयुतं तथा मधुपर्कं कल्पयित्वा प्रदद्याद्विधिपूर्वकम् पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ( दुर्गापक्षे दूर्वास्थले दर्भादेयाः दूर्वया न यजेद्दुर्गामिति० ) तथा जातीलवङ्गकङ्कोलैर्मतमाचनीयकम् । कुशपुष्पयवव्रीहिर्बहुमूलतमालकम् दापयेत्प्रोक्षणीपात्राम्भसि तत्प्रणवेनतु ( महाकालसंहितायाम् ) अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम् हेमादिकुम्भपात्रस्थं स्नानीयं जलमुच्यते । ( चन्द्रिकायाम् ) गन्धाद्भिः कारयेत्स्नानमिति । ( मेरौ ) शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् द्रव्याभावेप्रदातव्याः चालितास्तण्डुलाः शुभाः । (तन्त्रान्तरे)

मान्यार्घजलेन विन्दुयुक्तमीकारं तद्बहिस्त्रिकोणं तद्बहिर्वृत्तं तद्बहिः षट्कोणं तद्बहिश्चतुरस्रं विलिख्य चतुरस्रस्य चतुर्षु कोणेषु स्वाग्रादिप्रादाक्षिण्येन पीठचतुष्टयं पूजयेत् । यथा हं उड्डियानपीठाय नमः गं जालन्धरपीठाय नमः । ऋं पूर्णगिरिपीठाय नमः । अं कामरूपपीठाय नमः । ततस्तेनैव क्रमेण षट्कोणस्य षट्सु कोणेषु षडङ्गमंत्रैः पूजयेत् तद्यथा ऐं हृदयाय नमः प्रथमे कोणे । ह्रीं शिरसे स्वाहा द्वि० को० क्लीं शिखायै वषट् तृ० चामुण्डाय कवचाहूं चतु० विच्चेनेत्रत्रयाय वौषट् पं० ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् इति षष्ठे एवं सम्पूज्य ततस्त्रिकोणस्य त्रिषु कोणेषु मूलमंत्रस्य त्रिभिर्भागैः पूजयेत् । यत्र च विभागासम्भवस्तत्रसमस्तेन मूलमंत्रेणैव त्रिष्वपि कोणेषु पूजयेत् सप्तशतीपुरश्चरेतु नवार्णस्य प्राधान्यात् अत्र त्रिभागसंभवात् तैरेवभागैः पूजां कार्य्यात् । यथा ऐं ह्रीं

स्वदक्षे प्रोक्षणीपात्रं संस्थाप्य साधकोत्तमः । तदुत्तरे पाद्यपात्रमर्घद्वन्द्वं च कल्पयेत ( अर्घद्वन्द्वमिति । सामान्यार्घं विशेषार्घं चेत्यर्थः अर्घपात्रप्रमाणमुक्तं (सिद्धान्तशेखरे) तलप्रमाणमर्घ्यस्य पात्रं वेदाङ्गुलोच्छ्रितम् वस्वङ्गुलं वा कुर्वीत नेत्राङ्गुलसमुच्छ्रितम् वर्द्धयेत्प्रोक्षणीपात्रं तस्मान्न्यूनं न कारयेत् ( महाकालसंहितायाम् ) आदौ मुख्यतमं ज्ञेयं षोडशाङ्गुलसम्मितम् मध्यमं द्वादशमितमधमं स्याद्दशाङ्गुलम् वस्वङ्गुलविहीनन्तु पात्रं नैव च कारयेत् । पात्रनिर्माणप्रकारस्तु पूर्वेप्युक्तः अत्र विशेषः प्रदर्श्यते । सर्वेभ्यः स्वर्णवत्पामर्घपात्रन्ततोऽधिकम् सामान्यार्घस्था-

क्लीं प्र० को० पूजयेत । चामुण्डायै ह्रीं० को० विच्चे इति तृ० कों० पूजयेत् । ततोमूलमंत्रं तद्बीजमात्रं वा उच्चार्य्य त्रिगुणा...... देवी विशेषार्घाधारशक्तये नमः इति त्रिकोण-मध्यस्थमीकारं सम्पूज्यास्त्रमंत्रितजलेनाधारं प्रक्षाल्य मूला-न्ते त्रिगुणा० देवीविशेषार्घाधारं स्थापयामि नमः इत्याधारं संस्थापयेत् । ततः मं रं धर्मप्रददशकलात्मने वन्हिमण्डलाय श्रीत्रिगुणा० भगवतीविशेषार्घाधाराय नमः इत्याधारं सम्पू-ज्य शंखस्थापनोक्तक्रमेण वन्हेर्धूम्रार्चिदशकला अपि पू० ततः पूर्ववत्पात्रं प्रक्षाल्य मूलम्पठित्वा श्रीदुर्गाभ० विशेषार्घपात्रं स्थापयामि नमः इति विशेषार्घपात्रं आधारोपरि संस्थाप्य श्रों सूर्य्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीदुर्गाभ०...... विशेषार्घपात्राय नमः इति पात्रं सम्पूज्य सूर्य्यस्य कभादि-

---

पनम्प्रागुक्तम् विशेषार्घस्थापने श्यामादिविद्यायाम्विशेषोक्तः प्रदर्श्यते । यथा ( त्रिशक्तिरत्ने ) कलशाद्दक्षिणेभागे त्रिकोणं वृत्तसंयुतम् षट्कोणं चतुरस्त्रं च कृत्वा तन्मध्यभागतः विल-सचन्द्रसकलं गन्धर्वं च समालिखेत उजापूकादिकं पीठं तच्चतु-र्दिक्षु पूजयेत् अङ्गमंत्रैश्च षट्कोणे शक्तौ मूलत्रिभेदतः आधार-शक्तिं सम्पूज्य पूर्ववद्यन्त्रिकामपि । महाशङ्खं नारिकेलं सौवर्णं राजतं तथा ताम्रशुक्त्युद्भवं वापि पात्रं तत्र निधापयेत् [ गन्धर्वम् ईकारम् उजापूकादीनि उड्डियान जालन्धर पूर्णगिरि कामरूपा-ख्यानि पीठानीत्यर्थः । शक्तौ इति कौलिकमतमभिप्रेत्य महा-शङ्खमित्युक्तिः ] ( पात्रभेदास्तन्त्रान्तरेऽप्युक्ताः ) पात्रं कांचनका-चरूप्यजनितं मुक्ताकपालोद्भवम् वैश्वामित्रमुदं च कामदमिदं हैमं प्रियं स्फाटिकम् ताम्रं प्रीतिदमिष्टसिद्धिजनकं श्रीमारिकेलोद्भवम्

मातृकापूर्वास्तापिन्यादिद्वादशकला अपि पूर्ववत्पूजयेत्। ततोमूलमंत्रान्ते विलोममातृकावर्णान् पठित्वाकलशस्थजलेन विशेषार्घपात्रं पूरयेत्। [ वाममार्गिणस्त्वत्र कुण्डगोलोद्भवस्वयम्भूकुसुमादिद्रव्येण तस्यस्वकल्पोक्तकारणद्रव्येण च विशेषार्घं पूरयन्तिस्पष्टं सविस्तरविधानमस्य महानिर्वाणादिग्रन्थेद्रष्टव्यं] ततः उं सं कामप्रदषोडशकलात्मनेचन्द्रमण्डलाय त्रिगुं विशेषार्घामृताय नम इति सम्पूज्य शंखस्थापनोक्तक्रमेणचन्द्रस्यामृताद्याः षोडशकलाः प्रत्येकमर्चयेत्। ततः पात्रामृते त्रिकोणवृत्तषट्कोणात्मकं यंत्रं विलिख्य त्रिकोणस्य तिसृषु रेखासु अकारादिषोडशस्वरान् ककारादितकारान्तान् थकारादिसकारान्तान् विलिख्य मध्ये हं लं चं इति

---

पापघ्नं स्फुटमंत्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम् (त्रिशक्तिरत्ने) समर्च्य पूर्ववन्मंत्री पात्रं द्रव्येण पूरयेत् जपन् विलोमतोवर्णान्मूलमंत्रसमुज्जलान्। (भैरवतंत्रे) सकूर्चं सुभगं पात्रं विन्यस्य शुद्धपाथसा कुण्डगोलोद्भवेनापि स्वयम्भूकुसुमेन वा वीरः स्राव्येण चापूर्य मूलविद्यां समुच्चरन् शुद्धपाथसेत्यादि। दक्षिणमार्गी शुद्धजलेन वाममार्गीचेत् कुण्डगोलोद्भवादिना पाथसाऽऽपूर्य्येत्यर्थः (त्रिशक्तिरत्ने) सम्पूज्य पूर्ववत्तत्र वृत्तं षट्कोणकं लिखेत्। अकथादित्रिरेखाभ्यां त्रिकोणं वृत्तमध्यतः मूलखण्डत्रयेणाथ त्रिकोणं परिपूजयेत् षट्कोणे च षडङ्गानि ततस्तीर्थमयं स्मरेत् आनन्दभैरवं ध्यात्वा समभ्यर्च्य विधानतः पूजयेत् पञ्चरत्नानि कुलद्रव्याणि निःक्षिपेत् पञ्चरत्नादीनि पद्धतौ द्रष्टव्यानि। (कुमारीकल्पे) अर्घद्रव्यं चार्घपात्रे निःक्षिपेद्यत्नतः सुधीः कुण्डगोलोद्भवं द्रव्यं स्वयम्भूकुसुमं तथा नाधर्मे विद्यते सुभ्रु महामंत्रस्य साधने (त्रिशक्तिरत्ने) रचयेत्पूर्ववच्छेषमयमर्घविधिः

वीजत्रयं विलिख्य मूलखण्डत्रयेण त्रिकोणमभ्यर्च्य षट्कोणे षडङ्गानि सम्पूज्य ओं गङ्गे च यमुने इत्यादिनाऽङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थान्यावाह्य पात्रं तीर्थमयं विभाव्य गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वास्तत्र निःक्षिपेत ॥

स्मृतः ( भैरवतन्त्रे ) वामेन पाणिनाच्छाद्य मूलमष्टौ जपेत्ततः भूतिनीं धेनुमुद्रां च योनिमुद्रां प्रदर्शयेत् । ( पशुकल्पेतु ) गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः दूर्वाइत्यर्घपात्रस्यप्रोक्तं द्रव्याष्टकं सुराः इतिमेरुतन्त्रोक्तद्रव्याष्टकस्यैवनिःक्षेपोवोध्यः । एवं च वामेनपाणिनेत्यपि वाममार्गपरम् दक्षिणमार्गे तु दक्षिणहस्तेनाच्छादनं सम्प्रदायसिद्धम् ॥ ( वामाचारेतु ) मीनमुद्रया मांसखण्डं तत्र निःक्षिप्य कारणेन पुरितं चेत कुम्भमुद्रया पूर्वोक्तकुलद्रव्यं संशोध्य निःक्षिपेत् । ततः आनन्दभैरवीसहितमानन्दभैरवं ध्यात्वा तत्रावाह्य ह् स् क्ष् म् ल् व् र् यूं आनन्दभैरवायवषट् स् ह् क्ष म् ल् व् र् यीं सुधादेव्यै वौषट् इति मन्त्राभ्यां गन्धपुष्पादिभिस्तौसमभ्यर्च्य वालात्र्यक्षरीमुच्चार्य्य ब्रह्माण्डरससंभूतमशेषरससम्भवम् आपूरितं महापात्रं पीयूषरसमावह अखण्डैकरसानन्दकरे परसुधात्मनि स्वच्छन्दस्फुरणांमंत्रं निधेह्यकुलरूपिणी अकुलस्यामृताकारे सिद्धिज्ञानकलेवरे अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणी तद्रूपेणैकरस्यं च कृत्वा तैस्तत्स्वरूपिणि भूत्वापरामृताकारा मयि चित्स्फुरणं कुरु । एभिर्मन्त्रैरभिमंत्र्य पञ्चरत्नानि पूजयेद्यथा ( भैरवतन्त्रे ) किञ्चित्तोयं समादाय चान्यपात्रेषु निःक्षिपेत् । पूजाद्रव्याणि चात्मानं प्रोक्षयेत्तेन वारिणा । ( देवीपद्धतौ )विशेषार्घोत्तरे भागे पात्रमाचमनीयकम् मधुपर्कं च तद्वामे स्थापयेत्सुरवन्दिते संपृक्तं मधुपर्कं स्यात क्षौद्रं दध्ना घृतेन च प्रीतिकृत्सर्वदेवानां कांस्यपात्रे

ग्लूं गगनरत्नायनमः स्लूं स्वर्गरत्नायनमः प्लूं पातालरत्नायनमः म्लूं मर्त्यरत्नायनमः न्लूं नागरत्नायनमः इति स्वाग्रादिचतुर्दिक्षु मध्ये च पूजयेत् ] ततः मूलमंत्रेण हृदयादिष्टदेवतां तत्रावाह्य आवाहनादिमुद्राः प्रदर्श्य मूलेन गन्धपुष्पादिभिः सम्पूज्य पुष्पाञ्जलित्रयं दत्वा धूपदीपादिनैवेद्यानि दक्षिणमार्गी दक्षिणहस्तेन वाममार्गीचेद्वामहस्तेन मत्स्यमुद्रयावाघ्यंमाच्छाद्य मूलमंत्रमष्टधा दशधा वा प्रजप्य देवतारूपमर्घ्यं विभाव्य भूतिधेनुमुद्रायोनिमुद्राः प्रदर्शयेत् । इति विशेषार्घस्थापनविधिः । ताराश्रीविद्यादिविषयेप्यनेनैव विधिना विशेषार्घं स्थापयेत् ततोविशेषार्घवामे सामान्यार्घजलेन त्रिकोणं विलिख्य सामान्यार्घवदाचमनीयपात्रस्थापनं कृत्वा जातिलवङ्गकङ्कोलादिद्रव्याणि तज्जले निःक्षिपेत् । ततस्तद्वामे पूर्ववन्मण्डलं कृत्वा मधुदधिघृतैः पूर्णं मधुपर्कपात्रं संस्थाप्य तद्वामे पुनराचमनीयपात्रमाचमनीयपात्रवत् संस्थाप्य शुद्धजलेन पूरयेत् तत- सर्वाणि————

पात्राणि मूलमंत्रेण प्रत्येकमष्टधाऽभिमंत्र्य धेन्वादिमुद्राम्प्रदर्शयेत ।। इति पात्रासादनम् ।। क्रमशः पात्राणां नामानि साधकस्य सौकर्यार्थमत्रालिख्यते सामान्यार्घम्, कलश, शंखः, प्रोक्षणपात्रम, पाद्यपात्रम, विशेषार्घपात्रम, आचमनीयपात्रम् , मधुपर्कपात्राम, पुनराचमनीयपात्राम् ,इमानि

---

प्रकीर्तितम् कांस्यपात्रे च सकलसाधारणम् देवतादिभेदेन मधुपर्कभेदः ( मेरुतन्त्रे ) कांस्यस्यवाऽथ रौप्यस्य शैवे शङ्खवरोहरौ महाशङ्खो वाममार्गे स्फाटिकं ग्रहनामके ( तत्रैव ) मधुपर्कस्तु सक्षौद्रं दधिचेन्न लभ्यते दधिदुग्धं गुडः क्षौद्रे घृतप्रतिनिधिर्नहि मधुपर्कपदार्थं उक्तस्तत्रैव । परमं यत्पदं देवा मधुसंज्ञं तदुच्यते

[ पूर्वपृष्ठस्थवाममार्गे तु इत्यारभ्य पूजयेद्यथेत्यन्तम्पठित्वा ग्लूमित्यारभ्य पठनीयः ]

मुख्यानि ततोऽन्यानपि नैवेद्यादीनि चेति । पात्राणां क्रमोल्लेखः साधकसौकर्यार्थम् । यथा साधकस्य वामपार्श्वं आरभ्य दक्षिणपार्श्वपर्य्यन्तम् पंक्तिरूपेणेष्टदेवतापुरतोद्वादशाङ्गुलान्तरे स्वस्वाधारे प्रथमं कलशस्ततः शंखस्ततः पुनराचमनीयपात्रम् ततोमधुपर्कपात्रम् ततः आचमनीयम् ततोविशेषार्घ्यम् ततस्सामान्यार्घम् ततः पाद्यपात्रम् ततः प्रोक्षणीपात्रम् इति एवं नवपात्राणि उक्तविधिना न्यसेत् । स्वयं साधकश्च पात्रपंक्तितोद्वादशाङ्गुलान्तरिते देशे एवमुपविशेत् । यथा पुनराचमनीयमारभ्य विशेषार्घपात्राणि

---

तदाप्यते येन कर्म तत्प्रोक्तं मधुपर्ककम् । देवतोद्देश्यकं यद्दानं परमपदप्राप्तिफलकं समधुपर्कपदार्थं इत्यर्थः । इदं च मधुपर्कप्रदानजन्यफलानुकीर्तनपरम् वस्तुतस्तु मधुना पृच्यते दध्याद्यस्मिन्निति मधुपर्क पदव्युत्पत्तिः पृचीसम्पर्कइतिधात्वनुसारात् ( श्रीनृसिंहचरणार्चनपद्धतौतु ) पुनराचमनीयार्थं पात्र संस्थापयेत्ततः स्नानं शङ्खोदकेनैव देवदेवस्य चक्रिणः अत्र देवदेवस्य चक्रिणइत्युपलक्षणम् वस्तुतस्तु यस्य देवस्य पूजायां शङ्खोनिषिद्धस्तम्विहाय सर्वत्र स्नानक्रियाशङ्खेनोत्तमेति ( देवीपूजायान्तु ) वहुपात्रकरणसामर्थ्ये पात्रत्रयेषु शङ्खस्य प्रधानताचेति अथवा कलशं शङ्खं शक्तिपात्रं त्रयं भवेदिति त्रिशक्तिरत्ने विहितप्रमाणदर्शनादिति ( शैवे शङ्खोदकं निषिद्धमेवेति । तदुक्तंसिद्धान्तसंग्रहे नाक्षतैरर्चयेद्विष्णुं न तुलस्याविनायकम् न दूर्वया यजेद्दुर्गां न शम्भुं शङ्खवारिणा पाद्याचमनीयादि पात्रस्थापनन्तु सामान्यार्थस्थापनवत् तदुक्तं तत्रैव सामान्यार्घोक्तविधिना कुर्य्यात्पाद्यादिपात्रकम् ( महाकालसंहितायाम् ) तानि गन्धाक्षतजलकुसुमैः परिपूरयेत पाद्ये पाद्योक्तवस्तुनि अर्घ्ये अर्घ्योदितानि च

साधकाग्रे एव भवेयुरिति एवं पात्रस्थापनाविषये कापित्रुटिर्न सम्पद्यते इति। अन्यानिपात्राण्यपि स्थापनीयानि एतावदशक्तौ "त्रिशक्तिरत्ने" अथवा कलशशंखं शक्तिपात्रं त्रयं भवेदिति अस्मिन्कल्पेऽपि पाद्यादिपात्राणि स्थापनीयानीति पूजोपयोगीत्वादिति सुधार्णवकृत्तः। पाद्यं चाचमनीयं

स्नानीयाचमनादौ च द्रव्याण्युक्तानि वै पुरा तैरन्वितानि कार्य्याणि पात्राणि सकलानि च ( मेरुतंत्रे ) एकैकपात्रे मूलेन ह्यष्टकृत्वोऽभिमंत्रयेत्। प्रदर्शयेद्धेनुमुद्राम् इति दक्षिणमार्गविधिनापात्रासादनम्।

## ❀ अथ वाममार्गीयोविधिः ❀

वीरकल्पेतु तन्त्रान्तरेषु पौराणकर्मदर्पणमहानिर्वाण मंत्रमहार्णवादिषु श्रीपात्रशक्तिपात्रादिस्थापनमुक्तम्। ( महाकालसंहितायाम् ) अस्मिन्नेवह्यवसरे श्रीपात्रस्थापनं चरेत् कौलः प्रसन्नया कुर्य्यात् क्षीरमध्वादिभिर्द्विजः यतिस्तु नोभयं कुर्य्यान्नेच्छत्याभ्यामिति द्विजः प्रसन्नया सुरया द्विजैः राजन्यवैश्यैः। द्विजोविप्रः आभ्यां क्षीरमधुभ्यामपि नेच्छति। अस्मिन्कल्पे तस्यानधिकारादितिभावः। तथा अतः कौलिककार्य्यार्थं विशिष्य तदहं ब्रुवे तद्विधिस्त्वसाधारणत्वान्नेहलिख्यते।

प्रकृतकार्य्ये दक्षिणाम्नायत एव सर्वकर्मदर्शनात् क्वचित्तु दक्षिणे मण्डलं कृत्वा श्रीपात्रं स्थापयेत्सुधीः विशेषार्घोक्तविधिनेत्युक्तम्। दक्षिणे श्रीपात्रस्थापनमुक्त्वा शक्तिपात्रादिस्थापनक्रममाह ( महाकालसंहितायाम् ) वामे संस्थापयेच्छक्तिपात्रं त्रिदशवन्दिते मध्ये चत्वारि पात्राणि पुनरन्यानि योजयेत् गुरुर्भोगश्चवीरश्च कुलं चेति प्रकीर्त्तितम् श्रीपात्रस्य च ये मंत्रास्ते मं।।स्सर्वपात्रगाः श्रीपात्रस्य क्रिया याहि सा क्रिया सर्वपात्रगाः तादृक्क्रियाय-

च अर्धं च नवमं विदुरितिमंत्रचिन्तामणिकृल्लिखित-पाठः प्रामादिकः । सुधार्णवकल्पलतादिषु वहुषु ग्रन्थेषु एतादृशपाठस्यानुपलम्भात् । अर्घपात्रस्य नवमपात्रत्वे श्री-पात्रस्यातिरिक्तत्वापत्तेश्च । अत एव ( कुलरत्नावल्याम् ) कुलकुम्भश्च श्रीपात्रं शक्तिपात्रं तथैव च । गुरुपात्रं भोग-पात्रं योगिनीपात्रमेव च । कुलपात्रं वीरपात्रं नवमं वलि-पात्रकम् । इत्युक्तम् । ( त्रिशक्तिरत्ने ) । पुष्पादिना समुद्धृत्य विन्दुं शंखामृतस्य च निक्षिपेत् सर्वपात्रेषु सर्वं-दिव्यं विभावयेत् संक्षेपतः वाममार्गीयपात्रासादनैकदेशो-दर्शित इति ॥

---

शक्तौ चेत् सामान्येनापि पूजयेत् पृथक्कला नचार्च्यांस्तु दशद्वादशषोडश शक्तेरावाहनं शक्तौ गुरोरपि गुरौ तथा परिवा-रान्भोगपात्रं वीरेत्वावरणादिकान् कौलिकान् कुलपात्रं च समा-वाह्य यजेच्छनैः तथा श्रीपात्रास्याधिकारी तु स्वयमेव न चेतरः शक्तेस्तु शक्तिपात्रं स्यात् गुरुपात्रं गुरोरपि भोगपात्रं सुतादीनां शिष्याणां वीरपात्रकम् कुलपात्रं कौलिकानां निर्णयः प्रोक्तईदृशः । ( तन्त्रान्तरेतु ) श्रीपात्राघटपात्रयोर्मध्य सवपात्राणि स्थापयेत् गुरुपात्रं घटस्यान्ते तदन्ते भोगपात्रकम् तदन्ते शक्तिपात्रं च योगिनीनान्तरदन्तिके तदन्ते वीरपात्रं च वलिपात्रं तदन्तिके पाद्यं चाचमनीयं च पात्राणि स्थापयेत् क्रकात् उत्तमं नवपात्राणि सप्तपात्राणि मध्यमम् अधमं त्रीणि पात्राणि एकपात्रं न कारयेत् पाद्यं चाचमनीयं चेत्युपलक्षणम् अर्घ्यस्नानीयादीनि ।

इति श्री ज्यौतिषाचार्य्य पं० विष्णुदत्तराज्यज्योतिषि-

प्रणीते शतचण्डीयज्ञविधानस्य द्वितीयेखण्डे

॥ सप्रमाणपात्रासादनविधिः ॥

एवम्पूर्वोक्त प्रकारेण पात्रासादनं कृत्वा ततः दूर्वाकूर्चेन पुष्पादिना वा अत्र श्रीदुर्गापूजनस्यैव प्राधान्यात्पुष्पेणैव शंखामृतं विशेषार्घामृतं च किंचित्समादाय पात्रान्तरेषु निःक्षिप्य विशेषार्घामृतेनैव पूर्वोक्तमन्त्राभ्यामानन्दभैरवमानन्दभैरवीं च तत्वमुद्रया शिरसि सन्तर्प्य शंखामृतेन स्वस्वकल्पोक्तान् दिव्यौघ सिद्धौघ मानवौघान् गुरून् ब्रह्मरन्ध्रे तत्वमुद्रयैव सन्तर्प्य स्वगुरु परमगुरु परापरगुरु परमेष्ठिगुरुनपि तर्प्पयेत्। दिव्यौघ सिद्धौघ मानवौघाः स्वस्वकल्पोक्ताः पृथक्पृथङ्नामानोभवन्ति। यथा-दुर्गायाः परमात्मा, परानन्दः, परमेष्ठी, महोदयः, कृष्णः, कालः कालनाथः भैरवः इतिदिव्यौघाः। नारदः काश्यपः शम्भुः भार्गवः कुलकौलिकः एतेपञ्चसिद्धौघाः। रुद्राचार्य्यः क्षमाचार्य्यः पत्रनाशनसंज्ञकः कुमारीशः शक्तिधरः घनानन्दः प्रकाशकः हरिशर्मा विष्णुशर्मा दत्तात्रेयः प्रियंवदः वहुला शाकिनी देवी चर्य्यानाथः (प्रकीर्तितः) इति मानवौघाः।

---

(तत्वार्णवे) ध्यात्वैवं तर्पयेन्मूर्ध्नि तावुभौ साधकः सुधीः आनन्दभैरवमानन्दभैरवीं चेत्यर्थः तयोर्ध्यानन्त्वग्रे वक्ष्यामः। (त्रिशक्तिरत्ने तर्पणप्रकारः) ब्रह्मरन्ध्रे स्वके मंत्री मुद्रया तत्वसंज्ञया तर्पयेद्गुरुपात्रीयद्रव्येणौघत्रयं सुधीः स्वगुरूनपि सन्तर्प्य त्रिः सकृद्वा विशेषतः आत्मनोहृदयाम्भोजे परीवारगणावृताम् देवीपात्रामृतेनापि तर्प्पयेत्कुलनायिकाम्। देवीपात्र श्रीपात्रम् ओघत्रयं दिव्यौघं सिद्धौघं मानवौघं चेत्यर्थः अथदुर्गागुरुपङ्क्तयस्तत्रैव। शृणुवत्स महादेव गुरून् दुर्गामनूद्भवान्

इति। एवं तत्ताद्विद्यागुरुपंक्तयस्तत्तत्कल्पोक्ताः अवगन्तव्याः। (एषां तर्पणन्तु श्रीअमुकानन्दनाथ श्रीपादुकां तर्प्पयामि। एवं श्रीअमुकम्बाश्रीपादुकान्तर्पया०। इति दिक्। एवं गुरूणान्तर्पणम्। यथा श्रीअमुकानन्दनाथश्रीगुरुपादुकान्तर्पयामि नमः। परमगुरुश्रीपादुकान्तर्पयामि नमः। परापरश्रीपादु० नमः परमेष्ठीश्रीगुरुपादु० नमः। इति त्रिः सकृद्वातर्पयेत॥ (यत्र वामाचारादौ गुरुपात्रादिकमतिरिक्तमेव स्थापितं तत्र गुरुपात्रीयद्रव्येणैव गुरुपंक्तीस्तर्पयेत) ततोविशेषार्घजलेन हृदये श्रीदुर्गान्तर्प्पयेत्। यथा ओं ऐं ह्रीं क्लीं चामुण्डायैविच्चे साङ्गां सपरिवारां सायुधां सवा-

---

परमात्मा परानन्दः परमेष्ठी महोदयः कृष्णः कालः कालनाथो दिव्यौघा भैरवान्तिकाः नारदः काश्यपः शम्भुर्भार्गवः कुलकौलिकः एते पञ्चमहादेवि सिद्धौघाः परिकीर्तिताः रुद्राचार्य्यः क्षमाचार्य्यः पवनाशनसंज्ञकः कुमारीशः शक्तिधरो घनानन्दः प्रकाशकः हरिशर्म्मा विष्णुशर्म्मा दत्तात्रेयः प्रियंवदः वहुला शाकिनी देवीचर्य्यानाथः प्रकीर्तितः एवं तत्तद्विद्यागुरुपङ्क्तयस्तत्तत्कल्पेभ्योवगन्तव्याः एषां तर्पणम् पद्धतौ। गुरुचतुष्टयमुक्तम्भावनिर्णये गुरुः परमगुरुश्चैव परापरगुरुस्तथा परमेष्ठी गुरुश्चैव स्वस्वाम्नायैः प्रतर्पयेत्। (कुलचूडामणौ) अज्ञाने गुरुनाम्नां वै गुरुत्रितयमर्चयेत्। चतुष्टयं वा संकोचोन कर्त्तव्यस्ततः परम्। (भावनिर्णये) आदौ सर्वत्र देवेशिमन्दः परमोगुरुः परापरगुरुस्त्वं हि परमेष्ठिरहं यतः। अत्र गुरुनाम दर्शनानन्तरं तत्वशुद्धेः सप्तमंत्राउक्तास्त एव कारिकाश्च। श्रुतिसम्मतास्तु यथोक्तापद्धता उद्धृताः (तंत्रान्तरे) त्वेतदर्थं संक्षिप्तवचनमेवोपलभ्यते यथा तत्वशुद्धिंविधायें-

हनां श्रीदुर्गादेवीं तर्पयामि नमः । इति त्रिः सकृद्वास-न्तर्प्य तत्वशुद्धिं कुर्यात् । यथा ओं श्रुतिः प्राणापान व्यानोदानसमानामे शुद्ध्यन्तां ज्योतिरहंविरजाविपाप्मा-भूयासं स्वाहा । ओं पृथिव्यप्तेजोवाय्वाकाशानि मे शुद्ध्य-न्तांज्योतिरहं० ओं प्रकृत्यहंकारबुद्धिमनः श्रोत्राणि मे शुद्ध्यन्तां ज्योतिरहं० ओं वाक्चक्षुःश्रोत्रघ्राणवचांसि मे शुद्ध्यन्तां ज्यो० ओं पाणिपादपायूपस्थशब्दामे शुद्ध्यन्तां ज्यो० स्पर्शरूपरसाकामा मे शुद्ध्यन्तां ज्यो० । ओं वायु-तेजसलिलभूम्यात्मानोमे शुद्ध्यन्तां ज्यो० । इति सप्तमंत्रा-न्परामृशन् हस्ताभ्यां सप्तधासर्वाङ्गे स्पृशेदिति तत्वशुद्धिः । वामाचारेत्वत्रैव वटुकादिवलिं प्रयच्छति तद्विधिरग्रे वक्ष्ये । ततः प्रोक्षणीपात्रस्थजलेनात्मानं पूजामण्डलं पूजोपकर-णानि च मूलमंत्रास्त्रमंत्राभ्यां सम्प्रोक्ष्य धेनुमुद्राम्प्रदर्शये-दिति ।

---

त्थं पूजाद्रव्याणि शोधयेत् । शोधनं नाम प्रोक्षणम् उक्तं च (मेरुतंत्रे) सेवयेत्प्रोक्षणीपात्रतोयैर्मूलास्त्रमुच्चरन् आत्मानं याग-वस्तूनि पूजाद्रव्याणि मण्डलम् दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥

# अथ पीठपूजाविधानम्

*************************

तत्र प्रथमं धेनुमुद्राप्रदर्शनानन्तरम् पूर्वोक्तपीठन्यासक्रमेण स्वदेहे तत्तत्स्थानेषु गन्धपुष्पादिभिर्मानसोपचारैर्वा देहस्थपीठदेवताः सम्पूज्य हृत्पद्मकर्णिकामध्ये मणिमयं पीठं विभाव्य तत्र मूलमंत्रेण गन्धपुष्पधूपदीपैश्चतुर्भिरुपचारैः स्वेष्टदेवतां सम्पूज्य आत्मानं देवतारूपं ध्यायन् मस्तके हृदये मूलाधारे पादयोः सर्वाङ्गेषु च एकैकं पुष्पांजलिं मूलेन दत्वा षडङ्गादिकं कृत्वा मूलं अष्टोत्तरशतं यथाशक्ति वा जपित्वा तज्जपं विशेषार्घजलेन देवतायै समर्प्य प्रोक्षणी-

---

उक्तं च (मेरुतंत्रे) योगपीठन्यासदेवांस्तत्तत्स्थानेषु पूजयेत्। मणिपीठे भावनया ततः पूज्याः स्वदेवताः ॥ आत्मानं देवतारूपं ध्यायन् मूलेन पञ्च तु। पुष्पस्यांजलयोदेया मस्तके हृदये गुदे ॥ पादयोः सर्वगात्रे च पूजयेच्चन्दनादिभिः। चतुर्भिरुपचारैश्च नैवेद्यं न निवेदयेत् ॥ गुरूपदिष्टविधिना शेषम यत्समापयेत्। (अन्यज्जपादिकमित्यर्थः। प्रोक्षण्यद्भिः प्रयुंजीत सर्वमेतत्समाहितः ॥ कृत्वा षडङ्गन्यासं च मंत्रमष्टोत्तरं शतम्। जपित्वा देवतायै तमर्प्पयेदर्घ्यतोयतः ॥ पानीयं प्रोक्षणीसंस्थं त्यक्त्वा सम्पूर्य पूर्ववत। उपचारैश्चन्दनाद्यैः मण्डलं पूजयेद्गुरुः ॥ (मण्डलं सर्वतोभद्रादिमण्डलमिति) पूरयेत्कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः। दर्भान्न्यसेदुपर्य्येषां सान्तं कूर्चकं ततः ॥ छिन्नमूलाः कुशादीर्घाः सप्तविंशतिसंख्यकाः। ब्रह्मग्रंथियुतास्तन्त्रे देशे कूर्चमिहोच्यते ॥

पात्रस्थजलं भूमौ निःक्षिपेत्। जलान्तरेण पात्रमापूरयेत्। ततः सर्वतोभद्रमण्डले "ॐ सर्वतोभद्रमण्डलाय नमः" इति गन्धपुष्पादिभिः पूर्वपूजितसर्वतोभद्रमण्डलं पुनस्तंत्रेण पूजयेत्। ततः शालिभिस्तत्कर्णिकामापूर्य्य तदुपरि तण्डुलपुञ्जं तदुपरि दर्भानास्तीर्य्य तदुपरि साक्षतं कूर्चं निधाय। पीठपूजामारभेत्॥ पीठपूजनं यथा पीठस्योदग्दिशि ॐ गुरुभ्योनमः ॐ परमगुरुभ्योनमः ॐ परापरगुरुभ्योनमः। ॐ परमेष्ठिगुरुभ्योनमः दक्षिणस्याम् ॐ गँ गणपतये नमः इति गुरुपंक्तिपूजनं कृत्वा ततोभावनया पीठस्याधस्तात्।

ॐ अतलादिसप्तपातालेभ्योनमः। ॐ मण्डूकाय नमः। ॐ कालाग्निरुद्राय नमः। (ततऊर्द्ध्वोर्द्ध्वक्रमेण) ॐ आधारशक्तये नमः। ॐ मूलप्रकृतये नमः। ॐ कूर्माय नमः। ॐ अनन्ताय नमः। ॐ वराहाय नमः। ॐ पृथिव्यै नमः। ॐ अमृतार्णवाय नमः। ॐ रत्नद्वीपाय नमः। ॐ मणिमण्डपाय नमः। इति सम्पूज्य मण्डलस्य चतुर्दिक्षु मध्ये च ॐ कल्पवृक्षेभ्यो नमः। (भावनयातेषामधस्तात्) ॐ मणिवेदिकायै नमः। (तदुपरि) ॐ रत्नसिंहासनाय नमः। (आग्नेयादिचतुर्षु कोणेषु)

## ❀ अथ पीठपूजाप्रकारः ( मेरुतन्त्रे ) ❀

यजेदाधारशक्त्यादिपीठमंत्रावसानकम्। गुरुपंक्तिरुदक्पूज्या महागणपतिस्त्ववाक्॥ पूजयेदतलादीनि देवस्याधस्तु सप्त च। मण्डूकं चापि तस्योर्द्ध्वं रुद्रं कालानलं ततः (शारदायाम्) अधः कूर्मशिलारूढां शरच्चंद्रनिभप्रभाम्। आधारशक्तिं प्रयजेत्

ॐ धर्माय नमः। ॐ ज्ञानाय नमः ॐ वैराग्याय नमः। ॐ ऐश्व-
र्याय नमः। (पूर्वादिषु च) ओँ अधर्माय नमः। ओँ अज्ञानाय
नमः। ओँ अवैराग्याय नमः। ओँ अनैश्वर्य्याय नमः। ओँ (मध्ये
ऊर्द्ध्वोर्द्ध्वक्रमेण) ओँ आनन्दकन्दाय नमः। ओँ संविन्नालाय
नमः। ओँ सर्वतत्त्वात्मकपद्माय नमः। ओँ प्रकृतिमयपत्रेभ्यो नमः।
ओँ विकारमयकेशरेभ्यो नमः। ओँ पञ्चाशद्वर्णबीजाढ्यकर्णिकायै
नमः। (ततः कर्णिकायामेव) ओँ अँ सूर्य्यमण्डलाय द्वादशक-
लात्मने नमः। ओँ उँ सोममण्डलाय षोडशकलात्मने नमः। इति
सूर्येन्दुकलाः क्रमेण पूजयेदिति* ततः ओँ सँ सत्वाय नमः। ओँ
रँ रजसे नमः। ओँ तँ तमसे नमः। ओँ आँ आत्मने नमः।
ओँ अँ अन्तरात्मने नमः। ओँ पँ परमात्मने नमः। ओँ ह्रीँ
ज्ञानात्मने नमः।

[ इतिसम्पूज्य ] ततः स्वस्वकल्पोक्तपीठशक्तिः पूजयेत्

पंकजद्वयधारिणीम्। कूर्मशिलारूढां कूर्माकारां तदुपरिस्थितामि-
त्यर्थः। मूर्द्धिन तस्याः समारूढं कूर्मं नीलाभमर्चयेत्। ऊर्द्ध्वं-
ब्रह्मशिलारूढमनन्तं कुन्दसन्निभम्॥ यजेच्चक्रधरं मूर्ध्नि धारयन्तं
वसुन्धराम्। तमालश्यामलां तत्र नीलेन्दीवरधारिणीम्॥
अभ्यर्च्य यद्वसुमतीं स्फुरत्सागरमेखलाम्। तस्यां रत्नमयं द्वीपं
तस्मिँश्च मणिमण्डपम्॥ यजेत्कल्पतरुँस्तस्मिन्साधकाभीष्टसिद्धि-
दान्। अधस्तात्पूजयेत्तेषां वेदिकां मण्डलोज्ज्वलाम्॥ पश्चाद-
भ्यर्चयेत्तस्यां पीठं धर्मादिभिः पुनः। रक्तश्यामहरिद्रेन्द्रनीला-
भान् पादरूपिणः॥ वृषकेशरिभूतेभरूपान् धर्मादिकान् यजेत्।
गात्रेषु पूजयेत्तांस्तु नञ्पूर्वानुक्तलक्षणान्॥ (भूतोदेवयोनिः)

* स्वदेहपीठन्यासे सूर्यचन्द्राग्निमंडलं पूजितं अत्र सूर्येन्दोरेवाग्नि
मण्डलं तु कलशाधारे नीतं। उक्तं चापि कलाभिः पूजयेत्सार्धमित्यादि अत्राग्नि-
मण्डलपूजनमपेक्षितं चेद्विद्वद्भिर्विचारणीयं।

पूर्वे ओं जयायै नमः अग्नौ ओं विजयायै नमः दक्षि० ओं जयन्त्यै नमः निर्ऋ० ओं अपराजितायै नमः पश्चिमे ओं नित्यायै नमः वायौ ओं विलासिन्यै नमः उत्तरे ओं दोग्ध्र्यै नमः ईशाने ओं अघोरायै नमः मध्ये ओं सर्वमंगलायै नमः इति पीठशक्ति पूजनं कृत्वा।

पीठपद्मस्य केशरेषु मध्ये च पूर्वादिक्रमेण जयाद्याः पीठशक्तीः पूजयेत यथा आग्नेयादिषु आग्नेय्यां ओं जँ जयायै नमः नैर्ऋत्यां ओं विं विजयायै नमः वायव्यां ओं जँ जयन्त्यै नमः ईशाने ओं अँ अपराजितायै नमः एवं कोणचतुष्टये देवीचतुष्टयं सम्पूज्य पूर्वादिदिक्षु गणेशादि-चतुष्टयं पूजयेत् यथा पूर्वे गँ गणेशाय नमः दक्षिणे चँ

---

भूतोमीदेवयोनय इति कोशाभिधानात्। नञ्पूर्वानधर्मादीनित्यर्थः॥ उक्तलक्षणान्वृषभाद्याकारान् रक्तादिवर्णानित्यर्थः। मेरुतन्त्रेत्वधर्मादयश्चित्रवर्णा उक्ताः। यथा धर्मं वृषतनुं रक्तं ज्ञानं कृष्णं च सिंहवत् वैराग्यं भूतवत्पीतं ऐश्वर्यं कृष्णहस्तिवत्॥ अधर्मादीँश्चित्रवर्णान् पीठस्याधः समर्चयेत्। तथा आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत्। (तत्प्रकारश्च) आनन्दकन्दं प्रथमं संविन्नालमनन्तरम्। सर्वतत्वात्मकं पद्ममभ्यर्चेत्तदनन्तरम्॥ मंत्री प्रकृतिपत्राणि विकारमयकेशरान्। पञ्चाशद्वर्णबीजाढ्यां कर्णिकां पूजयेत्ततः॥ कलाभिः पूजयेत्सार्द्धं तस्यां सूर्य्येन्दुवाचकान् प्रणवस्य त्रिभिर्भागैरथ सत्त्वादिकान् गुणान्॥ आत्मानमन्तरात्मानं परमात्मानमेव च। ज्ञानात्मानं च विधिवत्पीठमंत्रावसानकम्। पीठशक्ति केशरेषु मध्ये च सवराभयाम् (नवमीपीठशक्तिमंध्येपूज्येत्यर्थः) तदुक्तं (मेरुतंत्रे) केशरेषु तथा मध्ये पूर्वादिषु यथाक्रमम्। तत्तन्मंत्रोक्तपीठस्य नवशक्तीः

क्षेत्रपालेभ्योनमः पश्चिमे पँ पादुकाभ्यां नमः उत्तरे वँ वटु-
काय नमः इति ततः मध्यपीठे ओंकारपीठाय नमः ।
अष्टदले पूर्णपीठाय नमः भूगृहे कामपीठाय नमः इति
सम्पूज्य ततः जगद्धात्रीत्रिगुणात्मिकाभगवतीश्रीजगदम्बि-
कायोगपीठाय नमः इति मध्ये पूजयेत् । ततोमूलमुच्चार्य्य
जगद्धात्रीत्रिगुणात्मिकाश्रीदुर्गादेवतापीठस्य मूर्तिं कल्प-
यामि नमः इति पीठमध्ये गन्धपुष्पादिकं निःक्षिपेत् ।

इति पीठपूजनम् ॥

---

प्रपूजयेत् ॥ पीठमंत्रेण गन्धाद्यैः पीठमध्ये ततोर्च्चयेत् । चतु-
र्थीनमसायुक्तैः स्वैःस्वैरेव तु नामभिः ॥ इति ॥ ( पीठशक्तयस्तु )
जयाचविजयाचैव जयन्तीचापराजिता नित्याविलासिनी दोग्ध्री
अघोरा सर्वमंगलेति ॥

आग्नेयादि चतुर्दिक्षु पूज्यं देवीचतुष्टयम् । आद्यातत्रजया-
प्रोक्ता द्वितीया विजयाभिधा ॥ जयन्तीतत्पराभूप चतुर्थी
चापराजिता । ततः पूर्वादिदिक्षु पीठस्य गणेशादिचतुष्टयम् ।
गणेशक्षेत्रपालौच पादुके वटुकस्तथा ॥ ओंकारं प्रथमं पीठं पूर्ण-
पीठं ततः परम् । तृतीयं कामपीठं च पूजयेत्सम्प्रदायतः ॥
सम्प्रदायमवलम्ब्यैव सिंहसिद्धान्तसिन्धौमध्येष्टदले भूगृहे च
पीठत्रयम्पूजितमिति । एवं पीठत्रयपूजनानन्तरम् ( मेरुतंत्रे )
मध्ये पुष्पाञ्जलिं दद्यात्पीठमंत्रेण साधकः । मूलमंत्रं समुच्चार्य्य
षष्ठ्यन्तं पीठनाम च ॥ मूर्तिं च कल्पयामीति मूर्तिम्मध्ये विनिः-
क्षिपेत् । अत्र मूर्तिशब्देन कलशग्रहणम् तस्य देवतारूपसद्भावात् ।

इतीदमागमोदितं विदग्धबुद्धिबोधनम् ।
जगत्प्रसूतिपूजनक्रमे हि पीठपूजनम् ॥

# अथ प्रधानकलशस्थापनम्

तत्र तावत्पीठदेवतापूजितसर्वतोभद्रमण्डले मध्यकमलकर्णिकासु पूर्वादितः प्रादक्षिण्येन वन्हेर्दशकला गन्धपुष्पादिभिः प्रत्येकं ( प्राणप्रतिष्ठादिकं कृत्वा ) पूजयेत्। तद्यथा ॐ यँ धूम्रार्चिषे नमः ॐ रँ उष्मायै नमः लँ ज्वलिन्यै नमः वँ ज्वालिन्यै नमः शँ विस्फुलिङ्गिन्यै नमः षँ सुश्रियै नमः सँ सुरूपायै नमः हँ कपिलायै नमः लँ हव्यवाहायै नमः क्षँ कव्यवाहायै नमः इति । ततः स्वर्णादिरचितं यथोक्तं कुंभमादाय फट् इति शुद्धजलेन सम्प्रोक्ष्य चन्दनेनोपलिप्य हुँ इति कवचमंत्रमुच्चरन् अभितस्त्रिगुणात्मकसूत्रेण संवेष्ट्य चन्दनागुरुकर्पूरैः प्रधूप्य गन्धपुष्पादिभिरभ्यर्च्य नवरत्नान्युदरे निःक्षिप्य दूर्वाचन्दनाक्षतयुक्तकूर्चोपरिदक्षिणासहितं विन्यस्य प्रणवम् उच्चरन्पीठे कुंभं स्थापयेत् ॥ ततः कुंभेपूर्वादिप्रादक्षिण्यक्रमेण सूर्यस्य तापि-

---

## अथ प्रधानकलशस्थापनविधिः

तत्र मण्डले वह्नेर्दशकलानां पूजनं यत्प्रथमतएव कृतं तदर्थं द्रष्टव्यं पात्रस्थापनप्रकरणोक्तकलशस्थापनविधानम् । अत्र विशेषोऽभिधीयते यथा ( महाकपिलपञ्चरात्रे ) सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापि वा । निर्दोषं मृण्मयं चापि चन्दनेन विलेपितम् ॥ ( कलशप्रमाणन्तु ) पञ्चाशदङ्गुलोव्यास उत्सेधः षो-

न्यादिद्वादशकलाः सम्पूजयेत् यथा ॐ सूर्यस्य तपिन्यादि-षोडशकलाः आवाहयामि ध्यायामि तपिन्यादिद्वादशक-लाभ्योनमः इत्यावाह्य पृथक् तंत्रेण वा तासां प्राणप्र-तिष्ठाम्पूर्ववत्कृत्वा गन्धपुष्पाक्षतैः पूजयेत् यथा ॐ कं भं तपिन्यैनमः ॐ खं वं तापिन्यैनमः ॐ गँ फँ धूम्रायैनमः ॐ घँ पं मरीच्यैनमः ॐ ङं नं ज्वालिन्यै नमः ॐ चँ धँ रुच्यैनमः ॐ छं दं सुषुम्णायैनमः ॐ जँ थँ भोगदायैनमः ॐ झं तँ विश्वायै नमः ॐ ञँ णँ बोधिन्यै नमः ॐ टँ ढँ धारिण्यैनमः ॐ ठँ डँ क्षमायै नमः

---

ङ्शाङ्गुलः । कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत् । इति (सिद्धान्तसारे) प्रोक्तम् (शारदायाम्) हेमादिरचितं कुंभम-द्भिः क्षालितान्तरम् । चन्दनागुरुकर्पूरधूपितं शोभनाकृतिम् ॥ आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना । सूत्रे विशेष उक्तस्त-न्त्रान्तरे । कन्याकर्तितसूत्रेण त्रिगुणेन च वर्त्मना । गुणत्रयात्मकेनैव वेष्टयेदभितः समम् ॥ शारदायाम) अर्चितं गन्धपुष्पाद्यैर्गन्धा-क्षतसमन्वितम् । नवरत्नोदरं मं.ी स्थापयेत्तारमुच्चरन् ॥ (मेरु-तन्त्रे) ध्रुवं जपन्विधानेन स्थापयेद्देशिकोत्तमः । नवरत्नानिनिः क्षिप्य कुंभे कूर्चमथोपरि ॥ दूर्वाचन्दनसंयुक्तं विन्यस्येद्दक्षिणा-न्वितम् (नवरत्नानि च तत्रैवोक्तानि) पुष्पं नीलं च वैदूर्य्यं विद्रुमं मौक्तिकं तथा । ततोमरकतं वज्रं गोमेदं पद्मरागकम् ॥ प्रोक्तानि नवरत्नानि देशिकैस्तन्त्रवित्तमैः । आद्यन्तं क्रमतोमंत्रं मातृकां मनसा जपन् ॥ मूलमंत्रं जपन्नन्ते चिन्तयन्नैक्यमात्मनः । घटस्य पीठाभेदं च चिन्तयेत्साधकोत्तमः ॥ पञ्चाशदौषधिक्वाथैः पूरयेत्तदनन्तरम् । एकेन सहितास्ताश्च वर्णौषध्यश्च ताइमाः ॥ चन्दनं चापि रक्ताख्यचन्दनं चागुरुस्तथा । कर्पूरोशीरकुष्ठानि बालकं चापि केशरम् ॥ कंकोलकं जातिफलं जटामांसी मुरा

ततः पीठकुंभयोरात्मकुंभयोश्चैक्यं विभाव्य मातृकावर्णा-न्प्रातिलोम्येन पठित्वा तदन्ते मूलमुच्चार्य्य पंचाशदौषधि-क्वाथेन चीरीद्रुमकषायेण पलाशत्वग्भवेन गन्धपुष्पसुवा-सिततीर्थजलेन वा देवताबुद्ध्या कुंभं पूरयेत् । ततः कुंभ-जले पूर्वादितः प्रादाक्षिण्येन चन्द्रस्यामृतादिषोडशकलाः आवाह्य प्राणप्रतिष्ठां च तासां कृत्वा पूजयेद्यथा ॐ चन्द्र-मसः अमृताद्याःषोडशकला आवाहयामि अमृतादिषोडश-कलाः इह कलशे आगच्छतेहातिष्ठत इमां विहितपूजां

---

तथा । ग्रन्थिकं रोचना जातीपत्रं पिप्पलविल्वकौ ॥ पृश्नपर्णी चित्रकं च लवङ्गं कत्तृणन्तथा । कट्फलं चापि गुंजास्यादुदुम्बरक-काश्मरी ॥ पद्मकाष्ठं शङ्खपुष्पी मयूरस्य शिखा तथा । प्लक्षोग्नि-मंथश्च तथा मुद्गपर्णी कुशाः पुनः ॥ पाषाणभेदकः कृष्णशङ्खपुष्पी च रोहिणी । स्योनाकोवृहती चैव पाटलीमूषकर्णिका ॥ तुलशी शिखरी इन्द्रवल्ली भृङ्गाभिधोनृप । ततोपराजितातालमूली चापि कृतांजलिः ॥ दूर्वा अादेवि कन्याख्ये भार्ग्यथोभद्रमुस्तकः । लवङ्गसहिताश्चैताः पञ्चाशत्संख्यका इति ॥ दुग्धवृक्षत्वचां क्वाथै-र्ब्रह्मभूरूट् त्वगुद्भवैः । ( पूरयेदितिशेषः ) ( शारदायाम् ) ऐक्यं संकल्प्य कुंभस्य पीठस्य च विधानवित् । चीरीद्रुमकषायेण पलाशत्वग्भवेन वा ॥ तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः । आत्माऽभेदेन विधिवन्मातृकां प्रविलोमतः ॥ जपन्मूलमनुं तद्वत् पूरयेद्देवताधिया । शङ्खक्वाथादिसम्पूर्णे गन्धाष्टकमभीष्टदम् ॥ विलोड्य पूजयेत्तस्मिन्नावाह्य कलशे कलाः । दशवह्नेः कलाः पूर्वं द्वादशद्वादशात्मनः ॥ षोडशापि च सोमस्य पश्चात्पञ्चाशतं कलाः । जपेद्वा प्रातिलोम्येन मूलमंत्रं च मंत्रवित् ॥ समाहितेन मनसा ध्यायन् मन्त्रस्य देवताम् । प्राणप्रतिष्ठां कुर्वीत तत्र तंत्र-

गृह्णत अमृतादिषोडशकलाभ्योनमः । ततः ॐ आँ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हँ ळँ हँ सः सोहम् चन्द्रमसः षोड-शकलानां प्राणा इह प्राणाः स्थिताः । पुनस्तथैव पठित्वा जीव इहस्थितः पुनस्तथैव सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति प्राणप्रतिष्ठां कृत्वा पूजयेद्यथा ॐ अँ अमृतायै नमः ओं आँ मानदायै नमः ओं इँ पूषायै नमः ओं ईँ पुष्ट्यै नमः ओं उँ तुष्ट्यै नमः ओं ऊँ रत्यैनमः ओं ऋँ धृत्यै नमः ओं ॠँ शशिन्यै नमः ओं लृँ चन्द्रिकायैनमः ओं ॡँ कान्त्यैनमः ओं एँ ज्योत्स्नायैनमः ओं ऐँ श्रियैनमः ओं प्रीत्यैनमः ओं औँ अङ्गदायै नमः ओं अं पूर्णायै

---

विचक्षणः ॥ कलात्मकं शङ्खसंस्थं क्वाथं कुंभे च निःक्षिपेत् । (मेरु-तन्त्रे) गन्धपंकप्रसूनादिवासितैर्वा शुभैर्जलैः । क्वाथादितोयैरापूर्य्य शङ्खं तस्मिन्विलोडयेत् ॥ गन्धाष्टकं तस्य तस्य देवस्याथ प्रकीर्त्यते। अत्र तस्यतस्येत्युक्त्या यस्यदेवस्ययादृग्गन्धाष्टकं तादृगेव ग्राह्यं अत्र शक्तेः प्राधान्यात्तस्या गन्धाष्टकं ग्राह्यं चन्दनागुरुकस्तूरी चोरकुंकुमरोचनाः जटामांस्यथकर्प्पूरशक्ते र्गन्धाष्टकं विदुः ॥ इति अथच गोरोचनार्कंकस्तूरी कर्प्पूरागुरुकुंकुमैः । चन्दनेभमदाभ्यां च दरदेन च पंकजैः ॥ गन्धाष्टकस्य संय्योगात सामर्थ्याद्देशिकस्य च । सशक्तिकं जलं कुंभे भवेदेवं विदुर्बुधाः ॥ आदौ कृशानुस-म्बन्धि कलादशकमर्चयेत् । धूम्रार्चिरुष्माज्वलिनी ज्वालिनी विस्फु-लिङ्गिनी ॥ सुश्रीः सुरूपा कपिला हव्यकव्यवहे उभे । अथ (सूर्य-स्यद्वादशकलाः ) तपिनी तापिनो धूम्रा मरीचिज्वालिनी रुचिः । सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ इति । (अथ चन्द्र-

नमः अः पूर्णामृतायै नमः इति अशक्तिपक्षेत्वेकतंत्रेण चन्द्रस्यामृतादिषोडशकलाभ्योनमः इति पूजयेत् शक्तश्चेत् प्रत्येकं पृथगावाह्य प्राणान् प्रतिष्ठाप्य पूजयेदिति । तत औषधिक्वाथेन गन्धपुष्पसुवासिततीर्थोदकेन वा शंखान्तरमापूर्य्य तज्जले गन्धाष्टकं विलोड्य वन्हेर्धूम्रार्चिरादिदशकलास्तत्रावाह्य ओं आँ ह्रीं क्रों इत्यादिपूर्वोक्तवीजैः वन्हेर्धूम्रार्चिरादिदशकलानां प्राणप्रतिष्ठां कृत्वा धूम्रार्चिरादिवन्हेर्दशकलाभ्योनम इति तंत्रेण सर्वाः सम्पूज्य पुनः पृथक् नाममंत्रैः प्रत्येकं गन्धाद्युपचारैः पूजयेत् यथा ओं यँ धूम्रार्चिषेनमः ओं रँ उष्मायै नमः ओं लँ ज्वालिन्यैनमः ओं वं ज्वालिन्यैनमः ओं शँ विस्फुलिंगिन्यै नमः ओं षँ सुश्रियैनमः ओं सँ सुरूपायैनमः ओं हँ कपिलायै नमः

कलाः ) कला षोडशकं चान्द्रं यजेत्पश्चाद्गुरूत्तमः । अमृता मानदा पूषा पुष्टिस्तुष्टिरतिर्धृतिः ॥ शशिनी चन्द्रिका कान्तिर्ज्योत्स्नाश्रीः प्रीतिरङ्गदा । पूर्णा पूर्णामृताकान्तिदायिन्यः सोमजाः कलाः ॥ इति वेदादिभेदसंजाताः कलाः पञ्चाशदिन्दुयुक् । सन्निधाप्य प्रतिष्ठाप्य पूजयेत्कलशे तु ताः ॥ निवृत्तिः प्रतिष्ठा विद्या च शान्तिरिन्धिश्च दीपिका । रोचिका मोचिका पारा सूक्ष्मा सूक्ष्माऽमृता तथा ॥ ज्ञानामृताऽऽप्यायनी च व्यापिनी व्योमरूपिका । अनन्ता सृष्टिरिद्धीतु स्मृतिर्मेधा च कान्तिका ॥ लक्ष्मीर्द्युतिस्थिरास्थितिः सिद्धिर्जरा च पालिनी । क्षान्तीश्वर्य्यौ रतिः कामा वरदा ह्लादिनी तथा ॥ प्रीतिर्दीर्घा तीक्ष्णा रौद्रीभया निद्रा च तन्द्रिका । क्षुत्क्रोधिनी क्रियोत्कारी मृत्युः पीता च दारुणा ॥

लँ हव्यवाहायै नमः वँ कव्यवाहायै नमः इति । एवमने-नैव प्रकारेण सूर्य्यस्य तपिन्यादिद्वादशकलाश्चन्द्रस्यामृतादिषोडशकलाश्च शंखे आवाह्याभ्यर्च्च्य ततः पंचाशकला आवाह्य पूजयेत् तद्यथा वाजसनेयिसंहितायां अ० १० मं० २४ ओं हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं बृहत् ॥ इति वैदिकमंत्रेण सृष्ट्यादिदशकला आवाह्य प्राणप्रतिष्ठां च पूर्वोक्तवत्कृत्वा सृष्ट्यादिदशकलाभ्योनमः । इति गन्धपुष्पादिपंचोपचारैः सम्पूज्य नाममंत्रेण स्वबीजपूर्वेण तासां पृथक् २ पूजनं आचरेत् नामानि च तासां स्वस्वबीजसहितानि ङेन्तानि यथा ओं कं सृष्ट्यै नमः ओं खँ ऋद्ध्यैनमः ओं गँ स्मृत्यैनमः ओं घँ मेधायै नमः ओं ङँ कान्त्यै नमः ओं चँ लक्ष्म्यै नमः ओं छँ धृत्यै नमः ओं जँ स्थिरायै नमः ओं झँ स्थित्यै नमः ओं ञँ सिद्ध्यै नमः इति । एवं वा० सं० अ ५ मं २० ओं प्रतद्विष्णुस्तवते वीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः । यस्योरुषुत्रिषु विक्रमणेष्वाधिक्षियन्ति भुवनानिविश्वा ॥ इति मंत्रेण जरादिदशकला आवाह्य प्राणप्रतिष्ठादिकं

असिता च तथाऽनन्ता मध्ये मध्ये प्रपूजयेत् । हꣳसः शुचिषदिति प्रतद्विष्णुस्तवेति च ॥ त्रियंबकं च गायत्री विष्णुर्योनिस्तथैव च । तारस्यपञ्चभेदोत्थकलानां पूजयेत्सुधीः ॥ कलादशकमावाह्य सृष्ट्याद्यं संनिधापयेत् । हꣳसःशुचिषदित्याभ्यांऋचं संजप्य

कृत्वा 'ओं जरादिदशकलाभ्योनमः' इतिपंचोपचारैः सम्पूज्य प्रत्येकमपिपूजयेत् यथा ओं टं जरायैनमः ओं ठँपालिन्यैनमः ओं डँ क्षान्त्यैनमः ओं ढँ ईश्वर्य्यैनमः ओं णँ रत्यैनमःओं तँ कामिन्यैनमः ओं थँ वरदायैनमः ओं दँ ह्लादिन्यै नमः ओं धँ प्रीत्यैनमः ओं नँ दीर्घायै नमः इति॥ तथा–वा० सं० अ० ३ मं० ६० ॥ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्धनम्उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्। अनेन तीक्ष्णादिदशकला आवाह्य प्राणप्रतिष्ठां कृत्वा "ॐ तीक्ष्णादिदशकलाभ्योनमः" इति पंचोपचारैः सम्पूज्य ततः प्रत्येकं स्वनाममंत्रैर्गन्धाद्युपचारैः पूजयेद्यथा–ॐ पँ तीक्ष्णायैनमः ॐ फँ रौद्र्यैनमः ओं बँ भयायैनमः (मायायैवेति पाठः) ओं भँ निद्रायै नमः ओं मँ तन्द्रायै नमः ओं यँ क्षुधायै नमः ओं रं क्रोधिन्यै नमः ओं लँ क्रियायै नमः ओं वँ उत्कारिण्यै नमः ओं शँ मृत्यवे नमः इति ततः॥ ओं तद्विष्णोःपरमम्पदꣳसदापश्यन्ति सूरयः॥ दिवीवचक्षुराततम्॥ इति मंत्रेण गायत्र्या वा पीताद्याश्चतुष्कलाः पूर्ववदावाह्य प्रतिष्ठाप्य ओं 'पीतादिचतुष्कलाभ्योनमः' इति

---

पूजयेत्॥ प्राणसंस्थापनं कृत्वा कलानाम्पूजयेच्च ताः। एवं जराद्यास्तीक्ष्णाद्याः पीताद्याश्च विधानवित्॥ निवृत्याद्याश्चापि यजेद्युक्त्युक्त्या विचक्षणः। अकारोकारकौ प्रोक्तौ मकारोबिन्दुनायकौ॥ शक्तिः शान्तोह्यमी सप्त ध्रुवभेदाः प्रकीर्तिताः। अन्तिमौ द्वाविमौ भेदौ पृथगेव समीरितौ॥ इति (सिद्धान्तसारे)

पंचोपचारैः सम्पूज्य स्वनाममंत्रैर्ङेन्तैः प्रत्येकं पृथक् पूजयेत् यथा ओं षँ पीतायैनमः। ओं सँ दारुणायैनमः ओं हँ असितायै नमः ओं चँ अनन्तायै नमः इति। ततः ओं ताद्विप्रासोविपन्यवोजागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ विष्णुर्योनिं कल्पयतु त्वष्टारूपाणिपिंषतु असिंचन्तु प्रजापतिर्धातागर्भं दधातुते। गर्भं धेहिसिनीवाली गर्भं धेहिसरस्वति गर्भं ते अश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ इति मंत्रेण निवृत्यादिषोडशकला आवाह्य प्रतिष्ठाप्य ओं निवृत्यादिषोडशकलाभ्योनम इति गन्धादिभिः सम्पूज्य पुनः प्रत्येकं स्वनाममंत्रेण पू० यथा ओं अँ निवृत्यैनमः

---

ध्यात्वादेवं क्षिपेदंभः शंखस्थं तत्कलात्मकम्। ( घटेइतिशेषः ) मंत्रेणानेन देवेशि कलशं चाभिमंत्रयेत्। कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रित। मूले तस्यस्थितोब्रह्मा मध्ये मातृगणास्स्मृताः। कुक्षौ तु सागराः सर्वे सप्तद्वीपावसुन्धरा ऋग्वेदोऽथयजुर्वेदः सामवेदोह्यथर्वणः अङ्गैश्च सहिताः सर्वे कलशंतु समाश्रिताः इत्युक्त्वा मूलमंत्रेण मन्त्रयेदष्टधा घटम् ॥ (शारदायाम्) पश्चादश्वत्थपनसचूतकोमलपल्लवैः। इन्द्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः ॥ कुंभवक्त्रं पिधायास्मिंश्चषकं सफलाक्षतम्। संस्थापयेत्फलधिया विधिवत्कल्पशाखिनाम् ॥ ततः कुंभं निर्म्मलेन क्षौमयुग्मेन वेष्टयेत्। ( मेरुतंत्रे ) एतत्प्रधानकुंभस्य स्थापनं परिकीर्तिनम् ॥

॥ इति प्रधानकलशस्थापन प्रक्रिया ॥

---

इतीहतंत्रसम्मतं प्रधानकुंभवेशनम्।
विविच्य सुप्रकाशितं विकाशयन्त्विदं बुधाः ॥

ओं ओँ प्रतिष्ठायै नमः ओं इँ विद्यायै नमः ओं ईँ शान्त्यै नमः ओं उँ इन्धिकायै नमः ओं ऊँ दीपिकायै नमः ओं ऋँ रेचिकायै नमः ओं ॠँ मोचिकायै नमः ओं लृँ परायै नमः ओं ॡँ सूक्ष्मायै नमः ओं एँ सूक्ष्मामृतायै नमः ओं ऐँ ज्ञानामृतायै नमः ओं ओँ आप्यायिन्यै नमः ओं औँ व्यापिन्यै नमः ओं अं व्योमरूपायै नमः ओं अः अनन्तायै नमः इति। एवं कलानां पूजनं कृत्वा कलात्मकं शंखस्थजलं कुंभे निःक्षिपेत अत्रैवाचारात् कलशे सूर्यमण्डलात्तीर्थावाहनम् तत्र मंत्रः गङ्गे च यमुने चैवेत्यादि सर्वम। ततोऽश्वत्थपनसचूतादिपंचपल्लवैरिन्द्रवल्लीवेष्टितैः कल्पवृक्षाधिया कुंभवक्त्रं विधाय तस्मिन्कुंभमुखे सफलात्मकं चषकं कल्पवृक्षफलाधिया स्थापयेत्। ततः क्षौमवस्त्रयुगलेन वेष्टयेदिति प्रधानकुंभस्थापनविधानम्॥

# अथ यंत्रपीठनिर्माणम्

प्रथमं प्रधानदेवतापूजनार्थं सुवर्णादिधातुनिर्मितं रत्नादिनिर्मितम्वा यंत्रं अग्न्युत्तारणादिविधिना सुसंस्कृतं विधाय तत् क्षौमवस्त्रपरिछन्नं कृत्वा शतचण्ड्यां नवार्णप्राधान्याद्विहितक्रमेण नवार्णयंत्रं विलिख्य तत्कलशोप-

उक्तं च भगवता (मार्कण्डेयेन) सुस्नातस्तिलतैलेन पूर्वाह्णे च नृपोत्तम। पुण्याहवाचनं कृत्वा द्विजांश्चैव प्रपूजयेत्॥ ततश्च

रि विन्यस्तचषकेदृढं स्थापयित्वा ततः पीठपूजनमारभेत्
यंत्रपीठयोर्नामभेदोनतु रूपभेद इति
गोविन्दकृतकल्पवल्ल्युक्तशतचण्डीप्रयोगे सर्वतोभद्रपूज-

कारयेद्वेदिं सप्तधान्ययुतां नृप। स्थापयेत्पूर्णकलशं पञ्चरत्नसमन्वितम् ॥ वस्त्रे चारक्तके चैव संलिखेद्यंत्रमुत्तमम्। यंत्रोद्धारं प्रयत्नेन ज्ञातव्यं तु नृपोत्तम ॥ चतुरस्राष्टषट्कं च त्रिकोणं संलिखेत्ततः। षट्कोणचक्रमध्यस्थमाद्यबीजत्रयं न्यसेत् ॥ पूर्वादिषट्सु कोणेषु बीजान्यन्यानि वेशयेत्। प्रथमं च चतुर्द्वारं भूपुरं सुन्दरं लिखेत् ॥ कुंकुमागुरुकर्पूरैश्चन्दनैश्च सितासितैः। चम्पकैर्म्मल्लिकाभिश्च तथा कस्तूरिकादिभिः ॥ केशरैर्विलिखेद्यन्त्रं हेमाभालेखनी शुभा। इति (अथयंत्र विषयेप्रमाणम्) कलशस्थापनाशक्तस्तु यंत्रादौ पूजां कुर्य्यात् तदुक्तं (सिद्धान्तसारे) कलशस्थापनाऽशक्तोयंत्रादौ पूजनं चरेत् अत्रादिशब्देन प्रतिमा शिवलिङ्गशालग्रामादयः संगृह्यंते। एतेन कलशाभावे यंत्रपूजा विहिता। (शान्तिसारादौ तु) कलशारोपणेकृतेऽपि पूजा तदुपरिस्थापितयंत्रएव विशेषतश्चण्डिकाप्रयोगे दुर्गामखमहोत्सवादौ च। कलशं संस्थाप्य तत्रयंत्रंनिधाय पूजनं कृतं यथा (मंत्रमहोदधौ, वेद्यां विरचिते रम्ये सर्वतो भद्रमण्डले। घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ इत्युक्तम्। मतद्वयमपि तथ्यम्परन्तु मार्कण्डयपुराणोक्ताचरणमेव सर्वत्रादृतमतस्तत्प्रकारेण कलशोपर्य्येवयंत्रं निधाय पूजामाद्रियते। पूजार्थं पीठनिर्णयो (मेरौ) गणेशसूर्यविष्णवीशदेवीनां पूजनं क्रमात्। दशस्थानानि देवानां पूजार्थं कल्पितानि वै ॥ शिवलिङ्गे मणौ यंत्रे शालग्रामे घटे रवौ। स्थण्डिलेग्नौ मूर्द्धिन हृदिस्थानेष्वेतेषु पूजयेत ॥ भूमावेव कृता पूजा पुत्रायुर्धननाशिनी। तत्रैव पीठयंत्रयोरभेदेन ततः प्रणम्य च गुरुं पूजाचक्रं समुद्धरेत्। सुवर्णरचिते पीठे

नान्ते मण्डलमध्ये कलशं संस्थाप्य इमंमे इत्यादिपूर्णपात्रान्तं कृत्वा तत्र रक्तवस्त्रे यंत्रं लिखेदित्युक्तम् । पुनश्च अग्न्युत्तारणपूर्वकं यंत्रं तस्मिन् कलशे स्थापितमिति ततः पीठपूजनावरणदेवतापूजनयुतं श्रीमहालक्ष्मीपूजनं कृतमिति

भूपालावशवर्त्तिनः ॥ रजतेन कृतं यंत्रमायुरारोग्यकामदम् । ताम्रेण रचितं यन्त्रं सर्वैश्वर्य्यप्रदं मतम् ॥ यंत्रं तु स्फाटिकं स्वच्छं मनोभिलषितप्रदम् । माणिक्यरचितं यंत्रं सर्वशत्रुविनाशनम् ॥ लोहत्रयोद्भवं यंत्रं सर्वाशक्तिकर मतम् । श्रीखण्डं शान्तिदं ज्ञेयं पुष्टिदं रक्तचन्दनम् ॥ श्रीपर्णीपीठमुद्दिष्टं पूजार्थं धनराज्यदम् । वैद्रुमे बहुला सम्पद्भूर्जपत्रे चतुष्पदाः ॥ गण्डकीभवपाषाणे भुक्तिमुक्तिरदूरतः । भूमौ सिन्दूररजसा रचितं सर्वकामदम् ॥ सीसकांस्यादिषु कृते सम्पत्तिं सन्ततिं हरेत् फलकायां पटे भित्तौ स्थापयेन्न कदाचन ॥ स्थापयेद्यदि मोहेन नाशयेत्तद्ध्रुवं कुलम् । अष्ट्यङ्गुलसुविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरम् । पलप्रमाणं कर्त्तव्यमर्चापीठं मनोहरम् ॥ यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः । तस्मिन्पीठे तु निर्माणं पूजा चक्रस्य कारयेत् ॥ ( रत्नसागरे ) अष्ट्यङ्गुलेन स्वर्णस्य रजतस्य तथैव च ताम्रस्य पूर्णसंख्यैव माणिक्यादौ यथेच्छया ॥ ( मेरुतंत्रे ) माणिक्यादिकपीठे तु मानन्यूनं न दोषकृत् । श्रीपर्णीचन्दनादीनामधिकं चेन्न दूषणम् ॥ एतद्भिन्नेतु ( रुद्रयामले ) एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् । स्वेच्छातोलं नरः कृत्वा प्रत्यवायं समश्नुते ॥ स्वेच्छातोलमिति । तोलकचतुष्टयपरिमितेन स्वर्णादिना यंत्रस्यनिर्म्माणासंभवे स्वेच्छयातदधिकं न कुर्य्यात् इत्यर्थः । प्रसङ्गात स्थिररेखयंत्रप्रतिष्ठाविधिमाह ( मेरौ ) लग्ने शुभग्रहोपेतेऽनुकूलगुणशालिनि । प्रतिष्ठां कारयेदेषां स्वर्चतिथ्यादिके क्षणे ॥ तथा आदौवेदोदितैर्मंत्रैर्विप्रोऽग्न्युत्तारणं चरेत् । धातु-

निर्मितयन्त्राणां मूर्तीनां च विशेषतः ॥ अग्निः ससिं वाजमिति सप्तर्चां सप्तिरुच्यते । मुनिस्त्रिष्टुप्छन्दउक्तं देवताग्निः प्रकीर्तितः ॥ अग्निशब्देन रहितं सूक्तमेतच्छतं पठेत् । अभिषिंचेच्छुद्धतोयैस्ततः सम्पूर्णसूक्तकैः ॥ अभिषिंचेच्छतावृत्त्याऽग्न्युत्तारणमिदं स्मृतम् । तथा—क्षौद्राज्यदुग्धैः प्रथमं नारिकेलांभसा ततः । अभिषिंच्याथ तोयेन क्वथितेनाद्धरौषधैः ॥ आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् । गन्धपुष्पैर्नवैर्धूपैर्दीपैर्नैवेद्यतर्पणैः ॥ त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च यथाविधि । (वामकेश्वरतन्त्रे) भैरव्युवाच—चक्रभेदं महादेव त्वत्प्रसादान्मया श्रुतम् । इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ॥ श्रीशङ्करउवाच—शृणु देवि महाभागे जगत्कारिणि कौलिनि । यन्त्र प्रतिष्ठाकर्माङ्गसर्वं वर्णविनिर्णयम् ॥ स्नात्वा संकल्पयेन्मन्त्री गुरोरर्चनमाचरेत् । पञ्चगव्यं ततः कुर्याच्छिवमंत्रेण सांत्रतम् ॥ तत्र चक्रं क्षिपेन्मंत्री प्रणवेन समाकुलम् । तदुद्धृत्य ततश्चक्रं स्थापयेत्स्वर्णपीठके ॥ स्पृष्ट्वा यंत्रं कुशाग्रेण गायत्र्या चाभिमंत्रयेत् । अष्टोत्तरशतं देवि देवताभावसिद्धये ॥ आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् । तत्रावाह्य महादेवीं जीवन्यासं च कारयेत् ॥ उपचारैः षोडशभिर्महामुद्रादिभिस्तथा । फलैर्नैवेद्यताम्बूलैर्देवीं तत्र समर्चयेत् ॥ पट्टसूत्रादिकं दद्याद्वस्त्रालंकरणादिभिः । मुकुरं चामरं घण्टां यथायोग्यं महेश्वरि ॥ सर्वमेतत्प्रयत्नेन दद्यादात्महिते रतः । ततोजपेत्सहस्रं च सकलेप्सितसिद्धये बल्यादिकं प्रदत्वा च प्रणमेच्चक्रराजकम् । अष्टोत्तरशतं जप्त्वा संपाताज्यं विनिःक्षिपेत् ॥ अष्टोत्तरशतं हुत्वा साज्यधान्यतिलेन च । मूलमंत्रं समुच्चार्य मंत्री यंत्राङ्गमाचरेत् ॥ होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् । धेनुमेकां समानीय स्वर्णशृङ्गाद्यलंकृताम् ॥ गुरवे दक्षिणां दद्यात्ततोदेवीं विसर्जयेत् । शिवमंत्रः प्रासादः । (सिद्धान्तसंग्रहे च) यंत्र प्रतिष्ठा—पञ्चगव्येन संशोध्य स्नाप्य पञ्चामृतैः पृथक् । अष्टाभिस्तीर्थकलशैः स्नापयेन्मूलमंत्रतः ॥ ततोभिमंत्रयेद्यंत्रं गायत्र्या वदयमाणया । अष्टोत्तरशतं

मंत्री मूलेनापि तथैव च ॥ यंत्रराजाय विद्महे महायंत्राय धीमहि तन्नोयंत्रं प्रचोदयात् । ततोदेवं समावाह्य प्राणान् संस्थाप्य मंत्रवित् । उपचारैः षोडशभिः पूजयेदिष्टदेवताम् ॥ अष्टोत्तर-सहस्रं च संस्कृते हव्यवाहने घृतेन जुहुयात्तत्र संपाताज्यं विनिः-क्षिपेत् ॥ ब्राह्मणान् भोजयेत्पश्चात्साधकोदेवताधिया । एवं संसा-धिते यंत्रे देवः सन्निहितोभवेत् ॥ ( मेरुतंत्रे ) आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् । गन्धपुष्पैर्नैवेद्यैर्धूपैर्दीपैर्नैवेद्यतर्प्पणैः ॥ त्रिरात्रे पूजयेद्देवीं त्रिसन्ध्यं च तथा निशि । इति ( वामाचारे कुलाचारे च यंत्रप्रतिष्ठायां विशेषः तत्र वामिनः पंचमकारैः पूज-यन्ति कौलिकास्तु निशायां शक्तिपूजां तथा दूतीयागं च कुर्व-न्तीत्यादिविधिस्त्वत्राप्रयोजकत्वान्नोद्धृतः ) परन्तु वामदक्षिण-मार्गेणोपासितयोर्यंत्रयोर्विशेषता प्रदर्श्यते यथा तंत्रे विहिता । महापापं न कुर्वन्ति पशुवद्वेदमार्गगाः । अग्निः शुचिव्रततमः शुचि-र्विप्रः शुचीरितम् ॥ अज्ञानतश्च लघुभिः सन्ध्यावंदननाशितैः । पातकैस्तैर्नलिप्यन्ते तस्मात्ते पशवः स्मृताः ॥ वामेनोपासितं यंत्रं तेषां दृष्टिपथे गतम् । तद्देवताक्षोभकरं विक्षिप्तः साधको-भवेत् ॥ दक्षिणोपासितं यंत्रं सूर्याग्निसमतेजसम् । पापिनां दृष्टि-दहनमुलूकानां यथा रविः ॥ यथा नृभिर्दिनकरोदये सर्वं निरी-क्ष्यते । दक्षसंस्थापितं यंत्रं तथा पुण्यात्मनां मतम् ॥ सान्निध्यं सर्वदेवानामवश्यं यंत्रतोभवेत् । मंत्रस्तु बीजवत्प्रोक्तः प्रतिमाद्यं शरीरवत् ॥ सिद्धायामपि सामग्र्यां विना मंत्रं फलं न हि (अत्र मंत्रं इतिस्थले यन्त्रं प्रतीयते तस्यैव प्रसंगात् । ) अथ प्रसंगा-त्पीठपूजाविचारः ( मेरुतंत्रोक्तः ) एक पीठे पृथक् पूजां विना यंत्रं करोति यः । तंत्रेण पूजयेद्यंत्रं सदैवं शापमाप्नुयात् ॥ आवाह्य देवतामेकामर्चयेच्चान्यदेवताम् । अन्ययंत्रेण पूजास्वा देवता शाप-कारिणी ॥ पूजनं बहुमूर्तीनामेकपीठे भवेद्यदि पृथक् चन्दन पुष्पाणि धूपदीपादि तंत्रतः ॥ ( तंत्रमपार्थक्यमिति ) खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते । व्यङ्गे मर्दे गुरुस्पृष्टे पतिते दुष्ट-

भूमिषु ॥ अन्यमंत्रार्चिते चैव पतितस्पर्शदूषिते । दशस्वेतेषुनो कुर्युः सन्निधानं दिवौकसः ॥ तत्रैव । देवस्य मंत्ररूपस्य यंत्रव्याप्तिमजानताम् । कृतार्चनादिकं सर्वं व्यर्थं भवति शांभवि ॥ ( यन्त्रपदस्यार्थोप्युक्तस्तत्रैव ) कामक्रोधादिदोषोत्थसर्वदोषनियंत्रणात् । यंत्रमित्याहुरेतस्मिन् देवस्तुष्यति पूजितः ॥ ( पुरश्चरणचन्द्रिकायाम् ) तत्तत्कल्पोक्तद्रव्येण विलिखेद्यंत्रमुत्तमम् ) सौवर्णे राजते ताम्रे पीठे भूर्जे परे भुवि ॥ विना यंत्रेण चेत्पूजा देवता न प्रसीदति । यंत्रलिखनद्रव्यमप्युक्तं ( मेरुतन्त्रे ) पूजायंत्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च । लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ॥ ( अत्रवाममार्गिणान्त्वन्योविधिः ) ( रुद्रयामले ) तु । ततः कुंकुमसिन्दूरैः कार्यं यंत्रं तु योगिना । सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥ चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः । अथयंत्रस्थितिकालः ( सारसंग्रहे ) ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा । तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥ यावज्जीवं सुवर्णं स्याद्रौप्यं द्वाविंशतिः प्रिये । ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके ॥ इदं च स्थिररेखारूपयंत्रम् अथफलम् ( रुद्रयामले ) ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् सौवर्णेऽनन्तफलदं मण्यादौ किं वदामि ते ॥ विद्रुमे रचिते यंत्रे पद्मरागेऽथवा प्रिये । इन्द्रनीलेऽथ वैडूर्ये स्फाटिके मरकते तथा ॥ धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् । यंत्ररेखाफलम् ( सौत्रामणितंत्रे ) ऋजुरेखे भवेल्लक्ष्मीर्वक्ररेखे दरिद्रता । यंत्रेदेवसन्निधौ कारणम् ( कुलार्णवे ) आदिरूपाच्च विम्बस्य पूजायां च विशेषतः । साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत् ॥ ( यामले ) एवं यंत्रं विनिर्म्माय तत्र देवीं प्रपूजयेदिति । देवीमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः ॥

इति पीठयंत्रविधानम् ।

इतीयमागमोदिते सुचण्डिकाप्रपूजने ।
विधिज्ञवर्य्यतोषिणी सुपीठयंत्रनिर्मितिः ॥

# अथप्रधानपूजनम्

मूर्तिस्थापनानन्तरम् पीठसँस्थाश्च यादेवताः तासा महालक्ष्म्या सहैक्यं विभाव्य कियत्क्षणं तिष्ठेत् ततः पीठमर्घोदकेनासिंच्य प्रधानपूजामारभेत् तत्र प्रथमं एकाग्रमनसा ध्यानं कुर्य्यात् यथा प्रथमं मूलेन आचम्य प्राणायामत्रयं च कृत्वा षडंगानि च विधाय ततः ॐ खड्गं चक्रगदेषु चापपरिघान् शूलं भुशुण्डीं शिरः शंखं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ॥ नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुंकैटभम् ॥ १ ॥ अक्षस्रक् (१) परशुं (२) गदेषु (३, ४) कुलिशं (५) पद्मं (६) धनुष्कुण्डिकां (७, ८) दण्डं (९) शक्तिमसिं (१०, ११) च चर्म (१२) जलजं (१३) घण्टां (१४) सुराभाजनम् (१५) । शूलं (१६) पाशसुदर्शने (१७, १८) च दधतीं हस्तैः प्रसन्नाननां सेवे सैरिभमर्दिनीमिहमहालक्ष्मीं

---

पीठपूजाफलं ज्ञानलवं सम्प्राप्य तेन सुतृप्तात्मा मण्डलार्चनमारभेत् मण्डलशब्देन श्रीजगदम्बिकायाआवरणदेवतामण्डलं बोध्यम् भगवतामार्कण्डेयेन प्रथमं आवरणदेवतामण्डलं सम्पूज्य प्रधानदेवतामण्डलं पूजितं तदनुसारिपूजनमन्यैश्च बहुभिः कृतम् परन्तु मेरुतन्त्रे पुरश्चर्य्यार्णवादि तन्त्रशास्त्रे पीठपूजनानन्तरं कलशं संस्थाप्य ततः प्रधानदेवतापूजनं लिखितमस्ति ततआव-

सरोजास्थिताम् ।२। घण्टाशूलहलानि शंखमुशले चक्रं धनुः-शायकं हस्ताब्जैर्दधतीं घनान्त विलसच्छीतांशुतुल्यप्रभां गौरीदेहसमुद्भवां त्रिजगतामाधारभूतामहापूर्वामत्रसरस्वती-मनुभजे शुम्भादिदैत्यार्दिनीम् ।३। इति पृथक्शक्तित्रयं ध्यात्वा ततस्तिसृभिः सम्मिलितामेकामेव त्रिगुणात्मिकां महालक्ष्मीं श्रीजगदम्बिकां स्थापितयंत्रे मूर्त्तौ वा कल्पयित्वा तदग्रे आयुधादिमुद्राः प्रदर्शयेत् ॥

---

रणपूजा उक्तं च यथा अथ "पुष्पोपचारान्ते कुर्य्यादावरणार्चनम्" इति अथ प्रथमं प्रधानदेवतापूजनमेव श्रेष्ठतरः पक्षः । साम्प्रदायिकश्च ततः मुद्राभुजायुधाकाराश्चण्डिकाग्रे प्रदर्शयेत् इति मार्कण्डेयपुराणोक्त्या भुजेषु यान्यायुधानि भुजायुधानि तेषामाकाराभुजायुधाकारास्तामुद्रादेव्यग्रे प्रदर्शयेत आयुधादीनि तु ध्यानोक्तानि अक्षस्रगादीनि तन्मुद्राश्चतन्त्रोक्ता अवगन्तव्याः यथा १ अक्षमाला ( ज्ञानार्णवे ) अङ्गुष्ठतर्ज्जन्यग्रे तु गन्थयित्वाङ्गुलित्रयम् । प्रसारयेदक्षमालामुद्रेयं परिकीर्तिता ॥ २ पर्शुमुद्रा ( तत्रैव ) तले तलन्तु करयोस्तिर्य्यक्संय्योज्य चाङ्गुलीः । संहताः प्रसृताः कुर्य्यात् मुद्रा परशुसंज्ञका ॥ ३ ( अथगदा-तन्त्रे अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते । गदामुद्रेयमाख्याता विष्णोः सन्तोषवर्द्धिनी ॥ ४ अथवाणमुद्रा (ज्ञानार्णवे) यथा हस्तगतोवासास्तथा हस्तं कुरु प्रिये । वाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ॥ अथवा दक्षमुष्टिस्थतर्जन्या दीर्घया वाणमुद्रिका । ५ ( कुलिशः ) ६ पद्ममुद्रा ( तंत्रान्तरे ) हस्तौ तु सम्मुखौ कृत्वा संनतावुन्नताङ्गुली तलान्तमिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका ॥ ७ अथधनुर्मुद्रा ( ज्ञानार्णवे ) यथा हस्तगतं चापं तथा हस्तं प्रिये कुरु । चापमुद्रेयमाख्याता वामहस्ते त्ववस्थिता ॥

## ❀ अथोपचारपूजनक्रमः ❀

ततः अस्मिन्मध्यमे वीजे वास्यां प्रतिमायाम् श्रीजगदम्बिकाचण्डिकायामूर्तिम्परिकल्पयामीति मनसा चिन्तयन्

(अथवा) अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् । दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता ॥ ८ ( कुण्डिकामुद्रा ) ९ ( दण्डमुद्रा ) १० [ शक्तिः ] ११ [ खड्गः ज्ञानार्णवे ] कनिष्ठानामिके वद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः । श्लिष्टाङ्गुलीतु प्रसृते संसृष्टे खड्गमुद्रिका ॥ १२ (चर्ममुद्रा) वामहस्तं तथा तिर्य्यक्कृत्वा चैव प्रसार्य च आकुञ्चिताङ्गुलिं कुर्य्याच्चर्ममुद्रेयमीरिता ॥ १३ ( जलजमुद्रा ) जलजः शंखः यथा वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना कृत्वोत्तानं ततोमुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुलयस्तथाऽश्लिष्टाः संय्युक्ताः सम्प्रसारिताः । दक्षिणाङ्गुष्ठसंसृष्टा मुद्रैषा शङ्खसंज्ञिका ॥ १४ (घण्टामुद्रा) इयं गरुडपर्य्यायापि तल्लक्षणम् । हस्तौ तु विमुखौ कृत्वा ग्रन्थयित्वा कनिष्ठके । मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा मध्यमानामिके द्वौ तु पक्षानिव विचालयेत् । एषा गरुडमुद्राख्या विष्णोः सन्तोषवर्द्धिनी ॥ ५ (सुराभाजनमुद्रा चषकं) ॥ १६ (शूलम्) अङ्गुष्ठेन कनिष्ठां तु वद्ध्वाश्लिष्टाङ्गुलित्रयम् । प्रसारयेत् त्रिशूलाख्या मुद्रैषा परिकीर्तिता ॥ १७ ( पाशः ) संयोज्याङ्गुष्ठकाग्रे तु तर्जन्यग्रे स्वके क्षिपेत् । एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्तिता ॥ १८ (सुदर्शनः) हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ । कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका ॥ इति । सर्वत्र मुद्राबन्धनमोक्षणे च वीजमंत्रपठनमावश्यकम् तद्यथा ( मेरुतन्त्रे ) ॐ क्लीमिति तु वीजाभ्यां मुद्राया बन्धनं स्मृतम् । दर्शयेन्मूलमंत्रेण ह्सूंवीजेन संत्यजेत् ॥ मूलमंत्रं समुच्चार्य्य षष्ठ्यन्तं पीठनाम च । मूर्तिं च कल्पयामीति मूर्तिं मध्ये विनिःक्षिपेत् ॥ ( इति मेरुः )

वाचा संवदन् मूलमंत्रोच्चारणपूर्वकं गन्धपुष्पादिकं मूर्तौ क्षिप्त्वा आवाहनं कुर्य्यात् । तद्यथा त्रिखण्डमुद्रया मुद्रान्तः पुष्पं निधाय देवतान्ध्यात्वा त्रिः सकृद्वा मूलमुच्चार्य्य ॐ भगवति जगदम्बिके इहागच्छेहागच्छेत्युक्त्वा सुषुम्णामार्गेण हृदयाम्भोजाद्वामणिद्वीपा(अनन्योपासकश्चेद्हृदयाम्भोजात्कामनोपासकश्चेन्मणिद्वीपादिति उपासकानामुपास्य देवस्य सततं हृदयेधिवास इति भावः ) त्पुष्पाञ्जलौ देवतामानीय मूलमंत्रमुच्चार्य्य आवाहनमुद्रया तां मूर्तौ विन्यस्य पुष्पाञ्जलिं देवताशिरसि क्षिपेत् इत्यावाहनविधिः

(पुनस्तत्रैव) आवाहनादिकं कुर्य्यान्मूर्त्यादौ नवधा तु तत् । आदावावाहनं कार्यं त्रिर्जपन्मूलमंत्रकम् ॥ स्वर्लोकात्सूक्ष्मरूपेण देव-आगत्य मूर्तिषु । स्थितएवं भावयित्वा सुषुम्णावर्त्मना सुधीः ॥ आनीय देवं स्वस्थानान्नासिकारन्ध्रनिर्गतम् । करे पुष्पाञ्जलिः स्थाप्य तं दद्याद्देवमूर्धनि ॥ ( करपुष्पाञ्जलौ ) इत्यपिपाठः । (सिद्धान्तसारे) पुष्पाञ्जलिं समादाय मुद्रया च त्रिखण्डया । यथोक्तां देवतां ध्यात्वा मूलमंत्रं समुच्चरन् ॥ सम्बुध्यन्तं देवनामात्रागच्छागच्छ चेत्यपि । मूलम्पुनः समुच्चार्य स्वस्थानादानयेच्छिवम् ॥ अत्र शिवपदं तत्तद्देवतापरम् । ( महाकालसंहितायाम् ) ततः

अथावाहनमुद्रा यथा ( लक्षणसंग्रहे ) हस्ताभ्यामंजलिं बद्ध्वाऽनामिकामूलपर्वणि । अङ्गुष्ठौ निःक्षिपेत्सेयं मुद्रा त्वावाहनी मता ननु किन्नामावाहनमित्युद्दिशे अतएवाभिपूर्णायादेवतायाः प्रयूजने । सादरं संमुखीभावमावाहनमिहोच्यते त्रिखण्डमुद्रा यथा ( वामकेश्वरतंत्रे ) शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः । याभिर्विरचिताभिस्तु सान्निध्यं त्रैपुरं भवेत् ॥ परिवृत्य करौ स्पृष्ट्वा अङ्गुष्ठौ कारयेत्समौ । अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ कनिष्ठिके नियुं जीतनिजस्थाने महेश्वरि । त्रिखण्डेयं समाख्याता त्रिपुराह्वानकर्मणि ॥

(अथसंस्थापननिधापने) ततःसंस्थापनमुद्रया मूलं पठित्वा ॐ भगवति श्रीजगदम्बिके मातरिहातिष्ठ इत्युक्त्वा देवेशि भक्तिसुलभे सर्वावरणसंयुते । यावत्त्वां पूजयिष्यामितावत्त्वं सुस्थिरा भव ॥ इति सम्प्रार्थ्य पुनर्मूलमुच्चार्य सन्निधापनमुद्रया श्रीजगदम्बिके चण्डिके मातरिहसान्निधेहीहसन्निधेहीतिसन्निधापनं कारयेत् ॥ ( अथसन्निरोधनम् ) पूर्ववन्मूलमुच्चार्य्य ॐ भगवति श्रीजगदम्बिके मातरिहसन्निरुद्धाभवेहसान्निरुद्धाभवेति सन्निरोधनमुद्रां प्रदर्शयेत् ॥ ततः प्रतिमायां स्थिरीभूतां देवतां संचिन्तयेत ॥ ( ततः

---

प्रसूनं संगृह्य त्रिखण्डमुद्रया सुधीः । करकच्छपिकां बद्ध्वा ध्यानं देव्याः समाचरेत् ॥ यस्य मंत्रस्य यद्ध्यानं यादृशं परिकीर्तितम् । तेनैव ध्यानयोगेन ध्यायीत जगदम्बिकाम् ॥ वहन्नासापुटद्वारा हृदयाम्बुजमध्यतः । देवीं पुष्पे समानीय पुष्पं यंत्रे प्रविन्न्यसेदिति । ( मेरौ ) देवस्य तेजस्तन्मूर्तावावाहन्याख्यमुद्रया । स्थापयेदुच्चरन्मूलमेतदावाहनं स्मृतम् ॥ [ मेरुतंत्रे ] ततः संस्थापनं कुर्य्यादिहतिष्ठेहतिष्ठ च । मूलान्ते देवता नाम तस्यान्ते च पठेदिति ॥ आस्थापनीयमुद्रां च दर्शयित्वा विभावयेत् । जातः स्थिरोभव इति पश्चात्सम्प्रार्थयेदिति ॥ देवेश भक्तिसुलभ-

तत्र किन्नाम स्थापनमित्युक्तमुद्दीशे । विभोर्निवेशनं यन्त्रे स्थापनं कथितं बुधैः ॥ किन्नामसन्निधापनमुत्युद्दीशे । पूजां प्रयुज्यमानायां तु गृहीत्वानुग्रहादिकम् कर्तुं सामर्थ्यमस्यास्तु तत्सान्निध्यं प्रचक्षते ॥ किन्नामसन्निरोधनमित्युद्दीशे । आकर्मकाण्डपर्य्यन्तं सान्निध्यंहि विभावयेत् । ससन्निरोध उद्दिष्टो भक्तितोमन्त्रवित्तरैः ॥ संस्थापनादिमुद्राः लक्षणसंग्रहोक्ता । यथा अधोमुखीत्वियं वै स्यात्स्थापनीति निगद्यते । इयमर्थादावाहनी । उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्संनिरोधिनी ।

सम्मुखीकरणम् ) सन्मुखीकरणार्थं प्रथमं सम्मुखीकरण-मुद्रां वद्ध्वा ततोमूलमुच्चार्य्य पश्चात् श्रीजगदम्बिके मातरिह सम्मुखीकृता भव सम्मुखी कृताभवेति पठन् स्वसम्मुखे चोपास्थितां देवतां ध्यानयोगेन पश्यन् प्रार्थयन् मुद्रां विसर्जयेदिति । ( अथावगुण्ठनम् ) देवतावगुण्ठने प्रथमं अवगुण्ठनमुद्रां वद्ध्वा देवताग्रे तां दर्शयन् मूलं च प्रपठन् तदन्ते मातः श्रीजगदम्बिके इहावगुण्ठिता भवा-वगुण्ठिता भवेत्युक्त्वा मुद्रां विसर्ज्यावगुण्ठितां भक्त्या

---

सर्वावरणसंयुतः यावत्त्वाम्पूजयिष्यामि तावत्त्वं सुस्थिरोभव ॥ एवं सम्प्रार्थ्य देवेशं सन्निधापनमाचरेत् । संनिरोधं ततः कुर्य्यात् मूलमुच्चार्य देवताम् । संवुद्ध्यन्तां समुच्चार्य्य संनिरुद्धोभवेति च ॥ द्विरुच्चरेत्कृपापूर्णां भक्तिभावनिरोधिताम् । प्रतिमायां स्थिरी-जातां देवतामिति चिन्तयेत् ॥ सम्मुखीकरणकारिका ( मेरुतंत्रे ) सम्मुखीकरणंकुर्य्यान्मूलमुच्चार्य्यदेवताम् । सम्बुद्ध्यन्तां वदेत्पश्चात् सम्मुखीभवइत्यपि ॥ ध्यायेत्स्वसम्मुखं देवं सुप्रसन्नाननाम्बुजम् । सम्मुखीकरणीं मुद्रां दर्शयेदिति ततस्मृतम् ॥ ( अथावगुण्ठन-विधिः ) ततोऽवगुण्ठनं कुर्य्यान्मूलमुच्चार्य्यदेवताम् । सम्बुद्ध्यन्ता-मवगुण्ठितोभवेतिप्रदर्शयेत् ॥ अवगुण्ठनमुद्रां च प्रदर्श्यचिन्तये-

सम्मुखीकरणावाहनयोर्मुद्राभेदः । सादरं सम्मुखीभावमावाहनमित्यु-ड्डीशोक्तत्वात् । अथक्रियामावगुण्ठनमित्युड्डीशे । आनन्दायतनं तत्वं सच्चिदानन्द लक्षणम् तदत्रसकलं व्याप्तं ध्येयंस्यादवगुण्ठने । सकलीकरणं कृत्वा मन्त्रैरेभि-रैकताम् । अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् । इत्यप्युड्डीशे । अथ सम्मुखीकरणावगुण्ठनसकलीकरणमुद्राः ( लक्षण संग्रहोक्ताः ) उत्तानमुष्टि-युगलं सम्मुखीकरणं भवेत् । सव्यहस्तकृतामुष्टि दीर्घाधोमुखतर्जनी । अवगुण्ठ-नमुद्रेयमभितोभ्रामितासती । देवताङ्ग षडङ्गानां न्यासः स्यात्सकलीकृतिः ।

सम्मोहितां विस्मयोत्फुल्ललोचनां जगदाम्बिकां ध्यात्वा सकलीकरणं कुर्य्यात् ( अथ सकलीकरणम् ) देवताया हृदयाद्यङ्गेषु षडङ्गमन्त्रान् विन्यसेत् । विन्यासस्तु षडङ्गमंत्रैः षडङ्गेषु पुष्पप्रक्षेपणमक्षतप्रक्षेपणं वा न स्वशरीरवत्स्पर्शनम्। यथा । पुष्पादिकं गृहीत्वा । हृदयाय नमः शिरसे स्वाहा शिखायैवषट् कवचायहूं नेत्रत्रयाय वौषट् अस्त्राय फडित्यादि पठन् तत्तदङ्गेषु पुष्पं क्षिपेदिति । अत्र निर्विभाङ्गिकदेवतानाम च प्रथमं गृहणीयात्तदन्ते हृदयादिमूलं पठित्वामातः श्रीजगदाम्बिके सकलीकृताभव सकलीकृताभवेति वदेत् इति। ( अथामृतीकरणम् ) मूलमंत्रेण दीपिनीमंत्रेण अकारादि-

---

दिति । भक्त्यासम्मोहितं देवं विस्मयोत्फुल्ललोचनम् ( सकलीकरणविधिः ) सकलीकरणं चैतद्देवस्यहृदयादिषु । षडङ्गमन्त्रान्विन्यस्यमूलमुच्चार्य्यदेवताम् । सम्बुद्ध्यन्तां च सकलीकृतोभववदेत्ततः । ध्यायेदङ्गिनिदेवेतुप्रतिष्ठाअङ्गदेवताः । यस्माद्भिन्नस्वभावानां यदभिन्नप्रयोजनम् । अङ्गानामङ्गिनासार्द्धं सकलीकरणाद्भवेत् । इति । अथामृतीकरणकारिका ( मेरुतन्त्रे ) अमृतीकरणं वक्ष्ये पीठे संस्थाप्य देवताम् । वद्ध्वा सम्यग्धेनुमुद्रां देवमूर्ध्नि प्रवर्षणम् ॥ जायते चामृतस्येति ध्यायन्नर्घोदकेन च ॥ त्रिःसिञ्चेन्मूलमंत्रेण दीपिनीमंत्रतस्त्रिधा । अकारादिक्षकारान्तमातृकाभिस्त्रिधा पुनः ॥ वाग्भवं वदयुग्मं च वाग्वादिनि च वाग्भवम् । क्लीँ क्लिन्नेक्ले दिनिक्ले दयमहाक्षोभमित्यपि ॥ कुरुयुग्मंकामवोजंसौँ मोक्षंकुरुयुग्मकम् । प्रासादश्चपराप्रासादःसप्तत्रिंशदक्षरः ॥ दीपिनीमनुराख्यातोदेवतेजोऽभिवृद्धिकृत् । मूलं सम्बोधनान्तं च देवनामाऽमृतीकृतः ॥ भवेतिच वदेदित्थममृती-

क्षकारन्तैर्मातृकावर्णैश्च त्रिधा त्रिधा धेनुमुद्रयाऽर्घ्योदकेनाऽमृतवर्षणबुद्ध्या देवतामूर्ध्नि सिञ्चेत्। इयमेवदेवताशुद्धिरमृतीकरणंचेति । तत्र मूलमंत्रस्तूपास्यमन्त्रएव स्वस्वदेवतायाश्रवगन्तव्यः यथात्र शतचण्ड्यादिप्रयोगे प्राधान्यान्नवार्णमंत्रोमूलमंत्रः । दीपिनीमंत्रश्च ऐंवद२वाग्वादिनिऐंक्लींक्लिन्नेक्लेदिनिक्लेदय महाक्षोभं कुरु२क्लींसौंमोक्षं कुरु२ ह्रीं स्हौं इति मातृकातु प्रसिद्धैव ॥ ततोधेनुमुद्रयैव मूलोच्चारपूर्वकं जगदाम्बिके अमृतीकृता भवामृतीकृता भवेत्युक्त्वा मुद्रां विसर्जयेदित्यमृतीकरणम् ॥ (अथ परमीकरणम्) ॥ तत्र महामुद्राम्बद्ध्वा देवतामस्तके परमामृतवर्षणाधिया मूलमंत्रमुच्चार्य्य श्रीजगदाम्बिके दुर्गे परमीकृताभव परमीकृताभवेति ब्रूयात्। इति परमीकरणम् । अशक्तश्चेदित्यादिवाक्यकथने तदा सर्वत्र मूलमंत्रमुच्चार्य्य आवाहिता भव, स्थापिता भव, सन्निहिता भव, सन्निरुद्धा भव, सम्मुखीकृता भव, अवगुण्ठिता भव सकलीकृताभव, अमृतीकृताभव, परमीकृताभव, इत्यादि वाक्यं

करणं भवेत्। अमृतीकरणे धेनुमुद्रा ( लक्षणसंग्रहे ) अमृतीकरणं धेनुमुद्रया सा च संमता । अन्योन्याभिमुखाश्लिष्टकनिष्ठाऽनामिका पुनः ॥ तथातत्तर्ज्जनीमध्याद्धेनुमुद्राऽमृतप्रदा । इति। अथ परमीकरणम् ( मेरुतन्त्रे ) परमीकरणं वक्ष्ये महामुद्रां च बन्धयेत् । उच्चार्य्य मूलं देवं च पूर्ववत्परमीकृती ॥ कृतोभवेति च प्रोक्त्वा ध्यायेद्देवस्य मस्तके । परमामृतवृष्टिं च.......  अन्योन्य-
इति । महामुद्रा यथा ( लक्षणसंग्रहे )

वदन् आवाहनादिमुद्राः प्रदर्शयेत् । सर्वत्र देव्याः सम्बुद्धिपदं पूर्वं प्रयोक्तव्यम् । इति । यथा मूलान्ते हे देवि जगदम्बिके अत्रावाहिताभव२ इत्यादि ॥ एवमावाहनादिक्रियाः सम्पाद्य ततः श्रीजगदम्बिकामूर्तेः प्राणप्रतिष्ठां कुर्यात् । प्राणप्रतिष्ठाविधाने यन्न्यासादिकं तन्मृगमुद्रया पुष्पं गृहीत्वा तेन देवताङ्गं स्पृशन् कुर्य्यान्नाङ्गुलीभिः ॥ अथ प्रयोगोयथा ॐ प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि प्राणशक्तिर्देवता आँ बीजम् ह्रीं शक्तिः क्रौं कीलकम् श्रीजगदम्बिकाप्राणप्रातिष्ठायां विनियोगः ॥ ॐ ब्रह्मविष्णुमहेश्वरेभ्यऋषिभ्योनमः शिरसि । ॐ ऋग्यजुःसामभ्यश्छन्दोभ्योनमोमुखे । ॐ प्राणशक्त्यै देवतायै नमोहृदि । ॐ आँ बीजायनमोगुह्ये । ओं ह्रीं शक्तयेनमः पादयोः । ॐ क्रौं कीलकायनमोनाभौ । श्रीजगदम्बिकाप्राणप्रातिष्ठायां विनियोगः इति सर्वाङ्गे व्यापकम् ॥ ॐ आँ ह्रीं क्रौं अँ कँ खँ गँ घँ ङँ आकाशवायुतेजोजलपृथिव्यात्मने आँ अङ्गुष्ठाभ्यां नमः । ओं आँ ह्रीं क्रौं इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां स्वाहा । ॐ आँ ह्रीं क्रौं उँ टँ ठँ डँ ढँ णँ श्रोत्रत्वक्चक्षुजिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां वषट् ॥ ओं आँ ह्रीं क्रौं एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां हुँ ॥ ॐ आँ ह्रीं क्रौं ओं पँ फँ बँ भँ मँ वचनादानगमनविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां

वौषट् ॥ ॐ आँ ह्रीं क्रों अं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्ध्यहंकारात्मने अः करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिषु षडङ्गन्यासं कुर्यात ॥ ततः ओं आं नमः नाभेरधः । ॐ ह्रीं नमः कण्ठादधः ॥ ॐ क्रों नमः शिरसोधः । ॐ आँ ह्रीं क्रों इतिसर्वाङ्गे एवं व्यापकं विधाय ततः हृत्पद्मस्य पूर्वादिदलेषु कर्णिकायां च ॐ लं नमः रं नमः हं नमः षं नमः वं नमः यं नमः सं नमः शं नमः क्षं नमः इतिक्रमेण विन्यस्य ध्यायेत् । ध्यानं यथा रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशाविक्षुसरासवाणान् । शूलंकपालंदधतींकराब्जैः रक्तांत्रिनेत्रांप्रणमामि देवीम् ॥ इति ध्यात्वा पुष्पादिना देवता हृदयं स्पृष्ट्वा प्राणप्रतिष्ठां कुर्यात् ॥ तन्मंत्रोयथा ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः सोहं ॐ ऐं ह्रीं क्लीं चामुण्डायैविच्चे श्रीजगदाम्बिकायाः प्राणा इह२ स्थिताः । एवम् जीव इह२ स्थितः एवम् सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाः इहागत्य सुखं चिरन्तिष्ठन्तु स्वाहा । ततः प्रणवं मूलमंत्रं वा त्रिवारं जप्त्वा मूलमंत्रस्य ऋष्यादिकरषडङ्गन्यासान् विधाय स्वस्वकल्पोक्तमुद्राः प्रदर्श्योपचारान् समर्पयेत शतचाण्डिकायां दुर्गायाः प्राधान्यात् तन्मुद्राः पाश, अंकुश, वर, अभय, खड्गचर्मधनुःवाणमौशलदुर्गा इति दश प्रदर्शनीया इति । उपचारसमर्प्पणम् यथा प्रथमम् आसनम् गृहीत्वा देवीदमासनं

रम्यं मया तुभ्यं प्रकल्पितम् । भवैतस्मिन्निषण्णात्वं यावत् पूजां करोम्यहम् ॥ इत्युक्त्वा मूलमंत्रमुच्चार्य्य श्रीजगदम्बिकायै इदमासनं नमः इति देविवामभागे आसनं दद्यादिति प्रथमोपचारः । अथ द्वितीयः ततः साङ्गां सावरणां सायुधां देवतां पूजार्थमागतां ध्यात्वा मूलान्ते श्रीजगदम्बिके स्वागतम् इति तन्मुद्रया स्वागतं परिकीर्त्य इदं श्यामाकदूर्वाब्जाविष्णुक्रान्तासमन्वितम् । पाद्यं गृहाण देवेशि तीर्थतोयैः प्रकल्पितम् ॥ इत्युक्त्वा मूलान्ते श्रीजगदम्बिकायै पाद्यं नमः इति पाद्यपात्रस्थजलेन पादयोः पाद्यं

---

ग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः । महामुद्रेयमुदिता परमीकरणे प्रिये ॥ इति । ( उड्डीशे ) परमीकरणार्थः क्षमा तस्यापराधानां विज्ञेया परमीकृतिः ॥ अस्यार्थः । अपराधानामिति । अपरिच्छिन्नस्य ब्रह्मणआवाहनादिमुद्रया परिच्छिन्नता भावनारूपाऽपराधानामित्यर्थः । प्राणप्रतिष्ठाविधानकारिकाश्च पूर्वं भूतशुद्ध्यनन्तरं लिखिता अवगन्तव्या पुनःपुनर्लेखने व्यर्थं ग्रन्थविस्तृतिरेवेति । विशेषस्तु केवलं लिख्यते यथा ( मेरौ ) उक्तम् देवस्यहृदयंस्पृशन्नित्युपक्रम्य । कुर्य्यात्प्राणप्रतिष्ठां च ममस्थाने वदेत्तथा। देवतानाम शेषन्तु प्राग्वदिहैव हि ॥ इति ततः तत्तद्दैवतकल्पोक्तास्ततोमुद्राः प्रदर्शयेत् । ततः सम्पूजयेद्देवं शक्त्या लभ्योपचारकैः ॥ इति मेरुतंत्रवचनात् दुर्गाया दशमुद्राः । पाशाङ्कुशवराभीतिखड्गचर्मधनुःशराः । मौशली च तथा दौर्गी दुर्गाया दशमुद्रिकाः ॥ इति आसां लक्षणं तु मुद्राप्रकरणे द्रष्टव्यम् ततः विधाय देवतामूर्तौ मूलन्यासमशेषतः । आसनादिप्रसूनान्तान् उपचारान् समर्पयेत् ॥ इति । उपचाराश्च कतिधा तेषु यथाशक्त्या ग्राह्याः । यथा गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च । एते

दद्यादिति द्वितीयोपचारः ॥ ततः गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः । दूर्वाभिश्चसमायुक्त एषोर्घः प्रतिगृह्यताम् ॥ इत्युक्त्वा मूलमुच्चार्य्य श्रीजगदम्बिकायै अर्घ्यं स्वाहा । इति हस्तयोः शिरसि चार्घं दद्यात् इति तृतीयः ॥ ततः जातीलवङ्गकङ्कोलकर्पूरादिसुवासितम् । गृहाण देवदेवेशि एतदाचमनीयकम् ॥ इत्युक्त्वा मूलान्ते श्रीचण्डिकायै इदमाचमनीयं स्वधा इति वा मुखे आचमनीयम् तत्पात्रस्थजलेन दद्यादिति चतुर्थः ॥ आज्येन मधुना दध्ना त्वद-

---

पञ्चोपचाराश्च कैवल्यफलदायिनः ॥ इति पञ्चोपचारा ॥ पाद्यमर्घ्यं तथा स्नानं मधुपर्काचमनं तथा । गन्धादयोनिवेद्यान्त उपचारा दश क्रमात् ॥ ( महाकालसंहितायाम् ) पाद्यार्घाचमनीयं स्नानं चत्वार्यनुक्रमात् । गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥ पुनराचमनीयं च दशैतान् संप्रचक्षते । इतिदशोपचाराः ॥ ( कुलरत्नावल्याम् ) पाद्यार्घाचमनं स्नानं पुनराचमनीयकम् ) गन्धाक्षतप्रसूनानि धूपदीपनैवेद्यक्रमम् ॥ ताम्बूलं द्वादशप्रोक्ता उपचाराः प्रपूजने । इति द्वादशोपचाराः ॥ ( नवरत्नेश्वरे ) आसनं स्वागतं पाद्यं अर्घ्यमाचमनीयकम् । मधुपर्काचमनस्नानवसनाभरणानि च ॥ सुगन्धसुमनोधूपदीपनैवेद्यचन्दनम् । प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ इतिषोडशोपचाराः ॥ प्रायस्सर्वत्र षोडशोपचाराणामेव प्राधान्यादस्मिन्नपि विधाने तत्क्रमेणैव पद्धतिरचना ॥ प्रसङ्गादत्रशेषाश्चापि सर्वोपचाराः पृथक् २ परिगण्यन्ते । ( शारदायां च षोडशोपचारा यथा पाद्यार्घाचमनस्नानवसनाभरणानि च । गन्धपुष्पेधूपदीपौनैवेद्याचमनन्तथा ॥ ताम्बूलमर्चनास्तोत्रं तर्पणं च नमस्क्रिया । प्रयोजयेदर्चनायामुपचारास्तु षोडश ॥ इत्युक्तम् परन्त्वस्मिन्विधाने नवरत्नेश्वर-

र्थं परिकल्पितम् । गृहाण कांस्यपात्रस्थं मधुपर्कं सुरेश्वरि ॥ इति पठित्वा मूलान्ते श्रीजगदम्बिकायै मधुपर्कं स्वधा इति मुखे मधुपर्कं दद्यात् ततः पुनराचमनीयपात्रस्थजलेनाचमनीयवत् पुनराचमनीयं दत्वा । ततः तिलतैलसमायुक्तं सुगन्धिद्रव्यनिर्म्मितम् उद्वर्तनमिदं देवि गृहाण त्वं प्रसीद मे ॥ इत्युद्वर्तनं निवेद्य ततः गव्यं क्षीरं

---

मतेनैव पद्धतिरचना यतश्च तत्रासनस्वागतयोर्विधानमुपयुक्तमिति ॥ ( नवरत्नेश्वरे ) आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । स्नानं वासोपवीतं च भूषणानि च सर्वशः ॥ गन्धं पुष्पं तथा धूपदीपं अन्नं च तर्प्पणम् ॥ माल्यानुलेपनं चैव नमस्कारं विसर्जनम् ॥ अष्टादशोपचारैस्तु मंत्री पूजां समाचरेत् । इत्यष्टादशोपचाराः । ( सुन्दरीरहस्यवृत्तौ ) आसनाभ्यंजने तद्वदुद्वर्तननिरीक्षणे । सम्मानं वै सर्पिरादेः स्नपनावाहने ततः ॥ पाद्यार्घाचमनीये च स्नानीयमधुपर्ककौ । पुनराचमनीयं च वस्त्रं यज्ञोपवीतकम् अलंकारागन्धपुष्पे धूपदीपौ तथैव च ॥ ताम्बूलानि च नैवेद्यं पुष्पमाला तथैव च ॥ अनुलेपनशय्ये च चामरं व्यजनं तथा आदर्शदर्शनं चैव नमस्कारोप्यनन्तरम् ॥ गीतवाद्यवितानानि स्तुतिर्होमः प्रदक्षिणम् । दन्तकाष्ठप्रदानं च ततोदेवविसर्ज्जनम् ॥ उपचारा इमे ज्ञेयाः षट्त्रिंशत्सुरपूजने । इतिषट्त्रिंशदुपचाराः । यद्यप्यत्र क्रमोपचाराभावस्तथापि सूचीक्रमवदस्य निवन्धनं तंत्रे दृष्ट्वा उद्धृताः क्रमश्च वुद्ध्या कल्पनीयः ॥ एवं चतुःषष्ठ्युपचारादयस्सहस्रान्ताः प्रथमखण्डे तन्त्रान्तरे चोपनिवद्धा द्रष्टव्याः । ( कुलोड्डीशे ) उपचारेषु सर्वेषु यत्किंचिद्दुर्लभं भवेत् । तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ॥ तत्र तत्र जलं दद्यादुपचारान्तरान्तरा । उपचारसमर्पणविविवेकः ( सारसंग्रहे )

दधिघृतं शर्कराक्षौद्रसंयुतम् । पंचामृतं यदेतच्च तेन त्वां स्नापयाम्यहम् ॥ इति पठित्वा मूलमुच्चार्य्य पंचामृतेन जगदाम्बिकां स्नापयामि नमः । इत्येकीकृतेन पृथक्द्रव्येण वा संस्नाप्य ततः अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम् । सुगन्धिद्रव्यसंयुक्तं स्नानार्थं प्रतिगृह्यताम् ॥ इत्युक्त्वा मूलान्ते श्रीजगदाम्बिकायै स्नानं नमः इति शुद्धोद-

---

देवस्य वामभागे तु दद्यान्मूलेनचासनम् । पौष्पं दारुमयं वास्त्रं चार्मं कौशेयतैजसम् ॥ षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम् । पौष्पं सुगन्धिपुष्परचितं दारुमयम् कंटकिभिन्नं चन्दनादिघटितम् । वास्त्रं कार्पासम् । कौशेयं कम्बलादि । कौशेयं सप्तविंशतिकुशपत्राणां विष्टरइतिवा । तदुक्तं ( डामरे ) सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितः । विष्टरः सर्वयज्ञेषु लक्षणं परिकीर्तितम् ॥ इति ॥ तैजसं सुवर्णादिरचितं लोहसीसादिवर्ज्यम् । चार्म्मं मृगव्याघ्राद्यजिनम् । ( ज्ञानमालायाम् ) उपचारविधिं वक्ष्ये दत्वाचाऽथ शुभासनम् । स्वागतं कुशलप्रश्नं निगदेदग्रतस्ततः ॥ ( मेरुतंत्रे ) साङ्गं सावरणं देवं पूजार्थमिहचागतम् । ध्यात्वा इति तु मूलान्ते स्वागतं परिकल्पयेत् ॥ ( ज्ञानमालायाम् ) पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयाणुना । हृदयाणुना नमइति मंत्रेणेत्यर्थः । ( यामले ) हस्ताब्जयोस्ततोदद्यादर्घ्यं तोयैः सुवासितैः । ( ज्ञानमालायान्तु ) अर्घ्यं दिशेत्तोयमूर्ध्नि शिरोमंत्रेणदेशिकः इत्युक्तम् । शिरोमंत्रेण स्वाहेत्यर्थः । ( महाकालेनापि ) अर्घ्यं मूर्ध्नि प्रदातव्यम् स्वाहामंत्रेण साधकैः । ( क्रमदीपिकायाम् ) अर्घ्यदानानन्तरं पाद्यदानमुक्तम् । दत्वासनं स्वागतमित्युदीर्य्य तथार्घपाद्याचमनीयकानि । इति ( सिद्धान्तसारे ) स्वधामंत्रेण वदने दद्यादाचमनीयकम् । जातीलवंगकंकोलैस्तदुक्तं

दकेन शंखस्थेन स्नानं कारयेत् ॥ ततोमूलान्ते श्रीजगदम्बिकायै पुनराचमनीयं स्वधेत्याचमनं दद्यात् अथवा वँ इति बीजं पठित्वा पुनराचमनं कारयेत। इत्याचमनमपि तत्पात्रेणार्थात्तृतीयाचमनपात्रस्थजलेन कारयेत् पात्राभावे तु सर्वं शंखोदकेनवेति ततोऽङ्गप्रोक्षणादिकं सर्वं मूलेन कार-

मंत्रवेदिभिः ॥ तथा । स्वधाणुना ततः कुर्य्यान्मधुपर्कं मुखाम्बुजे । आज्यं दधिमधून्मिश्रमयमुक्तोमनीषिभिः ॥ ( कुलोड्डीशे ) तु । क्षीरशर्करयोरपि मधुपर्काङ्गत्वमुक्तम् । माक्षिकं शर्करा सर्पिर्दधिक्षीरयुतं तथा । मधुपर्कं कल्पयित्वाप्रदद्याद्विधिपूर्वकम् ॥ सर्वतः क्षौद्रमधिकम् दधिसर्पिः सिता समम् । क्षीरं तु सर्वतः स्वल्पं मधुपर्क उदाहृतः ॥ (शारदायाम्) तेनैव मनुना कुर्य्याद्द्भिराचमनीयकम् । तेनैव मनुनेति स्वाहामंत्रेणेत्यर्थः । ( अत्रसुधार्णवकृतः ) वारुणेन च वीजेन दद्यादाचमनीयकम् । मधुपर्कं मुखे दद्याज्जलमंत्रेण देशिकः ॥ इतियामलस्वतंत्रवचनसंगत्यनुरोधेन स्वधामंत्रेणान्यत्र सुधामंत्रेणेति पाठमाश्रित्य सुधाशब्दस्यामृतवाचकत्वात् तद्वीजेन विन्दुयुक्तवकारेण मधुपर्कमाचमनीयं च दद्यादित्याहुः । ( तत्वसारकृतस्तु ) त्यागार्थकस्वाहाशब्देनार्घ्यदानविधानात् तत्समभिव्याहृताचमनीयदाने त्यागबोधकः स्वधाशब्दोगृह्यते । नतु वरुणवीजं तस्य त्यागार्थकत्वाभावात् ॥ तथाच ( कुलसारे ) आदौ मंत्रं समुचार्य्य पश्चाद्देवं समर्चयेत् । संप्रदानं तदन्ते तु त्यागार्थकपदं ततः ॥ एवं क्रमेण देवेशि उपचारान्प्रकल्पयेत् । यत्तु । मधुपर्कं ततःकुर्य्याज्जलमंत्रेण देशिकः । स्वधाणुना ततः कुर्य्यान्मधुपर्कं मुखाम्बुजे ॥ तेनैव मनुना कुर्य्याद्द्भिराचमनीयकम् । वारुणेन च वीजेन दद्यादाचमनीयकम् । इति वचनद्वयं तद्वर्णभेदेनव्यवस्थापनीयम् शूद्राणां स्वधेत्युचारणेऽनधिकारात् । इत्थं च नमः स्वाहास्वधावौषडित्या-

यित्वा इयं सुसूक्ष्मे मृदुनी कीटकोशसमुद्भवे । कृपया देव देवेशि परिधत्स्व सुवाससी ॥ इति पठित्वा मूलमुच्चार्य्य श्रीजगदम्बिकायै वस्त्रं नमः इति क्षौमादिवस्त्रयुग्मं निवेद्य मूलान्ते श्रीजगदम्बिकायै यज्ञोपवीतं नम इति यज्ञोपवीतं

---

दीनां त्यागार्थकनयातैरेव मंत्रैरुपचारदानं तद्व्यतिरिक्तमंत्रेणो- पचारसमर्प्पणं तु प्रमाणशून्यमिति व्याजह्रुः । केचित्स्वधामंत्रेण मधुपर्काचमनीयदानस्य सकलतंत्रसम्मतत्वात् जलमंत्रेणेत्यादौ तृतीयायाः साहित्यमर्थस्तेन च जलबीजसहितेन स्वधामंत्रेणद द्यादिति वदन्ति । अन्येत्वाचमनीयसाधने जलमंत्रस्तद्दाने तु स्वधेति सङ्गमयन्ति । ( निबन्धे ) स्नानं वासोऽलंकरणं गन्धं पुष्पं हृदार्प्पयेत । हृदा नमः शब्देन । ( कालोतंत्रेतु ) स्नानं गन्धं हृदा दद्यात् पुष्पाणि वौषडित्यपि । इत्युक्तम् । ततोनिवेदया- मीति सर्वं दद्यान्महेश्वरि ॥ ( सर्वमिति ) वस्त्रालंकारधूपदीपा- दीनीत्यर्थः । नैवेद्यदाने तु विशेषउक्तः । ( सिद्धान्तसारे ) निवेदयामि हृद्वह्निजायाभिस्तत्वमुद्रया । देवतायै महेशानि दद्यान्नैवेद्यमुत्तमम् ॥ इति । ( मेरुतंत्रे ) सुगन्धितैलैरभ्यंज्य सुगन्धामलकादिभिः । उद्वर्त्तनं विधायाथ स्नापयेदुष्णवारिणा ॥ गन्धोदकैश्च मूलेन यथाशक्त्याभिषेचयेत । क्षीरमध्वाज्यदधिभिः खण्डेन च पृथक् पृथक् ॥ ( शारदायाम् ) गन्धाद्भिः कारयेत्स्नानं वाससी परिधापयेत् । वस्त्राण्युक्तानि ( मेरुतन्त्रे ) विष्णवे बगलामुख्यै पीतकौशेयवाससम् । शिवाय च सरस्वत्यै पार्श्वना- थाय शुभ्रकम् ॥ रक्तं शक्त्यर्कविघ्नानां भौमसौगतयोरपि । कृष्णं भैरवकाल्यादेः राधादेर्नीलमम्बरम् ॥ अच्छिद्रं मलहीनं च सदशं यत्नधारितम् । कार्पासजं वा कौशेयं राङ्कवं वा विशिष्यते ॥ तैलादिदूषिताद्रोगःसच्छिद्राद्व्याधिता भवेत् । परकीयाच दारिद्र्यं

निवेदयेत् । ततः सौभाग्याभरणं दिव्यं मुक्तारत्नोपशोभितम् । रमणीयामिदं देवि गृहीत्वा प्रीतिमावह ॥ इति पठित्वा मूलमंत्रान्ते श्रीजगदम्बिकायै स्वर्णादिघाटितान्याभरणानि निवेदयामि इति ततः कुरङ्गमदकर्प्पूररोचनादिसमन्वितम् । गृहाणमलयोत्पन्नमेतत् सुरभिचन्दनम् इति पठित्वा मूलमुच्चार्य श्रीजगदम्बिकायै गन्धं नमः इति

---

जीर्णादायुः क्षयोभवेत् ॥ दग्धाद्विपङ्कवेदास्यंदत्ते गात्रावलम्बिते । सूचीविद्धात्स्फोटकादि मलिनात्कान्तिहीनता ॥ उप्तकेशे पुत्रनाशश्चाधौते दीनता भवेत् । मिथ्याऽभिशापोभवति श्लेष्ममूत्रादिदूषिते ॥ ( तत्रैव ) यज्ञोपवीतं दत्वाथ भूषणानि समर्पयेत् । ङन्तं नमोन्तं तन्नाम पूजनादौ प्रयोजयेत् ॥ तानि नानाविधानि स्युर्मुकुटादिप्रभेदतः । स्त्रीपुंप्रभेदतश्चापि विज्ञेयानि विचक्षणैः ॥ गन्धः पञ्चविधः उक्तः ( सिद्धान्तसंग्रहे ) संघर्षजः परिमलः क्षोदजः प्राणिसंभवः ।कृष्णसाराभिधानश्च गन्धः पञ्चविधोमतः ॥ संघर्षजोघृष्टचन्दनादिः । परिमलः सुगन्धिद्रव्यविमर्द्दजन्यः । क्षोदजोगोरोचनादिचूर्णोत्पन्नः । प्राणिसंभवः कस्तूरिकादिः ॥ कृष्णसारस्तु श्रीखण्डादिसुरभिद्रव्याद्याकृष्टः। सारभागोभाषया अतर इति प्रसिद्धः ॥ तत्रैव । याक्षं दैवं च गान्धर्वं कर्दमं त्रितयं परम् । धर्म्मार्थकाममोक्षाणां साधनं देवतार्पितम् ॥ कर्दमत्रयविधानमपि तत्रैवोक्तम् यथा कुरङ्गमदकंकोलकालागुरुसिताभ्रकैः । प्रमोदकृद्देवतानां विज्ञेयोयक्षकर्दमः ॥ स एव रोचनायुक्तोदेवकर्दम उच्यते । पाटीरयुग्देवपंकोज्ञेयोगन्धर्वकर्दमः ॥ कुरङ्गमदः कस्तूरी । सिताभ्रं कर्पूरम् । पाटीरं चन्दनम् । (पुरश्चरणचन्द्रिकायाम् ) चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम् ।। कर्पूरागुरुकस्तूरीहिमाम्बक्षोदितं शुभम् ॥ ( मेरुतंत्रे ) कस्तूरिका चैकभागो

गन्धं निवेदयेत् इति ततः आचारात् कुंकुमाक्षतादिनिवेदनं पूर्ववत् ॥ ततः नानाविधानि पुष्पाणि जलस्थलरुहाणि च । सुगन्धीनि सुपुष्पाणि गृहाण जगदीश्वरि इत्युक्त्वा मूलान्ते श्रीजगदाम्बिकायै पुष्पं निवेदयामि वौषट् इति नमः इति वा पुष्पाणि निवेदयेदिति पुष्पान्तपूजनम् ततः पादुकां पूजयित्वावरणपूजामारभेत् इति ।

---

द्वौ भागौ मुस्तकस्य च । तदर्धैला जटामांसी त्वक्कुष्टं च शिलारसः ॥ चतुर्भागं वालकं च घृतभृष्टा तथा नखी । सुगन्धि कोकिला लोहवाणोराजवचा तथा ॥ अष्टौ भागाः केशरस्य मुराथाश्चाथ षोडश । काला गुरुश्चाकसीरं कालीयमथ वार्द्ध यः ॥ भागाः सेवन्तिकार्कस्य चन्दनेन विमर्दयेत् । कामोदनामासंदों देवताराजतोषकृत् ॥ इति । अथपुष्पभेदास्तत्रैवोक्तालिख्यन्ते । पुष्पं पञ्चविधं प्रोक्तं परं चापरमेव च । उत्तमं मध्यमं हीनं तेषां वक्ष्यामि लक्षणम् ॥ परं सुवर्णपुष्पं स्यात् तत्सदा योग्यमेव हि। अभ्यङ्गपूर्वकंदेयमर्चनार्हं पुनर्भवेत् ॥ अपरं राजतं पुष्पं ताम्रजं च प्रकीर्तितम् । सदायोग्यं चेदमपि त्रिवर्षं चैकवर्षकम् ॥ तुलसीकेतकीपद्मकरवीरं च मालती ॥ पंचैतान्युत्तमान्याहुर्मध्यमानि तथा दश ॥ मल्लिकाकुन्दमन्दारतगराजुनकिंशुकाः । पारिजातमशोकं च विल्वं चम्पकमेव च ॥ एतद्भिन्नं सुवर्णं च सुगन्धं हीनमुच्यते । तत्तन्मंत्रविधानेषु विहितानि समर्प्पयेत् ॥ अथ निषिद्धानि ( तत्रैव ) नार्पयेद्भूमिपतितं कोरकं कृमिभक्षितम् । अङ्गलग्नं समाघ्रातं म्लानं पर्य्युषितं तथा ॥ उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् । अशुद्धपात्रपाण्यङ्गवासोभिः कुत्सितात्मभिः ॥ आनीतं तन्निषिद्धं स्यान्मध्याह्नस्नानतस्तथा । अधोमुखार्पितं नेष्टं पुष्पांजलिविधौ न तत ॥ न पर्युषितदोषो-

ऽस्ति तुलसीविल्वचम्पके । जलजे वकुलेऽगस्त्ये मालाकारगृहेषु च ॥ केतकीकुटजैर्नेशं न वर्वयाच्चतैर्हरिम् । न दूर्वया यजेद्दुर्गां विल्वपत्रैर्दिवाकरम् ॥ लम्बोदरं तुलस्या च वृन्तहीनैः समर्चयेत् । देवताभेदेन पुष्पभेदाउक्ताः ( पाद्मे ) दूर्वारंभाविल्वपत्रैस्तुलसीवर्जितैः शुभैः । जलजैः स्थलजैः पुष्पैः श्वेतरक्तैर्गणाधिपम् । मालतीकुन्दमन्दारकुमुदैः शारदां यजेत् ॥ करवीरं जवापुष्पं पद्मं कोकनदं तथा । नीलोत्पलमशोकं च वन्धूकं दाडिमं तथा ॥ केतकं मल्लिकार्कं च त्रिसन्ध्यं च रवेः प्रियम् । कनकं कुमुदं कुन्दं तगरं कंटकारिका ॥ गिरिकर्णी विल्वपत्रं निषिद्धं रविपूजने । हयारिकुसुमं पद्मं कैरवं नागकेशरम् ॥ जातीसेवन्तिकाद्रोणपुष्पं नीलोत्पलं तथा । अर्कपुष्पमपामार्गमुन्मत्तं कुटजं तथा ॥ शमीपुष्पं विल्वपत्रं हरस्यातीववल्लभम् । केतकं च जयापुष्पं शिरीषं दमनं तथा ॥ विभीतकं चातिमुक्तं सर्जवन्धूकयूथिकाः । विष्णुक्रान्तामपि श्वेतां वर्जयेच्छिवपूजने ॥ मालतीमल्लिकायूथीचम्पकं नागकेशरम् । पाठलाकुन्दमन्दारं कह्लारमतिमुक्तकम् ॥ कर्णिकारं कुरवकं कदम्वं करवीरकम् । तमालं वकुलं नीलोत्पलं कमलकैरवे ॥ सेवन्तिका केतकं च दमनं मुनिपुष्पकम् । धात्रीपुष्पं शमीपत्रं अपामार्गस्य पत्रकम् । मृदूनां चैव दूर्वाणामङ्कुराः शतपत्रिका ॥ मंजरीसहकारस्य तुलसी च हरेः प्रिया । उन्मत्तमर्कपुष्पं च निर्गन्धमतिलोहितम् ॥ यदप्युत्कटगन्धं तद्वर्जयेद्विष्णुपूजने । रक्तपुष्पं विल्वपत्रं नृसिंहाय निवेदयेत् ॥ वर्जयेत्केतकीपुष्पमन्यत्सर्वं च पूर्ववत् । ( कालीतंत्रे ) नानोपहारवलिभिर्नानापुष्पैर्मनोहरैः । अपामार्गदलैर्भृङ्गैस्तुलसीवर्जितैः शुभैः ॥ पूजनीया सदा भक्त्या नृणां शीघ्रफलाप्तये । ( मुण्डमालायाम् ) पुष्पाण्यपि सदादद्याद्रक्तकृष्णसितानि च । श्वेतपुष्पं जवापुष्पं करवीरं तथा प्रिये ॥ तगर मालतीजाती सेवन्ती युथिका तथा धत्तूराशोकवकुलश्वेत कृष्णाऽपराजिताः ॥ वक पुष्पं तथा विल्वं चम्पकं नागकेशरम् । मल्लिकाझिण्टिका

काञ्चीरक्तं यत्परिकीर्तितम् ॥ अर्कपुष्पं ववरं च वन्धूकं च प्रियम्वदा । अष्टम्यां च विशेषेण तुष्टा भवति पार्वती ॥ पद्मपुष्पेण रक्तेन सन्तुष्टाः सर्वदेवताः । कृष्णैर्वा यदि वा शुक्लैः कालिका वरदा भवेत् ॥ ( मत्स्यसूक्ते ) सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेत्कुलैः । विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ॥ चौद्रपुष्पैर्विशेषेण वज्रपुष्पेण मिश्रितम् । सर्वं पुष्पं प्रदद्याच्च भक्तियुक्तेन चेतसा ॥ पूजनीया सदा भक्त्या नृणां शीघ्रफलप्रदा । कुलैर्वज्रपुष्पाद्यैः । ( कालिकापुराणे ) पुष्पं कोकनदं पद्मजपावन्धूकमेव च । सर्वेषां पुष्पजातीनां रक्तपुष्पं विशिष्यते ॥ ( यामले ) वज्रपुष्पं कालिकायै प्रदद्यात्सिद्धिहेतवे । योनिपुष्पं महेशानि वज्रपुष्पं निगद्यते ॥ वज्रपुष्पस्यत्रैविध्यमुक्तं ( मुण्डमालायाम् ) आषोडशादनूढायाउत्तमं सर्वसिद्धिदम् । वलात्कारेण ऊढाया मध्यमं भोगवर्धनम् ॥ रजोयोगवशादन्यदधमं सुखदायकम् । स्वयम्भूकुसुमं देवि त्रिविधं भुवि जायते ॥ अनूढायाअनुपभुक्तायाः । ऊढाया उपभुक्तायाः । ( तन्त्रान्तरे ) वज्रपुष्पेणार्पितेन यथा तुष्यति कालिका । न स्वर्णैन रत्नैश्च न स्पर्शमणिभिस्तथा ॥ अभावे वज्रपुष्पस्य जवापुष्पेण पूजयेत् । अर्कपुष्पेण वा पूज्या कालिका सर्वमंगला ॥ कालिकेतिदक्षिणाम्नायाधिष्ठात्री । उत्तराम्नायेत्वर्कपुष्पनिषेधउक्तो ( महाकालसंहितायाम् ) तुलसीभिरपामार्गैं र्त्तूरैः सिन्धुवारकैः । अर्कपुष्पैर्वासिकैश्च नैव देवीं प्रपूजयेत् ॥ इति विहितानि तत्रैवोक्तानि । शिरीषैः कर्णिकारैश्च चम्पकैः कोविदारकैः । वकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरण्टकैः ॥ लताभिर्ब्रह्मवृक्षस्य मृदुदूर्वाङ्कुरैरपि । काञ्चनारैरशोकैश्च पुन्नागैः केतकीदलैः ॥ सेफालिकाभिर्यूथीभिर्जातीभिर्दमनैरपि । शतपत्रैर्मल्लिकाभिरम्लानैर्वन्धुजीवकैः ॥ झिण्टीभिश्चजपापुष्पैः करवीरैश्च किंशुकैः । पारिजातैः पाटलैश्च पद्मैर्नीलोत्पलैरपि ॥ माधवीभिर्मरुवकैरपराजितयापि च । अशनैश्च कदम्बैश्च द्रोणपुष्पैः सकेशरैः ॥ अर्चयेत्कुसुमैरभिर्देवीं साधक-

सत्तमः। विल्वपत्रं यथाप्रीतिकरं देव्यावरानने॥ न तथाऽन्यत्किंचिदस्ति पुष्पेषु प्रीतिकारकम्। अतोयत्नेन दातव्यं विल्वपत्रं त्रिपत्रयुक्॥ तथा। नानापुष्पैर्विरचितादातव्यापुष्पमालिका। मालाभेदास्तु तत्रैवोक्ताः। एकजातीयकैः पुष्पैर्भिन्नजातीयकैरपि। मालातथैकवर्णास्याद्भिन्नवर्णापि वा प्रिये॥ सा पुनस्त्रिविधा ज्ञेया परिणाहवशेन तु। पतेद्धृदयपर्य्यन्तं या मालाऽऽमोदशालिनी॥ वैकच्चिका सा विज्ञेया सर्वावरतयास्थिता। अधोऽवलम्बिनीनाभेः कौसुमीस्रगुच्यते॥ साऽधोरिणोपरिज्ञेया मध्यमा पूर्वतोऽधिका। आगुल्फस्रंसिनी यातु पादपद्मोपरिस्थिता॥ वनमालेति साख्याता सर्वाभ्यः स्रग्भ्यउत्तमाः। अथद्वितीयविद्यायाः (नीलतंत्रे) अष्टम्यां च चतुर्दश्यां पूजयेच्च यथाविधि॥ आज्ञासिद्धिमवाप्नोति जवापुष्पं च वर्वरी॥ चन्दनं चार्कंकुसुमं दद्याच्छ्वेतापराजिताम्। वन्धूकमालया तुष्येत्तथाछागप्रदानवत्॥ (त्रिशक्तिरत्ने) वज्रपुष्पेण संमिश्रैरर्चयेत् सिद्धिहेतवे। अभावाद्वज्रपुष्पस्य स्मरणात्सिद्धिमाप्नुयात्॥ तुलसीमालतीवर्जं पुष्पं दद्यात्प्रसन्नधीः। (मत्स्यसूक्ते) पुष्पं श्रेष्ठं रक्तकोकं वन्धूकं शतपत्रकम्। वर्वरीद्वितीयं चैव कर्णिकारद्वयन्तथा॥ वकमन्दारचूतानि करवीराणि शस्यते। (कुलचूडामणौ) वर्जयेन्मालतीपुष्पं वर्जयेत्तुलसीदलम्॥ (तन्त्रान्तरे) वज्रपुष्पेण सर्वत्र पूजयेच्चीनसुन्दरीम्। उपचारान्तरसमर्पणेऽपि वज्रपुष्पं प्रतीच्छ स्वाहेति वक्तव्यम्। (श्रीविद्यापद्धतौ जलजानीह यावन्ति श्वेतकृष्णारुणानि च जपावन्धूकमुख्यानि रक्तानि स्थलजान्यपि॥ श्वेतान्यपि सुगन्धीनि मल्लिकावर्जितानि च। पीतान्यपि तथा विल्वपत्राणि च समर्पयेत्॥ निर्गन्धं कृष्णपुष्पं च तुलसीं च परित्यजेत्। तुलसीगन्धमात्रेण क्रुद्धा भवति सुन्दरी॥ नार्चयेत्त्रिपुरामम्बां पलाशकुसुमैरपि। काम्ये तु मल्लिका न निषिद्धा। तदुक्तं (ज्ञानार्णवे) मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः। श्वेतोत्पलसुगन्धैश्च पूजयेन्मासमात्रकम्॥

इति (कौलावलीये) सुन्दरीभैरवी काली ब्रह्मविष्णुविवस्वताम्। तुलसीवर्जिता पूजा सा पूजा सफला भवेत् ॥ विफलेति क्वचित्पाठस्तत्राप्यकारप्रश्लेषात्सफलेत्यर्थ. पर्यवस्यति । ब्रह्म-विष्णुविवस्वतामितिपुष्पचिन्तामणिकृल्लिखितपाठः प्रामादिकः । विष्णुपूजायां तुलसीनिषेधस्य स्वप्नेऽप्यश्रुतत्वात् ॥ (निर्वन्धे) रक्तपुष्पैर्विशेषेण सन्तुष्टा भुवनेश्वरी । तथैव छिन्नमस्ताऽपि पीतैस्तु वगलामुखी ॥ गुंजया तु विशेषेण मातङ्गी वरदा भवेत्। (मुण्डमालायाम्) श्मशानधतुरेणैव तुष्टा धूमावती परा । एवशब्दः प्राशस्त्यपरोनत्वन्ययोगव्यवच्छेदकः । श्रीविद्योदित-पुष्पैस्तु सर्वाविद्याः प्रपूजयेत् ॥ इतितन्त्रान्तरवचनात्। (मेरु-तन्त्रे) कुन्दमन्दारकुमुदमालतीपद्मकेतकम् । नन्द्यावर्ताह्वयं जातीकह्लारं चम्पकं तथा ॥ रक्तोत्पलादिपुष्पाणि लक्ष्म्याश्चाति-प्रियाणि हि। दुर्गायास्तु (भविष्यपुराणे] मल्लिकामुत्पलं पद्मं शमीपुन्नागचम्पकम् । अशोकं कर्णिकारञ्च द्रोणपुष्पं विशेषतः ॥ करवीरं जपापुष्पं कुङ्कुमं नागकेशरम्। यः प्रयच्छति पुण्यार्थं पुष्पाण्येतानि भारत ॥ चण्डिकायै नरश्र ष्ठ श्रद्धाभक्तिसमन्वितः। सकामान्यखिलान् प्राप्य श्रीदुर्गानुचरोभवेत् ॥ तथा । पुन्ना-गचम्पकः कुन्दोयूथिकानवमल्लिका । तगराजुंनमल्लीं च बृहती-शतपत्रिका ॥ तथा कुमुदकह्लारविल्वपाटलमालती। जवाविच-किलाशोकरक्तनीलोत्पलानि च ॥ दमनोमरुपत्रं च शतपुष्पं विवृद्धयं । तथा । सुगन्धिगन्धपुष्पैस्तु पूजयेद्यस्तु चण्डिकाम् । मुक्तिभिर्मालया वापि सोऽश्वमेधफलं लभेत् ॥ तथा। नीलोत्प-लसहस्रेण योमालां सम्प्रयच्छति। चण्डिकायै नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥ वर्षकोटिसहस्राणि वर्षकोटिशतानि च श्री-दुर्गानुचरोभूत्वा रुद्रलोके समोदते ॥ ग्रहाणामपि तत्रैव । हयारिकुसुमैः सूर्यं कदम्बैश्चन्द्रमर्चयेत् । क्षितिजन्तु जपापुष्पै-श्चम्पकेन च सोमजम् ॥ शतपत्रैर्गुरुःपूज्योजातीपुष्पैस्तु भार्गवः। मल्लिकाकुसुमैः पङ्गुः कुन्दपुष्पैर्विधुन्तुदः ॥ केतुश्च विविधैः

## ॥ अथावरणपूजनम् ॥

तत्र प्रथमं मूलमंत्रमुच्चार्य्य श्रीजगदम्बिकायाः पादुकां पूजयामि नमः इति पुष्पाञ्जलिना त्रिवारमभ्यर्च्य मूलमंत्र-पुटितैर्मातृकावर्णैर्देवतायास्तत्तत्स्थानेषु संपूज्य परिवारार्च-नार्थमाज्ञां गृह्णीयात् यथा जगद्धात्री जगद्वन्द्ये त्रिदशैराभि-पूजिते। मातराज्ञां निधेहि त्वं परिवारार्चनाय मे ॥ अथवा

---

पुष्पैः शान्तिकालेषु सर्वदा। ( यामले ) पुष्पैर्देवाः प्रसीदन्ति पुष्पेदेवाश्च संस्थिताः। किंचातिवहुनोक्तेन पुष्पस्योक्तिर्म्मतल्लिका॥ परंज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति। त्रिवर्गसाधनं पुष्पं पुष्टिश्रीस्वर्गमोक्षदम्॥ पुष्पमूले वसेद्ब्रह्मा पुष्पमध्ये तु केशवः। पुष्पाग्रे तु महादेवः सर्वेदेवाः स्थितादले॥ तस्मात्पुष्पैर्यजेद्देवं नित्यं भक्तियुतोनरः। ( क्रियासारे ) सर्वैः पुष्पैः सदा पूज्या विहिताविहितैरपि। कर्तव्या सर्वदेवानां भक्तियोगोऽत्रकारणम्॥ देवीपूजा सदा शस्ता जलजैः स्थलजैरपि। विहितैर्वानिषिद्धैर्वा भक्तियुक्तेन चेतसा॥ ( मेरुतन्त्रे ) पुष्पाऽभावेप्रवालैर्वा तद-भावे च कोरकैः। तदभावे फलैः पत्रैस्तदभावे तृणाङ्कुरैः॥ [ तन्त्रान्तरे ] पुष्पं वा यदि वा पत्रं यथोत्पन्नं तथार्पणम्। विल्वस्य खदिरस्यापि तथा धात्रीफलस्य च॥ तमालस्य च पद्मस्य छिन्नभिन्ने न दुष्यतः। [ मालिनीतंत्रे ] पूजयेत्परमेशानि पुष्पाऽभावे तु पत्रकैः। पत्राणामप्यलाभे तु द्रुमगुल्मोद्भवादि-भिः॥ तद्भुवामप्यलाभे तु तत्फलेन प्रपूजयेत्। अक्षतैर्वाजलै-र्वापि तदभावे तु सर्षपैः॥ सितैस्तेषामप्यलाभे मानसं पूजनं चरेत्। [ मेरुतन्त्रे ] अथपुष्पोपचारान्ते कुर्यादावरणार्चनम्। इदं च गौडादिसंप्रदाये अन्यत्र च धूपदीपनैवेद्यान्तं पूजनं वोध्यम्। ( मेरुतंत्रे ) आवरणपूजाक्रमः। अथपुष्पोपचारान्ते कुर्य्यादावर-

विश्वेशि करुणामूर्ते भक्तानुग्रहकारिके । अनुज्ञां देहि भवति परिवारार्चनाय मे ॥ इति भावनया आज्ञामादाय दिक्षु षडङ्गानि गन्धपुष्पादिभिः प्रथमं पूजयेत् यथा अग्निकोणे ऐं ह्रीं क्लीं हृदयाय नमः । ऐशान्यां ऐं ह्रीं क्लीं शिरसे स्वाहा । नैर्ऋत्ये तद्वाच्छिखायै वषट् । वायव्ये तथैव कवचायहुं । देव्यग्रे नेत्रत्रयाय वौषट् । सर्वदिक्षु अस्त्राय फट् इति अथवा सर्वत्र नमोन्तेनैव पूजयेदेवमङ्गपूजां कृत्वा पुष्पाञ्जलिमादाय अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्प्पये तुभ्यं प्रथमावरणार्चनामि । देव्याः करे पुष्पांजलिन्दद्यात् इति प्रथमावरणम् ॥ ततः षट्कोणे पूर्वादिक्रमेण ॐ गुं गुरुभ्योनमः । ॐ पं परमगु-

---

णार्चनम् । इत्येवपक्षमादृत्य सिद्धान्तसारमतेन प्रथमं मन्त्रमुच्चार्य श्रीपूर्वपादुकापदम् । द्वितीयान्तं समुच्चार्य पूजयामीति पूजयेत् ॥ एवं सोमभुजङ्गावलीमतमादाय ततश्च मूलमंत्रेण त्रिवारं पूजयेत्सुधीः । गृहीत्वाज्ञां महादेव्याः परिवारान्समर्चयेत् ॥ षडङ्गैः प्रथमः कल्पोगुरुभिस्तु द्वितीयकः । परिवारस्तृतीयः स्याल्लोकपालैश्चतुर्थकः ॥ तदस्त्रैः पञ्चमः प्रोक्तः इति सामान्यतः क्रमः । इतिक्रमेण यामलोक्त्या पाद्यादिना तथापश्चात्पूजयेदङ्गदेवताः इतिमतमासाद्य मेरुतंत्रोक्तेन मंत्रसम्पुटितैर्वर्णान्मातृकायाः सविन्दुकैः । क्रमेण गन्धपुष्पाद्यैर्देवस्याङ्गं समर्चयेत् ॥ तथा केसरेष्वग्निकोणादौ हृदयादीनि पूजयेत् । नेत्रमग्रे दिशास्वस्त्रं ध्यातव्याअङ्गदेवताः ॥ तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः । वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥ अग्नीशासुरवायव्यमध्यदिक्षु क्रमात्स्थिताः । ( तूर्णयागे ) समर्पणम् । यथा

रुभ्योनमः । ॐ पँ परापरगुरुभ्योनमः ॐ पं परमेष्ठिगुरुभ्योनमः । ॐ हरयेनमः । ॐ हरायनमः । इति सम्पूज्य पुष्पाञ्जलिं गृहीत्वा अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ इति देव्याः करे समर्प्य तृतीयावरणमारभेत् ॥ तृतीयावरणे तु परिवारपूजा इयं च स्वस्वपद्धत्यनुकूलैव बोध्या यथा महिषमार्दिन्या दक्षिणे ॐ ऐं महाकाल्यै नम इति महाकालीं पूजयेत् तत्पृष्ठे गौरीसहिताय रुद्राय नमः इति

---

अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् । इति पुष्पाञ्जलिं दद्यात्प्रणमेदतिभक्तितः । प्रत्यावरणमेवं तु तत्तन्नाम्ना समर्पयेत् ॥ अथदिग्ज्ञानम् (मेरुतंत्रे) देवस्य पुरतः प्राचीज्ञेयाऽवरणपूजने । तदादिपरिवाराणां प्रादक्षिण्येन पूजनम् ॥ मानसोल्लासे) पूज्यपूजकयोर्म्मध्ये प्राची संकीर्त्यते बुधैः । तद्दक्षिणं दक्षिणं स्यादुत्तरं चोत्तरं भवेत् ॥(ज्ञानार्णवे) उत्तराभिमुखोदेवि यदा चक्रं समुद्धरेत् । उत्तराशा तदा देवि पूर्वाशैव न संशयः ॥ पश्चिमाभिमुखोमंत्री यदा चक्रं समुद्धरेत् । पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ॥ वायुकोणं तदाग्नेयमीशानं राक्षसंभवेत । दक्षिणाशामुखोमंत्री यदा चक्रं समुद्धरेत् ॥ पूर्वाशैव तदा रक्षोरक्षःकोणन्तु वह्निमत् । पश्चिमाशाद्यभिमुखत्वं च काम्यपूजाविशेषपरम् । नित्यादिपूजायान्तु प्रागाननोवनदद्दिग्वदनोथवेत्यादिना दिग्द्वयस्यैव नियमात् । श्यामारहस्ये ) तंत्रान्तरे च । होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागं दक्षिणन्त्वागमज्ञैः । दक्षं विद्यादुत्तरं भागमग्र्यं प्रज्ञावद्भिः पश्चिमं पीठमुक्तम् ॥ पूर्वमिति पुरतः अग्र्यं स्वसम्मुखं तेन देवपृष्ठमेव प्रतीचीत्यर्थः । यस्तु इन्द्रादीन् साहजिकप्राच्यादिक्रमेण पूजयन्ति

गौरीसहितं रुद्रं पूजयेत् । मध्ये महिषमर्दिन्याः पश्चिमे देशे ह्रीं महालक्ष्म्यै नमः । तत्पृष्ठे लक्ष्मीसहिताय विष्णवे नमः । * इति लक्ष्मीसहितं विष्णुं पूजयेत् ॥ उत्तरे क्लीं महासरस्वत्यै नमः तत्पृष्ठे स्वरया ब्रह्माणं पूजयेत् । ततो महालक्ष्म्याः अष्टादशभुजाया दक्षिणे दक्षिणदेशमारभ्योत्तरोत्तरतः पुरः पर्य्यन्तं कालं, रुद्रं, सिंहं च पूजयेत् । कँ कालाय नमः । रुँ रुद्राय नमः । चौं सिंहाय नमः ॥ इति वत् ॥ एवं वामे उत्तरदेशमारभ्य दक्षिणदक्षिणतः पुरः

केचित् तत्प्रमाणशून्यम् ॥ ( शारदायाम् ) पश्चादभ्यर्चनीयाः स्यु. कल्पोक्तावृत्तयः क्रमात । अन्ते यजेल्लोकपालान मूलपारिषदान्वितान् ॥ हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात् इति ॥ कल्पोक्तावृत्तयश्च मार्कण्डेयपुराणाद्युक्ताः अत्र मार्कण्डेयोक्तनवशतसहस्रादिचण्डीविधाने यंत्रोद्धारे उक्तवचनानि शान्तिसारादुद्धृत्य लिख्यन्ते यथा यंत्रोद्धारः प्रयत्नेन ज्ञातव्योऽस्य नृपोत्तम । चतुरस्त्राष्टषट्कं च त्रिकोणं संलिखेत्ततः ॥ कुंकुमागुरुकर्पूरैश्चन्दनैश्च सितासितैः । पश्चकैः कालिकाभिश्च तथा कस्तूरिकादिभिः ॥ चतुरस्त्रे पूर्वदिशिन्यसेदुड्डाणपीठकम् । नाथमुण्डेश्वरं चैव मुण्डाख्यां पादुकां तथा ॥ न्यसेन्मातृकोपपीठमाग्नेय्यां पृथिवीपते । मातृकेश्वरोपनाथं च मातृकाख्योपपादुकाम् ॥ पीठंजालन्धरं चैव दक्षिणे तु तथैव च नाथं ज्वालामुखं चापि ज्वालाख्यां पादुकां तथा ॥ कोल्लापुरोपपीठं च नैर्ऋत्यां विन्य-

* महालक्ष्मीर्यदापूज्या महाकाली सरस्वती । दक्षिणोत्तरयोः पूज्येपृष्ठतो मिथुनत्रयम् ॥ विरंचिः स्वरयामध्येरुद्रो गौर्या च दक्षिणे । वामे लक्ष्म्या हृषीकेशः पुरतोदेवतात्रयम् । इति वैकृतिकरहस्ये परन्तु यंत्रोद्धारे दक्षिणान्यथैवोद्धृतम् उद्धारक्रमेण पद्धतिरिति ।

पर्य्यन्तं मृत्युं विजयं गणेशं महिषं च स्वनामवीजपूर्वकङे-न्तेन प्रपूजयेत्। अनेन क्रमेण श्रीजगदाम्बिकाया दक्षिणे सिंहोवामे महिष एव भवाति यथा शास्त्रोक्तमिति ॥ ततः षट्कोणे पूर्वादिप्रादाक्षिण्येन नन्दां रक्तदान्तिकां शाकंभरीं, दुर्गां, भीमां, भ्रामरीमिति स्वनामादिवीजेन पूजयेत् । ततोष्टदले पूर्वादितः ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं, नारसिंहीं, इन्द्राणीं, चामुण्डां स्वनामवीजेनैव चतुर्थ्यन्तेन पूजयेत् ॥ पुनस्तदग्रे तत्रैवासिताङ्गादिअष्ट-भैरवान् अपि तेनैव क्रमेण पूजयेत । असिताङ्गादयश्च यथा असिताङ्गः, रुरुः, चण्डः, क्रोधः, उन्मत्तः, कपाली, भीषणः, संहारभैरव इति । अत्रैवाष्टौलोकपालाश्चापि पूज्याः (इतिमार्कण्डेये) ततअष्टदलाद्बहिः भूगृहे पूर्वादितः

---

सैन्नृप । कोल्लारेश्वरोपनाथं कोल्लाराख्योपपादुकाम् ॥ पूर्णगिरी-शपीठं च पश्चिमे स्थापयेन्नृप । नाथं पूर्णेश्वरं वापि पूर्णाख्यां पादुकान्तथा ॥ संहाराख्योपपीठं च वायव्यां च प्रपूजयेत । संहाराख्योपनाथं च संहाराख्योपपादुकाम् ॥ उत्तरायां तथा देशे ओणपीठं प्रपूजयेत् । ओणकेश्वरनाथं च ओणाख्यां पादुकां तथा ॥ कामरूपोपपीठं च ईशान्यां पूजयेत्ततः । कामेश्वरोपनाथं च कामाख्यां चोपपादुकाम् ॥ इति ॥ ततः आग्नेय्यामग्निमुखं नैर्ऋत्यां प्रेतवाहनम् । ज्वालामुखं तु वायव्यां धूम्राक्षन्त्वीशत-स्तथा ॥ कोणेचतुष्टये चापि वेतालानां चतुष्टयम् । चक्र चाष्टदले चैव शक्त्यष्टकमुदाहृतम् ॥ भैरवाष्टकं च ततोलोकपालाष्टकं तथा । ब्राह्मीमाहेश्वरीचैव कौमारी वैष्णवी तथा ॥ वाराही चैव माहेन्द्री चामुण्डा चण्डिका तथा । असिताङ्गोरुरुश्चैव चण्डः

पूर्वे ॐ उड्डियाणपीठाय नमः उड्डियाणपीठं पूजयामि तर्पयामि ॥ ॐ नाथमुण्डेश्वराय नमः नाथमुण्डेश्वरं पूजयामि तर्पयामि । ॐ मुण्डाख्यपादुकायै नमः मुण्डाख्यपादुकां पूजयामि तर्पयामि । आग्नेय्यां ॐ मातृकोपपीठाय नमः मातृकोपपीठं पू० त० । ॐ मातृकेश्वरोपनाथायनमः मातृकेश्वरोपनाथं पू० त० ॐ मातृकाख्योपपादुकायै नमः मातृकाख्योपपादुकां पूजयामि तर्पयामि । दक्षिणे ओं जालन्धरपीठाय नमः जालन्धरपीठं पू० त० ॐ ज्वालामुखनाथाय नमः ज्वालामुखनाथं पू० त० ॐ ज्वालाख्यपादुकायै नमः ज्वालाख्यपादुकां पू० त० निर्ऋतौ ॐ कोल्लापुरोपपीठाय नमः कोल्लापुरोपपीठं पू० त० ॐ कोल्लारेश्वरोपनाथाय नमः कोल्लारेश्वरोपनाथं

---

क्रोधस्तथैव च उन्मत्तभैरवश्चैव कपालीभीषणस्तथा ॥ संहारभैरवश्चेति भैरवाष्टकमीरितम् । ( लोकपालाः ) इन्द्रोग्निश्चयमश्चैव निर्ऋतिर्वरुणस्तथा वायुः सोमस्तथेशानोलोकपालाः प्रकीर्तिता ॥ ततः षड्दले मार्कण्डेयपुराणोक्तषट्कोणार्चायाम् नन्दजा हेमगर्भाभा सुरक्ता रक्तदन्तिका । नीला शाकंभरी दुर्गा सर्वदुःखार्तिहारिणी ॥ दंष्ट्रार्चितमुखी भीमा नीलायात्रशिरोधरा । तेजोमण्डलदुर्धर्षा भ्रामरी वरदार्चिता ॥ पुनः यंत्रोक्तादेवतास्तत्रैव गुरुं परगुरुं चैव परमेष्ठिगुरुं तथा । गणेशं हरिहरौ चैव षड्दले चैव पूजयेत् । ( ततस्त्रिकोणे ) वाह्ये त्रिकोणके चक्रे प्रधानस्य च पृष्ठतः । पूजयेच्च महाकालीं रुद्रोगौर्या तया सह ॥ महालक्ष्मीं हृषीकेशोलक्ष्म्या च सहितस्तथा । सरस्वत्याः पृष्ठदेशे विरंचिः स्वरया सह ॥ कालश्च दक्षिणे पूज्योरुद्रश्चापि

पू० त० ओं कोल्लाराख्यपादुकायै नमः कोल्लाराख्यपादुकां पू० त० । पश्चिमे ओं पूर्णगिरीशपीठाय नमः पूर्णगिरीशपीठं पू० त० । ओं नाथपूर्णेश्वराय नमः नाथपूर्णेश्वरं पू० त० ओं पूर्णाख्यपादुकायै नमः पूर्णाख्यपादुकां पू० त० वायव्ये ओं संहारोपपीठाय नमः संहारोपपीठं पू० त० । ओं संहारोपनाथाय नमः संहारोपनाथं पू० त० ॐ संहाराख्योपपादुकायै नमः संहाराख्योपपादुकां पू० त० उत्तरे ॐ ओणपीठायनमः ओणपीठं पू० त० । ॐ ओणकेश्वरनाथाय नमः ओणकेश्वरनाथं पू० त० । ॐ ओणाख्यपादुकायै नमः ओणाख्यपादुकां पू० त० । ईशान्यां ॐ कामरूपपीठाय नमः कामरूपोपपीठं पू० त० ओं कामेश्वरोपनाथाय नमः कामरूपेश्वरोपनाथं पू० त० ओं

---

नृपात्मज । सिंहश्चापि तथाभक्त्या पूजनीयः प्रयत्नतः ॥ मृत्युवामे च विजयोगणेशोमहिषस्तथा ॥ मृतनामाततश्चापि त्रिकोणाद्बाह्यतस्तथा ॥ मध्ये त्रिकोणके चक्रे प्रधानां चण्डिकां नृप । अधिदेवीं महाकालीं दक्षिणे चैव पूजयेत् ॥ प्रत्यधिदेवतां चैव वामभागे सरस्वतीम् । पूजयेच्च नृपश्रेष्ठ वेदगर्भामनिन्दिताम् ॥ इतियंत्रोद्धारक्रमे पूजास्थाननिर्णयः । अत्र तु भूगृहतः उक्तोक्तस्थाने देवतापूजनं विहितं तत् प्रधानदेवतायाः पुष्पान्तपूजनात्परं त्रिकोणतएवभूगृहान्तं पूजनं भवति इदमेवावरणसंज्ञकं पूजनम् । अन्ते दिक्पालपूजनं तदस्त्रपूजनं च । इन्द्रादि लोकपालानांध्यानानि [ मेरुतन्त्रे ] इन्द्रं सुराधिपं पीतमैरावतगतं विभुम् । सहस्रनेत्रं द्विभुजं पीतवज्रधरं भजे ॥ ( इतीन्द्रस्य ) अग्निं तेजोऽधिपं रक्तं श्वेतशक्तिधरं प्रभुम् । सुरूपं मेषवाहं वन्दे रक्ताङ्गलोचनम् ॥

कामाख्योपपादुकायै नमः कामाख्योपपादुकां पू० त० । ततः तत्रैवाग्नेय्यां ओं अग्निमुखवेतालाय नमः अग्निमुखवेतालं पूजयामि तर्प्पयामि । निर्ऋतौ ओं प्रेतवाहनवेतालायै नमः प्रेतवाहनवेतालं पू० त० । वायव्ये ओं ज्वालामुखवेतालाय नमः ज्वालामुखवेतालं पू० त० । ईशान्यां ओं धूम्राक्षवेतालाय नमः धूम्राक्षवेतालं पू० त० एवं तृतीयमावरणपूजनं विधाय पुष्पाञ्जलिसमर्प्पणं तत्र तृतीयावरणार्चनमिति पदं प्रयोज्यम् ॥ अथ (चतुर्थावरणम् ) अत्र भूगृहस्य प्रथमवीथिकायाम्पूर्वादिक्रमेण इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तान् वक्ष्यमाणध्यानयोगेन स्वस्वादिशि पूजयेत् यथा पूर्वे इन्द्रं अग्निकोणे अग्निं दक्षिणे यमम् निर्ऋतौ निर्ऋतिं पश्चिमे वरुणम् वायौ वायुं उत्तरे सोमं ईशाने ईशानं पूर्वेशयोर्मध्ये

---

( इत्यम् : ) यमं प्रेताधिपं कृष्णं महिषोपरिसंस्थितम् । कालदण्डधरं क्रूरं वृतं दूतैर्भयानकैः ॥ ( इतियमस्य ) रक्षोधिपं च निर्ऋतिं शवासनसमाश्रितम् । धूम्राभं खड्गहस्तं च पिङ्गलश्मश्रुकूर्चकम् ॥ ( इतिनिर्ऋतेः ) मकरे संस्थितं विद्युन्निभया सकराम्बुजम् । शुभ्राङ्गं तुन्दिलं वन्दे वरुणं यादसांपतिं ॥ ( इति वरुणस्य ) वायुं प्राणाधिपं धूम्रं रक्ताङ्कुशकरं परम् । वातप्रमीसमारूढं धावन्तं वेगतोभजे ॥ ( इतिवायोः ) यक्षनाथं कुवेरं च शुक्लं शुक्लगदाधरं नरसिंहासनारूढं मेदुलं चित्रिणीयुतम् ॥ ( इतिकुवेरस्य ) विद्याधिपं नीलशूलधरं वृषभवाहनम् । त्रिनेत्रं भालचन्द्रं च जटाजूटधरं सितम् ॥ इतिईशानस्य लोकाधिपं विधातारं रक्तपद्मकरं शुभम् । हंसारूढं वेदपाठं कुर्वन्तं तमहं भजे

ब्रह्माणं । निर्ऋतिपश्चिमयोः अनन्तं पूजनक्रमस्त्वयमेव परन्तु शक्ति-पूजने सुधाकरादिग्रन्थे दिक्पालशक्तीनामेव पूजाविधानादत्रापि तेषांशक्तय एव पूज्याश्चेत् । न प्रामादिकः । तासां नामानि ध्यानानि च मण्डपपूजन-प्रकरणतोवगन्तव्यानि । एवं चतुर्थावरणं सम्पाद्य देवस्य करे पुष्पाञ्जलिं समर्प्ययेत् तत्र पूर्ववन्मंत्रं पठित्वा चतुर्थावरणार्चनमिति पठेत् ॥ इति चतुर्थावरणम् ॥ अथ ( पंचमावरणम् ) तत्र भूगृहचतुरस्रस्य द्वितीयवीथिकायाम् पूर्वादितः पूर्वपूजितदिक्पतीनां दिग्देवीनाम्वा निकटमेव तेषामायुधानि तासाम्वा वज्रं पूर्वे शक्तिं अग्नौ दण्डं दक्षिणे खड्गं निर्ऋतौ पाशं पश्चिमे अंकुशं वायौ गदा-मुत्तरे शूलमैशान्यां । पद्मं पूर्वेशयोः चक्रं रक्षः पश्चिमयोः क्रमेण वक्ष्यमाणवर्णध्यानेन पूजयेदिति ततः पुष्पाञ्जलि-दानमावरणपूजनसमर्पणं च पूर्ववत् । अत्रपंचमावरणमिति पदं योज्यं ॥ यथा, दयाब्धे ! त्राहिसंसारसर्पात् मां शरणा-गमतं । भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम् ॥ इति

( इतिब्रह्मणः ) गौरं नागाधिपं मूर्ध्नि फलामण्डलभूषितम् । पीनोत्तुङ्गं चक्रधरं अनन्तं विश्वगं भजे ॥ [ इतिअनन्तस्य ] ( शारदायाम् ) वज्रं शक्तिं दण्डमसिं पाशमंकुशकं गदाम् । शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः ॥ ( यामले ) पाणिमूले तु संलग्ने शाखाः सर्वाः प्रसारिताः । लोकेशानामियं मुद्राः तेषा-मर्चासु दर्शयेत ॥ इति अथ दिक्पालशक्तीनां ध्यानम् । प्रथम-खण्डस्थमण्डपपूजनप्रकरणादवगन्तव्यम् ।

आवरणपूजनानन्तरं (तन्त्रान्तरे) पूर्वादिक्रमेण भूगृहवाह्ये गणेश, वटुक, क्षेत्रपाल, योगिनीनामपि, पूजनं तदुपयुक्तत्वादुक्तंतदत्रापि कार्यं तत्क्रमः। पूर्वे गं गणपतये नमः। दक्षिणे वँ वटुकाय नमः। पश्चिमे क्षँ क्षेत्रपालाय नमः। ❀ उत्तरे यां योगिनीभ्योनमः योगिनीपूजनं तु देव्या वामभागे वस्त्रोपरि चतुःषष्टिकोष्ठं विधाय तेषु तण्डुलपुञ्जं निधाय तत्र कार्यं

## ❀ योगिनीपूजनम् यथा ❀

ॐ जयायैनमः जयामावाहयामि पूजयामि
" विजयायैनमोविजयामावा० पूजयामि
" जयन्त्यैनमोजयन्तीमावा० पूजयामि
" अपराजितायैनमः अपराजितामावा० पू०
" दिव्ययोगिन्यैनमोदिव्ययोगिनीमावा० पू०
" महायोगिन्यैनमोमहायोगिनीमावा० पू०
" सिद्धयोगिन्यैनमः सिद्धयोगिनीमावा० पू०
" गणेश्वर्य्यैनमः गणेश्वरीमावा० पू० ( इतिप्रथमाष्टकम् )
" प्रेताश्यैनमः प्रेताशीमावा० पू०
" डाकिन्यैनमोडाकिनीमावा० पू०
" काल्यैनमः कालीमावा० पू०
" कालरात्र्यैनमः कालरात्रिमावा० पू०
" टंकाक्ष्यैनमः टंकाक्षीमावा० पू०
" रौद्रवेताल्यैनमोरौद्रवेतालीमावा० पू०
" हुँकार्य्यैनमः हुँकारीमावा० पू०
" ऊर्द्ध्वकेशिन्यैनमः ऊर्द्ध्वकेशिनीमावा० पू०
( इतिद्वितीयाष्टकम् )



" विरूपाक्ष्यैनमोविरूपाक्षीमावा० पू०

,, शुष्काङ्ग्यै नमः शुष्काङ्गीमावा० पू०
,, नरभोजिन्यैनमोनरभोजिनीमावा० पू०
,, फट्कार्य्यैनमः फट्कारीमावा० पू०
,, वीरभद्रायैनमोवीरभद्रामावा० पू०
,, धूम्राङ्ग्यै नमोधूम्राङ्गीमावा पू०
,, कलहप्रियायैनमः कलहप्रियामा० पू०
,, राक्षस्यैनमोराक्षसीमावा० पू० (इतितृतीयाष्टकम्)
,, घोररक्ताक्ष्यैनमोघोररक्ताक्षीमावा० पू०
,, विश्वरूप्यैनमोविश्वरूपीमावा० पू०
,, भयंकर्य्यैनमोभयंकरीमावा० पू०
,, चण्डमार्य्यैनमश्चण्डमारीमावा० पू०
,, चण्ड्यैनमश्चण्डीमावा० पू०
,, वाराह्यैनमोवाराहीमावा० पू०
,, मुण्डधारिण्यैनमोमुण्डधारिणीमावा० पू०
,, भैरव्यैनमोभैरवीमावा० पू० (इतिचतुर्थाष्टकम्)
,, ऊर्ध्वाक्ष्यैनमऊर्ध्वाक्षीमावा० पू०
,, दुर्मुख्यैनमोदुर्मुखीमावा० पू०
,, प्रेतवाहिन्यैनमः प्रेतवाहिनीमावा० पू०
,, खट्वाङ्ग्यै नमः खट्वाङ्गीमावा० पू०
,, लम्बोष्ठ्यै नमोलम्बोष्ठीमावा० पू०
,, मालिन्यैनमोमालिनीमावा० पू०
,, मत्तयोगिन्यैनमोमत्तयोगिनीमावा० पू०
,, काल्यैनमः कालीमा० पू० (इतिपञ्चमाष्टकम्)
,, रक्तायैनमोरक्तामावा० पू०
,, कङ्काल्यैनमः कङ्कालीमावा० पू
,, भुवनेश्वर्य्यैनमोभुवनेश्वरीमावा० पू०
,, त्रोटिक्यैनमस्त्रोटिकीमावा० पू०
,, महामाय्यैनमोमहामायीमावा पू०

" यमदूत्यैनमोयमदूतीमावा० पू०
" करालिन्यैनमः करालिनीमावा० पू०
" केशिन्यैनमः केशिनीमावा० पू०   ( इतिषडष्टकम् )
" मेदिन्यैनमोमेदिनीमावा० पू०
" प्रवाहिन्यैनमः प्रवाहिनीमावा० पू०
" रोमगंगायैनमोरोमगंगामावा० पू०
" विडाल्यैनमोविडालीमावा० पू०
" कार्मुकायैनमः कार्मुकामावा० पू०
" लाद्यैनमोलाद्यीमावा० पू०
" जयायैनमो जयामावा० पू०
" अधोमुख्यैनमः अधोमुखीमावा० पू०
" मुण्डाग्रधारिण्यैनमोमुण्डाग्रधारिणी०पू०(इतिसप्ताष्टकम्)
" व्याघ्र्यैनमोव्याघ्रीमावा० पू०
" कांक्षिण्यैनमः कांक्षिणीमावा० पू०
" प्रेतभक्षिण्यैनमः प्रेतभक्षिणीमावा० पू०
" धूर्जट्यैनमोधूर्जटीमावा पू०
" विकट्यैनमोविकटीमावा० पू०
" घोरायैनमोघोरामावा पू०
" कपाल्यैनमः कपालीमावा० पू०
" विषलम्बिन्यैनमःविषलम्बिनी० पू०   ( इत्यष्टाष्टकम् )

एतासां पूजनं बलिश्च ।

इति एतान् पंचोपचारैः पूजयेत् अत्र पुष्पाञ्जलिदानमावरणवन्नकार्यं एतान् पूजयित्वा मूलमुच्चार्य साङ्गायै सवाहनायै सालंकारायै सायुधायै सपरिवारायै श्रीजगदम्बिकायै श्रीपादुकां पूजयामि नमः इति त्रिः सकृद्वा पादुकां सम्पूज्य पुनर्मूलमुच्चार्य तत्वमुद्रया श्रीजगदम्बिकां तर्पयामि नमः इति त्रिवारं जगदम्बिकां तर्पयेत् ॥ ततो-

धूपदीपादिकं विदध्यात् ॥

## ॥ अथ धूपदानविधिः ॥

धूपपात्राग्नौ धूपं निधायास्त्रमंत्रेण सम्प्रोक्ष्य नमः इति गन्धपुष्पाक्षतैः सम्पूज्य मूलमंत्रेणाभिमंत्र्य धेनुमुद्रया ऽमृतीकृत्य ॐ जयध्वनिमातः स्वाहा इति मंत्रेणास्त्रेण वा घण्टां सम्पूज्य वामहस्तेन तां वादयन् ॐ वनस्पतिरसो-

---

वज्राद्यायुधानां वर्णाः ( शारदायाम् ) वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् । शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः ॥ पीतशुक्लसिताकाशविद्युद्रक्तासितासिताः । कुरुविन्दुपाटलाभाव-श्चाद्याः परिकीर्तिताः ॥ ( तंत्रान्तरे ) गणेशं वटुकं क्षेत्रपालं च योगिनीन्तथा । पूर्वादिक्रमयोगेन गन्धपुष्पैः समर्चयेत् ॥ एषां पूजनन्तु वल्यर्थम् । तथा च ( शान्तिसारे ) देव्यावामभागे शुक्ल-वस्त्रोपरि चतुष्षष्टिसंख्यकं कोष्ठं निर्माय तत्र तण्डुलपुञ्जं निधाय क्रमेण चतुष्षष्टियोगिनीपूजनं कुर्यात् तासां नामानि प्रथम-खण्डीय मण्डपरचनायां सप्तपञ्चाशत ( ५७ ) पृष्ठे अवलोकनी-यानि । ( मेरुतन्त्रे ) पुनर्मूलं समुच्चार्य साङ्गायै सपरीति च वारायै नामदेव्याश्च चतुर्थ्यन्तमुदीरयेत ॥ नम इत्यर्चयेद्गन्धपुष्पाद्यैः साधकस्त्रिधा । ( तन्त्रान्तरे ) कृत्वावरणपूजान्तु धूपदीपौ निवेदयेदिति । अथधूपभेदाउक्ताः । (तन्त्रान्तरे गुग्गुल्वगुरुकोशीर-शर्करामधुचन्दनैः । धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥ सिता-ज्यमधुसम्मिश्रं गुग्गुल्वगुरुचन्दनम् । षडङ्गधूपमेतत्तु सर्वदेव-प्रियं सदा ॥ रोगरोगहररोगदकेशाः सुरतरुजतुलघुपत्रविशेषाः । वल्कविवर्जितवारिदमुस्ताधूपवर्तिरिह सुन्दरि शस्ता ॥ गुग्गुलं सरलं दारुपत्रं मलयसंभवम् । ह्रीवेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् हरीतकी नखी लाक्षा जटामांसी च शैलजम् ॥ षोडशाङ्गं वि-

द्भूतोगन्धाढयः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपायं प्रतिगृह्यताम ॥ इति पठित्वा मूलमंत्रान्ते श्रीचण्डिकायै धूपं निवेदयामि इति नीचैर्धूपं निवेद्य देवस्य वामभागे पुरतो वा स्थापयेत् । ततोदीपपात्रे दीपं प्रज्वाल्य धूपवत् सँस्कृत्य घण्टां वादयन् सुप्रकाशोमहादीपः सर्वत्रतिमिरापहः । सवाह्याभ्यन्तरं ज्योतिर्दीपोयं प्रतिगृह्यताम ॥ इति पठित्वा मूलान्ते श्रीचण्डिकायै दीपं निवेदयामि इति दीपं

---

दुर्धूपं दैवे पैत्रे च कर्म्मणि । मधुमुस्तं घृतं गन्धोगुग्गुल्वगुरुशैलजम् ॥ चन्दनं सिह्लसिद्धार्थौ दशाङ्गोधूपइष्यते । ( यामले ) दशाङ्गधूपः श्यामायाः सुन्दर्य्याः षोडशांशकः । अष्टादशाङ्गस्तारायां भैरव्याश्च गजाङ्गकः ॥ पञ्चाङ्गश्छिन्नमस्ताया प्रियोऽन्यासां षडङ्गकम् । अभावे सर्वविद्यासु गुग्गुल्वगुरुचन्दनम् ॥ ( मेरुतन्त्रे ) हृदाऽणुनाऽथवास्त्रेण घण्टां सम्पूज्य वादयेत् । तत्रैव । जयध्वनिपदं मंत्रमातोऽग्निगेहिनी । एकादशाक्षरोमंत्रोघण्टायाः सर्वसिद्धिदः ॥ आवाहनेऽर्घे धूपे च पुष्पे नैवेद्यदीपयोः । घण्टानादं प्रकुर्वीत विशेषाद्धूपदीपयोः ॥ पूजाकालं विनाऽन्यत्र कुर्यादस्याः प्रवादनम् । नानया च विना पूजां कारयेत्सिद्धिलालसः ॥ ( राघवभट्टः ) धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदयाऽणुना । अस्त्रेण पूजितां घण्टां वादयन्गुग्गुलं दहेत् ॥ इति धूपविधानम् ॥ दीपभेदावुक्ताः कुलोड्डीशे ) घृतप्रदीपः प्रथमस्तिलतैलसमुद्भवः । सार्षपः फलनिर्यासजातो वा वारिजोद्भवः ॥ दधिजश्चान्नजश्चैव दीपाः सप्त प्रकीर्तिताः । पद्मसूत्रभवावर्तिर्दर्भसूत्रभवा तथा ॥ जलजा वादरी वापि तूलकोषोद्भवाथवा । वर्तिका दीपकृत्येषु सदा पंचविधास्मृता ॥ ( यामले ) वर्तिः श्वेताऽथवा रक्ता न पीता नासितापि च । वीजशून्यं च कार्पासं तदीयास्तन्तवोपि च ॥

निवेद्य देवस्य दृष्टिपर्य्यन्तमुत्तोल्य परिभ्राम्य घृतयुक्तं चेद्दक्षिणे तैलयुक्तं चेद्वामे सितावर्त्तिश्चेद्दक्षिणे रक्तवर्तिश्चेद्वामे दीपं स्थापयेत्। पुरतस्तु न नियमः ॥ इति दीपदानविधानम्। ततोदेवतायाः पुरतः सामान्यार्घजलेन भूमिं सम्प्रोक्ष्य चतुरस्रमण्डलं कृत्वा तत्र स्वर्णादिनिर्म्मितं साधारं नैवेद्यपात्रं संस्थाप्य तास्मिन्पात्रे यथोक्तं यथासंभवं वा नैवेद्यं विधायास्त्रमंत्रेण सम्प्रोक्ष्य चक्रमुद्रया संरक्ष्य यँ इति वायुवीजेन संशोध्य रं इति वान्हिवीजेन संदह्य वँ इति

पटोवा नूतनः शुक्लो वर्तिकायां प्रशस्यते। जीर्णं च मलिनं वस्त्रं नैव दद्यात् कदाचन ॥ (मेरौ) तैजसं राजसं लौहमार्तिक्यं नारिकेलजम्। तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते ॥ एवं दीपं प्रकर्त्तव्यं नेत्ररंजनकारकम् (मेरुतन्त्रे) न धूपं वितरेद्भूमौ नासने न घटे तथा। यथा तथाधारगतं कृत्वा तं विनिवेदयेत् ॥ मेदोमज्जायुतोनेष्टोविष्णवे दारुसंभवः। (यामले) निवेदयेत्पुरोभागे गन्धं पुष्पं च भूषणम्। वामतस्तु तथा धूपमग्रे वा नतु दक्षिणे ॥ (यामले) दीपं दक्षिणतोदद्यात्पुरतोवा न वामतः। तथा। दक्षिणे घृतयुक्तश्च तैलयुक्तश्च वामतः। दक्षिणे च सितावर्तिर्वामतोरक्तवर्तिकः ॥ (मेरुतंत्रे) पूजयित्वा स्वमंत्रेण घण्टां तन्नादपूर्वकम्। दीपं दद्यात्तु विभवे नानावाद्यपुरस्सरम् ॥ देवस्य सर्वावयवान् श्लोकमेवं ततः पठेत् ॥ सुप्रकाशोमहादीपः सर्वत्र तिमिरापहः। सवाह्याभ्यन्तरज्ज्योतिर्दीपोयं प्रतिगृह्यताम् ॥ (कालिकापुराणे) लभ्यते यस्य तापस्तु दीपस्य चतुरंगुलात्। न सदीप इतिख्यातो ह्योघवह्निस्तु सश्रुतः ॥ शाणं वा दौरं वस्त्रं जीर्णं मलिनमेव वा। उपभुक्तं न दद्यात्तु वर्तिकार्थं कदाचन ॥ इतिदीपविधानम्। (यामले) नैवेद्य दक्षिणभागे पुर-

वरुणबीजमुच्चरन् धेनुमुद्रयाऽमृतीकृत्य मूलमंत्रेणाष्टधा कराभ्यामभिमंत्र्य धेनुमुद्राम्प्रदर्श्य नमः इति गन्धपुष्पादिभिरभ्यर्च्य मूलमंत्रेण पुष्पांजलित्रयं देवतायै दत्वा नैवेद्यं षड्रसोपेतं चतुर्विधमिदं तव । स्थापितं पुरतो भक्त्या गृहाण तुष्टिमावह ॥ हेमपात्रस्थितं दिव्यं परमान्नं सुसँस्कृतम् । पंचषड्रससंयुक्तं गृहाण मम सिद्धये ॥ इति पठित्वा नैवेद्यपात्रं कराभ्यांस्पृष्ट्वा मूलमंत्रमुच्चार्य्य श्रीजगदम्बिकायै इदं यथासंभवं नैवेद्यं निवेदयामि नमः स्वाहा इति दक्षिणहस्तेन जलमादाय नैवेद्यं समर्प्पयेत् । ततो देव्या दक्षिणहस्ते ॐ अमृतोपस्तरणमसि स्वाहा इति जलं दत्वा वामहस्तेन विकचोत्पलनिभां ग्रासमुद्राम्प्रदर्श्य दक्षिणहस्तेनोक्तमुद्राभिः ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ उदानाय स्वाहा ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । इति पंचप्राणाहुतीर्हुनेत् ॥ ततः पात्रान्तरे जलं निधाय धेनुमुद्रयामृतीकृत्य नमस्ते देवदेवेश

तोवा न पृष्ठतः । पक्वं च देवतावामे आमान्नं देवदक्षिणे ॥ पक्वापक्वविभेदेन नैवेद्येष्वपि च स्थितिः । पुरतोनियमोनास्ति दीपनैवेद्ययोः क्वचित ॥ ( मेरुतन्त्रे ) देवमभ्यर्च्य कुर्य्याच्च पुष्पाञ्जलिमनन्यधीः । हेमपात्रस्थितं द्रव्यं परमान्नं सुसंस्कृतम् । पञ्चधा षड्रसोपेतं गृहाण मम सिद्धये । मूलमंत्रं समुच्चार्य स्वाहान्तं जलमर्पयेत् ॥ कराभ्यां संस्पृशन्पात्रं नैवेद्यान्ते नमोवदेत । (तंत्रान्तरे) स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेहमुद्रा । तथापरा तर्जनिमध्यमेस्यादनामिकामध्यमिके च मध्या ॥ अनामिका-

सर्वतृप्तिकरं वरम् । अन्यैर्निवेदितं तोयं प्रकृतिस्थं सुशीतलं॥ परमानन्दसम्पूर्णं गृहाण जलमुत्तमम् । इत्युक्त्वा देवताया वामभागे जलं निवेश्य मूलेन पुष्पाञ्जलिं दत्वा ऽस्त्रमंत्रेण दिग्बन्धनं विधाय देवतायाः परितोयवानिकां कृत्वा अमृतात्मकनैवेद्यं नमः इत्युच्चार्य्य धेनुमुद्रां प्रदर्श्य भुञ्जानां देवतां स्मृत्वा । ब्रह्मेशाद्यैः सरसमाभितः सूपविष्टैः समेताः दिव्याभिः स्वैर्ललितललितैर्वीज्यमानाङ्गनाभिः । नर्मक्रीडाप्रहसनपरा हासयन्ती स्वभक्तान् भुंक्ते पात्रे कनकघटिते षड्रसाञ्छ्रीपराम्बा ॥ अष्टोत्तरशतं दशधा वा मूलमंत्रं प्रजप्य ॐ अमृतापिधानमसि स्वाहा इति जलं दद्यात् । ततोदक्षिणे स्थंडिलं कृत्वा वक्ष्यमाणप्रकारेणाग्निं

---

तर्जनिमध्यमाश्च तद्वच्चतुर्थीसकनिष्ठकास्ताः । स्यात्पंचमीमध्यमतःप्रदिष्टा प्राणादिमुद्रा निजमंत्रयुक्ताः ॥ तत्रैव । विधाय पूजामेवं हि धूपदीपनैवेद्यकैः । तथा । वेदिकायां दक्षभागे कृत्वा स्थण्डिलमुत्तमम् । संस्थाप्य वह्निं संस्कृत्यवैश्वदेवं समारभेत् ॥ यथाविधि ततस्तत्र गन्धाद्यैर्देवतां यजेत् । तत्र प्रणवपूर्वाभिर्हुत्वा व्याहृतिभिः पुरा ॥ जुहुयान्मूलमंत्रेण पायसेन घृतेन च । पञ्चविंशतिभिः पश्चाद्धुत्वा व्याहृतिभिः पुनः ॥ सम्पूज्य तां चन्दनाद्यैः पीठमूर्तौ नियोजयेत् । अग्निं विसृज्यसृष्टेन पायसेन बलिं हरेत् ॥ पार्षदेभ्यश्चन्दनादिपुष्पाक्षतसमन्वितम् । अत्र वैश्वदेवोनित्यहोमएव । ( सिद्धान्तसारे ) समाप्य वैश्वदेवं तु भूतेभ्योबलिमाहरेत् । शाक्ते तु बलिदानान्ते दद्याद्भूतबलिं सुधीः ॥ यत्र वैष्णवादिकल्पे वक्ष्यमाणबलिदानविधिर्नास्ति तत्रास्मिन्नेव समये भूतबलिर्देय इत्यर्थः । ( मेरुतंत्रे ) देवं

सँस्थाप्य तस्मिन्नग्नौ देवतामावाह्य पाद्यादिभिर्गन्धपुष्पादिभिश्च सम्पूज्य घृतयुक्तेन पायसेन वैश्वदेवाख्यं होमं कुर्य्यात् । तत्र सप्रणवाभिर्व्याहृतिभिर्हुत्वा मूलमंत्रेण पंचविंशत्याहुतीर्दद्यात् पुनर्व्याहृतिभिर्हुत्वा पंचोपचारैर्देवतां सम्पूज्य पीठमूर्तौ तां संयोज्य वन्हिं विसृजेत् । ततः शिष्टेन पायसेन ॐ अमुकदेवतायाः पार्षदेभ्य एषवालिर्नमः इति पार्षदेभ्योगन्धपुष्पाक्षतसहितं वलिं विसृजेत । ततोयवनिकामुद्घाट्य देवेन यथेष्टं भुक्तं नैवेद्यं सम्भाव्य नैवेद्य पात्रं नैर्ऋतेयदिशि संस्थाप्य नैवेद्यस्थानमस्त्रमंत्रेणगोमयाद्भिः संशोध्य देवोच्छिष्टं किंचित्समादाय ॐ निर्म्माल्यभोजिन्यै नमः इत्यैशान्यां दिशि क्षिपेत् ॥ ततोहस्तौ प्रक्षाल्य ताम्बूलमादाय पुरतः संस्थाप्य एलालवङ्गखदिर-

---

युतमिति ध्यात्वा नैवेद्यं गतसारकम् । संचित्य रक्षोदिग्भागे पात्रं तत्स्थापयेत्ततः ॥ गोमयाद्भिस्तदस्त्रेण नैवेद्यस्थानशोधनम् ॥ देवोच्छिष्टं गृहीत्वातु निर्माल्यभोजिने नमः ॥ इत्यैशान्यां विनिःक्षिप्य हस्तं प्रक्षालयेत्ततः । पुनराचमनं दद्यात करोद्वर्तनमेव च । शुद्धमाचमनं दत्वा सुगन्धैर्गन्धयेत्करौ ॥ ॥ ( गौतमीये ) क्षणं विमृष्य मतिमान्द्याद्गण्डूषकं ततः । अमृताऽपिधानमसि स्वाहेति मनुनाऽमुना ॥ ( यामले ) सर्वोपकरणादीनि मूलान्ते च निवेदयेत् । अशक्तोमनसा दद्यात् एतत्कर्म न लोपयेत् ॥ दर्शयेच्च तथाऽदर्शं कल्पयेच्छत्रचामरैः । इति । ( अथोपचारमुद्राः प्रकरणाल्लिख्यते ) आसने पद्ममुद्रा स्यात् हस्तद्वयमधोमुखम् । मुद्रैषा कुशलप्रश्ने तदेवोर्ध्वमुखं पुनः ॥ मुद्रास्यात्स्वागते चार्घ्यमुद्रात्वञ्जलिरुच्यते । अनामाङ्गुष्ठयोगाच्च सैवोक्ता पाद्यमुद्रिका ॥

चूर्णपूगादिसंयुतम् । ताम्बूलं देवदेवेशि गृहाण त्वं प्रसीद मे ॥ इति पठित्वा मूलान्ते श्रीजगदाम्बिकायै इदं ताम्बूलं निवेदयामि स्वाहा इति निवेद्य मूलेन गन्धपुष्पादिभिस्त्रिवारं पूजयेत् ॥ ततोदर्प्पणं प्रदर्श्य छत्रचामरादिकं निवेद्य स्वकल्पोक्तमंत्रेण देवतायै माषभक्तादिवलिं दत्वा आग्नेयादिषु पूर्वदाक्षिणोत्तरपश्चिमभागेषु वा यथाक्रमं गणेशवटुकक्षेत्रपालयोगिनीभ्यो वलिन्दद्यात् ।

---

उत्तानं दक्षहस्तं तु कृत्वा निम्नतलं सुधीः । कनिष्ठहीनाः संयुक्ताश्चतस्रोङ्गुल्यउन्नताः ॥ मुद्रैषाचमने प्रोक्ताऽधोमुखी च त्वनामया । स्पृष्टाङ्गुष्ठाभवेन्मुद्रा मधुपर्के वरानने ॥ अधोमुखी दक्षहस्तकृतामुष्टिः कनिष्ठया । विमुक्तास्नानमुद्रैषा गदिता परमेश्वरि ॥ उत्तानं दक्षिणं हस्तं कृत्वा तन्मध्यमां पुनः । अङ्गुष्ठेन स्पृशेदेषा मुद्रा वस्त्रस्य कीर्तिता ॥ एषैवानामिकास्पर्शान्मुद्राभूषणसंज्ञिका । कनिष्ठास्पर्शतोह्येषा उपवीतस्य मुद्रिका ॥ ज्येष्ठाग्रेण कनिष्ठाग्रं स्पृशेद्गंधस्य मुद्रिका । ( तंत्रान्तरे ) मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति । दद्याच्च विमलं गंधं मूलमंत्रेण साधकः ॥ अङ्गुष्ठतर्जनीभ्यान्तु यंत्रे पुष्पं निवेदयेत् । अधोमुखं करं कृत्वा तर्जन्यग्रे तु योजयेत् ॥ अङ्गुष्ठाग्रं तु मुद्रेयं पुष्पाख्या परमेश्वरि । यथा गंधं तथा देवि धूपं दद्याद्विचक्षणः ॥ मध्यमानामिकाभ्यान्तु मध्ये पर्वाणि देशिकः । अङ्गुष्ठाग्रेण देवेशि धृत्वा दीपं निवेदयेत् ॥ ( अथवा ) ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाः सुरार्चिते । दीपमुद्रेयमाख्याता सर्वदेवप्रिया शुभा ॥ तथा अङ्गुष्ठाग्रेण तर्जन्याः स्पृशेदग्रं महेश्वरि । धूपमुद्रेयमाख्याता सर्वदेवप्रियंकरी ॥ अनामाग्रे स्पृशेद्देवि ज्येष्ठाग्रेण तु देशिकः । नैवेद्यमुद्राकथिता देवता तृप्तिकारिणी ॥ ( अन्यत्र )

## ॥ अथ वलिदानविधिः ॥

तत्र क्रमः उक्तदेशेषु मण्डलानि कृत्वा वलिपात्राणि संस्थाप्य गँ गणेशाय वलिमूर्तये नमः इत्यादिमंत्रेण वलिं सम्पूज्य गाँ गणेशाय नमः वाँ वटुकाय नमः क्षाँ क्षेत्रपायनमः याँ योगिनीभ्योनमः इति मंत्रैर्गन्धपुष्पादिभिस्तानभ्यर्च्य गाँ गीं गूँ गणपतये वरवरदसर्वजनं मे वशमानय वलिं गृह्ण२ स्वाहा एषवलिर्गणपतये नमः इति गजदन्तमुद्रया गणेशाय वलिं दद्यात् ॥ ततः एह्येहि देवीपुत्र

---

उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः । तत्वाख्यमुद्रा देवि नैवेद्यं तु निवेदयेत् ॥ मूलेनाचमनं दद्यात्ताम्बूलं तत्वमुद्रया । इति अथात्र दर्पणादि निवेदनन्तु उपचारान्तगतं कर्म । पूजान्ते वलिदानविधिः मुख्यः तदुक्तं ( सिद्धान्तसारे ) मूलमंत्रेण सम्पूज्य स्वस्वकल्पोक्तमंत्रतः । देवतायै वलिं दत्वा विघ्नादिभ्योवलिं हरेत् ॥ ( ज्ञानार्णवे ) ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् । मण्डलानि विधायाथ पूववत् पूजयेत् प्रिये ॥ पूर्ववद्वलिदानंच दद्यात्सर्वसमृद्धये । वटुकाय महेशानि योगिनीभ्यश्च वल्लभे ॥ गणेशक्षेत्रपालाभ्यां पूववद्वलिमुत्सृजेत् । ( समयाचारे ) दक्षिणे वटुके दद्यादुत्तरे योगिनीगणे । पूर्वे भूतवलिं दद्यात् क्षेत्रपालाय पश्चिमे ॥ तथा । अङ्गुष्ठानामिकाभ्यान्तु वटुकाय वलिमंतः । कनिष्ठाङ्गुष्ठयोगेन योगिनीवलिमाहरेत् ॥ अङ्गुष्ठतर्जनीभ्यान्तु क्षेत्रपालवलिं हरेत ॥ अङ्गुलीभिश्च सर्वाभिरुक्तोभूतवलिः प्रियं ॥ तथ्यमुष्टेस्तु मध्यस्थामङ्गुलिं दण्डवत्कुरु । गजदन्तमहामुद्रा गणपस्य वलौ भवेत् ॥ वलिद्रव्याण्युक्तानि ( महाकालसंहितायाम् । तत्रादौ दक्षिणाचारे । माषभक्तं तथा लाजाधानाः सक्तव एववा । पृथुकास्तण्डुलावापि खिन्ना व्रीहय एव

वटुकनाथ कपिलजटाभारभासुरत्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय२ सर्वोपचारसहितं वलिं गृह्ण२ स्वाहा एषवलिर्वटुकाय नमः इति अङ्गुष्ठानामिकाभ्यां वटुकाय वलिं दद्यात् ॥ ततः क्षाँ क्षीं क्षूँ क्षैं क्षौं क्षः क्षेत्रपालाय धूपदीपादिसहितं वलिं गृह्ण२ स्वाहा एषवलिः क्षेत्रपालाय नमः इति अङ्गुष्ठतर्जनीभ्यां क्षेत्रपालाय वलिन्दद्यात् ॥

वा ॥ आमिक्षा वा यवागूर्वा कृशरं पायसं तथा । आज्याभिषिक्तं दधि वा पक्वान्नानि फलानि वा ॥

( वामाचारे । ) दग्धमीनो भर्जितं वा तेमनीकृतमेव वा । मदिरा वा प्रदातव्या वलित्वेन वरानने ॥ सर्वसाधारणत्वेन वलिर्नैषप्रकीर्त्यते । अधिकारिविशेषेण दातुं शक्यो वलिस्त्वयम् ॥

वलिदानमंत्रास्तु ( ज्ञानार्णवे ) एह्येहिदेवीपुत्रान्ते वटुकान्ते च नाथ च कपिलान्ते जटाभारभासुरान्ते त्रिनेत्र च । ज्वालामुखं च सर्वान्ते विघ्नान्नाशय नाशय । सर्वोपचारसहितं वलिं गृह्ण पदद्वयम् ॥ वह्निजायान्वितोमंत्रोवटुकस्य समीरितः । अनेन मनुना देवि वटुकस्य वलिं हरेत् ॥ ( मेरौ ) योगिनीनां वलेर्मंत्रं साधनान्ते पठेदिमम् । यां योगिनीभ्यः स्वाहेति * कङ्कार्णं स्रग्धरान्वितम् ॥ ऊर्ध्वं ब्रह्मांडतोवेत्यादि पान्तुवीरेन्द्रवन्द्याइत्यन्तं एकनवति वर्णात्मकोमंत्रः पठनीयः । ( ज्ञानार्णवे ) तूक्तं श्लोक-

* कुरेकः अङ्कानव "अङ्कानां वामतोगति" रित्यतः कङ्कानवतिरर्णावर्णा यस्मिन्निति । एतेन "याँयोगिनीभ्यः स्वाहा" इति सप्त ७ वर्णाः । ऊर्ध्वमित्यादि स्रग्धरायाश्चतुश्चरणेषु चतुरशीतिः ८४ वर्णाः । एवमेकत्र संमिलनैकनवतिवर्णं घटितोमंत्रोजायत इति ।

ततः याँ योगिनीभ्यः स्वाहा ऊर्ध्वं ब्रह्माण्डतोवा दिविगगनतले भूतले निष्कले वा पाताले वाऽनले वा सलिलपवनयोर्यत्र तत्र स्थिता वा। क्षेत्रे पीठोपपीठादिषु च कृतपदाः पुष्पधूपादिकेन प्रीतादेव्यः सदानः शुभविधिवलिना पान्तु वीरेन्द्रवन्द्याः ॥ एषवलिर्योगिनीभ्योनमः इति कनिष्ठाङ्गुष्ठयोगेन योगिनीभ्योवलिन्दद्यात् ॥ ततोभूतवलिः तद्यथा। ईशाने। मण्डलं कृत्वा अन्नव्यंजनपुष्पाक्षत जलादियुक्तं साधारं वलिपात्रं संस्थाप्य तत्र ॐ सर्वभूतेभ्योनमः इति गन्धपुष्पादिभिः सम्पूज्य। येरौद्रारुद्रकर्माणोरौद्रस्थानानिवासिनः। योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये भूचराः खेचराश्चैव ये तिष्ठ-

---

मुक्त्वा एतदन्ते महेशानि यां वीजं योगिनी ततः। भ्यःस्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत्। अनेन मनुना देवि योगिनीभ्योवलिं हरेत् ॥ इत्युक्तम् तथा षड्दीर्घस्वरसंयुक्तं क्षकारं पुनरालिखेत्। पुनः क्षेत्रपदं पाल धूपदीपादि चालिखेत् ॥ सहितं वलिमालिख्य गृह्ण २ ततोवदेत्। वह्निजायान्वितोमंत्र क्षेत्रपालस्य सुन्दरि ॥ अनेनमनुनादेवि क्षेत्रपालवलिं हरेत्। गां गीँ गूँ त्रयमालिख्य ङेन्तं गणपतिं वदेत ॥ वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत्। मे वशं चानयेत्युक्त्वा वलिं गृह्ण द्विधा पदम् ॥ वह्निजायान्वितोमंत्रोगणपस्य वलिं हरेत्। सिद्धान्तसारोद्धृतसामान्यपद्धतौ तु पूर्वादिप्रादक्षिण्येन। गणेशादिभ्योवलिप्रदानमुक्तम्। गणेशवटुकक्षेत्रपालेभ्योवलिमाहरेत्। योगिनीभ्यश्च पूर्वादिप्रादक्षिण्येन देशिकः ॥ इति। महाकालेनापि

न्त्यन्तरिक्षगाः । सर्वे ते प्रीतिमनसोभूत्वा गृह्णन्त्विमं वलिम् ॥ इति पठित्वा वामहस्तेन तत्पात्रे जलधारां समर्प्य ॐ सर्वभूतेभ्यएषोऽन्नवालिर्नमः इति दक्षहस्तेनोत्सृजेत् इति सर्वभूतवलिः । ततः पुष्पाञ्जलिमादाय प्रार्थयेत् । ॐ भूतानि यानीहवसान्ति भूतले वलिं गृहीत्वा विधिवत्प्रयुक्तां । सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥ इति सम्प्रार्थ्य पुष्पाञ्जलिन्दत्वा नत्वा च भूतानि यथा सुखम्विहरन्तु । इति नाराचमुद्रया विसृजेत् । ततोमूलमष्टोत्तरसहस्रं जप्त्वा गुह्यातिगुह्यगोप्तृत्वं गृहाणास्मत्कृतं जपम । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ इति जपं चण्डिकायै निवेदयेत् । ततः अत्रैव शक्त्या छागादिवलिं श्रीजगच्चण्डिकायै दद्यात् ॥

---

गणेशादिक्रमउक्तः । गणाधिपतये पश्चाद्वटुकाय निवेदयेदित्यादि वस्तुतोदक्षिणमार्गे गणेशादिक्रमो ( वाममार्गे ) वटुकादिक्रमः । अवश्यमादौ वामादौ कुर्य्याद्वटुकपूजनम् मार्गेस्मिन्वटुकोमुख्यः सुराद्यं तेन निर्म्मितम् ॥ इति वामप्रकरणीय ( मेरुतन्त्र ) वचनात् । अथ भूतवलिः ( मेरुतंत्रे ) उपविश्यासने मंत्री दद्याद्भूतवलिं ततः । ईशाने मण्डलं कृत्वा साधारं तत्र निःक्षिपेत् ॥ अन्नं व्यंजनतोयाढ्यं पात्रं पुष्पादिपूरितम् । तत्र भूतानि सम्पूज्य ततस्तेभ्योवलिं हरेत् ॥ येरौद्रारुद्रकर्माणोरौद्रस्थाननिवासिनः । योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्चये ॥ भूचराः खेचराश्चैव ये तिष्ठन्त्यन्तरिक्षगाः । सर्वे ते प्रीतिमनसोभूत्वा गृह्णन्त्विमं वलिम । वामहस्तेन तत्पात्रे जलाधारं समर्पयेत् भूतवलौ तु जलधारां वामहस्तस्यसर्वांङ्गुलिभिर्दद्यात् ॥ पुष्पाञ्जलिं समा-

अथ वक्ष्यन्ते छागादिबलिं❀ कुर्य्यात तद्विधिः । प्रथमं वक्ष्यमाणसर्वलक्षणेन संयुक्तं पशुमानीय देवीसम्मुखे मन्त्रतस्तं संस्नाप्य विशेषमंत्राभावे मूलेनैव संस्नाप्य स्थापयित्वा अर्घोदकैः संप्रोक्ष्य अस्त्रमंत्रेण संरक्ष्य कवचेनावगुण्ठ्य मूलमंत्रमुच्चार्य धेनुमुद्रयाऽमृतीकृत्य गन्धपुष्पाद्युपचारैः सम्यक् सम्पूज्य तस्य दक्षिणे कर्णे पशुपाशविमोचनमंत्रं त्रिवारं पठेत् । ( पशुपाशविमोचनमंत्रोयथा ) ॐ पशुपाशाय विद्महे विप्रकर्णाय धीमहि तन्नोजीवः प्रचोदयात् ॥ इति अथवा ॥ छ्रीं बलिरूपाय विद्महे देवी-

दाय भूतानि प्रार्थयेदिति ॥ भूतानियानीहवसन्तिभूतले बलिं गृहीत्वा विधिवत्प्रयुक्ताम् । सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु तान्यत्र नमोस्तु तेभ्यः ॥ दत्वा पुष्पांजलिं नत्वा विहरन्तु यथासुखम् । भूतानीति च नाराचमुद्रया विसृजेत्ततः ॥ (शारदायाम्) सहस्रावृत्या संजप्य मूलमन्त्रमनन्यधीः । तं जपं सर्वसम्पत्यै देवतायै समर्चयेत् ॥ ( मेरुतंत्रे ) अष्टोत्तरसहस्रंतु तदर्धं त्रिशतं तु वा । अष्टोत्तरशतं वापि जपेन्मूलमतन्द्रितः ॥ समाप्ते तु जपे मालां विदध्यान्मस्तकोपरि । अर्घपात्रजलं हस्ते गृहीत्वेदं पठेत्ततः गुह्यातिगुह्यगोप्तात्वं गृहाणास्मत्कृतं जपं । सिद्धिर्भवतु मेदेव त्वत्प्रसादात् जगत्पते ॥ देवस्य दक्षिणे हस्ते तोयं दत्वा समर्पयेत । इति ।

❀ मा हिंस्याः सर्वाणि भूतानीत्यत्र सर्वपदोपदानात् सूक्ष्मातिसूक्ष्मजन्तूनामपि हिंसा न कार्य्या, किं पुनर्पश्वादीनां बलिः एषविधिः तामसपूजायामेव शोभते द्विजातिभिस्तु सर्वदा कूष्माण्डादिबलिं दत्वैव सात्विकी पूजा कार्य्या।

इति देवीप्रसादशास्त्री ।

प्रियाय धीमहि तन्नः पशुः प्रचोदयादिति वा ततः मूलं पठन् अर्घोदकैः त्रिवारं पशुं सम्प्रोक्ष्य कुशजलाक्षतादिकं गृहीत्वा संकल्प्य पशुमुत्सृजेत ततः जलाक्षतं गृहीत्वा पशोः शिरसि क्षिपेत् । ततः गन्धाद्युपचारैः पूजयित्वा खड्गपूजनं कुर्य्यात् । प्रथमं ध्यायेद्यथा । पुष्पमादाय कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम् । उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् ॥ रक्ताम्बरधरं चैव पाशहस्तं कुटुम्बिनं । पिवमानं च रुधिरं भुंजानं क्रव्यसंहातिम । क्षोभयन्तं जगत्सर्वं कम्पनादिप्रचारणैः । वेष्टितं मृत्युका-

## ❀ अथ वलिदानविधिः ❀

ततोदद्याज्जीववलिं यथालाभं यथाविधि । विधिस्तु द्विविधः प्रोक्तः श्रौतआगमिकस्तथा ॥ श्रौतः श्रुत्युक्तमंत्रेणागमस्तंत्रोक्तमंत्रकैः । श्रौतोपि स्वस्वगृह्योक्तविधिना संप्रदीयते ॥ पशुजातिविशेषेणतत्राप्यस्ति भिदाऽधिका । ( मेरुतंत्रे ) वलिस्तु त्रिविधोज्ञेयस्तान्त्रिकःस्मार्तएव च । वैदिकश्चेति तत्रादौ तान्त्रिकोष्टविधः स्मृतः ॥ नरश्च महिषः कोलश्छागोऽविः सारसस्तथा । कपोतः कुक्कुटश्चेति सामान्याः पूर्वपूर्वतः ॥ तथा कूष्माण्डं नारिकेलं वा श्रीफलं चेक्षुमेव च । वस्त्रसंवेष्टितं कृत्वा छेदयेच्छुरिकादिभिः ॥ एवं स्मार्तोवलिः प्रोक्तोधर्मशास्त्रानुगामिनाम् । तथा वैदिकं तु वलिन्दद्यात ओदनं स्विन्नमाषवत् ॥ सरोचनमतिक्रूरदेवते वटकान्वितम् ॥ इत्युक्तं ( महाकालसंहितायाम् ) श्रौतः श्रुतिषु सन्धेयोयोऽध्वरेषु निरूपितः । वक्ष्याम्यागमिकं सर्वं यागस्थानक्रमागतम् ॥ न सदेवोनसादेवी देवयोनिभिदा न सा । न सकालोनतद्रूपं योनेच्छति वलिं प्रिये ॥ अमूर्ता ये

लाभ्यां वामदक्षिणभागतः ॥ इति ध्यात्वा खड्गं स्वदक्षिणे स्थापयित्वा ॐ खड्गमंत्रेण तं गन्धपुष्पाद्यैः समभ्यर्च्य खड्गस्यमुष्टिमध्याग्रभागेषु क्रमात् मिथुनत्रयंयजेत् यथा मुष्टिदेशे ॐ सरस्वतीसहिताय ब्रह्मणे नमः मध्ये लक्ष्मी-नारायणाभ्यां नमः अग्रे उमामहेश्वराभ्यां नमः इति एतान् गन्धाद्युपचारैः सम्पूज्य ततः खड्गमाभिमंत्रयेत् । तत्र मंत्रः खड्गायासुरनाशाय शक्तिकार्यार्थतत्परः । पशुश्छेद्यस्त्वया शीघ्रं खड्गनाथ नमोस्तु ते ॥ ॐ रसनात्वं चण्डिकायाः सुरलोकप्रसाधकः । भुंक्ष्वैतस्य पशोः रक्तं कण्ठ्यसंहातिमेव च ॥ छिन्धीशापिव मे शत्रुं मङ्गलानि प्रयच्छ मे । दैत्य-दानवरक्षोसृङ्मेदोन्मत्त नमोस्तु ते ॥ एतैः खड्गमाभिमं-त्र्य हस्ते खड्गं गृहीत्वा उत्तराभिमुखोभूत्वा पशुं पूर्वाभि-

---

च कालाशामाससंवत्सरर्तवः । पक्षायनाहोरजनीतिथिप्रहरसंक्र-माः ॥ एतेपि वलिमिच्छन्ति किम्पुनर्देवयोनयः । वनस्पत्यौषधिल-तातरुगुल्मनगादयः ॥ स्थावराजंगमाश्चापि वल्याकांक्षां प्रकुर्वते ॥ इति । अथवल्यर्थं प्रशस्तपशुलक्षणम् । ( रत्नावल्याम् ) ऊर्ध्वं श्रृङ्गोलम्बकर्णः एकवर्णोऽतिपीवरः । नीरोगः पुष्टकायश्च सदर्पश्च वलोर्जितः ॥ नाधिकाङ्गोनहीनाङ्ग एकद्वित्र्यादिहायनः । प्रशस्त-पशुरीदृक्षोदेवीप्रीतिकरः शुभः ॥ तन्त्रान्तरे ) कृष्णवर्णश्छागल-स्तु पृष्ठवंशे सितोयदि । प्रशस्तं तं विजानीयाद्विपरीतं विवर्जयेत् । विपरीतमिति श्वेतवर्णम् । पृष्ठावच्छेदेन नीलम् ( अथ निषिद्ध-पशुः ) कृष्णवर्णोवलिर्यस्तु श्वेतपुच्छोयदा भवेत् । छागलं तादृशं विद्वानदूरतः परिवर्जयेत् ॥ एवं सितं कृष्णपुच्छं वर्जयेत मति-मान् सदा । इति । अथ वलिदानकालः ( त्रैपुरपद्धत्याम् )

मुखं कृत्वा गात्रचालनार्थे पशुं प्रतीक्षेत्। यावद्गात्रं न चालयेत्तावन्न हन्यात्॥ गात्रचालने कृते पशुं निरीक्ष्य इमं मन्त्रमुदीरयेत् यथा

वल्यन्ते छागलवलिं तथा मेषं सुरेश्वरि। प्रदद्यात्सर्वकालेषु सर्वकामार्थसिद्धये॥ नित्ये नैमित्तिके काम्ये माहिषं वलिमाहरेत। जयाय सर्वकामाय देवीलोकार्थसिद्धये॥ इति। वल्यन्ते गणेशादिसर्वभूतवल्यन्ते इत्यर्थः। ( महाकालसंहितायाम् ) वल्यर्थपशुचिन्वनविधिः। पशूनां यत्र वाहुल्यं भवेद्वित्तानुसारतः। तत्रैकं प्रथमं देवि सर्वलक्षणलक्षितम्॥ ऊर्जस्विनं सुन्दरं च वलिनं पशुमुत्सृजेत्। तथा। पशूनामिह सर्वेषां प्रोक्षणं चैवमेवहि। कश्चिद्विशेषउत्सर्गे फलं दैवाद्युदीरणे॥ ( त्रैपुरपद्धत्याम् ) सर्वलक्षणसंयुक्तं पशुं संस्नाप्य यत्नतः। देव्यग्रे स्थापयित्वाऽर्घोदकैः सम्प्रोक्षयेत्ततः॥ अस्त्रमंत्रेण संरक्ष्य कवचेनावगुण्ठ्य च। मूलमंत्रं समुच्चार्य धेनुमुद्रामृतीकृतम्॥ गन्धपुष्पाक्षतैः सम्यक्परिपूज्योपचारकैः। कर्णे तस्य पठेन्मंत्रं पशुपाशविमोचनम्॥ ॐ पशुपाशायविद्महे विप्रकर्णाय धीमहि तन्नोजीवः प्रचोदयात्। गायत्रीयं समाख्याता पशुपाशविमोचिनी। इमां पठेद्दक्षकर्णे तस्य मुक्तिप्रसिद्धये॥ सम्प्रोक्षयेदिति प्रोक्षणं मूलं मंत्रेणैव। अर्घपात्रोदकैः शुद्धैर्मूलेन प्रोक्षयेत्त्रिशः॥ ( इति महाकालोक्तेः ) गायत्र्यन्तरमुक्तं तत्रैव। योगिनीवीजतोऽन्तं वलिरूपं तु विद्महे। देवीप्रियं पूर्ववच्च धीमहीति ततः परम्॥ तन्नः पशुरिति प्रोच्य वदेच्चाथ प्रचोदयात्। योगिनीवीजं छ्रीमिति ( त्रैपुरपद्धत्याम् ) ततः खड्गं यजेन्मंत्री मंत्रेणानेन दक्षतः। तारं च भुवनेशानीं कालीयुग्मं समालिखेत्॥ वज्रेश्वरीपदं पश्चाल्लोहदंष्ट्रां ततः परम् ॐ ह्रीँ काली काली वज्रेश्वरीलोहदंष्ट्रायै नमः। ङेन्तां हृद्वसुयुग्मैकसंख्यवर्णोमनुर्मतः॥ अनेन गन्धपुष्पाद्यैः

खड्गमभ्यर्चयेद्बुधः । ततस्तस्य मुष्टिदेशे मध्ये चाग्रे यथाक्रमम् ॥ गन्धपुष्पाक्षतैर्मंत्री मिथुनत्रितयं यजेत् । वागीशीसहितोब्रह्मा लक्ष्मीनारायणौ तथा ॥ उमामहेश्वरौ चेति सम्प्रोक्तं मिथुनत्रयम् । ततश्चानेन मंत्रेण तं खड्गमभिमंत्रयेत् । खड्गायासुरनाशाय शक्तिकार्यायतत्पर । पशुश्छेद्यस्त्वया शीघ्रं खड्गनाथ नमोस्तुते ॥ ततस्तु ताम्रपात्रस्थकुशाक्षतजलादिकम् । गृहीत्वा मूलमुच्चार्य संकल्प्य पशुमुत्सृजेत् ॥ गृहीत्वाक्षततोयादि पशोः शिरसि संत्यजेत् । ततस्तेनैव खड्गेन मूलमंत्रेण साधकः ॥ पशुच्छेदं प्रकुर्वीत स्वयंदेवीमनुस्मरन् । ( मेरुतंत्रसिद्धान्तसारयोः ) यदा संचालयेद्गात्रं गृहीतस्तु यथेच्छया ॥ यावन्न चालयेद्गात्रं पशुस्तावन्न हन्यते ॥ उत्तराभिमुखोभूत्वा बलिं पूर्वमुखं तथा । निरीक्ष्य साधकः पश्चादिमं मंत्रमुदीरयेत् ॥ पशुस्त्वं बलिरूपेण ममभाग्यादुपस्थितः । प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् । चामुण्डाबलिरूपाय बले तुभ्यं नमोनमः ॥ यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा । अतस्त्वं घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥ इमं देहं परित्यज्य भूत्वा देववपुर्धरः । मोदस्व प्रमथैः सार्धं यावदिन्द्राश्चतुर्दश ॥ ऐँ ह्रीँ श्रीमितिमंत्रेण त्वं बलिं मत्स्वरूपिणम् । चिन्तयित्वा न्यसेत्पुष्पं कुंभके नास्यमस्तके ॥ ( महाकाले ) खड्गध्यानम् । ध्यायेत्कुसुममादाय खड्गमादौ वरानने । कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम् ॥ उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् । रक्ताम्बरधरं चैव पाशहस्तं कुटुम्बिनम् ॥ पिबमानं च रुधिरं भुञ्जानं क्रव्यसंहतिम् । क्षोभयन्तं जगत्सर्वं कम्पनादिप्रचारणैः ॥ वेष्टितं मृत्युकालाभ्यां वामदक्षिणभागतः । ( तन्त्रान्तरे ) ततः खड्गं यजेन्मंत्री पाद्याद्यैरुपचारकैः । गन्धपुष्पाक्षताद्यैश्च मंत्रेणानेन मंत्रवित् ॥ मंत्रस्तु पूर्वोक्तएव । ( महाकालसंहितायाम् ) ततोबद्ध्वाञ्जलिर्मंत्री पठेत्खड्गं निरीक्ष्य वै । रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः ॥ भुंक्त्वैतस्यशिरोरक्तं क्रव्यसंहति-

पशुस्त्वं वलिरूपेण मम भाग्यादुपस्थितः । प्रणमामि ततः सर्वरूपिणं वलिरूपिणम् ॥ चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् । चामुण्डावलिरूपाय वलेतुभ्यं नमोनमः ॥ यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा । अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥ इमं देहं परित्यज्य भूत्वा देववपुर्धरः । मोदस्व प्रमथैः सार्धं यावदिन्द्राश्चतुर्दश ॥ इति पठित्वा पश्चात् ऐं ह्रीं श्रीं आत्मरूपं वलिं चिन्तयित्वा कुंभकप्राणायामेन पुष्पं पशुमस्तके न्यसेत् । ततः खड्गहस्तः असिर्विशसनः खड्गस्तीक्ष्णधारोदुरासदः । श्रीगर्भोविजय-

---

मेवच । छिन्धीश पिव मे शत्रुं मङ्गलानि प्रयच्छ मे ॥ दैत्यदानवरक्षोऽसृङ्मेदोन्मत्त नमोस्तुते । एतेन खड्गमामंत्र्य तन्नामाष्टकमुचरन् ॥ गृह्णीयान्निशि तं खड्गं येन सद्योभवेद्वधः । असिर्विशसनः खड्गस्तीक्ष्णधारोदुरासदः ॥ श्रीगर्भोविजयश्चैव धर्मपाल नमोस्तुते । ( मेरुतंत्रे ) आँ हूँ फडितिमंत्रजपन् संछेदयेद्वलिम् । एकेनैव प्रहारेण छिन्नोदैवततुष्टये ॥ ( महाकालसंहितायामपि ) चन्द्रहासेन खड्गेन छिन्द्यादेकप्रहारतः । उत्थाय हननं कुर्यान्नोपविश्य कदाचन ॥ ( कालिकापुराणे ) चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमुच्यते । दात्रासिधेनुक्रकचशङ्कुलाभिस्तु मध्यमम् ॥ असिधेनुः स्वल्पखड्गःशङ्कुलाचक्रकर्तरी । क्षुरक्षुरप्रभल्लैश्च मध्यमं परिकीर्तितम् ॥ एभ्योन्यैः शक्तिवाणाद्यैर्वलिश्छेद्यः कदापि न । नाप्ति देवी वलिं तं तु दाता मृत्युमवाप्नुयात् ॥ हस्तेन छेदयेद्यस्तु प्रोक्षणं साधकः पशुम् । पक्षिणं वा ब्रह्महत्यां समाप्नोति दुरुत्सहाम् ॥ नामंत्र्य खड्गं तु वलिं नियुञ्जीत विचक्षणः । ( तन्त्रान्तरे ) सर्वेषामुत्तमः खड्गश्चन्द्रहासः सुखावहः । पञ्चाशदङ्गुलः कार्यः किं वा तालत्रयेण तु ॥ करवीरदला-

श्चैव धर्मपालनमोस्तु ते इति नामाष्टकं पठित्वा खड्गं प्रार्थ्य आँ हूँ फट् इति मंत्रेणैकप्रहारेणैव बलिश्छिन्द्यात्। ततोमुण्डं सदीपं देव्या अग्रे निवेदयेत् । तद्रुधिरमपि पात्रे निधायार्प्पयेत् तत्र मंत्रः ॐ ह्रीं ऐं ह्रीं श्रीं कौशिकी रुधिरेणाप्यायताम् ॥ इति समर्प्य वक्ष्यमाणां स्तुतिं कुर्य्यात् जय देवि जगन्मातर्जय पापौघहारिणि। जय जन्मजराव्याधितृणदावानलाकृते जय सर्वविपत्तिघ्ने जय त्रिदशवन्दिते। जय नित्यानन्दरूपे जय कल्याणदायिनि ॥ जय शत्रुक्षयकरे

---

कारः किम्वा पद्मदलाकृतिः। अथवा कुब्जखड्गेन दण्डखड्गेन भेदयेदिति। इति छागादिवलिदानविधिः ॥ इतोविशेषान् वलिभेदानग्रे वक्ष्याम इति। अथशिरश्छेदनान्तरकृत्यं ( यामले ) एवं हत्वा पशून्सद्यस्तदीयरुधिरं तथा। स्वर्णादिरचिते पात्रे गृह्णीयादुष्णफेनिलम् ॥ ( कालिकापुराणे ) ओं ह्रीँ ऐँ ह्रीँ श्रीँ कौशिकीरुधिरेणाप्यायताम् इति पात्रे नियोजयेद्रक्तं शिरस्येव प्रदीपकम् ॥ अथ पात्राणि ( म० का० सं० ) अथ पात्राणि वक्ष्येहं स्थाप्यते यत्र शोणितम्। हैमे वा राजते ताम्रे ग्राह्यं रक्तं महीभृता ॥ सामन्तैर्म्माण्डलिकैश्च ताम्रे वा कांस्यरैत्ययोः। दरिद्रगृहिभिश्चापि मार्तिके वाऽथ दारवे ॥ अथवा पत्रपुटके नैव लोहे कदाचन। न रङ्गे सीसके चापि नारिकेलफलत्वचि ॥ कौलानां सर्वपात्रेभ्यः कपालं श्रेष्ठमिष्यते। एषां पशूनां पललैर्यथातृप्तिरितीरिता ॥ भगवत्याः प्रियं तृप्तीरुधिरैरपि तावती। नित्ये नैमित्तिके वापि कात्यायन्याः प्रपूजने ॥ विना वलिं नैव दद्यात् आमे पललशोणिते। पशोर्वा पक्षिणो वापि नरस्याऽपि विशेषतः ॥ ( त्रैपुरपद्धत्याम् ) दक्षिणे पतिते सिद्धिर्वामे भागे च निन्दितम्। सव्ये तु पतिते छेदे देवीमंत्रं स्मरेद्बुधः ॥ ततः

जय रोगप्रणाशिनि । जय भीमे जयाघोरे जय संकटतारिणि ॥ जयामृतरसास्वाद तुन्दिलामन्दाविग्रहे । त्रिनेत्रे विकरालास्ये मुण्डमालाविभूषिते ॥ सर्वासुरक्षयकरि खड्ग खट्वाङ्गधारिणि । महाघोरे महारावे दैत्यदर्प्पनिषूदिनि ॥ इमं पशुवलिं देवि गृहीत्वा कालरात्रिके । प्रीताभव महाचण्डे रक्ष मां शरणागतम् ॥ आयुर्देहि धनं देहि भाग्यं कीर्तिं च देहि मे । स्त्रियं देहि सुतान्देहि सर्वान् कामांश्च देहि मे ॥ उग्रचण्डे प्रचण्डासि प्रचण्डकरवालिनि । महाचण्डोग्रदोर्दण्डे विश्वेश्वरि नमोस्तु ते ॥ रक्ष मां शरणापन्नं त्वत्पादार्पितमानसम् । हर पापं हर क्लेशं हर शोकं हरासुखम् ॥ हर रोगं हर क्षोभं हर दैन्यं हर प्रिये । स्तुतिमेताम्पठित्वैवं दण्डवद् प्रणमेद्भुवि ॥ गुह्यकालि जगद्धात्रि सर्वान्तर्यामिनीश्वरि । गृहीत्वेमं पशुवलिं यथोक्तफलदाभव ॥ कायेन मनसा वाचा त्वत्तोनान्याग-

---

कुण्डादिके हुत्वा हुतिभिर्दशपञ्चभिः । शमयेद्धूङ्कृतेर्दोषं वलिलक्षणलक्षितम् ॥ तथा न भूमौ स्थापयेच्छीर्षं नचैव विपरीतकम् । शिरः सलोहितं दद्यात्पुरएव नचान्यतः ॥ तथा । शिरश्च संमुखे स्थाप्यं सदीपं पात्रवर्जितम् । सचापि हविरक्तः स्यादथवा तिलजोक्षितः ॥ सार्षपं न प्रदातव्यं नचान्यफलसंभवम् । मूर्धाभिषिक्तोहविषा तैलेन वहुसिद्धिभाक् ॥ अन्यवीजोद्भवैः रोगं शोकं मृत्युं च विन्दति । यथा लोमानि दह्यन्ते यत्नात् कार्यं कुर्यात् तथा नरैः ॥ इति संक्षेपतोवलिविधानम् एवं वलिं समर्प्य स्तुतिं कुर्यात् यथा ततः स्तुतिं प्रकुर्वीत वद्ध्वाञ्जलिपुटोन्नतः ॥

तिर्मम । अन्तश्चरासि भूतानां द्रष्ट्री त्वं परमेश्वरि ॥
(यामले) कात्यायिनि महामाये दुर्गे दुर्गतितारिणि ।
नमस्तुभ्यं जगद्धात्रि कालरात्रि स्वरूपिणि ॥ एवं स्तुत्वा
महादेव्यै दत्वा च सुमनोऽञ्जलीन् । साष्टाङ्गं प्रणमेद्भूमौ
भक्तियुक्तेन चेतसा इति ॥

॥ इति छागादिवलिदानम् ॥ इतोविशेषमग्रे
वक्ष्यामः ॥ तत आचाराद्यथाशक्यमुपहारादिकमुपचारा-
न्तरं जगदम्बिकायै दत्वा नीराजनं कुर्य्यात् । तदन्ते
मंत्रपुष्पाञ्जलिन्दत्वा ब्राह्मणोवेदमंत्रैः क्षत्रियः संहितादिभिः
वैश्यः पौराणिकैः मन्त्रैः शूद्रस्तुप्राकृतादिभिः देवतास्तवनं
कुर्य्यात् गीतवाद्यादिभिश्चापि देवतां तोषयेत् । ततोभ-
क्त्यापरिक्रम्य साष्टाङ्गं प्रणमेत् । इति । ततः परिक्रमान-

॥ अथसात्विकवलिदानम् ॥

(महाका०सं०)सात्विकोजीवहत्यां हि कदाचिदपि नोचरेत् । इक्षु-
दण्डं च कूष्माण्डं तथा वन्यफलादिकम् ॥ क्षीरपिण्डैः शालि-
चूर्णैः पशुं कृत्वा चरेद्बलिम् । तत्तत्फलविशेषेण तत्तत्पशुमुपान-
येत् ॥ तथा माहिषत्वेन कूष्माण्डं छागत्वेनैव कर्कटीमिति
साम्प्रतं महिषछागयोरेवप्रसिद्धत्वादेतावन्मात्रमेव दर्शितं इतो-
न्यवहुभेदा वलिदानभेदप्रकरणेद्रष्टव्या ॥

इतीदमागमोदिते सुचण्डिकाप्रपूजने ।
द्वितीयखण्डभूषणं कृतंवलेर्विधानकम् ॥ इति ॥

देव्या नीराजनन्तूपचारान्तर्गतमेव परन्तु दक्षिणोपहारदाने
उपचारवाद्यो तथाप्याचारवशात् दातव्ये पुष्पाञ्जलिश्चाप्युपचारा-

मस्कारानन्तरमाचार्योयजमानमाभिषिंच्य देव्यानिर्माल्यं पुष्पमालादिकं दद्यात् ।। ततः शास्त्रोक्तलक्षणसम्पन्नैर्नव-भिर्ब्राह्मणैः सह आचार्य्यः पुस्तकपूजां विधाय प्रयोगोक्त-विधिना चण्डीपाठमारभेत् । शेषाश्चाष्टौ द्वारपालादयः स्वस्वद्वारोक्तसूक्तपाठादिकं कुर्य्युः ।। चण्डीपाठविधानन्तु पृथगुक्तं जानीयात् । शतचण्ड्यान्तु प्रथमेदिने दशभिरे-कैकः पाठः द्वितीये दिने द्वौद्वौ एवमेकैकवृद्ध्या चतुर्थेह-नि समाप्तिः ।। प्रतिदिनं पाठान्ते स्वस्तिवाचनादिकं शान्तिपाठादिकं चाप्याचारात्कार्य्यम् । शान्तिकरणमाद्य-न्तयोः स्वाध्यायदर्शनात् । एवं प्रातिदैनिकं कार्य्यं समाप्य

---

न्तर्गतैवेति इति ततस्तु गीतस्तुतिभिर्घंटावादनपूर्वकम् । ब्राह्मणोवेदमंत्राद्यैः क्षत्रियः संहितादिभिः ।। पौराणिकाद्यैर्वैश्यस्तु शूद्रस्तु प्राकृतादिभिः इतिमेरुवचनात् । ( यामले ) ततश्च देवतां भक्त्या परिक्रम्य नमेद्बुधः । इति । प्रदक्षिणफलं ( तन्त्रान्तरे ) वेदविद्भ्योधरां दत्वा यत्फलं लभते नरः । तत्फलं लभते भक्त्या कृष्णं कृत्वा प्रदक्षिणम् ।। अत्र कृष्णमित्युपलक्षणं सर्वदेवप्रद-क्षिणमिति भावः प्रदक्षिणभेदाउक्ता ( यामले ) त्रिकोणाकारकं देवि शक्तेः कुर्य्यात्प्रदक्षिणम् । अर्धचन्द्रं महेशाय पृष्ठतश्च समीरितम् ।। शिवप्रदक्षिणे मंत्री अर्धचन्द्रक्रमेण च । सव्या-सव्यक्रमेणैव सोमसूत्रं न लंघयेत् ।। प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः । दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः ।। त्रिधा च वेष्टयेत्सम्यग्देवतायाः प्रदक्षिणे । एकहस्तप्रणामोवा एकं वापि प्रदक्षिणम् ।। अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुरा-कृतम् । (तन्त्रान्तरे ) एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद्विनायके।

श्रीजगदम्बिकार्प्पणं कृत्वा प्रणम्य च मण्डपान्तरीशान-कोणे विकरपुंजे स्थापितायां सुवर्णगर्भायां वस्त्रपरिवेष्टि-तायां जलपूरितायां वर्द्धन्यां सिंहस्थां खड्गखेटकधारिणीं घोररूपां पश्चिमास्यामस्त्रदेवतां चलासनेन ध्यात्वावाह्य च फट् अस्त्रदेवतायै नम इति मंत्रेण पंचोपचारैः सम्पूज्य तां कर्करीमादाय श्रीजगदाम्बिकाज्ञयाइन्द्रश्रीजगदाम्बिका यजनं रक्ष इत्यादि सकललोकपालान् भावयन् नालाद्धा-रिधारां विमोच्य मण्डपाभ्यन्तरं प्रदक्षिणी कृत्य फट् इत्य-स्त्रमन्त्रमुच्चार्य कर्करीं यथास्थानं निवेशयेत् ॥ ततः

चत्वारि केशवे दद्यात् शिवस्यार्द्धप्रदक्षिणम् । प्रणामभेदास्तु विष्णु-कल्पलतायामुक्ताः ॥ पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चेति प्रणामोष्टाङ्गईरितः ॥ वाहुभ्यां च सजानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोयं प्रणामः स्यात् पूजासु प्रवराविमौ ॥ तथा । भूमौ निपत्य यः कुर्य्यात्कृष्णो दृष्टे नतिं सुधीः । सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात ॥ ( विष्णुधर्मे ) जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः । कृत्वा प्रणामान् देवस्य सर्वान् कामानवाप्नुयात् ॥ परमाणूनि यावन्ति ललाटे पुरुषस्य तु । पार्थिवानि भवन्तीह नमतोमधुसू-दनम् ॥ तावतोब्दास्तु विप्रेन्द्र सर्वलोके महीयते । इति उक्त च ( शारदायाम् ) ततः शंभोर्दिशिगुरुर्विकरे पूर्वसंचिते । हेम-वस्त्रादिसंयुक्तां कर्करीं तोयपूरिताम् ॥ संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम् । घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम् । चलासनेन सम्पूज्य तामादाय गुरुः पुनः ॥ रक्षेति लोकपालानां नालमुक्तेन वारिणा । देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम् ॥ अभ्यर्च्य भूयोगन्धाद्यै-रस्त्रमंत्रं समुच्चार्य्य यथा पूर्वं निवेशयेत्

स्थिरासनोभूत्वा गन्धाद्युपचारैः पूर्ववत् सम्पूज्य प्रणमेत्। ततोमण्डपरक्षणं विधाय ऋत्विग्भिः सह मण्डपाद्बहिर्गच्छेत्। हविष्याशनेनैकाशिना देवीं स्मरन्तन्मना भूत्वा दिवसं यापयेत्। पुनः सायं प्रदोषकालमवाप्य रात्रेः प्रहरत्रयं यावत् पूर्वोक्तविधिना भगवतीम्पूजयेदनेन प्रातरारभ्यरात्रेर्यामत्रयं यावत्प्रतिदिनं कर्मसमाप्तिरिति।

# अथ कुमारिकावटुकपूजनविधानम्

कुमारिकाणां भेदाः तत्पूजनप्रकाराश्च पृथङ्निवेशिता द्रष्टव्याः इदानीं शतचण्डीविधानाङ्गभूतकुमारिकावटुकपूजनमेव लिख्यते। इदं तु पूजनारंभे तदन्ते प्रदोषे वापि कुर्य्यात् तत्र कुमारिकाद्विवर्षाद्यानव गणेशः एकः वटुकश्चाप्येको गृह्यते वटुकस्तु पंचवर्षीयः गणेशोनववर्षीयः कुत्रापि गौरकृष्णभेदेन वटुकौ द्वौ गृह्येते तत्संप्रदायः

वक्त्रं तस्य स्थिरासनः॥ क्रियासंग्रहे ) यथास्थानं निवेश्याथ कर्करीमस्त्ररूपिणीम्। आचार्यः आत्मनः कुण्डे वह्निस्थापनमाचरेत्॥ शतचण्ड्यान्तु वह्निसंस्कारं पञ्चमदिने कुर्य्यात् इति। वह्निसंस्कारादिकन्तु तृतीयखण्डे द्रष्टव्यम्॥

इतिह तंत्रसम्मतं सुचण्डिकाप्रपूजनम्।
द्वितीयखण्डभूषणं भवेद्धिदां सुखाकरम्॥

कुमारीपूजनस्यावश्यकता ( अथर्वणसंहितायाम् ) ततः कुमारीयजनं कुर्यात्साधकसत्तमः। यस्मिन्कृते तु विधिवत्कर्म्मणः

महाकालसंहितायान्तु एकोगणेशोवटुकश्चेति । द्विवर्षादि-
कुमारीणां नामानि कुमारी, त्रिमूर्ति, कल्याणी, रोहिणी,
कालिका, चण्डिका, शांभवी, दुर्गा, शुभदा चेति । एताश्च-
विहितगुणलक्षणा ग्राह्याः ।

---

साङ्गता भवेत् ॥ अकृते चाङ्गहानिः स्यात् विशेषाच्छरदर्चने ।
( महाकालसंहितायाम् ) समाप्य पूजामासायं प्रदोषे पर्य्युपस्थिते ।
कुमारीपूजनं कुर्य्याद्विधिवत्पंचमं हितम् ॥ तथा कौलानां निशि
पूजोक्ता स्नातानामपराह्निकी । नित्या तु शारद्यर्चायां
काम्या नैमित्तिकीतरा ॥ तथा । न तथा तुष्यति
शिवा वलिहोमस्तुतीरणैः । कुमारीपूजनेनात्र यथा सद्यः
प्रसीदति ॥ न केवलं पूजयेत्तां भोजयेच्चापि भक्तितः । व्यङ्गता
चाप्यकरणात् पूजायाः परिकीर्तिता ॥ कुमारीपूजनेनात्र यथा
सद्यः प्रसीदति । करणात्साङ्गतापिस्यादन्यस्मिन्नकृतेऽपि हि ॥
अथ प्रसङ्गात्कुमारिकालक्षणम् । सुस्नातां रक्तपीतादिनाना-
रागोज्वलांशुकाम् । सर्वालङ्कारचित्राङ्गीमज्ञातानङ्गचेष्टि-
ताम् ॥ अजातपुष्पमनः संगां सप्ताष्टनववार्षिकीम् । अनीचजाती-
ङ्गौराङ्गीं पितृमातृमतीमपि ॥ अदन्तुरामवाग्दन्तामधिकोना-
ङ्गवर्जिताम् ॥ अदीर्घकेशीमुद्दीप्तां सुस्मितास्यामलोभनाम् ।
निषिद्धालक्षणमुक्तं ( तत्रैव ) श्यामां दीर्घदतीमोतुनयनां
पिङ्गभ्रूधजाम् । तनुमूनगतिं क्रुद्धां कुब्जां खंजां व खर्विकाम् ॥
भ्रूकेशाल्पत्वसहितां तथाचैव गलद्व्रणाम् । जातस्तरजोऽनङ्गां
प्रयत्नेन विवर्जयेत् ॥ ( तन्त्रान्तरे ) अधिकाङ्गीं च हीनाङ्गीं
रोगिणीं च व्रणाङ्किताम् । अन्धां काणां केकरां च कुरूपां लोमशां
त्यजेत् ॥ ( महाकालसंहितायाम् ) एतद्भिन्ना कुमारी तु वरणी
यार्चनक्रमे । ( मेरुतंत्रे ) कार्यपरत्वेन विप्रां सर्वेष्टसंसिद्धये
यशसे क्षत्रियोद्भवाम् । वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां

## अथ पूजनक्रमः

तत्र प्रथमं गीतवाद्यादिनिःस्वनैरानन्दादरपूर्वकं पूजागृहद्वारि अयुग्मिका ( वटुकत्रयसहिता ) गन्धतैलेन संस्नाता कुमारीरानीय तासां या सर्वाङ्गसुन्दरीतामेवैकां मुख्यां परिकल्प्य तस्यां देवीबुद्धिम्विधाय विगतत्वरः प्रयतात्मनोयजमानः पूजासंभारमादाय चण्डिकाग्रे शुद्धासनेउपविश्याचम्यप्राणायामान् कृत्वा कुमारीपूजनार्थं स्वाभीष्टसंशनपूर्वकं संकल्पं कुर्य्यात् । ततोभुवं सम्प्राथ्यापसर्प्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन कुमारीम्पूजया-

---

यजेत् ॥ ( स्कान्दे ) दारुणे चान्त्यजां कन्यां पूजयेद्विधिना नरः। शतचण्डीविषये नव कुमार्य्यः ( मेरौ ) यजमानः पूजयेच्च कन्यानां दशकंशुभम् । द्विवर्षाद्यादशाब्दान्ताः कुमारीः परिपूजयेत् ॥ द्विवर्षा सा कुमार्य्युक्ता त्रिमूर्तिर्हायनत्रिका । चतुरब्दा तु कल्याणी पंचवर्षा तु रोहिणी ॥ षडब्दा कालिका ज्ञेया चण्डिका सप्तहायना । अष्टवर्षा शांभवी स्याद्दुर्गातु नवहायना ॥ शुभदा दशवर्षोक्ता तामंत्रैः परिपूजयेत् । एकाब्दायाः प्रीत्यभावोरुद्राब्दा तु विवर्जिता ॥ (यामले) नवकुमार्य्यः । यष्टव्या पूर्वमार्गेण वक्ष्यमाणेन वा पुनः । रचनामभिश्चतुर्थ्यन्तैस्त्रिताराद्यैर्नमोन्तकैः ॥ देवता पश्चिमे मंत्री यजेदेताः सलक्षणाः । आद्या शुद्धा कालिकान्या तृतीया ललिता स्मृता ॥ चतुर्थी मालिनी ख्याता पंचमी स्याद्वसुन्धरा । सरस्वती रमा गौरी दुर्गा तु नवमी भवेत् ॥ पंचा-

म्यहम् ॥ इतिमंत्राभ्याम्वा वक्ष्यमाणतारपाशादिभूतापसा-
रणमंत्रेण भूतापसारणं कृत्वा वामे गुरुं दक्षिणे गणपतिं
मध्ये स्वेष्टदेवीस्वरूपिणीं कुमारिकां नत्वा छोटिकाभि-
स्तालत्रयेण च दिग्बंधनं कृत्वा परितोस्त्रमुद्रां भ्रामयेत्.
ततोमुख्यभूतायाः कुमार्य्याश्चरणौ प्रक्षाल्य तज्जलं देवी
पादोदकं बुद्ध्वा मस्तके दद्यात् ततः कुमार्य्याश्चरण-
संशक्तजलं स्वकीयोत्तरीयेण संशोष्य पुनरक्षतमादाय वक्ष्य-
माणतारपाशादिमंत्रेण कुमारिभिः सहागतान्पूजाविलुम्प-
कान् विघ्नरूपान् भूतानुत्सार्य्य कुमार्य्याः दक्षिणकरं स्व-
वामकरेण गृहीत्वा नमन्मौलिः वक्ष्यमाणश्लोकरूपमनुम्प-
ठन् शनकैः पूजागृहान्तः क्रमशः सर्वाः कुमारीः प्रवेशयेत्।

---

ब्दं नववर्षंचयजेद्बालं विचक्षणः। पञ्चाब्दोवटुकः प्रोक्तोनववर्षो-
गणेश्वरः ॥ इति अनुष्ठानप्रकाशे तु वटुकत्रयमुक्तं तदर्थं प्रमाणं
मृग्यम् तन्निवेशश्च पुरतोगणेशे वामदक्षयोर्वटुकाविति तत्रैवेति ॥
( महाकाल संहितायाम् ) गीतवादित्रनिर्घोषैरानन्दादरपूर्वकम्।
नीत्वा पूजागृहद्वारि कुमारिस्ता अयुग्मिकाः ॥ पंच वा सप्त वा
चापि नवैकादश वा पुनः। मुख्यैका तासु कर्तव्या यास्यात्सर्वाङ्ग-
सुन्दरि ॥ बह्वीनामप्यभावे तु भवेदेकाकुमारिका। काम्ये नैमि-
त्तिके चैका बह्व्यः शारदपूजने ॥ श्रेणीभूता उत्थिताश्च नम्री-
भूताननाः अपि। स्थापयित्वा क्रमेणैता मुख्यामादौ नियोज्य
च ॥ देवीबुद्धिं विधायास्यां साधकोविगतज्वरः। ( गृहीतमदि-
रामत्तः कल्पितार्चनसम्भृतिः ) प्राणायामं विधायादौ ततोभू-
तापसारणम्। गुरुं गणपतिं चैव वामदक्षिणयोस्ततः ॥ मध्ये
कुमारीं च तथा मूलदेवीस्वरूपिणीम्। छोटिकाभिस्तथा तालत्रि-

तदन्ते वटुकाँश्चापि । कुमारीप्रवेशसमये पठनीयाः मंत्राः यथा। समस्तजगतामाद्ये जगदाधाररूपिणि। कुमारीरूपमास्थाय प्रविशेदं गृहं मम ॥१॥ भवत्याः कीदृशं रूपं जाने मातरहं नहि। कुमारीरूपमेवेदं पश्यामि नरचक्षुषा॥२॥ भक्तिं मदीयाम्विज्ञाय त्वत्पादाम्बुजयोः शिवे। त्वया प्रकटितं रूपमीदृशं सर्वसिद्धये॥ ३ ॥ दृष्टिः कार्या न मे पापे सञ्चारेणासतः पथः। दृढायां केवलं भक्तौ दातव्या सुरवन्दिते॥ ४ ॥ शिवाद्यास्तव रूपं हि कीदृशं नेति जानते। ज्ञास्यामि कोवराकोहं पांचभौतिकविग्रहः ॥५॥

---

तथैर्वन्धर्नं दिशाम् ॥ इति ॥ दिग्बन्धनान्तरं। कुमार्य्यामूलभूतायाः पादौ प्रक्षालयेत्ततः। तज्जलं मस्तके दद्याद्देवीपादोदप्रज्ञया ॥ स्वोत्तरीयांशुकेनैव पादाम्बूपनयेत्ततः॥ पुनरक्षतमादाय विघ्नानुत्सारयेत्ततः। उदीर्य्यमाणमंत्रेण तालत्रयपुरः सरम् ॥ तारपाशकलाकूर्चास्त्राणि प्रथमतोवदेत्। भूतान्यपसारय च विघ्नान्नाशय चेत्यपि ॥ हृच्छीर्षे चरमे दद्यादेकविंशाक्षरोमनुः। वारत्रयं भूतापसारणकारणं च तत्रैव। कुमार्य्याः सहिताः सर्वे तया देवीस्वरूपया ॥ दर्शनार्थं समायान्ति यावन्तोदेवयोनयः। प्रेताभूताः पिशाचाश्च गन्धर्वागुह्यकाअपि ॥ राक्षसादानवायक्षाये चान्ये क्रूरकर्म्मिणः। सह प्रविश्य कौमार्या मण्डपं शारदार्चनम् ॥ लुम्पन्ति च कुमार्यर्चां पूजां विध्वसयन्ति च। अतोवारत्रयं कार्यं विघ्नस्योत्सारणं प्रिये ॥ ततः स्ववाम हस्तेन कुमार्या दक्षिणं करम् ॥ गृहीत्वा दक्षचरणविनिःक्षेपपुरःसरम् ॥ पंक्तीभूताः कुमारीस्ता श्लोकरूपं मनुम्पठन्। पूजागृहान्तः शनैर्नमन्मौलिः प्रवेशयेत्। समस्तजगतामाद्ये जगदाधाररूपिणि। कुमारीरूपमास्थाय प्रविशेदं गृहं मम ॥ भवत्याः कीदृशं रूपं

इति पंचमंत्रान् पठन् स्वपृष्ठभागेऽनीक्षमाणः ताः कुमारीः (वटुकत्रयं) च मण्डपान्तःनयेत्। गणेशवटुकानयने तु वक्र-तुण्डेत्यादि करकलितकपालइत्यादि पठनीयःइति ततःगन्ध-तैलेन स्नापिता नानाभरणभूषिताः कन्याः देवतापार्श्वे आनीय पंक्तिरूपेण स्थापयित्वा पुरतोगणेशं दक्षे गौरवटुकं वामे कृष्णवटुकं चापि स्थापयेत्। ततः प्रथमं गणेशं सम्पूज्य-मुख्यामेव कुमारिकाम् तन्मनुना पूजयेत् । यतः तस्याः पूजनेनैव सर्वाः पूजिताः भवन्ति । ततः इतरासां पूजनं स्वनाममंत्रेण त्रितारायेन चतुर्थ्यन्तेन वक्ष्यमाणमं-त्रेण वा कार्यं अन्ते वटुकावपि पूजनीयाविति ।

॥ अथ पूजनविधानम् ॥

प्रथमं अर्घस्थापनं पूजोपकरणस्य शुद्धिम्पूर्वोक्तवद्वि-धाय गणेशं तन्मंत्रेण पाद्यार्घाचमनगन्धपुष्पधूपदीपनैवे-द्यताम्बूलफलदक्षिणादिभिः सन्तोष्य ततः कुमारीध्यानं कुर्य्यात् । यथा प्रसन्नवदनाम्भोजां प्रोद्यद्बालार्कसप्रभाम् । रक्ताम्बरां रक्तमाल्यां नानालङ्कारभूषिताम् ॥ सस्मितां

जाने मातरहं नहि । कुमारीरूपमेवेदं पश्यामि नरचक्षुषा ॥ भक्तिं मदीयां विज्ञाय त्वत्पादाम्बुजयोः शिवे । त्वया प्रकटितं रूपमीदृशं सर्वसिद्धये ॥ दृष्टिः कार्या न मे पापे सञ्चारेणासतः पथः । दृढायां केवलं भक्तौ दातव्या सुरवन्दिते ॥ शिवाद्यास्तव रूपं हि कीदृशं नेति जानते । ज्ञास्यामि कोवराकोऽहं पाञ्चभौ-तिकविग्रहः ॥ इति पञ्चपठन्श्लोकान् स्वपृष्ठेनैव तारयेत् । अनी-

देवकन्याभिः क्रीडारसपरायणाम् । ध्यायेत्कुमारिकां बालां स्वभक्ताभीष्टसिद्धिदाम् ॥ इति ध्यात्वावाहयेत् आवाहन-मंत्रोयथा । मंत्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् । इत्यावाह्य प्रथमं मुख्यां कुमारीं स्वेष्ट देव स्वरूपिणीं वक्ष्य माण तन्मनुना त्रितारेण च सम्पूजयेत् यथा तन्मंत्र पठनानन्तरं ऐं ह्रीं क्लीं जगन्मात्रे अमुकनाम्न्यै मुख्यकुमार्यै इदं पाद्यं नमः । एवमुक्तदिशा अर्घ्यं, आचमनीयम्, गन्धं, पुष्पमालां, धूपं दीपं, अन्नादिषड्रसोपेतं नैवेद्यं, पानीयं, भोजनान्ते आचमनम् ,फलं ताम्बूलं, दक्षिणां, च समर्पयेत् ॥ अन्नोत्सर्गकाले तु कुमार्य्या उत्तानं दक्षिणकरं अन्नोपरि संस्थाप्य ऐं ह्रीं श्रीं स्त्रीं सौं सर्वशक्तिस्वरूपायै सर्वसिद्धिदायै भगवत्यै कुमार्य्यै भक्ष्यभोज्यनानाविधान्न-काल्पितषड्रसोपेतमिदं महाभोगनैवेद्यं तुभ्यमहं निवेदयामि

---

क्षमाणएवेशि गीतवाद्यपुरःसरम् ( यामले ) स्नापिता गन्धतैलेन नानाभरणभूषिता ॥ आनीय देवतापार्श्वे स्थापनीया सुधीमता ॥ ( महाकालसंहितायाम् ) मुख्यं तत्पूजनं प्रोक्तं मुख्यायाएव तन्मनुम् । तत्पूजयैव ताः सर्वाःपूजिताः स्युर्न संशयः ॥ इति ततो-ऽर्घस्थापनं कुर्य्यान्नित्यके यदुदाहृतम् । पूजोपकरणस्यापि शुद्धिरुक्ता पुरोक्तवत् ॥ ततोध्यानं प्रकुर्वीत कुमार्यावक्ष्यमाणकम् । ( तंत्रान्तरे ) प्रसन्नवदनाम्भोजां प्रोद्यद्बालार्कसप्रभामित्यादि........ स्वभक्ताभीष्टसिद्धिदाम् ॥ आवाहनं च मंत्राक्षरमयामित्यारभ्य........कन्यामावाहयाम्यहमित्यन्तम् ॥ ततः । उपचारां

गृहाण२ भुंक्ष्व२ प्रसीद२ सर्वासिद्धिं मे प्रयच्छ२ ऐं ह्रीं श्रीं नमः स्वाहा ॥ ततः पानीयं पात्रे दत्वा भोजयेत् एवमितरासामपि तत्तन्मन्त्रैः पूजनं कार्य्यम् । ततश्च वटुकौ पूजनीयाविति । द्विवर्षादिदशाब्दान्तानां सर्वासां कुमारीणां पूजने मंत्राः । जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि । पूजां गृहाण कौमारि जगन्मात्रे नमोस्तु ते ॥ इति कुमारी पूजने द्विवर्षा कुमारी भवति । त्रिपुरा च त्रिहायनेति ॥ त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीं । त्रैलोक्यवान्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ इति त्रिपुरापूजने ॥ कलात्मिकां कलातीतां कारूण्यहृदयां शिवाम् । कल्याणजननीं नित्यां कल्याणीं पूजयाम्यहम् ॥ इति कल्याणीपूजने कल्याणी चतुर्वर्षीया भवाति ॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् । अनन्तशक्तिकां लक्ष्मीं रोहिणीम्पूजयाम्यहम् ॥ ( इति रोहिणीपूजने ) रोहिणी तु पंचवर्षा कुमारी ॥ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम् ।

---

स्ततः सर्वान् पाद्यादीन् स्तुतिपश्चिमान् ॥ ( समर्पयेदितिशेषः ) ( यामलेतु ) त्रितारायेन मंत्रेण सर्वं तस्यै निवेदयत । अन्नोत्सर्गश्च ( पुरश्चर्य्यार्णवे ) ऐँ ह्रीँ श्रीँ क्लीँ सौः इत्यादि स्वाहान्तम् । इतिततः इतरासांकुमारीणांप्रत्येकंपूजनं चरेत् गन्धपुष्पैर्धूपदीपैर्नैवेद्यैरन्नसङ्कुलैरिति ॥ अन्नानि यादृशान्यस्यै मुख्यायै कल्पितानि हि । अन्याभ्यस्तादृशान्येव दातव्यान्येष निश्चयः । ततोवटुकाविति दत्तवाममार्गभेदादिति ॥ (मेरुतन्त्रे) कुमारिकादिकन्यानां पूजामंत्रान्ब्रुवेऽधुना । इत्युक्त्वा । जगत्पूज्ये जगद्वन्द्ये इत्यारभ्य

कामदां करुणोदारां कालिकाम्पूजयाम्यहम् ॥ इति कालिकापूजने ( कालिका तु षडब्दा भवति ) चण्डवीजां चण्डमयीं चण्डमुण्डप्रभञ्जनीम् । पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥ इति चण्डिकापूजने (चण्डिकामप्तहायनेति) सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शांभवीम्पूजयाम्यहम् । इति शांभवीपूजने (शांभवीचाष्टवर्षाकुमारीति) दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् । पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ इति दुर्गापूजने ( नवाब्दादुर्गा भवति ) सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम्। सुभद्रजननीं देवीं सुभद्राम्पूजयाम्यहमिति सुभद्रापूजने (दशवर्षासुभद्राचेति) एतासु कामप्येकां सर्वाङ्गसुन्दरीमुक्तलक्षणां मुख्यां स्वेष्टदेवीस्वरूपां परिकल्प्य तन्मंत्रेण पूर्ववत्परिपूज्येतरासाम्पूजनमिति नियमः । ततोभक्षयन्तीषु तासु तासामन्ने दृष्टिं निधाय स्तुतिपाठं कुर्य्यात्

सुभद्राम्पूजयामीत्यन्तं नवश्लोकाः पूजामंत्रत्वेन प्रदर्शिताः । ततः । एतैर्मन्त्रैर्लक्षणाढ्यां तां तां कन्यां समर्चयेत् । गन्धैः पुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि इत्युक्तम् ॥ भक्षयन्तीषु तास्वेवं पठेत् ततस्तोत्रमत्वरम् । कृताञ्जलिर्नम्रशिरा आसामन्ने क्षिपन् दृशौ ॥ जयकाली महाभीमे इत्यारभ्य ········ नमोस्तुनमोनमः इति महाकालसंहितोक्तं षोडशश्लोकात्मकं स्तोत्रम् तदेव पद्धत्यां लिखितम् । अत्र शारद्यर्चां समासये इत्युपलक्षणं भगवत्याः शारदीयार्चनप्राधान्यात् शरद्वसन्तयोरेव देव्याः पूजनस्य निदा-

यथा जयकालि महाभीमे भीमरावे भयावहे । संसारदावाग्निशिखे वृजिनार्णवतारिणि ॥ १ ॥ ब्रह्मेन्द्रोपेन्द्रभूतेश प्रभृत्यमरवन्दिते । सर्वपालनसंहारकारिण्याहितमारिणि ॥ २ ॥ गुह्यकालि परानन्दरसपूरितविग्रहे । परब्रह्मरसास्वादकैवल्यानन्ददायिनि ॥ ३ ॥ गुणातीतेऽपि सगुणे महाकल्पान्तनर्तकि । कुमारीरूपमास्थाय विद्या प्रज्ञास्वरूपिणि ॥ ४ ॥ आगतोऽसि ममागारं शारद्यर्चासमाप्तये । साम्वत्सरिककल्याणसूचनाय तथैव च ॥ ५ ॥ धन्योस्मि कृतकृत्योस्मि सफलं जीवितं मम । यस्मात्त्वमीदृशं कृत्वा कौमारंरूपमुत्तमं गुह्यकालिसमायाताऽब्दिकपूजाजिघृक्षया त्वमेवैतेन रूपेण देवेभ्यः प्रार्थिता पुरा ॥७॥ दत्तवत्यसि साम्राज्यं वरानपि समीहितान् । मह्यमप्यद्य देवेशि वरं देहि सुपूजिता ॥ ८ ॥ ब्रह्मणे सृष्टिसामर्थ्यं त्वम्पुरादत्तवत्यासि । विष्णवे च त्वमेवादास्तथापालनशक्तिताम् ॥ ९ ॥ महारुद्राय कर्तृत्वशक्तिमददः शिवे । देवेभ्यश्चापि दैत्यानां नाशने दक्षतामपि ॥ १० ॥ अन्तर्यामिन्यसीशानि

---

नमग्रे वक्ष्यामः । अन्यस्मिन्काले तु तत्समययोजनेन स्तुतिर्वाच्येति ॥ तथाच तत्रैव । एभिःश्लोकैः स्तुतिंकृत्वा कुमारीणां वरानने । दद्यादाचमनीयं हि भोजनान्ते गतत्वरः ॥ ततः प्रदद्यात्ताम्बूलं मृगचन्द्राभिवासितम् । सहवाद्यादिभिस्तावदनुव्रज्य विसर्जयेत् । तदुच्छिष्टं ततोदद्याज्जम्बुकेभ्योऽथ भूतले । निखनेदप्सुवा देवि समालोच्य विसर्जयेत ॥ इति ॥

त्रिलोकी वासिनामपि । निवेदयामि किंतेहं सर्वकर्मैकसाक्षिणी ॥ ११ ॥ शत्रुनाशं राज्यलाभं शरीरारोग्यमेव च । त्वत्पादाम्बुजयोर्भक्तिं याचेहं चतुरोवरान् ॥ १२ ॥ नमस्ते भगवत्यम्ब नमस्ते भक्तिवत्सले । नमस्ते जगदाधाररूपिणी त्राहि मां सदा ॥ १३ ॥ मातरं वेद्मि रूपं ते न शरीरं न वा गुणम् । भक्त्या हृत्स्थितया पूजां तव जानाम्यनन्यधीः ॥ १४ ॥ त्वं माता त्वं पिता बन्धुस्त्वमेव जगदीश्वरि । त्वं गतिः शरणं त्वं च स्वर्गस्त्वं मोक्षएव च ॥ १५ ॥ विहाय त्वां जगन्मातर्नान्यां जानामि देवताम् । नमस्तेस्तु नमस्तेस्तु नमस्तेस्तु नमोनमः ॥ १६ ॥ एवं स्तुत्वा भोजनान्ते आचमनं दद्यात् । ततः कर्पूरकस्तूर्य्यादिवासितं ताम्बूलं दद्यात् स्निग्धमुष्णं हृद्यतमं दृशां शोभाकरं तव । गृहीत्वा कज्जलं सद्योनेत्राण्यंजय पार्वति ॥ त्वत्पादाम्भोजनखस्यद्युतिकारिमनोरमम् । अलक्तकमिदं देवि मया दत्तं प्रगृह्यताम् ॥ वस्तुतस्तु भोजनात्प्रागदेयमेतदिति। हस्तपादनखरंजनार्थं अलक्तकं नेत्ररंजनार्थं कज्जलं तथान्यदुपयुक्तश्रृंगारवस्तूनि च दत्वा वाद्यादिभिः क्रियद्देशमनुव्रज्य विसर्जयेत् ततउच्छिष्टंजम्बुकेभ्योंदद्यादथवाप्सुनिखनेत्।

इतीयमागमोदिते सुचण्डिकाप्रपूजने ।
कुमारिकाप्रपूजनस्य पद्धतिरुदाहृता ॥

॥ इतिकुमारिकापूजनविधानम् ॥

# अथ कुमारीपूजनभेदाः।

( महाथर्वणसंहितायाम् ) ततः कुमारीयजनं कुर्य्यात् साधकसत्तमः। यस्मिन्कृते तु विधिवत् कर्मणः साङ्गता भवेत् ॥ अकृते चाङ्गहानिः स्याद्विशेषाच्छरदर्चने ( महाकालसंहितायाम्। इत्यारभ्य पूजयेद्विधिना नर इत्यन्तः पाठः कुमारीपूजनविधाने पञ्चषष्ठिपृष्ठे पृ० ६५ अवलोकनीयः। ) यामले। यः कुमारीं यजेन्मन्त्री सर्वपर्वसु सर्वदा। तेनार्चिता महादेवी सत्यं सत्यं न संशयः ॥ सन्ध्यैकवर्षा संप्रोक्ता द्विवर्षा च सरस्वती। त्रिधामूर्तिस्त्रिवर्षा च चतुरब्दा च कालिका ॥ सुभगा पञ्चवर्षेयमुमाषड्वार्षिकी भवेत्। मालिनी सप्तवर्षा च अष्टमी कुब्जिका मता ॥ नवाब्दा कालसंकर्षा दशवर्षा पराजिता। एकादशाब्दा रुद्राणी द्वादशाब्दा च भैरवी ॥ तत्परा स्यान्महालक्ष्मीस्तत्परा कुलनायिका। क्षेत्रज्ञा तत्परा प्रोक्ता षोडशाब्दा च चण्डिका ॥ एवं क्रमेण विज्ञेया विना पुष्पं कुमारिका। ( हेमाद्रौस्कान्दे ) एकैकां पूजयेत् कन्यामेकवृद्धया तथैव च। द्विगुणं त्रिगुणं वापि प्रत्येकं नवकन्तु वा ॥ तथा। नवभिर्भजते भूमिमैश्वर्यं द्विगुणेन तु। एकवृद्धया लभेत क्षेममेकैकेन श्रियं लभेत् ॥ एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत्। गन्धपुष्पफलादीनां प्रीतिस्तस्यान विद्यते ॥ ( वाडवानलीये ) उत्तमा सा परिज्ञेया सप्ताष्टनवहायना। मध्यमा पञ्चवर्षा च षडब्दा दशहायना ॥ एकद्वित्रिचतुर्वर्षा रुद्राब्दाद्याऽवरा स्मृता। ( महाकालसंहितायाम् ) तथा बलिं दत्वा ततोदेवयोनिभ्यः परमेश्वरि। आरभेत निरालस्यः कुमारीन्यासमुत्तमम्। नामान्यादौ खलुमहाचण्डयोगेश्वरी मता। ततः कराली च पुनः सिद्धिविकराल्यपि ॥ महान्ता मायेथज्ञेया वज्रकापालिनी ततः। मुण्डमालिन्यट्टहासि-

न्येते द्वे परिकीर्तिते ॥ चण्डका पालिनी कालचक्रेश्वर्यप्यनन्तरम् गुह्यकाली ततः कात्यायनी कामाख्यया सह ॥ चामुण्डा सिद्धिलक्ष्मीश्च कुब्जिका तदनन्तरम् । मातङ्गी तदनुज्ञेया चण्डेश्वयंथ कीर्त्यते ॥ सर्वशेषेऽथ कौमारी एता अष्टादशेरिताः । एतानि गुह्येशीविषयाणि । ( अन्यत्र तु ) नामान्यादौ व्याहरामि दुर्गा नारायणी शिवा महामाया योगनिद्रा कालरात्री कपर्दिनी ॥ उग्रचण्डा भद्रकाली अजिता चापराजिता । कात्यायनी महाकाली कामाख्या कुलनायिका भैरवी भुवनेशी च कौमार्यष्टादश स्मृताः । इतिनामान्तराण्युक्तानि तथा । अंगान्यतोवच्मि शिरोमुखं तदनुचक्षुषी । कर्णौ नासापुटौ चापि कपोलौ तत्पुरौ पुनः ॥ अधरोष्ठौ दन्तपंक्ती स्कन्धौ हृदयमेव च । बाहू च जठरं पृष्ठमूरूजानू तथैव च । जंघे पादौ च सर्वाङ्गं तावन्त्येव स्थलानि च ( त्रिशक्तिरत्ने ) कलादि च कलान्तं ताः पूजयेद्विधिना बुधः उपवेश्यासने दिव्ये कुमारीं साधकोत्तमः । वक्ष्यमाणेन विधिना देहेऽस्या न्यासमाचरेत् कुमारिका स्यात् प्रथमा द्वितीया नायिकामता तृतीया भैरवीख्याता तुर्य्या वागीश्वरी भवेत् पालिका पञ्चमी प्रोक्ता सम्बुद्धयन्ताः कुलादिकाः न्यस्याः पञ्चाङ्गयोगेन कुमारीणां कलेवरे वामावर्तक्रमादास्य चतुष्कं पूजयेत् क्रमात् ततः सिद्धाजयापूर्वा जयान्या कुब्जिका परा । कालिका पञ्चमी प्रोक्ता विज्ञेया बोधिताइमाः पूर्वादिवक्त्रसंयुक्ता चतुर्थ्यन्ता नमोन्तकाः । तत्तत्स्थानेषु विन्यस्याः स्वधिया क्रमपूर्वकम् । पञ्चप्रणवयोगेन चैतन्यमनुना सह । न्यासजालं हि पूर्वोक्तं कुर्य्यात् साधकसत्तमः ( महाकालसंहितायाम् ) ततोर्घ्यस्थापनं कुर्य्यान्नित्यके यदुदाहृतम् पूजोपकरणस्यापि शुद्धिरुक्ता पुरोक्तवत् ॥ तथा ततोध्यानं प्रकुर्वीत कुमार्य्या वक्ष्यमाणकम् ( तन्त्रान्तरे ) प्रसन्नवदनाम्भोजां प्रोद्यद्बालार्कसप्रभाम् रक्ताम्बरां रक्तमाल्यां नानालङ्कारभूषिताम् सस्मितां दिव्यकन्याभिः क्रीडारसपरायणाम् ध्यायेत कुमारिकां बालां सर्वकामेष्टसिद्धिदाम् ॥ तथा उपचा-

रांस्ततः सर्वान् पाद्यादीन् स्तुतिपश्चिमान् ( समर्पयेदितिशेषः ) ( यामले ) षष्ठ्या पूर्वमार्गेण वक्ष्यमाणेन वा पुनः स्वनामभिश्चतुर्थ्यन्तैस्त्रितारार्द्यैर्नमोन्तकैः देवतापश्चिमे मन्त्री यजेदेताः सलक्षणाः आद्याशुद्धा कालिकान्या तृतीया ललितास्मृता चतुर्थी मालिनी ख्याता पञ्चमी स्याद्वसुन्धरा सरस्वती रमा गौरी दुर्गा तु नवमी भवेत पञ्चाब्दं नववर्षं च यजेद्बालं विचक्षणः पञ्चाब्दः वटुकः प्रोक्तोनववर्षो गणेश्वरः प्रदद्यादासनं वाचा ह्रिया पाद्यं समर्पयेत् रमयार्घं निवेद्याथ स्त्रिया चन्दनमर्पयेत कुमार्य्यै शक्तिबीजेन प्रदद्यात् कुसुमोच्चयम्। चैतन्यमनुना मन्त्री धूपदीपादिकं न्यसेत् ताराएते समाख्याता भृगुर्भवसमन्वितः विन्दुनादसमाक्रान्तश्चैतन्यमनुरीरितः क्वचिद्भैरवबीजं तु पञ्चमः प्रणवोमतः एकस्याएव पूजने त्रिताराद्यमन्त्रेणैव समस्तोपचारसमर्पणं वो०त्रिताराद्येन मन्त्रेण सर्वं तस्यै निवेदयेत् इतिवचनात् ( महाकालसंहितायाम् ) भूषणानि दुकूलानि सिन्दूरालक्तकावपिकज्जलादर्शविख्याततालवृन्तानि पेटिका परिकर्माधारचोलमञ्चिकापीठदोलिका पाञ्चालिका च मञ्जूषा पादुके कुथपट्टके चन्द्रातपोपसङ्ख्यान तथोद्वर्तनभाजनम् शय्योपधानपर्य्यङ्काः समुद्गं च प्रसाधनी प्रतिग्राहाश्च हिन्दोला तथासीमन्तवर्तिका गोरोचनामृगमदौ कर्पूरं कुङ्कुमं तथा एवमादीनि चान्यानि यावच्छक्यानि सुन्दरि प्रदातव्यानि वस्तूनि कुमारी तुष्यते यथा ततोयत् स्थापितं पात्रं कुमार्य्यै प्रतिपादयेत स्वीकुर्य्यात् सा च तत्रैव तथा यत्नं समाचरेत् अगृहीते तु तत्पात्रे महान् दोषोऽभिजायते अतोयत्नस्तथा कार्य्यः स्वीक्रियेत यथा तथा ततोगृहीत्वा कुसुमाक्षतं तस्याः कलेवरे पञ्चाशत्सङ्ख्यकाः शक्तीः क्रमतः परिपूजयेत ताइदानीं प्रवक्ष्यामि सावधानानिशामय॥ आद्या जया च विजया ऋद्धिदा माययान्विता कला च सिद्धिदा सूक्ष्मा प्रभा स्यात् सुप्रभा ततः विद्युता च विशुद्धिश्च नन्दिनी च विशुद्धियुह। अथ मेधा अपराजिता च ललिता लक्ष्मीगौरी तथैव च

च गायत्री सावित्री च स्वधा पुनः स्वाहेच्छे च क्रिया विद्या प्रज्ञा दीप्ता च चेतना भद्रा ज्येष्ठा तथोमा च शिवा च मुदिता क्षमा श्रद्धाऽथ विमला कौमुद्यपि वै विशदा ततः अशोका ज्ञानदा चैव वलदा राज्यदापि च मैत्री तदनु रुद्राणी भवानी च मृडान्यपि। सर्वज्ञा चण्डिका चापि कुमारी सर्वशेषगा ॥ पंचाशत् संख्यकाएताः कुमार्याः शक्तयः स्मृताः। भैरवानष्टतदनु पूजयेदक्षतादिभिः। भैरवीभ्यस्ततोविघ्नविनायकेभ्य एव च ॥ वटुकक्षेत्रपालाभ्यां योगिनीभ्यस्तथैव च ॥ भूतेभ्यः प्रेतयक्षेभ्योडाकिनीभ्यस्तथैव च ॥ एतत्पूजां प्रकुर्वीत सदूर्वाक्षतचन्दनैः। पुनरष्टौ सर्वशेषे ङेन्तादेवीर्यजेत् प्रिये ॥ महामाया कालरात्री ततोवै सर्वमंगला ॥ पूज्या डमरुका पश्चाद्राजराजेश्वरी तथा। संपत्प्रदाभगवतोकुमारी तदनन्तरम् ॥ ( यामले ) कुलान्तः पूजयेदेनां कुलकोणेष्विमान् यजेत्। कामेश्वरी च वज्रेशी तृतीया भगमालिनी ॥ उपरिष्टात् कुलद्वन्द्वकोणेष्वेताः समर्चयेत्। अनंगाकुसुमानंगमन्मथानंगपूर्विका ॥ मदनानन्दशब्दाद्या चतुर्थी कुसुमोत्तरा। पंचम्यनंगमदनाऽऽतुरानंगपदादिका ॥ शिशिराः कथिताह्येताः शक्तयोरससंख्यकाः। अनेनविधिना पूज्या कुमारीसाधकोत्तमैः ॥ ( महाकाल संहितायाम् ) समाप्येत्थं कुमार्यर्चां तत्पुरोभुवि वारिणा। वर्तुलं मंडलं कृत्वा तन्मध्ये कुलकामिनीम् ॥ विलिख्य जलकुसुमाक्षतचन्दननागजैः। पूजयेत्मंडलं तच्च शुभदायै नमोवदेत् ॥ स्थालीगतं च तत्सर्वमन्नं तत्र निवेश्य हि। नानाविधां च सामग्रीं लेह्यचोष्यादिघट्टिताम् ॥ मांसपीनसुरापूर्णां भक्ष्यचर्व्यादिपूरिताम्। कुमारीदक्षहस्तं च स्थापयित्वान्नमूर्धनि ॥ उत्तानं वक्ष्यमाणेन मनुनाऽन्नं समुत्सृजेत्। ( अन्नोत्सर्गमन्त्रस्तु ) ऐं ह्रीं श्रीं स्त्रीं सौः सर्वशक्तिस्वरूपायै सर्वसिद्धिदायै। भगवत्यै कुमार्यै भक्ष्यभोज्यनानाविधान्नकल्पित षड्रसोपेतमिदं महाभोगनैवेद्यं तुभ्यमहं निवेदयामि। गृहाण २ भुंक्ष्व २ प्रसीद २ सर्वसिद्धि प्रयच्छ २ ऐं ह्रीं श्रीं नमः स्वाहा। इति

पद्धतिकृतोक्तः ॥ फलाफलं तु मुख्यायाज्ञेयमत्र विपश्चिता । भुंजानासु कुमारीषुनतूर्यध्वनिमाचरेत् ॥ नान्यत्र च मनोदद्यात संबाधं नैव कल्पयेत् । कोलाहलं निषेधेत अमंगलानि यानि च ॥ रुदितापानवायुं च प्रयत्नेन विवर्जयेत । सावधानोभवेदत्र किमादौभक्षयन्ति ताः ॥ मिथः किंवा प्रजल्पन्ति कुत्र वा वस्तुविग्रहः । कुत्रदृष्टिं प्रक्षिपन्ति भीताः किंवा वदन्त्यमूः ॥ इत्यादिनानाजातीयाश्चेष्टा आसां प्रयत्नतः । सावधानतया ज्ञेया भद्राभद्रस्य सूचकाः ॥ भक्षयन्तीषु तास्वेवं पठेत्तत्स्तोत्रमत्वरम् । कृतांजलिर्नम्रशिरा आसामन्ने क्षिपन् दृशौ ॥ ( स्तुतिपूर्वोक्ताः द्रष्टव्याः ) एभिः श्लोकैः स्तुतिं कृत्वा कुमारीणां वरानने । दद्यादाचमनीयं हि भोजनान्ते गतत्वरः ॥ ततः प्रदद्यात् तांबूलं मृगचन्द्राभिवासितम् । सहवाद्यादिभिस्तावदनुव्रज्य विसर्जयेत ॥ शुभाशुभफलं वच्मि सांप्रतं तव पार्वति । तत्राप्यादौ शुभं वक्ष्ये विपरीतं ततोस्य च ॥ तदुच्छिष्टं ततोदद्याजंबूकेभ्योथ भूतले । निखनेदप्सु वा देवि समालोड्य विसर्जयेत् ॥ आदौ भक्ते करे दत्ते सुभिक्षं विषयेभवेत् । पायसे यजमानस्य पशुवृद्धिः प्रजायते ॥ घृते स्यादायुरारोग्यं पूजामैश्वर्यवृद्धये । तथामोदकशष्कुल्योः सन्ततिर्भूयसी भवेत् ॥ मत्स्यजातिष्वर्थलाभः कृशरे यानसंपदः । मांसे तु पुत्रलाभः स्यात्तेमनेकामिनी भवेत ॥ फलं मांसविशेषस्य भिन्नमित्थंब्रुवे हि तत् । अर्थलाभस्तु वाराहे खाड्गे तु विजयोरणे ॥ माहिषेण तु मांसेन राज्यप्राप्तिर्भवेद्ध्रुवम् । आरोग्यं हारिणेनाशु काष्णसारेण वाग्मिता ॥ शशि मेधावितां गच्छेदाजेष्वजरतामपि । आवेये पलले देवि सर्वकल्याणमाप्नुयात् ॥ कामठे मेदिनीलाभो वहन्नत्वं च रांकुरे । वार्ध्रीणसे शत्रुनाशोहांसे मनुजवश्यता ॥ तैत्तिरेऽभीष्टसिद्धिश्च वर्तके पापसंक्षयः । मनस्तोषोवलाकायां फलेद्वोर्विश्ववश्यता ॥ कीर्तिस्तु महतीदध्नि दुग्धे संपदनुत्तमा । पिष्टके तनयावाप्तिः शाके च रिपुसंक्षयः ॥ हालायां पुण्यवृद्धिः स्याच्चोष्ये संपत्सुवा-

गृमिता । धनागमः फाणितेतु कूर्चिकायां वलोन्नतिः ॥ तुम्बीवृन्ताककूष्माण्डकारवेल्लपटोलकैः । घोषशूरणदीर्घांघ्रि मूलकैस्तेमनेकृते ॥ विद्यालाभोभवेद्देवि तक्रे वाक्पटुतापि च । गोधूमचूर्णघटिते वस्तुनि प्रतिभारणे ॥ वेद्यां दृष्टौ भवेन्मोक्षो मंडपेप्युन्नतिर्भवेत् । चामरछत्रयोस्तालवृन्तपर्यंङ्कयोरपि ॥ घंटादर्पणयोश्चापि दृग्दानेभूतिरुत्तमा । आकल्पालंकरणयोः स्पर्शचालनदृष्टिषु ॥ नानाविधानि द्रव्याणि भवन्ति महितुः प्रिये । एवं विधानि भूयांसि चेष्टितान्यशनानि च ॥ शुभादेशीनि जायन्ते विपरीतान्यतः शृणु । मुख्यभूता कुमारीचेद् वमतिर्द्धित्रिवारकम् ॥ दुर्भिक्षं जायते वश्यं प्रजाः स्युःपीड़िताअपि । राजा विनाशमायाति कुमार्यारोदने कृते ॥ उच्चारे तु महामारी पुरीषे पुरदाहनम् । अभोजने शत्रुभयमापदोवहुभोजने ॥ अभाषणेत्वामयाः स्युर्विपदोवहुभाषणे । उपसर्गावहुविधाश्चेष्टयाकरपादयोः ॥ अतिलज्जाविनाशायतथानिर्लज्जताशुभा । नानोत्पातास्तुमौनेस्युः वाद्यवाहांविनाशनम् ॥ सर्वनाशस्तु भीतायां क्रुद्धायां मृत्युरेव च । आवेशे तत्क्षणाद्राजा म्रियते नात्र संशयः ॥ शंकितायां शत्रुशंका शान्तायामीतितोभयम् । चिन्तितायान्तु विज्ञेयं तद्राष्ट्रस्यैव पातनम् ॥ मोहे वित्तविनाशः स्याज्जाड्ये पूजा च निष्फला । चांचल्ये चंचलालक्ष्मीः पूजकस्यैव जायते ॥ विषादवत्यथ यदि कुमारी तत्र जायते । सरुजं सप्रजं राष्ट्रं तदा सीदति पार्वति ॥ रोगेण म्रियते राजा यदि रुग्णा प्रजायते । दुर्भिक्षमरकातंकायद्यश्रूणि विमुंचति ॥ सर्वनाशोभवेत्तर्हि धूनोति यदि मस्तकम् त्रस्तायां रिपुजात्रासस्तस्यराज्ञः प्रदिश्यते ॥ काम्ये सति स्याद्विमुखी कालिकापरमेश्वरी । नीचैः शिरश्चेत् कुरुते असन्तुष्टा तदेश्वरी ॥ हीनायुः स्यात्तदा पृथ्वीपतिश्चेद्गद्गद्स्वरा । पूजकस्य भवेदैन्यं व्याकुला यदि जायते ॥ मोहने व्याकुलायां तु सर्वं नगरमाकुलम् । क्रीडितायां भवेद्रोगः स्वेदे दानधनक्षयः ॥ अधोवायुं वमति चेद्कुमारी दैवयोगतः । पीडितं परचक्रेण

तदा भवति पत्तनम् ॥ गीतं गायति चेत्तत्र कुमारीरहितक्रिया। सप्रजाराष्ट्रतनयदारस्य नृपते मृतिः ॥ सहागताभिः कदाचिन् मुख्या विवदते यदि। तदा समायात्यकस्मात् परचक्रं सुदारुणम् ॥ यया कयाचित्सार्धं वा येन केनचिदेव वा। कुमारी भाषते वीतभयं मन्दात्तसाध्वसा ॥ प्रजायन्ते तदा तस्य विषयेषु षडीतयाः। व्यत्यासं यदि भद्यस्य कुर्वते करचालनैः ॥ ग्रस्तं समस्तं भवति मनसोवांछितं प्रिये। उपायनीकृतं यद्यद्द्रव्यं देव्यै तु मंडपे ॥ तच्चेत्कराभ्यां स्पृशति कान्दिशीकोभवेन्नृपः। निर्वापयति चेद्दीपं कुमारी मुखमारुतैः ॥ बुद्धिभ्रंशोभवेत्तर्हि ज्ञानदीपश्च नश्यति। दैवयोगाच्च नृत्यन्ति कुमार्यश्चेत्सुराकुलाः ॥ सराजकः सविषयः श्मशानमिव जायते। वासांस्युत्सृज्य नग्नाःस्युर्यदि तत्र कुमारिकाः ॥ शत्रुभिर्म्रियते तर्हि राजा समरमूर्धनि। यदिफूत्कृत्य कूर्दन्ते करौ धृत्वा भ्रमन्ति च ॥ भूतावेशः क्षितीशस्य जायते नात्र संशयः। उच्चरिष्यामि हास्ये वा वदन्तीत्थं कुमारिकाः ॥ भोजनावसरे तर्हि महामारीभयं भवेत्। वामे वा दक्षिणे वापि चलत्तारकया दृशा ॥ रक्तोग्रया घूर्णयते शिरः स्वस्य कुमारिका। कुरुते वादहासं सा येन त्रस्यन्ति मानवाः ॥ भूतावेशोभवेत्तर्हि प्रेतान्नृत्यन्ति वापुरे। दन्तैर्दन्तान् पीडयित्वा कुर्यात् कटकटारवम् ॥ प्रयाति सदनं मृत्योः सदारसुतवान्धवः। दशावनिमिषे कृत्वा संदश्यौष्ठं रदेन हि ॥ संतर्जयति शीर्षं चेत् कंपयन्ती कुमारिका। तदेव फलमुद्दिष्टं यत्स्यात् कटकटारवे ॥ आद्यन्तिकं भजेन्मौनं करेणान्नं स्पृशेन्न च। शिरोत्यर्थं च नमयेदंगुष्ठेन लिखेद्भुवम् ॥ विदध्याद्भूतले रेखां करजैर्निष्प्रयोजनम्। संहताभ्यां कराभ्यां च कण्डूयेदथवा शिरः ॥ तृणान्यकारणाच्छिन्द्यादंगुली स्फोटमाचरेत्। पाणिभ्यां मुद्रयेन्नेत्रे द्वौकर्णौ पिदधाति च ॥ कुर्वीत वा वाहुरिकां पार्ष्णिघृष्टिं करोति वा। जृम्भणं वा मुहुर्मुहुः। गृहीत्वा पाणिनावान्नं चतुर्दिक्षु क्षिपत्यपि ॥ अन्नोपरि क्षुतं धत्ते महान्तं ग्रासमादाय मुखं व्यादाय तिष्ठति ॥

उत्थाय वा प्रचलति त्यक्त्वान्नं पूजनं तथा । आयाति वमनं वास्याः स्यातां रोमांचवेपथू ॥ निर्गच्छतोवा तद्गात्रात् पूयास्रे हेतुमन्तरा । अकस्मादेव कुरुते काकुं चेत्कारणं विना ॥ अश्लीलं वदति तथा स्ववर्ग्यार्थे पुरोहिनि । आमुक्तालंकृतिर्मुञ्चेद् गृहं यास्यामि वावदेत् ॥ यस्य कस्यापि वा कुर्याद्भर्त्सनं तत्स्थले स्थिता । उपालभेत वा कांचिद् सहैवास्या उपेयुषी ॥ भिनत्ति वानिदानं वा स्वहस्तवलयानि वा । कृते मृतस्य कस्यापि बन्धोः शोचति तत्र सा ॥ यत्किंचिद्वा प्रलपति निर्निमित्तं कुमारिका । सर्वमेतदमंगल्यं विज्ञेयं त्रिदशार्चिते ॥ दुर्भिक्षं धन-नाशं च रोगोमारीभयं तथा । पदेपदे च विपदः शोकोऽव्याधी-रिपून्नतिः ॥ परचक्रागमोकस्मादग्निदाहः पुरे गृहे । मृत्युत्रासश्च दारिद्र्यं विच्छेदोबन्धुभिः सह ॥ भूतप्रेतपिशाचाभिनिवेशोपि गृहे गृहे । अष्टाभिस्तु महारोगैः प्रजानां निधनं भवेत् ॥ कुमारी चेष्टितद्वारा ज्ञायते हि शुभाशुभम् । वार्षिकं च फलं राज्ञां जयोवाथ पराजयः ॥ मृत्युर्दुःखं धनं सौख्यं शत्रुभीतिर्बलोन्नतिः ॥ राज्यवृद्धिः प्रजोत्पीडा व्यंगतानीकसंचयः ॥ कुमारीपूजनात्सर्वं ज्ञायते भोजनादपि । परीक्षा यत्नतस्तस्माद्राज्ञा स्वस्यशुभाशुभम् अर्चातोपि विशेषेण भोजनेन सुरेश्वरी । जाते शुभे समीचीनं वृत्ते तदितरत्र हि ॥ काम्यार्चा बहुसंभारैर्दोषं तज्ज्ञं निवारयेत् । निवृत्य स्वगृहं याता रुग्णा यदि कुमारिका ॥ तस्मिन्नेवाहनि भवेत् तथापि न शुभं फलम् । इत्यादि फलबाहुल्यं शुभस्याप्य-शुभायच ॥ मया विविच्य कथितं ध्रियस्व हृदि यत्नतः । ततो-निशीथसमये विधिवत् पूजनं ततः ॥ ( वाडवानलीये ) पूजिता शरदर्चायां या कुमार्युक्तलक्षणा । सर्वपर्वसु सा पूज्या यावत्पुष्पं न दृश्यते ॥ पुष्पमित्युपलक्षणम् । "महाकालः" । पीठमूर्त्याः प्रकुर्वीत धूपदीपानुलेपनैः । नैवेद्यैरुपहारैश्च गीतवाद्यादिभि-स्तथा ॥ ( यामले ) कुमारी पूजिता हन्ति कलुषं पूर्वसंचितम् । कुमारिकां विजानीयात् साक्षात्प्रकृतिरूपिणीम् । यत्रं पुष्पं फलं

तोयं यत्किंचिद्वस्तु शोभनम् । अनन्तफलदं प्रोक्तं कुमार्यै चेत्समर्पयेत् ॥ भोजिता चेत् कुमारी स्याद्भोजितं भुवनत्रयम् । ब्राह्मणाय सुशीलाय कुमारीं यः समर्पयेत ॥ पृथिवीदानजं पुण्यं सोऽश्नुते नात्र संशयः । सः सर्वसिद्धिमाप्नोति यः कुमारीं समर्चयेत् ॥ वसन्ति सततं देहे कुमार्यायोगिनीगणाः । अतः पूज्या नमस्यासा लालनीया तदिच्छया ॥ अशक्त्या पूजयेदेकां कुमारीं साधकोत्तमः । विनाकुमारीपूजां न कर्म परिहापयेत् ॥ योनित्यमर्चयेदेनां तस्य स्यात्सिद्धिरुत्तमा । नवरात्रे समायाते नवम्यन्तं निशासुधीः ॥ नानोपहारैरभ्यर्च्य कुमारीं वृद्धिपूर्वकम् । वृद्धिक्रमेण प्रयजेद्वाञ्छितां सिद्धिमाप्नुयात ॥ अथवा प्रजपेन्मन्त्री जपेत् साग्रं सहस्रकम् । यदिसाक्षोभमायाति स्वयमेव विलासिनी ॥ तया सह नयेद्रात्रीं वासरं वा निशातधीः । कुमारीं नस्पृशेदेव भावयुक्तेन चेतसा ॥ अन्यथा मृत्युमाप्नोति नोचेद्देवी पराङ्मुखी । ( महाकालसंहितायाम् ) एवं दोषगुणौ ज्ञात्वा कुर्वीत विधिपूर्वकम् । कुमारी पूजनं भक्त्या शरत्पूजनकर्मणि ॥ बलिहोमादयश्चास्य कलां नार्हन्ति षोडशीम् ।

## इतिकुमारीपूजाविधिः

# अथ सविशेषबलिदानविधिः

( सामान्यविधिः १५२ पृष्ठे अवलोकनीयः । महाकाल संहितायाम् ) यस्य-यस्य हि देवस्य योयोबलिरुदीरितः । एतत्प्रसङ्गेन शिवे ससकंचन कथ्यते । स्वयम्भुवोबलिः सिंहो विष्णोर्वार्ध्रीणसः स्मृतः ॥ अश्वइन्द्रस्य कथितोगण्डकः परमेष्ठिनः । (विष्णवादीनुद्दिश्य वार्ध्रीणसादेरुत्सर्गमात्रं नतु हिंसेति विधानमुक्तावलीकृतः । वार्ध्रीणसलक्षणन्त्वग्रे वक्ष्यते ) तथा । शूकरोभैरवस्यापि प्रमथानांच जम्बुकः । प्रियोद्वीपोत्रेधसश्च चित्रकोर्बलिरिष्यते ॥ गणाध्यक्षस्य भल्लूकोयक्षाणां लोहितोमृग. । स्कन्दस्य गोधाविश्वेषां देवानां चमरोऽपि च ॥ विनायकानां च बलिः कृष्णसारउदीरितः । वेतालानां च महिषोगुह्यकानां च शम्बरः ॥ शच्याः शल्योरोहिषस्तु तुषितानां प्रकीर्तितः । कृकलाशोदानवानां दैत्यानां श्येन उच्यते ॥ हिरण्यगर्भस्य बलिरष्टापदउदीर्यते । ईशानस्य पद्स्वर्चा रुरू रुद्रस्य कोर्यते ॥ बलिर्ममापि गोकर्ण साध्यानां गवयस्तथा । सृमरोभासुराणां च वसूनामृतइष्यते ॥ बृहस्पतेस्तुगवयोहस्तीचैव प्रजापतेः । कुरङ्गोगणसाध्यानां तक्षउष्ट्रोनिगद्यते ॥ श्राद्धोयविश्वदेवानां वृषभः परिकीर्तितः । अग्नेस्तु कुटरुः पक्षो चक्रवाकः प्रचेतसः ॥ पारुष्णोगार्हपत्यस्य दक्षिणाग्नेस्तु चीनकः । चमूरुराहवनीयस्य शशोर्यम्ण उदीरितः ॥ वायोर्बलाका सोमस्य हंसश्चन्द्रस्य वैलवः । वरुणस्य तथा नक्रोमित्रस्य च कुलीयकः ॥ चाषोऽग्नीषोमयोरीयइन्द्राग्न्योः क्रौंचएव च । मित्रमित्रस्य मद्गुः स्यात्कुलीकस्त्वप्रुरेव हि ॥ आदित्यानां तथान्यङ्कुः कृष्णोपि हि यमस्य च । स्यात्प्राजापत्यवाय्वोश्च गोमृगौ बलिरीश्वरि ॥ नासत्ययोर्मयूरोपि पूष्णोजंबुकउच्यते । गर्दभोनिर्ऋतेर्मित्रावरुणस्य कपोतकः ॥ गोधादिदेवपत्नीनां मालिकः सवितुस्तथा । कुञ्जीकोदेवयोनीनां राजक्षोप्सरसामपि ॥ अन्तरिक्षस्य योकत्रस्तु भूमेराखुर्दिवः कशा । दिशाम्बलिस्तु नकुलोविदिशाम्बभ्रूरेव च ॥ अपांमत्स्यस्तेजसस्तु होमीयाख्योभुजङ्गमः । जलः सामान्यकालस्य तथा कालस्य चिल्लिका ॥ सुवर्णश्चापिदात्यूहो बलिर्वत्सरमासयोः । कपिंजलोवसन्ततोग्रीष्मस्य कलविङ्कः ॥ वर्षाणां तित्तिरिर्ज्ञेयः शरदोवर्तिका तथा । कृकरश्चापि हेमन्त: शैशिरेषुककर्यपि ॥ पक्षस्य खञ्जरीट: स्यादयनस्य

तु सारसः। पारावतोदिनस्यापि रात्रेः सीरायुरुच्यते॥ प्रोक्ता जलौका सन्ध्याया वैश्वराजस्तिथेरपि। यामस्य सुखिलोकस्तु संक्रान्तेरन्यपावकः॥ किरीककोग्रहाणां च नक्षत्राणां शरव्यकः। राशीनामपि शाकल्यो लग्नानामपि चुंचुटः॥ शिशुमारः समुद्रस्य नदीनां च तिमिङ्गिलः। आवर्तानां च मकरोविचीनां संकलोऽपि च॥ उष्ट्रःपातालदेवस्य शङ्कुर्वै ताण्डवस्यच। पर्जन्यानां च मण्डूको वृष्टेरपि महीलताः॥ विद्युतामपि सरचूको भारद्वाजोऽशनेरपि॥ सिनीवाली कुहूराकानुमतीनां क्रमेण च॥ शरादिकङ्कहारीतजोवञ्जीवाः प्रकीर्तिताः। वलिः कलङ्कः प्रेतानां पिशाचानां वक्रोऽपि च॥ भूतानां कुररश्चापि कुक्कुटोब्रह्मरक्षसाम्। गन्धर्वाणां कोकिलोपि घोणकानां च वायसः॥ वर्तकः क्षेत्रपालानां वटुकानां च कुक्कुटः। यावत्योजातिहारिण्यस्तासां भारुण्ड उच्यते॥ छुछुन्दरीर्ह्यशमनः स्याज्जलस्य शरभोवलिः। चिल्लोवलिडाकिनीनां किन्नराणां च तक्षकः। भूलिङ्गोयोगिनीनां स्यान्निधीनां टिट्टिभोवलिः। इन्द्रियाणामथोवच्मि चक्षुषोर्मशकोवलिः॥ श्रोत्रयोर्भ्रमरश्चापि घ्राणस्य सरघास्तथा। रसनायावलिश्चिक्का मक्षिका च त्वचोवलिः॥ पतङ्गोमनसश्चापि प्लुषिर्वाचोवलिर्मतः। झिल्लीकीटोवलिः पाण्योः खद्योतः पदयोर्वलिः॥ पायोर्जूका समुद्दिष्टा उपस्थस्य सिनोपतिः। वनस्पतीनां मधुको लतानां तैलपायिका॥ मत्कुणाश्चौषधीनां स्युस्तरूणां च पिपीलिकाः। गुल्मानां गन्धकीटोऽपि शैलानां वुद्बुगतास्था॥ शवोवलिः पूतनायाः राक्षसीनामहिर्वलिः। जातमात्रशिशुः षष्ठ्याः शङ्गोवालग्रहस्य च॥ चकोरोगरुडस्यापि मातॄणां तैलपायिका। विद्याधराणां च कोलोयक्षानां शुकएव च॥ गृध्रोऽरुणस्य च वलिर्नरकस्य करेटुकः। राज्ञोवलिर्मर्कटोपि कान्तारस्य प्लवः खगः॥ सर्वेषामेव देवानां देवीनां च विशेषतः। वलित्वेन विनिर्दिष्टा महिषश्छागलादयः॥ जलजास्थलजाश्चापि ग्रामजारण्यजास्तथा। पशवः पक्षिणः कीटास्तिर्यग्योनयएव च॥ इमे विधात्रा विहिता वलित्वेन दिवौकसाम्। नान्यैर्नैवेद्यसंभारैस्तथा तुष्यन्ति देवताः॥ यथा पशूनां वलिभिर्विहङ्गानां तथैव च। अतएव हि देवेशि मीमांसावेदयोरपि॥ देवानां प्रियशब्दस्तु पशुपर्याय उच्यते। एवं विज्ञाय सिद्धान्तं देव्याः सन्तोषहेतवे॥ पशून्दद्याद्वलित्वेन मेध्यानपि विहङ्गमात्। कृमिकीटादयः सर्वे ये तिर्यञ्चः प्रकीर्तिताः॥ नते देवीर्वलित्वेन विधात्रा विहिता प्रिये। आलभेत वृषं श्वेतं यज्ञे गोमेधनामनि॥ नरमेधे नरं चापि गजक्रान्ते गजं तथा। अश्वमेधे तथैवाश्वं शङ्खचूडे च हस्तिनम्॥ ब्रवीति यत्र वेदोऽपि तत्र कैवविचारणा। तस्मान्नैमि-

त्तिकार्चायां वलिरावश्यकः प्रिये ॥ विशेषेण प्रदातव्योदेवीसन्तोषहेतवे । वलिं विना नैव देवीपूजामङ्गीकरोति च ॥ तत्राप्युभौ प्रशस्येते महिषश्छाग एव च । अन्यदेवोचितवलिर्विचारैः किं प्रयोजनम् ॥ येन सन्तुष्यते काली तं विचारं ब्रुवेऽधुना । याः काश्चिद्गुह्यकाल्यास्तु विहिताः पशुजातयः ॥ आरण्या अथवा ग्राम्या जलजानां च जातयः । खगानां जातयश्चापि ताएवादौ ब्रवीमि ते ॥ मत्स्यामृगा-वराहश्च कच्छपामहिषास्तथा । गण्डकागोधिका ग्राहाः शार्दूलाहरयोऽपि च ॥ नकुलाः शरभश्चापि गवयाश्छागलास्तथा । मनुष्याः पक्षिणश्चापि तेषां कोशा अपि प्रिये ॥ भगवत्या वलित्वेन विधात्रा वलिकल्पिताः । एतेषां वलिदानेन सर्व-कार्याणि साधयेत् ॥ ( वलिदानफलान्याह । ) वलिभिर्वर्धते ह्यायुर्वलिभिः शाम्यते रुजा । जयत्यरातीन् वलिभिः प्राप्यते वलिभिर्धनम् ॥ सिद्धिम प्नोति वलिभि-र्वलिभिस्त्रिदिवं व्रजेत् । निष्कामाणां वलौ दत्ते प्राप्योमोक्षोऽपि यज्ञवत् ॥ (मत्स्या-दीनांजातिभेदानाह । ) जातिभेदानथो वक्ष्ये समासादवधारय । अष्टादशविधा मत्स्याश्चतुर्विंशतिधा मृगाः । वराहाः पञ्चधा प्रोक्तास्त्रिभेदाः कच्छपा अपि ॥ द्विभेदामहिषास्तद्वद्गण्डकाश्च चतुर्विधाः ॥ गोधिका च त्रिभेदास्याद्द्विभेदोग्राह एव च । त्रिविधौ व्याघ्रसिंहौ च नकुलोद्विविधोऽपि च ॥ शरभश्चैकजातिस्याद्ना-स्यभेदोवरानने । गवयस्त्रिविधः प्रोक्तश्छागः पंचविधोमतः ॥ चतुर्विधा मनु-ष्याश्च षट्त्रिंशज्जातयः खगाः । क्रमेण नामान्येतेषां व्याहरामि तव प्रिये ॥ शङ्कुलोरोहितः शालः पाठीनोराघवोपि च । प्रोष्ठी नालशिशुव्यङ्गमेरेठाङ्गुलिचा-स्वटाः ॥ तिमिभाकूटराजीवगण्डकाः शस्तजातय । गोकर्णकृष्णसारेणरुरुन्य-ङ्कुचमूरवः ॥ प्रियवातप्रमीचीनसमूहसृमरऋषाः । रङ्कुशम्बरकन्दल्यः सुखरोरोहि-षोवटः ॥ कदल्येन विशालाच्च पतङ्गोल्लाटरोहिताः । वराहास्तव्धकक्रोड कुशात्ती-णजलस्वनाः ॥ कर्मश्चित्री चित्रकटो वामनश्चेति वै त्रिधा । अकेरः क्षीरिलश्चापि महिषोद्विविधोमतः ॥ कौञ्जरोवारिलश्चार्मी वैशः खड्गाश्चतुर्विधाः । हिरण्या किलिका मीनागोधिकात्रिविधा मता ॥ दीर्घग्रीवश्चर्मपूरो ग्राहोद्विविध एव च । तरक्षुस्तरुगश्चित्रो व्याघ्रस्त्रिविध उच्यते ॥ शरलः क्रकयुर्मैदी सिंहोऽपित्रिविधो-मतः । स्थूलः कलिङ्गश्च तथा नकुलोपिद्विधेरितः ॥ एकजातिं विनानैव शरभोन्यः प्रजायते । लाटिकी विट्वरः सास्नी गवयोपि त्रिधोच्यते ॥ त्रिपिवः पालितः क्षौरी वर्करोमारिषस्तथा । पंचभेदोभवेच्छागोऽविरपि त्रिविधोमतः ॥ उर्मिकः पारिशोभेटो मनुष्यानपि मे शृणु । न मनुष्यस्य सामान्यं चातुर्विध्यं हि वर्तते ॥

प्रकारभेदतस्तस्याभिन्नता परिकल्पते । चण्डिकाऽनुगृहीतस्य वितृष्णस्य भवाम्बुधौ ॥ तल्लोकावाप्तिफलश्रवणोत्कण्ठितस्य च । स्वतः प्रवृत्तिर्देव्यास्तु वलिरूपोभवाम्यहम् ॥ आगत्य च स्वयं ब्रूते मांवलित्वेन योजय । प्रत्यक्षमेव सर्वेषां नृपस्य च विशेषतः ॥ सएकउदितोदेवि द्वितीयमवधारय । वहुवित्तस्यरत्नादेस्तेनोलोकधृतश्च यः ॥ निर्णीय परिषन्मध्ये प्राड्विवाकेन कीर्तितः । शीर्षच्छेद्य तया देवि द्वितीयः सनिगद्यते ॥ युद्धे जितोधृतः शत्रुः कूटयोधीभटाकृतिः । सतृतीयोविनिर्दिष्टश्चतुर्थमवधारय ॥ य आततायी पान्थानां कान्तारेप्यथवा गृहे । विदितश्चापि निर्णीतः साक्षिभिः सत्यवादिभिः ॥ सहितुर्यः समाख्यातः पंचमोनोपपद्यते । वक्ष्ये विहङ्गान्ये देव्यै वलित्वेन निरूपिताः ॥ पारावतास्ताम्रचूडा हंसावाध्रींणसास्तथा । उलूका लोहपुष्ठाश्च सर्वाघाटाश्चसारसाः ॥ कलविङ्काश्च कोराश्च चक्रवाकाः शुकाअपि । शतपत्राभरद्वाजाभूलिङ्गाश्चचटकास्तथा ॥ कारण्डवाश्चक्रवाकाः पारुश्चाश्चकुलीयकाः । प्लवाः कुरटवश्चापि वर्तका कुक्कुभाअपि ॥ तित्तियुरूरूकक्रौञ्चाश्च नवचाषशिखण्डिनः । योक्त्रदात्यूहसाकल्यपैङ्गराजन्यवायकाः ॥ जिह्वीकाः सुखिलोकाश्चमद्गुगुहारितवर्तकाः । जीवञ्जीवाश्चहारीताः कोयष्टिश्मभर्टिट्टिभाः ॥ वक कोकिल गृध्राश्च करेटुश्चोनखञ्जनाः । चिरीकाश्चैवजहिकाः सीचापुञ्जन्तमेकलाः ॥ कशा सुपर्णभारुण्डा हामायाश्चापि पार्वति । इति ते कथिताः सर्वे षष्टिभेदाविहायसाम् ॥ देव्यैयोग्यवलित्वेन नान्यउक्ताविहङ्गमाः । एतेषां जातिभेदास्तु वर्त्तन्ते डामरादिषु ॥ वहुत्वात्ते न कथ्यन्ते ग्रन्थगौरवभीतितः । कपोतभ्रामकावङ्कमनित्थंतुरुकादयः ॥ पारावतास्तु दशधा-माहेयाहंसाः पंचविधास्तथा । राजहंसामल्लिकाख्याधार्त्तराष्ट्राः परिस्फुटाः ॥ एवमन्येपि ज्ञेयाविहगजातयः । तथा । अधुनासंप्रवक्ष्यामि वलिनायेनयेनहि । यं यं कालमभिव्याप्यतुष्टाभवति कालिका ॥ अष्टादशविधैर्मत्स्यैः कच्छपैरपिचण्डिका । तृप्यतेमारुमात्रंहि वलित्वेन नियोजितैः ॥ ताम्रचूडस्य वलिना हंससारसयोरपि । तृप्ताभवति मासौद्वौ त्रीन्मासान्द्वीपिनक्रयोः ॥ कलविङ्कैरुलूकैः स्यात् तृप्तामासचतुष्टयम् । पंचमासान्भवेत्तृप्ताशुकैः पारावतैरपि ॥ दार्वाघाटैश्च कोरैश्च षण्मासांस्तृप्तिमाप्नुयात् । तृप्यतेसप्तमासान् सा जिह्वीकैश्च कुलीयकैः ॥ मासानष्टौगवेत्तृप्ता नवमासान्पिकैरपि ॥ चतुर्विंशतिभेदैश्च कुरङ्गैर्गवयैरपि । तथादात्यूह दानेन गजराजैर्वरानने ॥ हारीतवलिनादेवी दशमांसाँश्च तृप्यते । गोधिका वलिदानेन तृप्ताव्दं वाप्यजामासानेकादशशिवा तृप्तिमायाति[illegible]द्विदा ।

यते ॥ अविनानकुलेनापि त्र्यब्दं तृप्ताभवेदिति । आजेन वलिना वापि तुष्टा स्यात् पंचवत्सरान् ॥ जीवञ्जीवेन पाङ्क्तेन तुष्यतेष्टौच हायनान् । पार्षतैणेन वलिना वराहवलिनाऽपि च ॥ द्वादशाब्दमभिव्याप्य तुष्टाभवति कालिका । हामायनामा यः पक्षी सिंहाकृतिधरोऽरुणः ॥ तद्दानात्तुष्यते देवी पंचविंशति वत्सरम् । त्रिविधैरपि शार्दूलैर्द्विविधैर्महिषैरपि ॥ चतुर्विधैस्तथा खड्गैर्वलित्वेन समर्पितैः । शतं संवत्सरं यावच्चण्डिका प्रीतिमश्नुते ॥ एकोवार्ध्रीणसोऽजश्च विशेषः परिकीर्त्यते । अपरः पक्षिजातीयोहिमवच्चरणस्थितः ॥ वृद्धः श्मश्रुधरः श्वेतः पादस्फोटीन्द्रियोज्झितः । त्रिविधोरक्तरसनोनिःशृङ्गः स्वरभङ्ग्यजः ॥ पीतचञ्चुरक्तशिराः सितपक्षोऽसिताङ्घ्रिकः । नीलग्रीवः पाटलाभगलोवार्ध्रीणसः खगः ॥ ( कालिकापुराणेऽपि ) त्रिपिवन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजं परम् । वार्ध्रीणसं विजानीयाद्धव्यकव्येषु सँस्कृतम् ॥ नीलग्रीवोरक्तशिराः कृष्णपादः सितच्छदः । वार्ध्रीणसः सपक्षीस्यान्ममविष्णोरपि प्रियः ॥ ( महाकालसंहितायाम ) अजवार्ध्रीणसैस्तुष्टा भवेत्त्रिंशतिवत्सरम् । निरङ्कसामान्य शशैर्वलित्वेन निरूपितैः ॥ जायते गुह्यकाली सा तुष्टा पंचशतंसमाः । शरभैरथसिंहैश्च शोणितैश्च खदेहजैः ॥ दत्ते सन्तुष्यते काली सहस्रंपरिवत्सरान् । वार्ध्रीणसविहङ्गेन दत्तेन विधिना प्रिये ॥ अब्दं द्वादशसाहस्रं तुष्यते जगदम्बिका । चौराततायिरूपेण नारेण वलिना तथा ॥ त्रीणि लक्षाणि वर्षाणां प्रीतये गुह्यकालिका । एते ते कथिता देवि वलयस्तृप्तिहेतवः ॥

## ॥ अथ निषिद्धवलयस्तत्रैव ॥

अदेयानधुना वक्ष्ये पशूनपि विहङ्गमान् । भल्लूकान् मर्कटान् फेरून् सर्पाखोतून् शुनस्तथा ॥ क्रमेलकाँश्च वालेयान् शल्यान् विट्चरशूकरान् । जलजेष्वपि मण्डूकान् रासभान् शिशुमारकान् ॥ कुलीरान् दीर्घपृष्ठादीन् मीनानपि च भूरिशः । खगेषु वायसाँश्चिल्लान् दुर्विदान्कुलिकानपि ॥ एवमन्येऽपि विज्ञेया नानाशास्त्रागमादिषु । ( तथा ) काँश्चिन्निषिद्धान्वक्ष्यामि विहितेषु वलिष्वपि । ग्राम्याणामथ वन्यानां पशूनां पक्षिणां तथा ॥ स्त्रियं नैव प्रयुञ्जीत वलिकर्मणि साधकः । ज्ञानपूर्वं वलिन्दत्वा नरकं प्रतिपद्यते ॥ अज्ञानेन वितीर्यापि किंचित्पापं समश्नुते । अत्रिमाससमुत्पन्नं पशुं न विनिवेदयेत् ॥ न्यूनं तदर्धान्नखगं जातु देव्यै समर्पयेत् । भग्नशृङ्गं ... च्छिन्नलाङ्गूलमेव च ॥ काणं व्यङ्गं रोगिणं च

शृङ्गाहतनरं तथा । दुष्टं गलितरोमाणं क्षीरपंचगलद्विशम् ॥ पशुं न दद्याद्दीर्घं तथा चैवविहायसम् । छिन्नत्रोटिं छिन्नपक्षं रुग्णमाहारवर्जितम् ॥ अनुड्डीनं तथाकाशे मातुरङ्के परिस्थितम् । विहितावपि विज्ञातौ न दद्यात् पशुपक्षिणौ ॥ यस्य यस्य निषिद्धोयः सइदानीं निरूप्यते । नरं केशरिणं व्याघ्रं चाषं खंजनमेव च ॥ स्वकीयरुधिरं मद्यं नदद्याद्ब्राह्मणः क्वचित् । तौ द्वौ खगौ तथा सिंहं द्वीपिनं मानुषं तथा ॥ दत्वा रोगी च हीनायुर्भूत्वा नरकमश्नुते । आत्महत्यामवाप्नोति दत्वा स्वरुधिरं द्विजः ॥ ( महाकाल संहितायाम् )

दत्वा देव्यै द्विजोमद्यं ब्राह्मणाद्विच्युतोभवेत ।

चाण्डालत्वमवाप्नोति सर्वकर्मविवर्जितः ॥ न कृष्णसारं वितरेद्वर्हिणं च नराधिपः । कृष्णसारं ददद्देव्यै द्वितीयोवर्ण ईश्वरि ॥ ब्रह्मघ्नत्वमवाप्नोति सर्वं कर्मविवर्जितः । न वैश्या शूकरं दद्युर्न वर्तककुलीयकौ ॥ ददतां तत्क्षणादेव महापातकता भवेत् । वर्णोऽपरोनोवितरेद्गोधिका शुकखड्गिनः ॥ मूषं मार्जारकं चाषं शूद्रोदत्वापतत्यधः । मोहाद्धठाद्वा ददतां सद्योब्रह्मघ्नता भवेत् ॥

वानप्रस्थोब्रह्मचारी गृहस्थोवा दयापरः । सात्विकोब्रह्मनिष्ठश्चयश्च हिंसाविवर्जितः ॥ ते न दद्युः पशुवलिमनुकल्पंचरन्त्यपि । अनुकल्पेऽपि मुख्येऽधिकारिणएवाधिकारः इति प्रागुक्तम् ॥

## अनुकल्पविधिस्तुतत्रैवोक्तोयथा

सात्विकोजीवहत्यां हि कदाचिदपि नोचरेत् । इक्षुदण्डं च कूष्माण्डं तथा वन्यफलादिकम् ॥ क्षीरपिण्डैः शालिचूर्णैः पशुंकृत्वा चरेद्वालिम् । तत्तत्फलविशेषेण तत्तत्पशुमुपानयेत ॥ तथा । महिषत्वेन कूष्माण्डं छागत्वेनैव कर्कटीम् । वृन्ताकं कुक्कुटत्वेन मेषत्वेन च तुम्बिकाम् ॥

रंभापुष्पंवीजपूरं पिण्डं जीवं कलौभवेत् । मानुषत्वेन पनसं मत्स्यत्वेनेक्षुदण्डकम् ॥ शूरणं शम्बरत्वेन तथा कोशातकं मृगे । पायसं तु गजत्वेन मार्जारत्वे कुलित्थकम् ॥ पटोलं शूकरत्वेन शर्करावालुकं तथा ॥ खड्गत्वेन महेशानि मत्स्यत्वे कदलीफलम् ॥ मूषत्वे मूलकं चैव सारङ्गत्वे कालिंजकम् । करित्वे नारिकेलं च कल्पयेत्परमेश्वरि ॥ माषाः सर्ववलित्वेन सर्वेषां कृशरान्नतः । (तथा) तत्तत्पशुप्रदातृणां फलावाप्त्यै वरानने । घृतगोधूमैस्तवाद्यैः फाणितैरन्नजैस्तथा ॥ कृत्वा तं तं पशुं दद्युस्तत्तत्फलमवाप्नुयुः इति ॥

अथ प्रशस्तपशुलक्षणं ( रत्नावल्याम् ) ऊर्ध्वशृङ्गोलम्बकर्णः एकवर्णोऽतिपीवरः । नीरोगः पुष्टकायश्च सदर्पश्च वलोर्जितः ॥ नाधिकाङ्गोनहीनाङ्ग एकद्वित्र्यादिहायनः । प्रशस्तपशुरीदृक्षो देवीप्रीतिकरः शुभः ॥ ( तंत्रान्तरे ) कृष्णवर्णश्छागलस्तु पृष्ठवंशे सितोयदि । प्रशस्तं तं विजानीयाद्विपरीतं विवर्जयेत् ॥ विपरीतमिति श्वेतवर्णम् । पृष्ठावच्छेदेन नीलम् ॥ ( त्रैपुरपद्धत्याम् ) वल्यन्ते छागवलिं तथा मेषं सुरेश्वरि । प्रदद्यात्सर्वकालेषु सर्वकामार्थसिद्धये ॥ नित्ये नैमित्तिके काम्ये माहिषं वलिमाहरेत् । जयाय सर्वकामाय देवीलोकाप्ति सिद्धये ॥ ( महाकालसंहितायाम् ) सहस्रायुत लक्षाणां वलीनां संभवे सति । द्वौत्रीन्पंचतथाष्टौ वा दश वा द्वादशापि वा ॥ एभ्योधिकान्नैव कुर्य्याद्देवी भावनया स्थितान् । ( अत्र-देकां वा पाठः ) प्राच्याशाभिमुखान् कृत्वा युगपन्मंत्रमीरयेत् ॥ तंत्रेणैव वलीन्सर्वान् प्रोक्षयेद्देशिकोत्तमः । छेदकाश्चापि भूयांशः कर्त्तव्याः कमलानने ॥ हरिद्वीप्यजकोरभ्रलुलायाकाशगामिनः । ( उरभ्रोमेषः ) दद्यादेतान् वामभागे पानकानि च यानि च ॥ तथा मत्स्यान् आह्वान् शशान् खड्गान् कमठान् कुलगोधिका । यावतोमृगभेदांश्च दद्यात्सम्मुखपक्षिहिं ॥ ( श्रीक्रमसंहितायाम् ) यत्नतस्तं वलिं दद्यान्नहन्यादात्मना पुनः । यदि हन्यात्प्रमादेन रौरवं नरकं व्रजेत् ॥ ( महाकालोऽपि ) स्वहस्तेन पशुं हत्वा पशुयोनिमवाप्नुयात् । ( तन्त्रान्तरे ) स्वयं वा भ्रातृपुत्रो वा भ्राता वा सुहृदापि वा । सपिण्डश्छेदयेद्वाऽपि

शुद्धान्तः करणोयदि ॥ न रिपुं नाङ्गहीनं वा न काणं नापि कुब्जकम् । न योजये-
च्छत्रुपक्षं वलिच्छेदनकर्मणि ॥ इत्युक्तम् ॥ महिषवलिदानेविशेषउक्तो ( महाकाल-
संहितायाम् ) विशेषः कश्चिदधिको महिषे तं ब्रुवेऽधुना । तदङ्गे देवताः सर्वाः
पूजयेत्कुसुमाक्षतैः ॥ प्रणवादिनमोन्तैश्च मध्येङन्तैः पदैस्तथा । स्थानानि देवता-
श्चापि क्रमेण कथयामिते ॥ ब्रह्मरंध्रे च नासायां कर्णयोरसने तथा । नेत्रयोर्व-
दने चैव ललाटे तदनन्तरम् ॥ दक्षगण्डे वामगण्डे ग्रीवायां केशएव च । दक्ष-
भ्रुवि तथा वामभ्रुवि चैवं वरानने ॥ ओष्ठेऽधरे च स्कन्धे च हृदये पृष्ठएव च ।
जठरे चरणे पुच्छे सर्वस्मिन्देहएव च ॥ ब्रह्मामेदिन्यथाकाशः सर्वतोमुखएव च ।
ज्योतींषि विष्णुश्चेन्दुश्च शक्रोवह्निर्महेश्वरः ॥ निर्ऋतिर्मित्रावरुणौ तथा लक्ष्मीः
सरस्वती । धनेश्वरः सर्पराज आदित्यः साध्यएव च ॥ गन्धर्वेन्द्रस्तथासिद्धाचा-
मुण्डःसर्वशेषगा । अनेनैव प्रकारेण नरस्यापि प्रपूजनं ॥ क्रमसिद्धं पूर्वगतं मदो-
धिकमिहार्हणम् । अथोभयोः शेषगतान् मन्त्रानाकलय प्रिये ॥ यमस्य वाहनत्वेन
ख्यातस्त्वमसि कासरः । वसतः शृङ्गयोरग्रे मृत्युकालौ सदा तव ॥ भवानेव परि-
द्वेष्टि जवगांस्तुरगानपि । तव रूपं समास्थाय रंभासुरसुतः पुरा ॥ भगवत्या
समं युद्धं कृतवान्दर्पमोहितः । देव्या त्वं निहतश्चासि तथा क्रान्तं शिरस्तव ॥
वहस्यतश्चण्डिकां त्वं शिरसा अङ्कुरेण वा । त्वत्तोनान्योवलिः कश्चिद्देव्याः
प्रीतिप्रदायकः ॥ अतोददामि कालयै त्वां भक्तियुक्तेन चेतसा । मयि कल्याण-
माधाय गच्छ कासर सद्गतिम् ॥ ( नरवलौविशेषमाह ) मनुष्यवलिदाने तु
विशेषः कश्चिदीरितः । पूर्वेद्युरकृताहारं संपरित्यक्तमैथुनम् ॥ स्नातं रक्ताम्बरधरं
नरं मुण्डितमस्तकम् । रक्तचन्दनदिग्धाङ्गं कृत्तश्मश्रुनखं तथा ॥ अजाताश्रुमुद्रिक्तं
नदीनं नाप्यधोमुखम् । न वाडवं न चाण्डालं न क्लीवं पतितं नच ॥ चतुर्विधे-
भ्योऽपि शिवे स्वयमागतमुत्तमम् । प्रोक्षयेत्पशुसामान्यरूपेण प्रथमं ततः ॥
महिषोक्तप्रकारेण पश्चादेतान्मनूञ्जपेत् । सर्वेषु प्राणिषु श्रेष्ठस्त्वं मनुष्यइति
स्थितः ॥ वलिश्रेष्ठमहाभागदेवगर्भश्रिया वृतः । रक्ष मां सर्वभीतिभ्यः सिद्धिं देहि
तथोत्तमाम् ॥ राज्यं देहि यशोदेहि देहि चानुत्तमां गतिम् । आरोग्यं दीर्घमायुश्च
प्रजावृद्धिं रणे जयम् ॥ कल्याणं विपुलान् भोगान् दारानपि हृदीप्सितान् । कात्या-
यन्यां दृढां भक्तिं लक्ष्मीमप्यधिकां स्थिराम् ॥ दत्वा राज्यं परित्यज्य शरीरं पांच-
भौतिकम् । देवीलोकं व्रज क्षिप्रं सज्ञातिसुतवान्धवम् ॥ महादानैर्महायज्ञैस्तयो-
शिरतिदुष्करम् । यत्स्थानं प्राप्यते लोकैस्तत्त्वं गच्छ नरर्षभ ॥ अङ्गीकृतोमहा-

काल्या मांसशोणितलिप्सया । देवीलोकं सुदुः प्राप्यं प्राप्नुहि त्वं द्रुतं गतः ॥ तत्र गत्वा शिवं ध्याहि मामकीनं जगत्पते । देवीलोकेगतिः काम्या मत्प्रसादात्त-वेद्दशः ॥ त्वत्प्रसादादहं शत्रून् जयेयं रणमूर्धनि । श्लोकानष्टाविमान् देवि पठे-न्नरवलिक्षणे ॥ गण्डकेपि विशेषउक्तस्तत्रैव । खड्गमन्त्रं समाख्यासे गण्डकोयेन दीयते । द्वीपीदेहाकृते खड्गशस्त्राभेद्य कलेवर ॥ तृप्ताभवेयुः पितरस्त्वन्मांसेन सुरा अपि । नच त्वत्तोधिकः कश्चित्पवित्रः पृथिवीतले ॥ त्वत्करोटिजपात्राणि शस्तानि श्राद्धकर्मणि । मयादेव्या वलित्वेन त्वमद्य विनिवेदितः ॥ मम विघ्नान् समुत्सार्य्य सद्योदेवीगणो भव । इति अथ मस्तकपतनफलं तत्रैव । एवं दत्वा वलिं देव्यै वलिदान विधिर्यथा ॥ शुभाशुभं विजानीयाद्राज्यस्य च नृपस्य च । यदिवायव्यदिग्भागे नैर्ऋत्ये दक्षिणेऽपिवा ॥ मस्तकेपतिते चैव हानिरत्रविनि-र्दिशेत् । शेषेषुदिक्षुसर्वासु विदिक्षुच फलंशृणु ॥ पूर्वेचोत्तरदिग्भागे पतते यदिमस्तकम् । सर्वसम्पत्करंविद्याद्राजाराज्यं विनिर्दिशेत् ॥ भ्रमित्वा दक्षिणेकर्णे यदापतति वैशिरः । तदासिद्धिश्च मासान्ते वामकर्णे विपद्-भवेत् ॥ राज्ञामग्रेभवेद्वहानिर्गृहस्थानांभवेत्सुखम् । ऐशान्यां मध्ययोश्चैव पततेयदिमस्तकम् ॥ छिन्नं शिरोनिपतितं सहास्यं यदि दृश्यते । विभूतिं तस्य जानीयाद्राजाराज्यं विनिर्दिशेत् ॥ तदास्वल्पेनकालेन सर्वसिद्धिर्भवेद्धुवम् । एकवारेभवेत्सिद्धिर्द्विवारे हानिरुच्यते ॥ गृहस्थानां विजानीयाद्राज्ञांतु विपरीत-कम् । यदाश्रुदृश्यते नेत्रे तदाहानिं विनिर्दिशेत् ॥ यदाकटकटाशब्दोदन्तानां श्रूयते क्वचित् । तदातुमरणं विद्याद्धानिं सर्वत्र निर्दिशेत् ॥ ( म० का० सं० ) दद्याद्राक्षसदिग्भागे मंत्री वलिशिरः स्वयम् । तद्दक्षिणे रक्तपात्रं विपरीतं न संददेत् ॥ देवस्य सम्मुखं कृत्वा छिन्नं भागं प्रकल्पयेत् । तदेव शस्तं जानीयान्म-ध्यमन्तदुदीरितम् ॥ वलीनामितिसंज्ञानं शिरश्च पुरतोददेत् । वलीनां मस्तके दद्यात् प्रदीपं धूपवर्त्तिकाम् ॥ दहनाल्लोमकेशानां योगन्ध उपतिष्ठते । घ्राति तं चण्डिका देवी सन्तुष्टातु प्रजायते ॥ तस्मिन्नेव ह्यवसरे आधिक्यं धूपदीपयोः । यथाविभवतोदेवो कर्तव्यं भक्तितत्परः ॥ वल्याधिक्ये च शीर्षाणां विधेयाः पंक-यस्तथा । सधूपदीपाः कुसुमाक्षतपुंजान्वितास्तथा ॥ तथा । शिरश्च संमुखे स्थाप्यं सदीपं पात्रवर्जितम् । सचापि हविरक्तः स्यादथवातिलजोक्षितः ॥ सार्षपं न प्रदातव्यं न चान्यफलसंभवम् । मूर्धाभिषिक्तोहविषा तैलेन बहुसिद्धिभाक् ॥ अन्यवीजोद्भवे रोगं शोकं मृत्युं च विन्दति । यथा लोमानि दह्यन्ते यत्नात्कार्यं

तथा नरैः ॥ (तंत्रान्तरे) सूत्रवर्तिंप्रदद्याच्च वस्त्रवर्तिः प्रशस्यते । अङ्गुष्ठस्य प्रमाणं च दीर्घं चैव षडङ्गुलम् ॥ कार्पाससूत्रकैर्दद्यादेकविंशतिसूत्रकैः । सुगन्धिद्रव्यैस्तत्कुर्यात् कर्पूरागुरुचन्दनैः ॥ ग्राहाणां कच्छपानां च गोधायाश्च विशेषतः । मत्स्यानामपि पक्षिणां तं दीपं दापयेच्छिवे ॥ शीर्षोपरिज्वलद्दीपं यावत्कालं प्रवर्तते । तावत्कालं वसेत् स्वर्गे तस्माद्यत्नेन दापयेत् ॥ लोमदाहोद्भवं गन्धं घ्रात्वा देवी प्रसीदति । तस्मात्संवर्धयेद्दीपं तस्मात्पात्रं विवर्जयेत् ॥ निर्वाणे मृत्युमाप्नोति दीयमानेप्रदीपके । (म-का-सं०) ततः पात्रं पुरः कृत्वा देव्याः सपशुशोणितम् । शर्करायुतदूर्वाणां प्रदद्यात् त्रिर्महाघृतम् ॥ सैन्धवं शृङ्गवेरं च कदलीफलमेव च । पातयेन्मधुराणां च काममुद्दिश्य साधकः ॥ अष्टधा विभजेदिग्वन्मध्ये चैकं कुशादिभिः । दत्वा किंचिद्घृतं तत्र कुर्य्यात् तर्पणमुद्रया ॥ तर्पणं भागभाजां वै देवीनां द्विर्द्विरेव च । आद्यन्तिमौतारहार्दौ मध्ये आदिमन्तेरपि ॥ तत्तन्नाम्नामंत्रमपि तर्पयामीति संयुतम् । द्वितीयरूपं ङेन्तं च तद्द्वितीयपदोदितम् ॥ मध्ये नित्योदितश्चाख्यपात्रवत्पीठगाक्रिया । पूर्वस्यां दिशि चामुण्डा दक्षिणस्यां तु योगिनी ॥ डाकिन्युक्ता पश्चिमायामुत्तरस्यान्तु भैरवी । विकारिकाग्नेयकोणे नैर्ऋत्यां पापराक्षसी ॥ पूतना चापि वायव्ये ईशाने कालिका तथा । ततः स्तुतिं प्रकुर्वीत बद्धांजलि पुटोग्रतः ॥ इति बलिदानभेदास्तद्विधिश्चेति ।

इतीह तन्त्रशास्त्रतोविगृह्य सुक्रमोदितम् ।
बलेर्विधानभेदकं विचारयन्तु तद्विदः ॥

## ॥ अथ शिवाबलिः ॥

(कुलचूडामणौ) बिल्वमूले प्रान्तरे वा श्मशाने वापि साधकः । मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥ (म०का०सं०) गृहीत्वा भक्ष्यवस्तूनि पूजासंभूनिमप्युत ॥ आप्तैरनुगतोमित्रैः प्रदद्यात्फेरवीबलिम् । पुराद्बहिः निशाकाले महारण्यसमीपतः । तत्रोदीचीदिग्व आमानि पक्कान्यपि च मांसानि विविधार्पयेत ॥ विधायार्घं प्रपूज्य वै ॥ दनोवीतभीः शुचिरुर्जितः । प्राणायामं षडर्घं च उत्थाय मुक्तचिकुरः शिवा आकारयेच्छनैः । (कुलचूडामणौ) कालिकालीति वक्तव्यं तत्र सा शिवरूपिणी । पशुरूपा समायाति

परिवारगणैः सह ॥ भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् । तदैव मंगलं तस्य तदैव कुलभूषणम् ॥ अवश्यमन्नदानेन तोषयेन्नियतं शिवाम् । नित्यश्राद्धं यथासन्ध्यावंदनं पितृतर्पणम् ॥ तथेयं कुलदेवीनां नित्यता कुलपूजने । पशुरूपां शिवां देवीं योनार्चयति निर्जने ॥ शिवारावेण तस्याशु सर्वं नश्यति निश्चितम् । जपपूजाविधानानि यत्किंचित्सुकृतानि च ॥ गृहीत्वा शापमासाद्य शिवारोदिति निर्जने । एकयात्मद्द्श्यते तत्र शिवया देव भैरव ॥ तत्रैव सर्वशक्तीनां प्रीतिः परमदुर्लभा । पशुशक्तिर्नरेशक्तिः पक्षिशक्तिश्च भैरव ॥ पूजिता विगुणं कर्म सगुणं कारयेद्यतः । तेन सर्वप्रयत्नेन कर्तव्यं पूजनं महत् ॥ राजादिभयमापन्नं देशान्तरभयादिकम् । शुभाशुभानि कर्माणि विचिन्त्यबलिमाहरेत् ॥ गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि । शुभाशुभफलं ब्रूहि गृह्णबलिं तव ॥ एवमुच्चार्यदातव्योबलिः कुलजनप्रिये । (म० का० सं० ) स्थानादस्मादपसरे किंचिद्दूरतरं प्रिये । शिवा यथा वीतभया आगच्छत्यन्नसंन्निधौ ॥ तत्र स्थिता निरीक्षेत किं किं ताभक्षयन्तिहि । सर्वा आगत्यचेत्सर्वंप्रदत्तं भक्षयन्तिहि ॥ विनिर्दिशेत्सर्वसिद्धिं राज्यलाभं धनागमम् । यद्यत्ताभक्षयत्यन्नं तत्तत्फलमवाप्नुयात् ॥ यद्यचनैव खादन्ति तत्तन्नैव फलं लभेत् । कुमारीपूजनादौ तु विशेषोऽस्योपवर्णितः ॥ तेन नात्र ब्रुवे देवि ग्रन्थाधिक्यभयादपि । कुमारीरूपमास्थाय यथायाति महेश्वरी ॥ शिवारूपां तथा कृत्वा स्वयमायाति कालिका । ततोभक्तिः प्रकर्तव्या तासुयत्नेन साधकैः ॥ शिवासु भक्षयन्तीषु सर्वेभ्योबलिमाहरेत् । संहारभैरवायादौ वटुकेभ्यस्ततः परम् ॥ विनायकेभ्यो मातृभ्यः क्षेत्रपालेभ्य एव च । योगिनीभ्योडाकिनीभ्यः शिवदूतीभ्य एव च ॥ पुरोक्तोमंत्रआसिद्धिं तेन तेन बलिं हरेत् । महदैश्वर्यमाप्नोतिनिः शेषंभक्षयन्ति चेत् ॥ अर्धं तु मध्यमासिद्धिरभक्षे तु विपद्भवेत् । ( कूलचूड़ामणौ ) यदिनोगृह्यते वत्स तदा नैव शुभं भवेत् । शुभं यदि भवेत्तत्र भक्षयन्ते तदशेषतः ॥ (म० का०सं०)

खादितोत्थाय तिष्ठत्सु शिवावृन्देषु तत्र हि । दण्डवत्प्रणमेत्सर्वाः स्वेष्टदेवी धिया स्वयम् ॥ पुष्पांजलिं समाधाय गन्धचन्दनचर्चितम् । उत्थाय मुक्तचिकुरो मीलिताक्षोदिगम्बरः ॥ भक्तिशाली वीतभयः किंचित्प्रणतकन्धरः । स्तुतिं कुर्य्यात्स्तवैरेतैर्वरप्रार्थन पूर्वकम् ॥ शिवारूपधरे देवि गुह्यकालि नमोस्तुते । उल्कामुखि ललज्जिह्वे घोररावे श्रृगालिनि ॥ श्मशान वासिनि प्रेते शवमांसप्रियेऽनघे । अरण्यचारिण्यनघे शिवे जम्बूकरूपिणि ॥ नमोस्तुते-महामाये जगत्तारिणि कालिके । मातङ्गि कुक्कुटे रौद्रि महाकालि नमोस्तुते ॥ सर्वसिद्धिप्रदे भीमे भयंकरि भयापहे । प्रसन्ना भव देवेशि ममभक्तस्य चण्डिके ॥ संसारसागरतरे जय सर्वशुभंकरि । विस्रस्तचिकुरे चण्डचामुण्डे मुण्डमालिनि ॥ संहारकारिणि क्रुद्धे सर्वसिद्धिं प्रयच्छ मे । दुर्गे किरातिशवरि प्रेतासनगतेऽभये ॥ अनुग्रहं कुरु सदा कृपया मां विलोकय । राज्य प्रयच्छ विकटे वित्तमायुः सुतान्स्त्रियम् ॥ शिवावलिप्रदानेन त्वं प्रसन्नाभवेश्वरि । नमस्तेस्तु नमस्तेस्तु नमस्तेस्तु नमोस्तुते ॥ इत्येतैरष्टभिः श्लोकैः शिवास्तोत्रमुदीरयेत् । ततस्तच्छेषमन्नं यद्भाजनं चान्यदेववा ॥ सर्वं हि निखनेद्भूमौ प्रयत्नेनैव पार्वति । यदि काकाः खराः श्वानो येचान्ये पापजातयः ॥ भक्षयन्ति तदुच्छिष्टं तदा विघ्नः प्रजायते । रात्रावेव समागच्छेन्निर्भयोविपिनान्तरात् ॥ इति शिवावलिः । ( इयं शिवावलिः कालिकापूजने विशेषतोविधेया )

इतीह चागमोदिते हि कालिकाप्रपूजने ।
विपश्चितामुदे मया शिवावलिः समुद्धृतः ॥

# ॥ अथ शांतिस्तोत्रम् ॥

ओं नश्यन्तु प्रेतकूष्माण्डा नश्यन्तु दूषकानराः ।
साधकानां शिवाः सन्तु आम्नायपरिपालिनां ॥ १ ॥
जयन्तु मातरः सर्वा जयन्तु योगिनीगणाः ।
जयन्तु सिद्धिडाकिन्यो जयन्तु गुरुपङ्क्तयः ॥ २ ॥
नन्दन्तु अणिमाद्याश्च नन्दन्तु भैरवादयः ।
नन्दन्तु देवताः सर्वाः सिद्धविद्याधरादयः ॥ ३ ॥
ये आम्नाय विशुद्धाश्च मन्त्रिणः शुद्धबुद्धयः ।
सर्वे नन्दन्तु हृदयान्नन्दन्तु कुलपालकाः ॥ ४ ॥
इन्द्राद्यास्तर्पिताः सन्तु तृप्यन्तु वास्तुदेवताः ।
चन्द्रसूर्य्यादयो देवास्तृप्यन्तु मम भक्तितः ॥ ५ ॥
नक्षत्राणि ग्रहायोगाः करणाद्यास्तथापरे ।
सर्वे ते सुखिनोयान्तु मासाश्चतिथयस्तथा ॥ ६ ॥
तृप्यन्तु पितरः सर्वे ऋतवो वत्सरादयः ।
खेचरा भूचराश्चैव तृप्यन्तु मम भक्तितः ॥ ७ ॥
अन्तरिक्षचरायें च ये चान्ये देवयोनयः ।
सर्वे ते सुखिनो यान्तु सर्वानद्यश्चपक्षिणः ॥ ८ ॥
पशवस्तरवश्चैव पर्वताः कन्दरा गुहाः ।
ऋषयो ब्राह्मणाः सर्वे शान्ति कुर्वन्तु मेसदा ॥ ९ ॥
तीर्थानि पशवो गावो ये चान्येपुण्यभूमयः ।
वृद्धापतिव्रतानार्य्यः शिवं कुर्वन्तु मेसदा ॥ १० ॥
शिव सर्वत्र मेचास्तु पुत्रदारधनादिषु ।
राजानः सुखिनः सन्तु क्षेमं मार्गन्तु मे सदा ॥ ११ ॥
शुभा मे दिवसा यान्तु मित्रास्तिष्ठन्तु मे शिवाः ।
साधका जयिनः सन्तु शिवं तिष्ठन्तु पूजकाः ॥ १२ ॥

येयेचाल्पधियः स्वभूषणरता मन्निन्दकाः पूजने
दैवाचार विरुद्धनष्टहृदया दुष्टाश्च ये बाधकाः ।
दृष्ट्वाचक्रमपूर्वमंधहृदया ये कौलिकद्वेषका-
स्तेतेयान्तु विनाशमत्रसमये श्री भैरवस्याज्ञया ॥ १३ ॥
द्वेष्टारः साधकानां च सदैवाम्नायदूषकाः ।
डाकिनीनां मुखे यान्तु तृप्तास्तत्पिशितैस्तताः ॥ १४ ॥
शत्रवो नाशमायान्तु ममनिन्दाकराश्चये ।
द्वेष्टारः साधकानां च विनश्यन्तु शिवाज्ञया ॥ १५ ॥
येनिन्दकास्ते विलयं प्रयांतु ये साधकास्ते प्रभवन्तु सिद्धाः ।
सर्वत्र देवी करुणावलोके पुरः परेशी ममसन्निधत्ताम् ॥१६॥

॥ इति शान्तिस्तोत्रं सम्पूर्णम् ॥

ज्योतिर्विदां शिरसि योविरराज रत्नच्छायः सदायत-
रमारमणानुरागः । सोऽभूत् रसूलपुरलब्धजनुर्द्विजाग्र्यः
सत्कर्मठः सततमीश्वरदत्तनामा ॥ १ ॥ तत्सूनुरासीच
शिवप्रसादः शिवप्रसादाधिगतार्थशास्त्रः । तदात्मजातोऽ
जनिविष्णुदत्तः सज्ज्यौतिषाचार्य्यपदं प्रपन्नः ॥ २ ॥
सोऽहं वीकानेरराज्याधिपश्रीगङ्गासिंहस्नेहसंसिक्तमूलः ।
सञ्चारिद्रुर्मध्यमं कल्पमेतं तस्मै कुर्वे सत्फलं सूपहारम् ॥

इति श्रीज्यौतिषाचार्य्यराज्यज्योतिषीपं०विष्णुदत्तविरचित-
शतचण्डीयज्ञविधानस्य द्वितीयः खण्डः
॥ समाप्तः ॥

**समाप्तश्चायं मध्यमः खण्डः**

श्रीशतचण्डीयज्ञविधानस्याद्यावधि भूशुद्ध्यादिमारभ्य पुष्पोपचारान्तं पृथगावरणपूजनं चात्र क्रमाल्लिखितंतद्विधानं कारिकयोपेतमनेकतन्त्रकारसम्मतमिति विपश्चितामपुरः प्रस्तूयते सम्मत्यर्थम् । इति ॥

विष्णुदत्तोज्योति० ॥

## ॥ विदुषां सम्मतयः ॥

(१) तन्त्रशास्त्रमताऽभिन्नं विधानं वीक्ष्य सत्कृतम् ।
उररीक्रियते सम्यक् श्रीनृसिंहाख्यशर्मणा ॥

(२) एतद्ग्रन्थविषये समानासम्मतिर्मे गोस्वामिनृसिंहशास्त्रिभिः साकम् । **राधाकृष्णमिश्रः** (वेदशास्त्रसम्पन्न,साहित्याचार्य्य, स०प०अखिलभारतवर्षीयमारवाडीब्राह्मणसभा, । भिवानी

(३) श्रीपंडितविष्णुदत्तराजदैवज्ञप्रणीता शतचण्डीविधानप्रक्रिया मयावलोकिता पुस्तकेऽस्मिन्दुरूहतान्त्रिकसिद्धान्तप्रावीण्यं प्रदर्शितं दैवज्ञमहोदयैः । अस्मिन् प्रमाणभूतविविधतन्त्रग्रन्थीयकारिकोल्लेखपूर्वकोऽनुष्ठानप्रकारः सम्यक् प्रदर्शितः । ग्रन्थोऽयं स्वकीयविषये सर्वेषां सरलमार्गप्रदर्शकोभविष्यतीति मदीया सम्मतिः ।

**हरनारायणः** शास्त्री, ( महामहोपाध्याय महामहोपदेशकः विद्यासागर साहित्यरत्नाकर, साहित्यभूषण एम० आर० ए० एस० एम० ए० एस० बी० सीनियर, प्रोफेसर, आफ संस्कृत ) हिन्दू कालेज दिल्ली ।—

(४) **गिरिधरशर्मा** चतुर्वेदः ( महामहोपाध्याय, व्याकरणाचार्य्य, न्यायशास्त्री, प्रिन्सिपल, राजकीय संस्कृतकालेज, जयपुर ।

(५) द्वितीयखंडे तान्त्रिकानुष्ठानप्रकारः सम्यक्प्रदर्शितोदैवज्ञमहोदयैः

**बलीराम शर्मा** ( कर्मठः )

(६) **श्रीधर झा** प्रधानाध्यापकः

(७) **रविदत्त** वैद्यशास्त्री ( वेरीनिवासी )

(८) **जगन्नाथ** (शास्त्री पुरीनिवासी संस्थापक ब्रह्मचर्य्याश्रम)

(९) अयं हि शतचण्डीविधानाख्योग्रन्थः खण्डत्रयात्मकोऽद्य मम विद्यावाचस्पतिश्रीपण्डितदेवीप्रसादशास्त्रिद्वारा दृष्टिपथं गतस्तत्राद्यन्तौ खण्डौ पूर्वोक्तशास्त्रिमहोदयेन निर्म्मितौ तन्मध्यखण्डश्च श्रीपण्डितविष्णुदत्तज्यौतिषाचार्य्येण निर्मितः। सचायं सर्वोऽपि निबन्धः स्वनाम्नाख्यातविषयश्चण्ड्याराधने कर्मकाण्डिनामत्युपयुक्तःसप्रमाणश्च भवतीत्यनुमन्ये।

**सीताराम शर्मा** (विद्यामार्तण्ड, श्रीहरियानाशेखावाटी ब्रह्मचर्य्याश्रमाध्यक्षः) भिवानी (पञ्जाब)

(१०) श्रीमद्भिः पण्डितविद्यावाचस्पतिश्रीदेवीप्रसादशास्त्रिभिः तथा ज्यौतिषाचार्य्य, पं० विष्णुदत्तशास्त्रिभिश्च शतचण्डीयज्ञविधानाख्योग्रन्थः प्रणीतोऽस्माभिर्विलोकितः। अयं ग्रन्थः कर्मकाण्डानुष्ठातॄणां सम्प्रति विशेषतः समुपयुक्त इति सहर्षं निवेदयामः। अस्मिन् ग्रन्थे सर्वे विषयाः श्रीचण्ड्याराधनोपयोगिनः समीचीनयारीत्या समुपनिबद्धाः। अतः वैदिकानां कर्मकाण्डिनां तान्त्रिकाणां च कार्य्येऽत्यन्तं साहाय्यं प्रणीतोऽयं ग्रन्थः सर्वैः सङ्ग्राह्य इति प्रार्थयामः।

**श्रीलक्ष्मणशास्त्री** द्रविडः (श्रीकाशी)

(११) **श्रीप्रमथनाथ** तर्कभूषणः (म०महोपाध्याय, प्रिंसिपल, प्राच्यविद्याविभाग हिन्दुविश्वविद्यालय (काशी)

(१२) म०महोपाध्याय, श्री० पं० **देवीप्रसादशुक्ल** (कविचक्रवर्ती) हि० वि० वि० (काशी)

(१३) श्री० पं० **विद्याधर शर्मा** (प्रिन्सिपल, धर्मविज्ञानविभाग, हि० वि० वि० (काशी)

(१४) श्री० पं० **राजनारायण शर्मा**, (प्रधानव्याकरणशास्त्राध्यापक. हि० वि० वि० (काशी)

(१५) श्री० पं० **चन्द्रशेखरशास्त्री**, (धर्मशास्त्राचार्य्य, काशी,)

(१६) श्री० पं० **रामानन्दमिश्रः** (अध्यापकरणवीरसं०पाठशाला काशी)

(१७) श्री० पं० **रामव्यासपाण्डेयः** (प्रोफेसर, हि० वि० वि० काशी)

(१८) श्री० पं० **घनश्याम शर्मा** (भू० पू० प्रोफेसर सेण्टजोन्स कालेज आगरा)

(१९) श्री० पं० **मदनमोहन शास्त्री** (प्रिन्सिपल मारवाडीसंस्कृतकालेज काशी। प्रेसिडेण्टसनातनधर्महाईस्कूलबनारस)

(२०) श्री० पं० **रघुनाथ त्रिपाठी** ज्योतिषाचार्य्यः (महामहोपाध्याय-अयोध्यानाथपुत्रः काशी)

(२१) श्रीरामरत्न ओझा ज्यौतिषाचार्य्य प्रधानाध्यापक विश्वविद्यालय (काशी)

(२२) श्री० पं० राधामोहनजी ज्योतिषाध्यापक गङ्गापाठशाला (बीकानेर)

(२३) श्री० पं० भागीरथ जी प्रधानाध्यापक " "

(२४) श्री० पं० आत्माराम जी वेदाध्यापक " "

(२५) एकदा श्रीमतां प्रधानसेनाध्यक्षाणां श्रीहरिसिंहवर्ममहोदयानामाज्ञया श्रीशतचण्डीयज्ञविधानाख्यपुस्तकस्य साद्योपान्तं सविवेचनमनुशीलनमकारि। मया ग्रन्थं चैतन्निरीक्ष्य बहुहर्षपरेणाऽभावि। वितरामि चास्य लेखकेभ्यः कोटिशोहार्दिकधन्यवादान्। प्रार्थये च जगदम्बिकाम् श्रीमताश्चिरजीविनामस्मद् भ्रातॄणाम् जयजङ्गलधरवादशाहाद्यनेकोपाधिधारिणां श्रीबीकानेराधीशानां राज्ञां मनोरथाः सिद्धिमाप्नुवन्तु। पुस्तकश्चैतद्विदुषामतीवोपकारकमस्तीत्यास्माकीना सम्मतिः। श्री० पं० गोपीकृष्ण शर्मा (कथाव्यासः बीकानेर)

---

# ॥ प्राप्ति स्थानम् ॥

## मरुदेशीयविद्वत्समितिचूरु (CHURU)

## नागरीभंडारकार्य्यालयबीकानेर (BIKANER)

### मुद्रितान्यन्यानि पुस्तकानि

१—मण्डप बोधिनी मू० =)

२—विवाह संस्कार ,, ॥)

३—उपनयन संस्कार ,, ।)

४—पूजा विभाग ,, ॥—)

# OPINIONS.

1. I have gone through 'शतचण्डी विधान प्रक्रिया' written by P. Vishnudatta Raj Jyotishi. The learned astrologer has shown well here his knowledge of the difficult Tantrik theories. *In this all the Tantrik rites have been put down in a good manner, and supported by means of quotations from authoritative Tantrik books. In my opinion, the book will be an easy guide to all in this matter.*

(Sd.) Mahamahopadhyaya P. HARINARAIN Shastri,
Vidyasagar, Sahitya-ratna, Sahitya Ratnakar, Sahityabhusana,
Mahopdeshaka etc., Head of the Sanskrit Department.
Hindu College, Delhi.

2. (Sd.) M. M. Pt. GIRDHAR SHASTRI,
Principal Jaipur Sanskrit College.

3. 'The book is worth being worshipped (respected) in as much as it is with Karikas, and contains an account of all the rites of the Tantrikas'

(Sd.) NARSINHALAL GOSWAMI DIXIT.

4. My opinion is the same as that of Pt. Narsinhalal Goswami.

Vedashastrasampanna P. RADHAKRISHNA MISRA,
Founder of the 'All India Marwari Sabha
and Dainik Samachar', Bhiwani.

5. Jyotishi Ji has dealt with excellently with Tantrik Anusthan in 2nd part of this book.

(Sd.) Pt. BALIRAM SHARMA.

6. (Sd.) Pt. RAVIDATTA Vaidya Shastri.

7. (Sd.) SHRIDHAR JHA.

8. (Sd.) Pt. JAGANNATH SHASTRI,
Resident Jagannathpuri.

9. 'To-day this book called शतचण्डी विधान was shown to me by Vidyavachaspati P. Devi Prasad Shastri. Of this 2 parts, the first and last, have been written by the learned Shastri, and the middle one by Jyotishacharya P. Vishnudatta. In my opinion, the whole of this book, the subject of which is clear from its name, is highly authoritative, and of great use to Karma Kandius.

(Sd.) Vidyamartanda P. SITA RAM Sharma,
Principal Hariana–Shekhawati Brahmcharyasram,
BHIWANI.

---

10. 'The book called शतचण्डी विधान which has been written by Vidyavachaspati P. Devi Prasad Shastri, and Jyotishacharya P. Vishnudatta Shastri was seen by us to-day. We have great pleasure in saying that the book is of great use to those who have to perform Karmakanda ceremonies. In this book all the things which can be necessary for worshipping Shri Chandi have been put down in the right manner. We, therefore, beg to say, that every one should try to have this book which has been written to help Tantrik and Vaidik Karmakandius.

(Sd.) Shri LAKSHMANA Shastri Dravida, Benares.
(He has recently given at the title of Mahamahopadhyaya as a protest against the passing of the Sharda Act).

11. (Sd.) Mahamahopadhyaya Sri PRAMATHANATH Tarkabhushana, Principal Prachyavidyavibhaga, Hindu University, Benares.

12. (Sd.) Mahamahopadhyaya P. DEVI PRASAD Shukla Kavi, B. H. U., Benares.

13. (Sd.) P. RAM RATNA OJHA, B. H. U. Benares.

14. (Sd.) VIDYADHAR SHARMA, Principal Dharmavijyana Section, B. H. U. Benares.

15. (Sd.) P. RAJNARAIN SHARMA,
Senior Professor, Sanskrit Grammar,
B. H. U., Benares.

16. (Sd.) CHANDRASHEKHAR Shastri,
Principal, Dharmasastra Section, B. H. U.

17. P. Shri RAMANAND Misra,
Ranabir Pathshala, Benares.

18. (Sd.) RAMA VYASA PANDYA,
Lecturer in Astronomy, B. H. U.

19. P. GHANASYAM SHARMA,
Late Professor St. John's College, Agra.

20. P. MADANMOHAN SHASTRI,
Principal, Marwari Sanskrit College, Benares,
and President, Sanatana Dharma H. School, Benares.

21. (Sd.) P. RAGHUNATH TRIPATHI,
Jyotshacharya (*Mahamahopadhyaya*
Ayodhyanath's son, Benares.)

22. (Sd.) P. GOPIKRISHNA Katha Vyas,
Bikaner.

23. (Sd.) BHAGIRATH GOSWAMI,
Head Pandit Ganga Pathshala, Bikaner.

24. (Sd.) P. RADHAMOHAN,
Jyotishadhyapak G. P. Bikaner.

25. (Sd.) P. ATMARAM BHATT,
Vedadhyapak G. P. Bikaner.

स्वर्गीय भाष्याचार्य

वैयाकरण केशरी पण्डित हरिनाम दत्त जी शास्त्री ।



[ स्वर्गयात्रा संवत् १९७२ ।

जन्म संवत् १९०० ]

# विषयानुक्रमणिका



* श्रीगणेशाय नमः *

# * तृतीयखण्डारम्भः *

## मंगलाचरणम्

प्रणम्य जगदाधारं सच्चिदानन्दविग्रहम् ।
वक्ष्ये तृतीयखण्डेऽस्मिन्नग्निस्थापनतः क्रमम् ॥ १ ॥
यजुर्वेदक्रमम्पूर्वम्बौद्धायनमतः परम् ।
ऋग्वेदीयन्ततः प्रोक्तमतः सामक्रमन्तथा ॥ २ ॥
अथर्ववेदगतं यत्तु तांत्रिकं यदुदीरितम् ।
तत्सर्वम्विस्तरादुक्त्वा हवनारम्भणं ततः ॥ ३ ॥
आघाराज्याहुतिः पूर्वन्ततोमण्डपदैवतम् ।
होमं कृत्वा तु विधिवत् प्रधानाहुतयस्ततः ॥ ४ ॥
तदङ्गदेवताहोमः स्विष्टकृच्च ततः परम् ।
ततः परं नवाहुत्यो वलिः पूर्णाहुतिस्तथा ॥ ५ ॥
संस्रुवादिविमोकान्तं होमशेषं ततः परम् ।
श्रेयः सम्पादनं दानमभिषेकोविसर्ज्जनम् ॥ ६ ॥
विप्राशिषस्ततः पश्चाद्ब्राह्मणानां च भोजनम् ।
तृतयिखंण्डवर्त्यैतत् सुविज्ञानां सुखावहम् ॥ ७ ॥

कुमारिकापूजनं स्यात् देव्याश्चैवानिराजनम् ।
शक्रादिस्तोत्रपाठश्च पुष्पाञ्जलिरिति क्रमात् ॥ ८ ॥
यवांकुरोभवेद्योगात् तदा तस्य प्रपूजनम् ।
ग्रहणं च तदुत्पाट्य स्वर्णस्य च शलाकया ॥ ९ ॥

# अथ तावद्यजुर्वेदीयाग्निस्थापनप्रकारः

यथा परिमिते तुषकेशादिवर्जिते कुण्डे स्थण्डिले वा चतुरस्रां भूमिं कुशैः परिसमूह्य तान्कुशानैशान्याम्परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवेण वा प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणैवानामिकाङ्गुष्ठाभ्याम्मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रस्थं वन्हिं द्वितीयकांस्यपात्रेण पिहितं कुण्डाद्बहिराग्नेयां दिशि निधाय, "ॐ हूँ फट् स्वाहा" इति मन्त्रं पठेत् अथवा क्रव्यादमाग्निम्प्रहिणोमि दूरं यमराज्यङ्गच्छतु रिप्रवाहः । इहैवायमितरोजातवेदाः देवेभ्योहव्यं वहतु प्रजानन् ॥ इति मन्त्रेण वा क्रव्यादांशं नैर्ऋत्यांदिशि परित्यज्य गायत्र्या सम्पूज्य योनिमार्गेण "ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह" इति मन्त्रेण कुण्डे स्थण्डिले वाग्निं स्वाभिमुखं स्थापयेत, तद्रक्षणार्थं किञ्चिन्नियुज्यानीताग्निपात्रयोर्मध्ये जलादिप्रोक्षणम कार्य्यं, ततोऽग्निध्यानं तद्यथा ॥ओं चत्वारिशृङ्गात्रयोऽ अस्यपादा द्वे शीर्षे सप्तहस्ता

सोऽअस्य । त्रिधाबद्धोवृषभोरोरवीति महोदेवोमर्त्याँऽआवि वेश ॥ रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकम्। षड्नेत्रं च चतुश्श्रोत्रं द्विपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सौम्य-भागे त्रिहस्तकम् । स्रुवं स्रुचं च शक्तिं च त्र्यक्षमालां च दक्षिणे ॥ तोमरं व्यजनं चैव घृतपात्रन्तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥ दक्षिणं च चतुर्जिह्वं त्रि-जिह्वमुत्तरामुखम् । द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कला-युतम् । स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् ॥ रक्त-माल्याम्बरधरं रक्तपद्मासनास्थितम् । अमुकवन्हिनामाख्यं वन्हिमावाहयाम्यहम् ॥ त्वं मुखं सर्वदेवानां सप्तार्चिरमित-द्युते । आगच्छ भगवन्देव यज्ञेस्मिन्सन्निधोभव ॥ इति पठित्वा। अग्ने ! वैश्वानर ! शाण्डिल्यगोत्र !शाण्डिल्या-सितदेवलेतित्रिप्रवर ! भूमिमातः ! वरुणपितः ! मेषध्वज ! प्राङ्मुख ! मम सम्मुखोभव इति वदन् शतचण्ड्यां शतमङ्गल नामाग्निम्प्रातिष्ठापयेत् । ततः ॥ अग्नेनय सुपथारायेऽ अस्मान्विश्वानिदेववयुनानि विद्वान् । युयोद्ध्यस्मज्जुहु-राणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम ॥ इति मंत्रमुच्चार्य "ओं अग्नये नमः" इति बहिर्गन्धादिभिः पूजयेत् ततः ओं अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्ण-मनिलं समृद्धं विश्वतोमुखम् ॥ इति सम्प्रार्थयेत् ॥

॥ इत्याग्निस्थापनम् ॥

# ॥ अथ कुशकाण्डिका ॥

प्रथम ब्रह्मवरणम् । यथा देशकालौ संकीर्त्य कर्तव्ये-स्मिन्मत्संकल्पितहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म-करणाय ब्रह्माणं यथानामगोत्रं भवन्तं एभिर्वरणद्रव्यैरहं वृणे इत्युक्ते ओं वृतोस्मीति प्रतिवचनम् ॥ ततोऽग्नेर्द-क्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानयि ओं अत्र त्वं मे ब्रह्मा भव इत्यु-क्तवति यजमाने ओं भवानीति तेनोक्ते तमासनोपर्य्युपवे-शयेदिति कर्काचार्यानुरोधात् । ततः कुशकण्डिकां कुर्य्यात् । वारणं मृण्मयं वा प्रणीता पात्रं वारिणा पूर्य्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरिनिदध्यात् । ततः परिस्तरणं कुर्य्यात । तद्यथा प्रभूतबर्हिषः चतुरोभागान्विधा-यैकैक भागेन चतुर्दिक्षु अग्रेण मूलमाच्छाद्य वारत्रयं परिस्तरेत् यथा प्राच्यामाग्नेयादीशानान्तम् । दक्षिणस्यां ब्रह्मस्थानाद-ग्निपर्य्यन्तं । पश्चिमायाम् नैर्ऋत्याद्वायव्यान्तं । उत्तर-स्यामाग्नितः प्रणीतापर्य्यन्तम् । ततः पात्राण्यासादयेत् यथा अग्नेरुत्तरतः पश्चिमदिशि पवित्रछेदनार्थं कुशपत्राणि त्रीणि पवित्रकरणार्थं साग्रमनन्तर्गर्भितकुशपत्रद्वयम् प्रादेशमितं वारुणं तैजसं वा प्रोक्षणीपात्रम् आज्यस्थालीं चरुस्थालीं सम्मार्जनकुशांस्त्रीन् पंच वा वेणीरूपोपयमन-कुशांस्त्रीन् । प्रादेशमात्रं तिस्रः पालाशीसमिधः । खादिरं

स्रुवं ग०यमाज्यं षट्पञ्चाशदधिकमुष्टिशतद्वयावच्छिन्नाम-तण्डुलपूर्णपात्रं दक्षिणार्थं हिरण्यादिकं च पवित्रच्छेदनार्थं कुशपत्रत्रयम् । पूर्वस्यां दिशिक्रमेण स्थापयेत् । ततः पवित्रच्छेदनकुशैः द्वौकुशौ छित्वा पवित्रे सम्पाद्य प्रणीतोदकेनासिच्य प्रोक्षणीपात्रे निधाय, द्वाभ्या-मनामिकाङ्गुष्ठाभ्याम्मूलाग्रे पवित्रे धृत्वा त्रिरुत्पवनं कुर्य्यात् ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् प्रोक्षणीजले-नाज्यस्थाल्यादीनि पूर्णपात्रपर्य्यन्तानि क्रमेण प्रोक्ष्य, असञ्चरे अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् तत-आज्यस्थाल्यामाज्यं निःक्षिप्यचरुस्थाल्याम्प्रणीतोदकमा-सिच्यासादितांस्तण्डुलान्प्रक्षिप्य तत्राज्यं ब्रह्माधिश्रयाति । तदुत्तरतः स्वयं चरुमेवं युगपदग्नावारोप्यपेच्छ्रुते चरौ ज्वलदुल्मूकं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् । ततः स्रुवं प्रागग्रमधोमुखं अग्नौ त्रिःप्रताप्य । सम्मार्ज्जनकुशा-नामग्रैरन्तरतः मूलैर्बाह्यतः सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्वदक्षिणतः कुशोपरि निदध्यात् । तत आज्यमुत्थाप्य चरोः पू०र्वेण नीत्वाऽग्नेरुत्तरतः स्थाप-यित्वा चरुमुत्थाप्याज्यस्यपश्चिमतोनीत्वाऽऽज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्य-स्योत्तरतोनिदध्यात् । पूर्ववत्पवित्राभ्यामाज्यमुत्पूयावलोक्य-तस्मादपद्रव्यनिरसनम् । पुनः प्रोक्षणयुत्पवनम् । ततः उपयमनकुशानादायसव्यहस्तेधृत्वाउत्तिष्ठन् प्रजापति-

म्मनसाध्यात्वा तूष्णीमग्नौघृताक्तास्तिस्रः समिधः क्षिपेत ततः सपवित्रप्रोक्षण्युदकेन प्रदक्षिणाक्रमेणाग्निम्पर्य्युक्ष्य पवित्रे प्रणीतापात्रे निधाय संश्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्म्मध्ये निदध्यात् । अथ दक्षिणं जानुंपातयित्वोपविष्टोहृदि सव्यहस्तं दत्वा ब्रह्मणान्वारब्धः स्रुवेणाज्यं गृहीत्वा जुहुयात् । सर्वाहुतिषु हुतशेषस्यघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । ओं प्रजापतये स्वाहा इदं प्रजापतये नमम । प्रजापतिं मनसाध्यात्वा सततं ऋजुं प्राञ्चं पूर्वाघारमग्नौ समिद्धे उत्तरतोजुहुयात् । एवमेवोत्तराघारम् । ओं इन्द्राय स्वाहा इदमिन्द्राय नमम । इतिवन्हेर्दक्षिणतोजुहुयात् तत आग्नेयमाज्यस्य भागम् । ओं अग्नये स्वाहा इदमग्नये नमम इत्युत्तरपूर्वार्द्धे । ओं सोमाय स्वाहा इदं सोमाय नमम इतिदक्षिणपूर्वार्द्धेजुहुयात् इत्याज्यभागौ । सामिद्धत्तमे ऽग्निप्रदेशे सर्वाहुतिप्रक्षेपः कार्य्यः । महाव्याहृतयश्च ओं भूः स्वाहा इदंभूः । ओं भुवः स्वाहा इदंभुवः । ओं स्वः स्वाहा इदंस्वः । ततः अग्नेः पूजनम् । ओं वैश्वानराय यथानामप्रतिष्ठितदेवाय नमः इतिमंत्रः । इत्यग्निं सम्पूज्य मूलमन्त्रेण गर्भाधानादिदशसँस्कारार्थं अष्टाविंशत्यधिकशतमाज्येन जुहुयात् । ततोवक्ष्यमाणमंत्रैः प्रणवादिनमोन्तैर्होमः कार्य्य इति ॥

॥ इति यजुर्वेदोक्ताग्निस्थापनकुशकण्डिकाक्रमः ॥

# ॥ अथ अग्निस्थापनाविचारः ॥

वर्जितइति ( यथाह भगवान्बौधायनः ) भस्मकेशतुषकपालशर्करातृणास्थिपिपीलिकावतीभिरार्द्राभिः सिकताभिश्च वर्जयेत् । कुशैः परिसमुह्येति गदाधरः । त्रिभिर्दर्भैः पांसूनपसार्य्येति हरिहरः। ( तथा च बादरायणः । ) कृमिकीटपतङ्गाश्च विचरन्ति महीतले । तेषां संरक्षणार्थाय परिसमुह्येति कथ्यते ॥ (स्मृतिरत्नाकरे) सर्वत्र वसुधा मेध्या सशैलवनकानना । अथ विष्णुपदाक्रान्तोपलेपनमिदं कुतः ॥ पुरा शक्रोहि बज्रेण वृत्रं हत्वा महासुरम् । तन्मेदसाहि निर्लिप्ता तदर्थमुपलेपनम् ॥ (आचार्य्यः) रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि । अथवा तत्र कुर्वीत द्वादशाङ्गुलमानतः ॥ बोधायनगृह्ये । सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैरङ्गुष्ठेन च महानाम्न्या चोपसंगृह्य तस्य मध्यमं प्राचीनर्ठं सन्ततमृजुं संलिखेत् । (महानाम्नी—उपकनिष्ठिका) गोभिलपरिशिष्टे ❀ न नखेन न काष्ठेन नाश्मना मृन्मयेन वा । प्रोल्लिखेत् स्थण्डिलं विप्रः सिद्धिकामस्तु योभवेत् ॥ भवेन्नखेन कुनखी काष्ठेन व्याधिमृच्छति । अश्मना धननाशः स्यान्मृन्मयेन कलिंध्रुवम् ॥ फलेन सुसमृद्धः स्यात्पुष्पेण श्रियमृच्छति । पर्णेन धनलाभः स्याद्दीर्घमायुः कुशेन तु ॥ तस्मात्फलेन पुष्पेण पर्णेनाथ कुशेन वा । ताम्रशल्कयुतेनादौ लिखेत्स्थण्डिलमुत्तमम् ॥ प्रयोगरत्नमालायाम् । सर्वत्रोद्धननार्थाय खादिरस्फ्य इहेष्यते । उद्धन्यमानलक्षणमपि तत्रैव । स्फ्यमध्यमं गृहीत्वाथ सँय्योगाङ्गुलिभिः पुरा । अन्त्याङ्गुलीमृते तत्र भुवं स्फ्याग्रेण सम्मृजेत् ॥ कर्म्मप्रदीपे । अङ्गुष्ठोपकनिष्ठाभ्यामनिवार्य्य तथोत्करम् । रेखाभ्यः समुपादायारत्निमात्रे निधापयेत् ॥ ये भ्रमन्ति पिशाचाद्याः आकाशस्य तु वामतः । तेषां प्रहरणार्थाय उद्धृत्य कथितं नरैः ॥ आपोदेवगणाः सर्वे आपः पितृगणाः स्मृताः । सर्वे तदापमादाय अभ्युदयेत्युक्तवान्पुनः ॥ इति बादरायणः । प्रोक्षणादिलक्षणं (कारिकायाम् )

उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् । अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम् ॥ मुष्टिकृतेन हस्तेन चाभ्युक्षणमितिस्मृतम् । इति । परिसमूह्येत्यादिसूत्रम् । परिसमूहनादयः पंचसंस्काराः । भूमिशुद्ध्यर्थाः इति भर्तृयज्ञभास्करः । ( तदयुक्तम् ) नह्यशुद्धे देशे अग्निस्थापनप्रवृत्तिर्युक्तेति तस्मादग्न्यर्था एव । अतोयत्रयत्राग्निस्थापनन्तत्रतत्रैते कर्तव्याः । न च गृह्यस्थालीपाकान्तर्भाव एषां यत एषएव विधिर्यत्रक्वचिद्धोमे इत्यभिहिते पुनरभिधीयते उपलिप्तउद्धतावोक्षितेऽग्निमुपसमाधायेति नूनमनेनाप्रवृत्तिस्तत्रैषाम् तस्मादग्न्यर्था एवैते । अथोद्धननोन्तरं यदि कश्चित्पशुः विकिरेत् मूत्रादिभिर्विकीर्णं कुर्य्यात् (अत्र पशुः इत्युपलक्षणम्) सुसँस्कृते कुण्डे वा स्थण्डिले केनापि दोषेणाशुचितामापन्ने प्रायश्चित्तविशेष-उक्तोबौधायनेन "स्थण्डिलमुद्धतं गौरश्वोवा यदि विकिरेदन्यद्वा-श्वापदमधितिष्ठेत् तस्य पदमभ्युक्ष्य जपति" "पृथिविदेवयजन्योषध्यास्ते मूलम्माहिँ सिषमिति कृतान्तात्कर्मप्रतिपद्यते" इति ॥ एवं सुपरिस्थितेऽग्न्यायतनेऽग्निसँस्थापनं कुर्यात् (गृह्ये यथा) अग्निं मथित्वा लौकिकं वाहृत्यन्यूप्योपसमादधाति । अग्नेरुत्तमादित्व-माह सिद्धान्तशेखरे । उत्तमोरणिजन्योग्निरुत्तमः सूर्यकान्तजः । मध्यमश्श्रोत्रियागारादधमः स्वगृहादिजः ॥ प्रदीप्तबहुलाङ्गारन्तमं तंतु हविर्भुजम् । लेखासु च प्रतिष्ठाप्येत्यनेन प्रतिपाद्यते ॥ (अग्निप्रणयनपात्राण्याहात्रिः) सौवर्णं राजतं ताम्रं तदभावे तु मृण्मयम् । पात्रान्तरेण पिहितं अग्नि प्रणयने स्मृतम् ॥ गोभिलोऽपि । पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे । अग्नि प्रणयनं कुर्य्याच्छरावे तादृशेपि वा ॥ (तादृशे पिहिते) (यत्तुस्मृतिसारे) शरावे भिन्नपात्रे वा कपाले त्वायसेपि वा । नाग्नि प्रणयनं कुर्य्याद् व्याधिहानिभयावहम् ॥ इति निषेधस्तु मुख्यपात्रसंभवे शरावोन ग्राह्य इति भावपरः शरावे तादृशेपिवेत्यत्रिस्मरणात् (सँस्काररत्न-मालायां) स्मृतिसारोक्तोनिषेधः पुराणशरावपरः तैजसे ताम्रपात्रे वा शरावेऽभिनवे तु वा इति नारदपंचरात्रवचनात् । (गोभिलीय-

परिशिष्टे) कपालैर्भिन्नपात्रैर्वा नत्वामैर्गोमयेन वा । अग्निं प्रणयनं कार्यं यजमानभयावहम् ॥ अल्पः प्रणीतोविच्छिन्नोऽसमिद्धश्चापरिष्कृतः । त्वरया पुनरानीतोयजमानभयावहः ॥ तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं वहु । अग्निं प्रणयनं कुर्य्याद्यजमानसुखावहम् ॥ शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः । तस्याभावे शरावेण नवेनाभिमुखं च तम् ॥ इति (क्रव्यादांशमिति ) सूर्य्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् । आनीय वन्हिं पात्रेण क्रव्यादांशं परित्यजेत् । इति शारदायाम् । हुंफडन्तेन मूलेन क्रव्यादांशं परित्यजेत् । इति । आनीयास्त्रेण नैर्ऋत्ये क्रव्यादांशं परित्यजेदिति (मंत्रमुक्तावल्याम्) (योनिमार्गेणेति) वन्हिबीजं समुच्चार्य्य त्वादधीताग्निमासने । योनिमार्गेण वैतद्वदात्मनः संमुखेन वा । (इति वायवीयसंहितायां) ❀ योनिमार्गेण मेखलोपरिस्थितरन्ध्रेणेत्यर्थः ॥ (अग्न्यानयनपात्रे अक्षतोदकं निःक्षिपेत्) उक्तं च—अग्निमानीयपात्रे तु प्रक्षिपेदक्षतोदकम् । यद्येवं नैव कुर्वीत यजमानभयावहम् ॥ (भाष्येपि) अग्न्यानयनपात्रं तु आर्द्रं कृत्वा समुद्वहेत् । अकृते भ्रष्टहोमः स्यादायुस्तत्र न पूर्य्यते ॥ (गृह्यपरिशिष्टे) स्थण्डिलेऽग्निं व्याहृतिभिरभ्यात्मं प्रतिष्ठाप्य (भारद्वाजोक्तिः प्रयोगमालायाम्) भूर्भुवः सुवरोमित्यग्निम्प्रतिष्ठापयति । (सङ्ग्रहे) अग्निस्थापनं वाग्यतेन कार्य्यम् होमकालेपिवाग्यमः कार्य्यः इति (प्रयोगपारिजाते) अग्निसँस्थापनं कुर्य्याद्वाग्यतः संयतेन्द्रियः । स्नास्यतोवरुणः कान्तिं जुह्वतोग्निः श्रियं हरेत् ॥ भुञ्जतोमृत्युरायुष्यं तस्मान्मौनं त्रिषुस्मृतम् । व्याहृत्युच्चारणं कृत्वा तूष्णीमग्निंस्थापयेदित्यविरोधः । तत्तन्नाम्ना हविर्भुजं स्थापयेदित्युक्तं संग्रहे । तत्र कानि नामानीत्याकांक्षायाम् उक्तानि नामानि (पारिजाते) पावकोलौकिकोह्यग्निः प्रथमः सम्प्रकीर्तितः । अग्निस्तुमारुतोनाम गर्भाधाने विधीयते ॥ ततः पुंसवने ज्ञेयः पवमानस्तथैवच । सीमन्ते मङ्गलोनाम प्रवलोजातकर्म्मणि ॥ नाम्नि वै पार्थिवोह्यग्निः प्राशने तु शुचिः स्मृतः । सभ्यनामातु चौलेस्या-

दृव्रतादेशे समुद्भवः ॥ गोदाने सूर्यनामाग्निर्विवाहे योजकः स्मृतः । चतुर्थ्यान्तु शिखीप्रोक्तोधृतिरग्निरथापिवा ॥ आवसथ्ये द्विजोज्ञेयो- वैश्वदेवे तु रुक्मकः । देवानां हव्यवाहश्च पितॄणां कव्यवाहकः ॥ प्रायश्चित्ते तु विड्चैव पाकयज्ञेषु पावकः । शान्तिके वरदः प्रोक्तः पौष्टिके वलवर्द्धनः ॥ पूर्णाहुत्यां मृडोनाम क्रोधोऽग्निश्चाभिचारके । वश्यार्थे कामदोह्यग्निर्वनदाहे तु दूषकः ॥ कुक्षौ तु जाठरोज्ञेयः क्रव्यादोमृतदाहने । वन्हिनामा लक्षहोमे कोटिहोमे हुताशनः ॥ समुद्रे वाडवोह्यग्निः क्षये संवर्तकस्तथा । ब्रह्मा वै गार्हपत्यस्तु ईश्वरोदक्षिणस्तथा ॥ विष्णुराहवनीयस्तु अग्निहोत्रेत्रयोऽग्नयः । ज्ञात्वैवमग्निनामानि गृह्यकर्म समारभेत् ॥ इति ॥ यद्यप्येतद्वच- नस्य नामज्ञानमात्रपरतैवावगम्यते तथापि तत्तन्नाम्ना हविर्भुजं स्थापयेदिति संग्रहादिवचने नामाकांक्षापूरणस्याऽऽवश्यकत्वादा- कांक्षापूरकस्य शास्त्रान्तरस्य चाभावादेतस्य तदर्थतापि द्रष्टव्या । स्थापनन्तु प्रणवान्ताभिर्व्याहृतिभिः कार्य्यम् । (शान्तिसारे). शत- चण्डीमुद्दिश्य "शतमङ्गलनामानं,, कुण्डेऽग्निं प्रतिष्ठापयेदिति" । कर्मविशेषे अग्निविशेषा ज्ञाताः सन्तोभूयसे श्रेयसे भवन्ति (इति- कुशकण्डिकाभाष्ये) अग्निप्रज्वलनं नाप्रोक्षितैः काष्ठैः कर्तव्यम् ॥ (तदुक्तं धर्मसूत्रे) नाप्रोक्षितमिन्धनमग्नावादध्यात् । (मानवेतु) नाग्निंमुखेनोपधमेत् । (स्मृत्यन्तरे) मुखेनोपधमेदग्निं मुखादग्निर- जायत । इति उभयवचनाभ्यां विकल्पः । अपर आह श्रौतप्रकरणे मुखादग्निं समिध्यते । इति दर्शनाच्छ्रौते मुखेनोपधमनमन्यत्र स्मार्तः प्रतिषेधः इति । आस्यविन्दूनां पतनशङ्काभयात् । केचन वैणवेन ससुषिरेणोपधमनमिच्छन्ति (यथाह सङ्ग्रहकारः) धम- नीममन्तरा कृत्वा तृणम्वा काष्ठमेववा । मुखेनोपधमेदग्निं मुखाद- ग्निरजायत ॥ वेणोरग्नेः प्रसूतत्वाद्वेणुरग्नेश्च पावनः । तस्माद्वेणुधम- न्यैव धमेदग्निं विचक्षणः ॥ श्रुतिरपि तेजोवैवेणुः तेजः प्रवर्ग्यः तेजसैव तेजः समर्धयति । अग्नेर्वेणुस्पर्शश्च न कार्यः (उक्तं च रत्नमालायाम् ) न वेणुनाग्निं संस्पृशेत् । साधनान्तरनिषेधमाह ।

(देवलः) वस्त्रेण वाथ पर्णेन पाणिशूर्पास्यदारुभिः । न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥ (सङ्ग्रहे) पर्णेन धमने व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति दारुणकान्तिनाशनम् ॥ वस्त्रेण स्त्री विनाशः स्यादास्येनायुः क्षयो भवेत् । यन्मुखेन धमनं वर्ज्यं तत्साक्षान्मुखधमनस्यैव । धमनीमन्तराकृत्वा तृणं वा काष्ठमेव वा । मुखेनोपधमेदग्निं मुखादग्निरजायत । वेणोरग्नेः प्रसूतत्वाद्वेणुरग्नेश्च पावनः । तस्माद्वेणुधमन्यैव धमेदग्निम्विचक्षणः इतिवचनात्धमनीमन्तरा कृत्वा मुखेन धमने न दोषापत्तिरिति । (गोभिलः-) होष्यन्नग्नेर्विजानीयात्स्वरूपं श्रुतिचोदितम् । अजानता कृतं कर्म तदल्पफलमिष्यते ॥ "श्रुतिचोदितम्-चत्वारिश्रृङ्गा इत्यादि । स्मृतिचोदितस्य सप्तहस्तइत्यस्योपलक्षणम् । विवृतं चैतदाचार्य्येण स्मरेदग्निं द्विजोहोष्यन्नक्तं गोवृषरूपिणम् । विततोर्ध्वाननं मध्ये वृहत्कर्णं सुलोचनम् ॥ चतुः श्रृङ्गं त्रिपादं च द्विशीर्षं सप्त हस्तकम् । द्वि पुच्छं च त्रिधावद्धं चतुर्नेत्रं त्रयीमयम् ॥ इदमेवध्यानं विशदीकृत्य यथा-श्रृङ्गाश्चत्वारउद्दिष्टा या उद्ध्र्वसभिधश्च ताः । वैदिकं तान्त्रिकं वक्त्रे पादाः परिधयस्त्रयः ॥ ऋगाद्याश्चत्रयोवेदाः पुरुषार्थास्तदीक्षणः । छन्दांसि सप्तहस्तानि पुच्छौ पक्षौ सितासितौ ॥ रोमाण्युरूणि तस्याहुश्चतुर्मास्यानि बन्धनम् । संवत्सरोऽनुयाज्याख्याः समित्कर्मसु गद्यते ॥ तदा पञ्चदिनान्येव समिधः प्राहुरुत्तमाः ( पञ्चदिनानि, पञ्चदश ) तच्च सर्वात्मनोवन्हेरात्मत्वेन निगद्यते । अन्येतु । सप्तहस्त इत्यारभ्य... ध्यायेद्धुताशनमित्यन्तमाहुः ( ध्यानफलं वशिष्ठकल्पे ) अग्निरूपमथोवक्ष्ये सिद्ध्यर्थं सर्व कर्मणाम् । यतस्तस्मिन्नविज्ञाते होमोभवति निष्फलः॥ ( संग्रहोपि ) अग्निमूर्तिमविज्ञाय होमोभवति निष्फल इति (अथाग्निशिखावर्तफलमन्यत्र-यथा- ) शुभदा दक्षिणावर्ता ह्यशुभा वामभागतः । इति घृतभारसहस्राणि काष्ठभारायुतानिच ॥ एवं च क्रियते होमे ध्यानहीने न सिद्ध्यति । एतेन ध्यानस्य मुख्यता होम इति प्रदर्शितम् अथ विविधद्रव्यहोमे विविधावस्थामग्नेरिति

(शारदातिलके) यथा– वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु दैशिकः। शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥ एतच्च तांत्रिके होमे नियतमितिरत्नमालायाम्। (वशिष्ठकल्पे) जिह्वास्थानानि तदुक्तकर्म्माणि च यथा। कुण्डस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता। आग्नेये तु करालाख्या दक्षिणे तु मनोजवा॥ सुलोहिता नैर्ऋते च धूम्रवर्णा तु वारुणे। स्फुलिङ्गिनी तु वायव्ये सौम्ये विश्वरुचिस्तथा॥ काल्यां कराल्यां वा कुर्य्याच्छान्तिकं पौष्टिकन्तथा। मनोजवायां जिह्वायां अभिचारोविधीयते॥ सुलोहितायां जिह्वायां तस्यामुचाटनं विदुः। सर्वार्थसिद्धिकां विश्वरुचिं मन्त्रविदोविदुः॥ अपरे वसुधारेति जिह्वाम्पूर्वोदितां जगुः। उपजिह्वेति सा प्रोक्ता लक्ष्मीस्तत्रप्रतिष्ठिता॥ कुण्डस्य मध्यमं पार्श्वमग्ने रास्यं प्रकीर्तितम्। तस्मिन्सर्वाणि कार्य्याणि साधनीयानि नित्यशः॥ (तथा च संग्रहे) विवाहे वारुणीजिह्वा मध्यमा यज्ञकर्मसु। उत्तराचोपनयने दक्षिणा पितृकर्मसु। प्राचीना सर्वकार्य्येषु ह्याग्नेयी सर्वकर्मसु ऐशानी चोग्रकार्य्येषु बुद्ध्य त्तद्धोमलक्षणमिति॥ अविदित्वा तु योह्यग्निं होमयेदविचक्षणः। नहुतं नच संस्कारो नतु यज्ञफलं भवेत्॥ इति। एवं जिह्वाजिह्वोक्तहवननिर्णयमुक्त्वा अग्नेरङ्गानि तथा चाङ्गदेशहोमे तदनिष्टसूचकफलानि च दर्शयति यथा यत्र काष्ठस्तत्र कर्णौ धूमस्तत्र च नासिका। काष्ठमल्पंज्वलन्नेत्रं ज्वलनं मूर्ध्नि विन्यसेत्॥ प्रज्वाल्य वह्निं जिह्वायां होमं कुर्य्यादतन्द्रितः। अग्नौ कर्णाहुतिः कुर्य्याद्दुर्भिक्षव्याधिपीडनम्॥ नासिकायां मनोदुःखम् चक्षुषो ग्रामनाशनम्। मूर्ध्निस्थानेऽशुभं कुर्य्याद्राजाराष्ट्रं विनश्यति॥ तस्मात्सर्वप्रयत्नेन जिह्वायां होममाचरेत्। पुनश्च। जिह्वास्थानं तु न ज्ञात्वा होमं यः कुरुते द्विजः। सहोमोनिष्फलं याति……… (तथाचसंग्रहकारः) यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता। गजवाजिप्रणादे तु वह्निः शुभफलप्रदः॥ (अन्यत्रापि) एवं जिह्वाविधिं ज्ञात्वा जुहुयादक्षयं भवेत् इति अथाग्नियजमानयोर्म्मध्ये कस्याप्यकस्मादगमनं भवेत्। तदा प्राय-

श्चित्तमुक्तम्भगवता पराशरेण ( यथा ) द्वौविप्रौ ब्राह्मणाग्नी च दम्पती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरेत् ॥ होमकाले तथा दोहे स्वाध्याये दानसंग्रहे । अन्तरेण यदागच्छेद्द्विजश्चान्द्रायणं चरेत् ॥ ( अग्निवासविधानमाह । श्रीरामाचार्य्योयथा ) सैकातिथिर्वारयुता कृताप्ता शेषेगुणेभ्रे भुवि वह्निवासः । सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिविभूतले च ॥ ( अथाग्निचक्रन्तत्रैव ) सूर्यभात्त्रित्रिभेचान्द्रे सूर्यविच्छुक्रपङ्गवः । चन्द्रारेज्यागुशिखिनोनेष्टा होमाहुतिः खले ॥ इति । अत्राग्निवासाग्निचक्रयोःप्रयोजनाभावः ( ज्योतिर्निबन्धे ) दुर्गाहोमविधौ विवाहसमये सीमन्तपुत्रोत्सवे । गर्भाधानविधौ च वास्तुविषये विष्णोः प्रतिष्ठादिषु ॥ मौञ्जीबन्धनवैश्वदेवकरणे संस्कारनैमित्तिके । होमे नित्यभवे न दोषइति तच्चक्रं न शोध्यं बुधैः ॥ इत्यग्निस्थापनविचारः ।

# अथ कुशकण्डिकाविचारः

आस्तीर्येति "दक्षिणतोब्रह्मासनमास्तीर्य" अग्नेर्दक्षिणतः ब्रह्मणा उपलक्षितमासनम् तत्र आस्तरणम् वस्त्रादि ब्रह्मासनास्तरणं तत्कृत्वेत्यर्थः । यद्वा पञ्चाशद्भिःकुशैर्ब्रह्मेत्युक्तत्वात् । पञ्चाशत्कुशनिर्मितवटुं ( मनुष्यप्रतिकृतिकुशसमूहोवटुस्तं ) वा स्थापयित्वा इत्यर्थः । नतु साक्षाद्ब्रह्मणः उपवेशनम् । दक्षिणतोब्रह्माणमुपवेश्येति चतुर्थीकर्म्मणि सूत्रणात् । ( कारिकाकारोऽपि ) अचेतने ब्रह्मशब्दः कुशमुष्टौ च वेदवत् । कुशानां सन्निधेयुक्तः समास्तीर्येति लिङ्गतः ॥ ( कर्काचार्यास्तु ) सर्वत्र साक्षादेव ब्रह्मणउपवेशनम् नच दक्षिणतो ब्रह्माणमुपवेश्येत्यनेन पौनरुक्त्यं तस्यावसरज्ञापनार्थत्वादित्याहुः । तदपरेदूषयन्ति । स्थालीपाकश्रपणपूर्वकालताद्यवसरः । सचोत्तरतउदपात्र प्रतिष्ठाप्य स्था-

लीपाकं श्रपयित्वेत्यनेनैव लभ्यते। पूर्वकालतायाः समानकर्तृकयोः क्त्वावाच्यत्वात्। क्त्वाप्रत्ययार्थोह्युत्तरकालता। तथाच उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेन स्थालीपाकश्रपणस्योदपात्रस्थापनोत्तरकालता बोध्यते तेन स्थालीपाककरणप्राक्कालतायाः क्त्वाप्रत्ययादेव लाभाद्व्यर्थं तदर्थं दक्षिणतोब्रह्माणमुपवेश्यैतत्सूत्रं स्यादत एवं ज्ञायते। चतुर्थीकर्म्मादौ यत्र साक्षाद्ब्रह्मोपवेशनमुक्तं तत्रैव प्रत्यक्षब्रह्मोपवेशनं नान्यत्र इति ( रेणुकारिकायान्तु ) अग्नेर्दक्षिणतोब्रह्मासनं कृत्वा कुशास्तृतम्। ब्रह्माणं वरयेदग्निमुत्तरेण गुणान्वितम्। आसनं ब्रह्मणः कार्यं वारणं वा विकंकतम्। चतुरस्रं हस्तमात्रं मूलदण्डसमन्वितम्। द्विषडङ्गुलसंख्यातोमूलदण्डोविकङ्कतात्। करिष्येऽमुककर्म्माहं ब्रह्मा त्वं तत्र मे भव। ब्रह्मा भवामि चेत्युक्त्वागच्छेदग्नेस्तु पूर्वतः॥ अपरेणाथवा कुर्य्यादासनस्येक्षणं ततः। एकदेशं तृणस्यापि स्वासने चोपवेशयेत्॥ एतान्युपवेशनबोधकानि वचनानि॥ प्रयोगमालायाम् स्वदक्षिणपाणिना तस्य दक्षिणपाणिं स्पृष्ट्वा वरयित्वा वृतोस्मीत्युक्ते गन्धादिभिरभ्यर्च्चयेत्। ब्रह्मा प्राङ्मुखउपविश्य द्विराचम्याग्रेणाग्निं परीत्य दक्षिणतउदङ्मुखस्तिष्ठन् तूष्णीं ब्रह्मसदनमुपस्थायासनतृणेषु दक्षिणभागस्थमेकं तृणमङ्गुष्ठानामिकाभ्यां गृहीत्वा नैर्ऋत्यां दिशि निरस्याप उपस्पृश्यद्यावापृथिवीं समीक्षमाण उपविशेत्। ब्राह्मणाभावे ब्रह्मासनदर्भेषु प्रागग्रं कूर्च्चं निधाय ओं ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणेनमः इति वदति यजमानः) [ गृह्यपरिशिष्टे ] अथ ब्रह्मास्तिचेत्क्रियेत सप्राक् प्रणीताप्रणयनात् समस्तपाण्यङ्गुष्ठोभूत्वाग्रेणाग्निं परीत्य दक्षिणत आस्तीर्णेषुदर्भेषु निरस्तः परावसुः ( पशुपतिकृतपद्धतौतु) ओं निरस्तः पाप्माहतेनेतितृणमङ्गुष्ठोपकनिष्ठाभ्यां नैर्ऋत्यां निरस्याप उपस्पृशेत्। इदमहमर्वावसोः सदनेसीदामि इत्युदङ्मुख उपविश्य वृहस्पतिर्ब्रह्मा ब्रह्मसदनआशिष्यते वृहस्पते यज्ञं गोपाय इति ब्रह्माजपेदपांप्रणयने-ब्रह्मन्नपः प्रणेष्यामि इत्यतिसृष्टो ओं

भूर्भुवःस्वर्बृहस्पतिप्रसूतः इति जपित्वा ओं प्रणय इति अतिसृ-जेत् सर्वदाचयज्ञमनाभवेत् । ( एकेनैतदिच्छन्ति ) निराशश्चो-पवेशश्च तथा बूह्मजपोपि च । प्रायश्चित्ताहुतीः संस्था बूह्मणः कर्म पञ्चकम् ॥ इति संग्रहकारः पञ्चाशता भवेद्बूह्मा तदर्धेन तु विष्टरः ऊर्द्ध्वकेशोभवेद्बूह्मा लम्बकेशस्तु विष्टरः ॥ दक्षिणावर्तकोबूह्मा वा-मावर्तस्तु विष्टरः । इत्यत्र दर्भसङ्ख्या लिखिता परंकात्यायनेनद-र्भसंख्या निषिद्धा । यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा । दर्भ-संख्या न विहिता विष्टरास्तरणेषुच ॥ इत्युभयवचनाद्दर्भसंख्यायाः सम्भवासम्भवाभ्यां व्यवस्थितो विकल्पः । इतिदिक् । (प्रणीतापात्र-मिति) प्रणीयेति सूत्रम् । अप इति शेषः । अग्नेरुत्तरतः कौशं पूर्वापर-मासनद्वयं प्रकल्प्यापरासने उदपूर्णंचतुष्कोणं चमसं निधायालभ्य ब्रह्मासनस्वीक्ष्य पूर्वासने निदध्यात् (इतिविश्वनाथः) एतच्च प्रणीता प्रणयनं दृष्टफलं सर्वार्थं चेति । ( कर्काचार्य्याः ) दृष्टार्थतायामपि संयवनार्थमिति [ केचित् ] किं चापः प्रणयतीत्युपक्रम्य ततो देवा एतं वज्रं ददृशुर्यदप इत्याद्यर्थवादपर्य्यालोचनया विघ्ननिवर्त-कत्वं प्रणीतायाः प्रतिपाद्यते । इति प्रतीयते । तच्च साक्षान्नसंभव-तीति अदृष्टमेव व्यापार इति सिद्धम् । शतपथश्रुतित एव प्रणी-ताया अदृष्टार्थत्वम् । [ इति विश्वनाथः ] [ तल्लक्षणं यज्ञ पार्श्व-संग्रह कारिकायाम् ) यथा प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेत् । ( कर्मप्रदीपे ) द्वादशाङ्गुलदीर्घेण चतुरस्रः सगर्तकः । प्रस्थमात्रोकदग्राही प्रणीता चमसो भवेत् ॥ इति ॥ ( परिस्तरण-मिति ) परिस्तीर्येति सूत्रम् । प्रागग्रैरुदगग्रैश्च तृणैरग्नेः परिस्तरणं कृत्वा प्राच्यास्प्रथममुदगग्रैः प्रक्षेपः । दक्षिणतः प्रागग्रैः । ततः प्रतीच्याम् उदगग्रैः तत उदीच्याम् प्रागग्रैः इति । परिस्तीर्य च दूर्वाभिः कुण्डस्य परितः प्रिये । पूर्वाग्रमुत्तराग्रं च परिस्तरणमु-च्यते । (इतिज्ञानार्णवतन्त्रे) अन्यत्र— अग्निं षोडशभिर्दर्भैः परि स्तीर्यदिशं प्रति । प्रागादीशानपर्यन्तमुदगग्राः ( उदक्संस्थाः ) परिस्तृतिः ॥ अग्नेर्नग्नता परिहारार्थं परिस्तरणम् । ( तथा च शत

पथश्रुतिः ) सहैष यज्ञउवाच नग्नता या विभेमीति का ते नग्नतेत्य-
भितएव मापरिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति ।
( परिषेकादेर्देशक्रममाहकात्यायनः- ) अष्टाङ्गुलिमिते देशे परि-
षेचनमारभेत् । नवाङ्गुल प्रमाणे तु विधिना परिधीन्न्यसेत् ।
दशाङ्गुलिप्रमाणेतु परिस्तीर्य कुशान् क्रमात् ॥ एकादशाङ्गुले
देशे गन्धपुष्पाक्षतादिभिः । पूजां च कारयेद्विद्वानिति कात्यायनं
मतम् ॥ (स्मृत्यन्तरेतु) त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्-
गुलैः । सेचनं परिधिश्चैव स्तरणं पूजनन्तथा ॥ अत्र पञ्चाङ्गुला-
त्मक परिस्तरणावधि देशकथनम् तच्छाखान्तरविषयम् । इति ।
[ मेरुतंत्रे परिस्तरणविधिः ] एकमेखलके कुण्डे मेखलाधः परिस्त-
रेत् । द्विमेखले द्वितीयायां मध्यमायां त्रिमेखले ॥ स्थण्डिले सिक-
तानान्तु वाह्यभूमौपरिस्तरेत् । इति । [ आसादयेदिति ] अर्थव-
दासाद्येतिसूत्रम् । अर्थः प्रयोजनम् तद्वत्पात्रसमुदायमासाद्य
अग्नेरुत्तरतः पश्चाद्वा प्रयोजनवतास्पात्राणामासादनङ्कार्यक्रमेण
मुख्यक्रमानुग्रहात् [ तथाचोक्तं कारिकायाम् ] पश्चादुत्तरतोवास्या
त्पात्रासादनमग्नितः । उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवे-
त् ॥ एतच्च विपुलस्थानसंभवे असंभवेतु कात्यायनेनोक्तम् प्राश्च-
म्प्राश्चमुदगग्नेरुदगग्रं समीपतः । ( कारिकायाम् ) आसादनन्तु
पात्राणां प्रादेशान्तरके बुधैः । ( अन्यत्र ) दर्भेषु चोत्तरेणाग्निं
सादयित्वा यथाविधि । पात्राग्न्योरन्तरं यत्तु द्विपञ्चाङ्गुल मात्र-
कम् ॥ [ पात्रलक्षणं कारिकायाम् ] खादिरः स्फ्याकृतिर्वज्रोऽरत्नि
मात्रः प्रशस्यते । आसनं ब्रह्मणः कार्यंवारणं वा विकङ्कतम् ॥
हस्तमात्रं चतुः स्रक्ति मूलदण्ड समन्वितम् । द्विषडङ्गुलसंख्या-
कोमूलदण्डो विकङ्कतः । प्रस्थमात्रोदकग्राही प्रणीताचमसो
भवेत् । वैकङ्कतं पाणिमात्रं प्रोक्षणी पात्रमुच्यते । हंसमुखप्रसेकं च
त्वग्बिलं चतुरङ्गुलम् ॥ आज्यस्थाली तु कर्तव्या तैजसद्रव्यसं-
भवा । माहेयीवापिकर्तव्या नित्यं सर्वाग्निकर्मसु ॥ आज्यस्था-
ल्याः प्रमाणं तद्यथाकामंतु कारयेत् । मृण्मयीवौदुम्बरी वापि चरु-

स्थाली प्रशस्यते ॥ [औदुम्बरी ताम्रमयी] तिर्य्यगूर्ध्वं समिन्मात्रदृढा नातिबृहन्मुखी । कुलालचक्रघटितमासुरं मृन्मयं स्मृतम् ॥ तदेव हस्तघटितं स्थाल्यादि खलु दैविकम् । अङ्गुष्ठपर्ववृत्तश्चारत्नि-मात्रः स्रुवोभवेत् । पुष्कारार्द्धं भवेत् खातं पिण्डकार्द्धं स्रुचस्तथा । (पिण्डकार्द्धमुष्ट्यर्द्धम् ) पात्राणिवारणान्यत्र यानि प्रोक्तानि सम्भवे ॥ वैकङ्कतानि कार्य्याणि सूत्रान्तरमतादपि । अभावे मुख्यवृक्षस्य यज्ञीयस्यतरोरिह ॥ यत्किंचित्पात्रजातन्तदिति भास्करसम्मतिः । (पात्रासादनप्रकारः प्रयोगपारिजाते ) दर्भेवृत्तरतो द्वन्द्वं पात्राणि न्यश्चि सादयेत् । (बौधायनः) स्थालीं चरोः प्रोक्षण भाजनं च दर्वीस्रुचौ सादय दर्विहोमे पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण कर्मवित्कुशैश्च ॥ ( पवित्र इति ) पवित्रलक्षणं यथा अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसम्मितौ । अनखच्छेदितौ साग्रौ तौ पवित्राभिधानकौ ॥ अप्रच्छिन्नाग्रयोर्नैव त्यागः सूत्रे प्रशस्यते । [ अत्रविशेषमाहापस्तम्बः ) समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ पवित्रे कुरुतः । (समौ स्थौल्येन समौ) (छन्दोगपरिशिष्टे) अनन्तगर्भकं साग्रं कौशं द्विदलमेवच । प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥ (यच्चोक्तं कुशौ प्रादेशसम्मितौ तच्छाखान्तरीयम्) ( कात्यायनसूत्रे ) समावप्रछिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति इति पवित्रयोरेव समानत्वोक्तेश्छेदनेनपवित्रे एव समे कार्य्ये नतु समप्रमाणौ कुशौ छित्वेत्यत्राग्रहः भिन्नप्रमाणावपि छित्वा समौ कार्य्याविति तात्पर्य्यार्थः इति देवयाज्ञिकपितृभूतिहरिहरस्वामिनः ( कुशकण्डिकाभाष्ये ) एवमासादनं कृत्वा पवित्रच्छदनैः कुशैः । अङ्गुष्ठाङ्गुलिपर्वाभ्यां छिन्द्यात्प्रादेशसम्मितम् । इति ( परशुरामपद्धतौतु पवित्रेस्थइतिछिन्द्यात् ) (प्रोक्षणमिति)प्रोक्षणीरिति जलवाचिपदम् । ताः संस्कृत्य । प्रोक्षणीसंस्कारश्चैवम् । आदौ प्रोक्षणीपात्रे नीरप्रक्षेपः । ततः पूर्वसम्पादितपवित्राभ्यामुत्पवनम् । पात्रस्य ततः सव्यहस्ते निधानम् । दक्षिणेनोद्दिङ्गनं ताभिरेव तासांप्रोक्षणम् इति (कर्मप्रदीपे प्रोक्षणीपात्र-

लक्षणं ) वारणं पाणिपात्रं च द्वादशाङ्गुलविस्तृतम् ।
पद्म पत्राकृति वापि प्रोक्षणीपात्रमीरितम् ( रुद्रदत्तः )
उत्ताने प्रोक्षणार्थेपोनिनयेत्सपवित्रके । पवित्राभ्यां त्रिरुत्पूय त्रिः
प्रोक्ष्योर्ध्वविलानि तु (प्रोक्ष्य इति ) दक्षिणहस्तोपात्तप्रोक्षणीभिः
समग्रं पात्रसमुदायं सकृदेव प्रोक्षणीयम् । श्रुतौ शुन्धध्वम् इति
मन्त्रलिङ्गात् । श्रुताउद्देश्यगतं बहुत्वं न विवक्षितम् । इति कर्क्का-
चार्य्याः । ( प्रयोगपारिजाते भगवान् बौधायनः ) तृणेष्वधोमुखा-
न्येव यज्ञपात्राणि सादयेत् । अन्यैश्चसाधनैः सार्धं प्राक्संस्थानि
यथाक्रमम् । चरुप्रोक्षणयोः पात्रे स्रुवं जुह्वां तथैव च । प्रणीतापात्र-
माज्यस्य पात्रेऽध्मं च बर्हिषा ॥ त्रिरद्भिः प्रोक्ष्य पात्राणि तृणैः
प्रच्छाद्य यज्ञियैः । कृत्वा पवित्रे आसिच्य वारिप्रोक्षणभाजने ॥
उत्पुनीयात्पवित्राभ्यामापस्तूष्णीं त्रिरेव तु । अङ्गुष्ठानामिकाभ्या-
न्तु पाण्योरुत्तानयोः पृथक् ॥ गृहीत्वा मूलतलाभ्यामित्युत्पवन-
मुच्यते । कृत्वोत्तानानि पात्राणि इध्मं विस्रस्य बन्धनात् ॥
अद्भिराभिस्सहप्रोक्षेत्त्रिरन्यैर्यज्ञसाधनैः । ( कारिकायाम् ) शुनां
च शूद्रजातीनां पतितस्यान्त्यजातिनाम् । दृष्टिदोषविनाशाय
पात्राणां प्रोक्षणं मतम् ॥ पात्राणिक्रमशः प्रोक्ष्य निदध्यात्तान्य-
सञ्चरे । असञ्चरः प्रणीताग्न्योरन्तरेण प्रकीर्तितः ॥ प्रणीताग्न्यो-
र्मध्येनान्तरेण सञ्चरेयुरितिश्रुतिः । ( आज्यंनिक्षिप्येति ) आ-
सादितमाज्यमाज्यस्थाल्याम्पश्चादग्नौ निहितायाम् प्रक्षिप्य चरु-
स्थाल्याम्प्रणीतोदकमासिच्य आसादितांस्तण्डुलान्प्रक्षिप्येति (सा-
यणीये आज्याभावे प्रतिनिधिरुक्तोयथा ) हव्यार्थे गोघृतं ग्राह्यं
तदभावे तु माहिषम् । आजंवा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥
तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः । वृहत्स्नेहोऽथवा
ग्राह्यःपूर्वाभावे परः परः ॥ ( वृहत्स्नेहः ऐरंडतैलम् ) तदभावे
यवव्रीहिश्यामाकान्यतमोद्भवम् । पिष्टमालोड्य तोयेन घृतार्थे
योजयेत्सुधीः ॥ पिष्टाभावे तु तत्सल्यं द्रव्यं प्रतिनिधीयते ।
( भास्करः ) काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः ।

काम्येप्युपक्रमादूर्ध्वमन्ये प्रतिनिधिं विदुः ॥ नच प्रतिनिधिर्देश-लाकयोरस्त्यथापरः । द्रव्यं वै कल्पितं किञ्चिद्यत्र संकल्पितं भवेत् ॥ तदभावे सति ग्राह्यं नतु वैकल्पिकान्तरम् । प्रतिनि-धिग्रहणोत्तरं मुख्यलाभेपि तन्न ग्राह्यम् तदर्थमाह उपात्तेतु प्रति-निधौ मुख्यं वै लभ्यते यदि । तत्र मुख्यमनादृत्य गौणे नैव समाप्यते ॥ कुशोपग्रहःसन् आज्यस्थाल्यामाज्यं प्रक्षिपेत् ( इति विश्वनाथः ) ( अधिश्रृत्येति ) तत्राज्यं ब्रह्माधिश्रयति तदुत्तरतः स्वयं चरुं एवं युगपदग्नावारोप्य (इतिहरिहरः) (आज्यनिर्वापणदेश आपस्तम्बे ) अपरेणाग्निंपवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्येति ॥ ( प्रयोगपारिजाते ) अथाज्यस्थालीमादाय तस्या-माज्यं निषिच्य च उदगग्नेर्निरूढेषु त्वङ्गारेषु सभस्मसु ॥ विला-प्यैतदधिश्रित्य अवज्वल्य ज्वलत्तृणैः । आज्ये प्रत्यस्य दर्भाग्रे अङ्गुष्ठपर्वमात्रके ॥ इति (निरूढशब्दस्य व्याख्यास्मृतिदीपिकायां) निरूढः स्याद्विभक्तोग्नियः परिस्तरणाद्बहिः । अनिरूढः सवै वह्निर्यः परिस्तृतिमध्यगः ॥ ( विद्यारण्यश्रीपादोक्तिरत्नमालायाम् ) एतच्च यत्राग्नेः प्रत्यूहनविधानं तत्परम् यत्र तु प्रत्यूहनविधानं नास्ति तत्रायतनमध्यएव पृथक्करणं निरूढशब्दार्थ इति पृथक्कृता-ग्नावाज्याधिश्रयणे कारणं श्रूयते अग्निहोत्रप्रकरणे रुद्रोवा एष यदग्निः पत्नी स्थाली यन्मध्येग्नेरधिश्रयेत् रुद्राय पत्नीमपिदध्यात् । प्रमायुकास्यात् उदीचोङ्गारान्निरुह्याधिश्रयति । पत्निये गोपीथाय । व्यन्तान्करोति यथा पत्न्यः प्रमायुकाभवन्ति । इति ( व्यन्तान्पृ-थग्भूतान् ) इति ( समन्ताद्भ्रामयेदिति ) अधिश्रितघृतचर्वादेः परितएकं ज्वलदुल्मुकं प्रादक्षिण्येन भ्रामयित्वाऽप्रदक्षिणकर्म्मान-येत् । ( इति विश्वनाथः ) श्रुतौ ( पर्य्यग्निकरणे फलविशेषोक्तः ) पर्य्यग्निकरोति रक्षसामपहत्यै त्रिः पर्य्यग्निकरोति । त्र्यावृद्धियज्ञः अथोमेध्यत्वाय । ( तृणविशेषनिरसनमाह संग्रहकारः ) पर्य्यग्नि-करणायाग्निमनिरूढाद्यदाहरेत् । वह्निर्निरस्य तच्छेषं निरूढाद्यदि योजयेत् ॥ एतत्स्मृत्यन्तरोक्तं आज्याधिश्रयणं कुशकण्डिकाभाष्ये

प्रयोगपारिजातादौ लिखितं परं पारस्करगृह्यसूत्रकारेण कापि न प्रदर्शितम् अतएव ज्ञायत एतच्छाखान्तरीयम् । आज्यस्य तंत्रशास्त्रे षट्संस्काराः भवन्ति ते च तान्त्रिककुशकण्डिकाप्रकरणे स्फुटीभविष्यन्ति । ( प्रताप्येति ) दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा ( इतिहरिहरः ) प्रसङ्गात्स्रुवलक्षणम् ) खादिरेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् । त्वक्प्रदेशे विलौ स्याताम् अन्यैर्वा यज्ञियैर्द्रुमैः ॥ तदलाभे पलाशस्य-पर्णाभ्यां हुयते हविः । पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः ॥ ( इतिसंग्रहे ) पलाशस्य पर्णाभ्यामित्यत्र मध्यमपर्णेनेति वेदितव्यम् । ( मध्यमेन पर्णेन जुहोति इति श्रुतेः ) ( कुशकण्डिकाभाष्ये ) खादिरोवाथ वार्णोवा- द्विवितस्तिः स्रुवः स्मृतः । स्रुवोऽन्तश्चतुर्विंशः स्यात् षड्देवास्तत्र संस्थिताः ॥ अग्निरुद्रोयमश्चैव विष्णुः शक्रः प्रजापतिः । मूले चतुरङ्गुलोऽग्निर्द्वितीये रुद्रदैवतम् ॥ तृतीये यमदेवश्च चतुर्थे विष्णुदेवता । पञ्चमे शक्रदेवः स्यात्षष्ठे चैव प्रजापतिः ॥ यममग्निम्परित्यज्य शक्रं रुद्रं प्रजापतिम् । विष्णुस्थेन च हुयेत एवं कर्मशुभप्रदम् ॥ ( तथाचात्रिः ) अङ्गुष्ठपरिणाहाढ्यं दण्डं कुम्भकभूषितम् । पुष्करम्पुष्कराग्रे तु मध्यरेखोच्छ्रिताङ्कितम् ॥ *स्रुक्स्रुवोऽर्घकरौ कार्यौ दण्डं वृत्तं सुशोभितम् अङ्गुष्ठपरिणाहाढ्यं स्रुतिर्यंत्रविनिर्म्मितम् ॥ द्व्यङ्गुलं मध्यदेशे तु कुम्भपुष्करमूलकम् *एकगन्तद्विजानीयात्त्रिभागेनतु पुष्करम् ॥ वेदी सप्ताङ्गुला कार्य्या पञ्चवृत्तं प्रकल्पयेत् । प्रणिखातं समं कार्य्यमग्रङ्कुर्य्यात् षडङ्गुलम् गोकर्णाकृतिशोभाढ्यं कनिष्ठाङ्गुलपञ्चकम् । घृतनिष्कप्रमं कार्य्यं यवत्रयसुरेखितम् ॥ एवं स्रुचं स्रुवं कृत्वा ताभ्यां होमाः सुखावहाः । (सङ्ग्रहकारिकायाम्) यत्र स्रुवाहुतिविधिस्तत्र नासादयेत्स्रुचम् । ( वानप्रस्थगृहस्थयोः

*स्रुक्स्रुवोऽर्धकरौ इत्यार्षः पाठः साधुपाठस्तु करार्धौस्रुक्स्रुवौकार्याविति।

*एकगं गण्डिका इति ।

स्रुक्स्रुवौ विलक्षणौ यथा स्रुग्बाहुमात्रा विज्ञेया वानप्रस्थगृहस्थयोः । स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुलं परिमण्डलम् ॥ ( इतिकर्मप्रदीपे ) ( कस्य धातुविशेषस्य काष्ठविशेषस्य वा स्रुक्स्रुवौ कार्य्यावितिवायवीयसंहितायां यथा ) स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससीसकौ । यज्ञदारुमयौ वापि कार्यौ तौ शिल्पिसम्मतौ ॥ संक्षिप्तहोमकर्म्मणि वृक्षविशेषस्य पत्रजाएवस्रुक्स्रुवौ [ इति संहितायां ] पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मुने । अथवाश्वत्थपत्रेण संक्षिप्ते होमकर्म्मणि ॥ ( स्रुवधारणे विशेषोविधानमालायाम् यथा ) अग्रे धृतोविनाशाय धृतोमध्ये प्रजाक्षयी । मूलेधृतस्तु होतुस्तु मृतिन्दद्यात्स्रुवोध्रुवम् ॥ अग्रान्मध्याच्चमध्ये तु मूलान्मध्याच्च मध्यतः । स्रुवः प्रधार्य्योविद्वद्भिः सर्वकामार्थसिद्धये ॥ [ अस्य स्पष्टं विवरणं यथा ] स्रुग्दण्डस्य समानान्पञ्चभागान्कृत्वा द्वितीयभागे चतुर्थभागे वा धारणं कार्य्यमिति- ( उक्तं च ) प्रजापतिविभागेन प्रजावृद्धिर्भविष्यतीति । ( स्रुवधारणप्रकारोनारदीये ) हीयते यजमानोवै स्रुवमूलस्य दर्शनात् । तस्मात्संगोपयेन्मूलं होमकाले स्रुवस्य च । अग्रे व्याधिकरं प्रोक्तं मध्ये शोककरं स्मृतम् । मूले हानिकरं प्रोक्तं स्रुवो धारयते कथम् । वेदाङ्गुलं परित्यज्य अग्रे चैव द्विरष्टकम् । वेदाङ्गुलं तु तन्मध्ये धारयेच्छङ्खमुद्रया ॥ ( तन्त्रान्तरे ) पञ्चाङ्गुलं वहिस्त्यक्त्वा धारयेच्छङ्खमुद्रया । ( होमसारे ) मूलात्षडङ्गुलं त्यक्त्वा चतुरङ्गुलमेव वा । प्रकोष्ठेमूलमाच्छाद्य धार······द्रया ( भैरवतन्त्रे ) हविरुत्तानहस्तेन वैश्वानरमुखे हुतम् । होतुश्चचुर्विनाशाय यजमानस्तु नश्यति । ( तथा च तन्त्रान्तरे ) स्रुवेणाज्यं समादाय जुहुयान्न्युब्जपाणिना । यद्यप्येतानि वचनानिन्युब्जपाणिनापि होमविधिप्रतिपादकानि परं कात्यायनविरोधादुपेक्षणीयानि । ( यथा च परिशिष्टे । उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीडितम् । संहताङ्गुलिपाणिस्तु वाग्यतोजुहुयादिति । ( स्रुक्धारणमुद्रा तु प्रयोगार्णवे ) कठिनद्रव्यहोमे तु मुष्टिना

धारणं स्रुचः । द्रवद्रव्यस्य होमे तु उत्तानाङ्गुलिभिस्स्मृतम् ॥ ( एतच्च स्रुक्स्रुवधारणं सौम्यतीर्थेनेति बौधायनः ) निर्वपण संस्रवण लाजहोमनित्यहोमान्कायतीर्थेन कुर्य्यात् देवेन दैविकं पित्र्येण पैतृकं कमण्डलुस्पर्शनं नवान्नप्राशनं स्रुवग्रहणं दैविकं सौम्येनाग्नेयेन प्रतिग्रहं कुर्य्यात् दैविकमितिविशेषणात्पित्र्यं स्रुवधारणं पितृतीर्थेनैवेति । ( सौम्याग्नेयतीर्थलक्षणमपि कथितं तेन ) अङ्गुलिमूले सौम्यं करमध्यआग्नेयम् इति । ( सम्मृज्येति ) कुशैरितिशेषः । तेच त्रयः पञ्चः सप्त वा आचारादिति ( विश्वनाथः ) तथाच ( बादरायणः ) स्रुवः सम्मार्ज्जनार्थाय पञ्च वाथ त्रयोऽपि वा प्रादेशमात्राः संग्राह्याः संमार्जनकुशा इति ॥ ( संग्रहकारः ) सम्मृज्य त्रिर्विलं त्वग्रैर्दण्ड मध्ये स्रुवस्य तु मूलं मूलैश्च दर्भाणां तथा जुह्वां विधीयते । ( कुशकण्डिकाभाष्ये ) प्रताप्य वामहस्ते ते धृत्वा सम्मार्जकैः शुभैः । सम्मृज्यान्मूलमारभ्याग्रैरग्रावधि स्रुवम् ॥ अधस्तान्मूलपर्य्यन्तं मूलैः सम्प्रोक्ष्य वारिणा । पुनः प्रतापयेदग्नौ निदध्याद्दक्षिणे च तम् ॥ विपर्य्यस्य वहिर्म्मूलैः प्राङ्क्रम्य प्रताप्य प्रयच्छति । [ अत्रविशेषःकात्यायने ] यथा स्रुवस्यविलमग्रैस्तु पृष्ठमारभ्यअग्रतः । आरभ्य पृष्ठतोयावदुपरिष्टाद्विपुलं भवेत् ॥ इति [ अभ्युक्ष्येति ] प्रोक्षणीनां क्लृप्तत्वात्तज्जलेनेति शेषः । [इतिविश्वनाथः] प्रणीतोदकेनाभिषिञ्च्येति [हरिहरः] [ पुनःप्रताप्येति ] पुनः पदोपादनात्स्रुवमिति शेषः [ निदध्यादिति । स्थापनीयचर्वादेर्दक्षिणतः [ इतिविश्वनाथः ] स्रुवस्यायं संस्कारोहोमार्थः । एवं च दृष्टार्थता तत्संस्कारस्य । अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकप्रागन्त्यहोमात्कार्य्यः । उद्र्ध्वन्तु प्रायश्चित्तमात्रम् । प्रोक्षण्युदकेनाभ्युक्षणमिति [ गदाधरः ] आज्यमुत्थाप्येति ) आज्यमुत्थाप्यचरोः पूर्वेण नीत्वाग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्याज्यस्य पश्चिमतोनीत्वाज्यस्योत्तरतः स्थापयित्वाज्यमग्नेः पश्चादानीय चरुश्चानीयाज्यस्योत्तरतोनिधायैवं त्रिचतुरादीनन्यानपि हवींष्युद्वासयेत । अधिश्रुतानाम्पूर्वेणोद्वासिता-

नाम्पश्चिमतोहविष उद्वास्यानयनमितियाज्ञिकसम्प्रदायादिति (हरिहरः) (उत्पूयेति ऊर्ध्वम्पूर्ववत्पवित्राभ्याम् (अवेक्ष्येति) अवलोक्याज्यन्तस्मादपद्रव्यनिरसनम् ) ( प्रोक्षणीश्चपूर्ववदिति ) पूर्ववदिति पवित्राभ्याम्प्रोक्षणीरुत्पूय तास्वेव पवित्रनिधानम्। च शब्दादाज्यमपि पूर्ववदेवातः पवित्राभ्यां स्यादिति) प्रोक्षणीसंस्कारोयम्पर्युक्षणार्थः । [ इतिगदाधरः ] [ आज्यसंस्कारकारिका प्रयोगपारिजाते ] त्रिः प्रक्षाल्य पचेदाज्यमासिच्य सपवित्रके । अपोह्योत्तरतोङ्गारान् तेष्वधिश्रृत्य तद्घृतम् ॥ अधिश्रितमवज्वल्य दर्भाग्रद्वयमस्यति तेनैवज्वलताज्यंच त्रिः पर्य्यग्निकरोत्यथ ॥ कर्षन्निवोदगुद्वास्य चाङ्गारादतिसृज्य च । अङ्गुष्ठोपकनिष्ठाभ्याम्पवित्रे तें असंहते । गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय तद्घृतम् । सवितुष्ट्वेति मंत्रेण सकृत्तूष्णीं द्विरिष्यते ॥ कृताज्योत्पवने प्रोक्ष्य पवित्रे अनले क्षिपेत् । अनलाप्रत्यास्तीर्णे वर्हिष्याज्यं निधाय च ॥ प्रताप्य सक्रुशौ········प्रहरेदथ । इति । प्रयोगपारिजातस्याज्यसंस्कारपद्धतिः समीचीना परमन्यशाखीया प्रतिभाति । ( चरुपचननियमोपितत्रैव ) यथा नाश्रृतं न विदग्धं वा न वहिर्गतकश्रुकम् । ( कुशकण्डिकाभाष्ये ) स्वशाखोक्त्या सुनिष्पन्नोह्यदग्धोऽकठिनः शुभः । नचातिशिथिलः पच्योनचरुर्विषमस्तथा ॥ यावता होमनिर्वृत्तिर्भवेद्या यत्र कीर्तिता । शेषं चैव भवेत्किञ्चित्तावंतं निर्वपेच्चरुम् । इति ( चरुसंस्कारः ) अभिघार्य्यचरुं चोदगुद्वास्य च ततः परम् । अन्तरेणाग्निमाज्यं च नीत्वाथासाद्य वर्हिषि ॥ आज्याद्दक्षिणतोदेशे जयन्तवचनं यथा। (अभिघारणलक्षणम्) गृहीत्वाज्यं श्रुवेणैव पक्के हविषि सेचनम् । अभिघारणमित्याहुस्तथान्येषु हविष्षुच ॥ उदगुद्वासितं यस्मात्पुनरप्यभिघारयेत् । आज्यस्य दक्षिणे पार्श्वे वर्हिष्यासादयेत्पृथक् इति ( उदगुद्वासनेफलंश्रुतौ ) यत्प्राचीनमुद्वासयेत् यजमानठं.शुचार्प्पयेत् यद्दक्षिणापितृदैवत्यं स्यात् यत्प्रत्यक्पत्नीठं.शुचार्पयेत् । उदीचीनमुद्वासयति एषा वै देवमनुष्याणां शान्तादिक् ।

तामेवैतदुदगुद्वासयति शान्त्यै । इति ( स्रुवबिलादेर्दर्भादिभिः सम्मार्ज्जनम् तत्फलम् ) प्राचीमभ्याकारम् । अग्रैरन्तरतः । एवमिवह्यन्नमद्यते । अथोअग्राद्वा औषधीनामूर्ज्जम्प्रजाउपजीवन्ति ऊर्ज्जएवान्नाद्यस्यावरुध्यै । अधस्तात्प्रतीचीदण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै । ( हविरन्तस्संस्कारविधिः गृह्यपरिषिष्टे ) हौम्ये पक्वमुल्मुकमवज्वल्य प्रोद्यतेनैवत्रिःपर्य्यग्निकृत्वोल्मुकं निरस्येत् । पक्वमुदङ्गारेष्वधिश्रित्य प्रोद्योदगुद्वास्य तानङ्गारानतिसृजेदेषहौम्यसंस्कारः । ( उपयमनकुशानादायेति ) दक्षिणपाणिना गृहीत्वा सव्ये निधायेति ( हरिहरः ) ( तथाचाचारतिलके ) सर्वतोदर्भपाणिःस्याद्दैवे पित्र्ये च कर्म्मणि । गन्धलेपं पादशौचं न कुर्य्याद्दर्भपाणिना ॥ विनाकरपवित्रेण जप्तं दत्तं हुतं च यत् । हव्यं देवाः न गृह्णन्ति कव्यं च पितरस्तथा ॥ लाजहोमे समिद्धोमे ऊर्ध्वहोमे तथैवच । तिष्ठन्नेवहि कर्तव्याः स्वाहाकाराद्यपि ध्रुवम् इतिकुशकण्डिकाभाष्ये समिल्लक्षणं च ( स्मृत्यर्थसारे ) पलाशखदिराश्वत्थशम्युदुम्बरजासमित् । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥ सत्वचः समिधः कार्य्याऋजुश्लक्ष्णसमास्तथा । शस्तादशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तुवा ॥ आर्द्राः पक्वाः समच्छेदाः तर्जन्यङ्गुलिवर्त्तुलाः । अपाटिताश्चाद्विशाखाः कृमिदोषविवर्ज्जिताः ॥ ईदृशाः होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् । ( यद्वा ) समित्पवित्रं वेदश्च त्रयः प्रादेशसम्मिताः । इध्मस्तु द्विगुणः कार्यः त्रिगुणः परिधिः स्मृतः ॥ स्मार्त्ते प्रादेशइध्मोवा द्विगुणः परिधिः स्मृतः । इति ( समिद्धोमलक्षणं संग्रहे ) मूलतः कर्मनाशः स्यान्मध्यतः पुत्रनाशनम् । अग्रतोमुख्यतोव्याधिरेकपाणेर्धनक्षयः ॥ मूलमध्यममध्येन समिद्धोमस्यलक्षणम् । अत्रैकपाणिना होमनिषेधेन सव्यपाण्यन्वारब्धदक्षिणपाणिनाहोमविधिर्गम्यते ( इतिप्रयोगपारिजाते ) ( पर्य्युक्ष्येति ) पर्य्युक्षणंचप्रोक्षणीभिः । ( कुशकण्डिकाभाष्ये यथा ) सपवित्रेणहस्तेन प्रोक्षणीपात्रवारिणा । पर्य्युक्षणंभवेदग्नेः सम्मुखीकरणाय वै ॥ ( तथाच

सङ्ग्रहे ) अधोमुखस्तूर्ध्वहस्तः प्राङ्मुखोहव्यवाहनः । तिष्ठतीह्यभावेन आहुतिः कुत्रदीयते ॥ एषोह इतिमन्त्रेण अग्नौ कुर्यात्प्रदक्षिणम् । हव्यवाट् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखोभवेत् ॥ (कुशकण्डिकाभाष्ये ) कुशैरन्वारब्धः स्रुवेणहोमः । ( उक्तश्चतत्रैव ) भूरादिनवस्विष्टकृतिष्वाद्ये चतुष्टये । अन्वारब्धोभवेत्तेषु सोन्वारब्धः कुशेन हि ॥ स्रुवेणाज्यं गृहीत्वाग्नेः प्रत्यगुत्तरदेशतः । आरभ्यदिशमाग्नेयीमाज्यधारामृजुं हरेत् ॥ नैर्ऋतीं दिशमारभ्य त्वैशानीं पूर्ववद्धरेत् । उभयत्र चतुर्थ्यन्तं प्रजापतिपदं स्मरन् ॥ स्वाहेत्याघारयेदेतावाघाराविति भाषितौ । इति अन्वारब्धः आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तम् प्राजापत्यꣳ स्विष्टकृच्चेति सूत्रम् । आघारः पूर्वउत्तरतश्च तत्रतूष्णीम्पूर्वः । हरिहरेणप्रजापतयेस्वाहेति पूर्वाघारोदर्शितः सोऽतीवाशुद्धः नह्यत्रमंत्रोस्तिदर्शपौर्णमासयोः परिभाषातः प्राप्तः स्वाहाकारोऽपि प्रतिषिध्यते । नस्वाहेति वचनमनिरुक्तꣳहिमनोनिरुक्त ह्येतद्यत्तूष्णीम् उत्तराघारे प्रतिनिगद्य होमत्वं नह्यत्रमंत्रोस्ति । एवमाज्यभागयोरपि [ गदाधरः ] आघारहोमे [ श्रुतिः ] आघारावाघारयति निरइववैसुवर्गोलोकः । सुवर्गमेवास्मै लोकं प्ररोचयत्यृजुमाघारयत्यृजुरिवहिप्राणः संततमाघारयति प्राणनामान्नाद्यस्य संतत्या अधोरक्षसामपहत्यै । ( आज्यभागहोमकारिका ) जुहुयादग्नये स्वाहेत्युदगाज्यं स्रुवेण तु । तेनैव जुहुयादाज्यं सोमायेति च दक्षिणे ॥ ( इदमत्रगृह्यमपि ) आज्यभागोजुहुयादग्ने..........चक्षुषीवा- एते यज्ञस्य यदाज्यभागौ । ( महाव्याहृतयः ) भूर्भुवः स्वस्तिस्रः । सर्वप्रायश्चित्तं च त्वन्नोअग्नेइत्यादिमंत्रैः । पश्चाद्धुतयोहूयन्ते तासां संज्ञा । प्रजापत्यं प्रजापतिदेवताकोहोमः । स्विष्टकृत स्विष्टकृद्धोमः एतन्नित्यꣳसर्वत्रइति सूत्रम् । एतदाघारादिस्विष्टकृदन्तं कर्म्म यत्रयत्र होमः तत्र सर्वत्र भवति । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः इतिसूत्रम् । चेद्यद्याज्यद्रव्यादन्यद्द्रव्यं महाव्याहृतिहोमात्प्राक स्विष्टकृद्धोमः चर्वादिकमपि भवति तदा

मोभवति चर्वादिद्रव्यशेषादेव । केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैवेति विवेकः ।

इतिश्रीभाष्याचार्य्यश्रीपण्डितहरिनामदत्तशास्त्रितनयविद्यावाचस्पति पंडितदेवीप्रसादकृतशतचण्डीयज्ञविधानस्य तृतीयखण्डे अग्निस्थापनकुशकण्डिकयोर्विचारः ।

# *अथ वौधायनीयाग्निस्थापनम्*

तत्र शुचौ समे देशे तथाकृते वा ईषत्प्राक्प्लवे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपकल्प्य विंशतिरेखात्मकमष्टदिग्वश्वत्थदलाकारमष्टकोणात्मकं होममण्डलं विलिख्य तत्पश्चात्कर्ताप्राङ्मुखउपविश्य द्विराचम्य पवित्रपाणिः प्राणानायम्य देशकालौसंकीर्त्यामुककर्मकर्तुं स्थण्डिलोल्लेखनाख्यं कर्म करिष्ये इतिसङ्कल्प्य स्फ्याग्रेण उद्धन्यमानं । अस्यामेध्यम् अपाप्मानम् यजमानस्य हन्तु शिवानस्सन्तु । प्रदिशश्चतस्रः । शन्नोमाता । पृथिवीतोकसाता । इति नवपदैः मध्ये मध्ये पश्चिमपूर्वेषु । तद्दक्षिणे । मध्याग्नेयनिरृतिषु । तदुत्तरे मध्यमवायव्यैशान्येषु । क्रमेण स्फ्येनोद्धृत्यापउपस्पृश्य । शन्नोदेवीरभिष्टय आपोभवन्तुपीतयः । शन्नोरभिस्रवन्तुनः इत्यधोमुखेन हस्तेनाद्भिरवोक्ष्य । तत्र सिकताः शुक्लाः अनार्द्राः शुद्धप्रदेशस्थिताः केशकीटतुषभस्माङ्गारपिपीलिकादिवर्ज्जिताः पञ्चप्रस्थसम्मिताः (अधिकोच्छ्राये अधिकपरिमाणके अधिकमर्थात्परिमाणमितिकात्यायनवचनात् ) आनीय । देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् इतिसिकतान्युप्य । ताभिररत्निमात्रं समचतुरस्रं चतुरङ्गुलोन्नतं प्रागुदक्प्रवणं स्थण्डिलमीशान्यादारभ्यैशानपर्य्यन्तं कृत्वा सुवर्णं रजतताम्रशकलव्रीहियवदर्भाणामन्यतममङ्गुष्ठानामिकाभ्यां गृहीत्वा तस्य मध्ये प्राचीनगुंसन्ततमृजुमुल्लिखेत् । (मन्त्रः) ॐब्रह्मयज्ञानम्प्रथ-

मस्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः । सबुध्न्याउपमाऽअस्य-विष्ठाः सतश्चयोनिमसतश्चव्विवः । इति दक्षिणतः प्राचीनं । नाके सुपर्णमुपयत्पतंतगुंहृदाव्वेनन्तोऽअभ्यचक्षतत्वा । हिरण्यपक्षं वरुणस्यदूतं यमस्य योनौ शकुनं भुरण्युं । ( इति अपउपस्पृश्य ) उत्तरतः प्राचीनम् । ॐ आप्यायस्व समेतुते व्विश्वतः सोम वृष्ण्यं । भवा व्वाजस्य सङ्गथे । ( इति पूर्वाग्रास्तिस्रः ) अथ मध्यादुदीचीनं । योरुद्रोअग्नौयोअप्सु यओषधीषु योरुद्रोविश्वाभुवनमाविवेश तस्मै रुद्राय नमोस्तु । ( इत्यपउपस्पृश्य ) अथ पश्चादुदीचीनम् । ॐइदम्विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य-

---

(तत्रादौ होममण्डलप्रकारः) ( विश्वामित्रकारिकायाम् ) साम्यं शुभ्रं कोणयुक्तं प्रमाणं रेखाभ्याढ्यं दिक्षुपत्रं विशुद्धम् । कुर्य्यादेतन्मण्डलं सप्तचिह्नं चत्वारिंशत्साष्टसंख्याङ्गुलाढ्यम् ॥ गोचर्मान्तः षडंघ्रि हिमकरसदृशं मण्डलं चाष्टकोणम् । रेखाभिस्तत्त्रयुक्तं तिसृभिरतिशुभं श्वेतमृद्भिर्न वक्रम् ॥ दिक्ष्वश्वत्थाकृतिवैंपरिलिखतु बुधः स्वर्णयुक्तं यथावत् । चान्योन्यं चाष्टकोणं सममितिविलिखेद्धोमकार्य्येस्वभीष्टम् ॥ पूर्वभागे तथा पूर्वे दक्षिणेतु तदुत्तरे । पश्चिमे पूर्वभागे च उत्तरे च तदुत्तरे ॥ इति मण्डललक्षणम् ॥ ( अथापस्पर्शनस्थानानि ) सर्वत्र छेदन भेदन खनन निरसन विस्रंशन दाहनिर्ऋतिपितृराक्षसरौद्रात्माभिमर्शनेष्वपउपस्पृशेत् । परिसमूहनम् । ( नृसिंहकारिकायाम् ) सजलेन करेण त्रिरैशान्यां दिशमादितः । प्रदक्षिणं तदा शान्तं यथाग्नौ न जलं पतेत् ॥ परितोमार्जयेत्तद्वदेतत्परिसमूहनम् । प्रदक्षिणं तदा शान्तं यथाग्नौ न जलं पतेत् ॥ ( अन्यत्रापि ) पाणिनासोदकेनाग्नेःपुनःपुनर्गृहीत्वा त्रिर्निःषिंचेच्च प्रदक्षिणम् ॥ परिषेकादीनामस्समन्तात्परिमार्जनम् । तत्समूहनमित्युक्तं जयन्तवचनं यथा ॥ सेचनं परिकुलिक्रमः । ( सिंगाभट्टीये ) अष्टमे नवमे चैव दशमैकादशे तथा ॥ सेचनं परिधिश्चैव स्तरणं पूजनं क्रमात् । अत्र स्थण्डिलाद्बहिरष्टमेङ्गुल "अदितेनुमन्यस्वेत्यादिभिः" परिसेचनम् । तन्नवमे परिधिः तद्दशमे परिस्तरणम् । तदेकादशे पूजनमिति क्रमोबोधायनप्रयोगमालायाम् । मध्ये चाद्ये च मध्ये सुरपतिदिशि तद्दक्षिणे मध्यमेस्त्येदिक्पश्चान्मध्यइन्दोर्दिशि शुचिसमिधास्पृशेत्पश्चिमेन्द्रे । उद्धन्यैतस्य वर्णैश्शरशतविशिखद्धोपवाणाङ्गसंख्यैर्वर्णैराम्नायशुष्माजलपतिगुणितैर्यज्ञभूशुद्धये च ( आसनम् ) तार्क्ष्यासने वद्धविशासनेवा पद्मासने स्वस्तिकविष्टरे वा । निवेश्य तत्राध्वरकर्मकुर्य्यात्प्राचीमुखः शुद्धवपुर्विधिज्ञः ॥ निधायभूमावथसव्यजानुं चोद्धृत्यवामं च तदंघ्रिपार्श्वे । स्पृष्ट्वा च तत्सव्यतलेन वामहस्तात्स्पृशन्दक्षिणबाहुमूलमितिदिक् ॥

पाᳪंसुरे। अथ प्रागुदीचीनम्। इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्य-चसङ्गिरः। रथीतमᳪं रथीनां वाजानाᳪं सत्पतिम्पतिम्। ततईशान्यां शकलं निधाय मुष्ट्याभ्युद्य नैर्ऋत्यां दिशि तं शकलं निरस्यापउपस्पृश्य विरलमुष्ट्या स्थण्डिलसम्युद्याथ समृद्धं द्वादशाङ्गारयुक्तं विधूममग्निं कांस्यमृन्मयादिपात्रद्वयेन सम्पुटीकृत्याहृतं स्थण्डिलादाग्नेयां निधाय ॐदेवस्यत्वेति० हस्ताभ्याम्। ओं भूर्भुवः स्वरोममुकनामानमग्निम्प्रतिष्ठापयामिइत्यात्माभिमुखंपाणिभ्याम्प्रतिष्ठाप्य तत्पात्रे साक्षतजलमासिच्य ईशान्यां निधाय प्रोक्षितकाष्ठानि निःक्षिप्य वेणुधमन्या प्रज्वाल्य हवनसङ्कल्पंकुर्य्यादिति इत्यग्निस्था०

# अथ वौधायनकुशकण्डिका

तत्र प्रथमं ॐभूः ॐभुवः ॐसुवः इति मध्यदक्षिणोत्तरक्रमेण तिस्रः समिधआधायाथाग्नेरुत्तरतस्त्रिसंधात्मकेन प्रदक्षिणावृतेनोदीचीनाग्रनिहितेन शुल्वेनेध्ममेकविंशतिदारुकं तथैव वर्हिर्मुष्टिं संनह्य परिस्तरणार्थम् दर्भैस्सहाग्न्यायतनात्पश्चाद्भागोपरि निधायाथैनमग्निमुपतिष्ठते॥ ॐजुष्टोदमुनाअतिथिर्दुरोणे इमन्नोयज्ञमुपयाहि विद्वान्। विस्वाअग्ने अभियुजोविहत्य शत्रूयतामामराभोजनानि॥ इत्युपस्थायाथाग्नेरीशानमारभ्य सजलेन हस्तेन प्रदक्षिणक्रमेण ईशानपर्य्यन्तं त्रिः परिसमूह्य पर्य्युक्ष्य स्थण्डिलाद्द्वादशाङ्गुलिमितदेशे परिस्तृणाति। ॐ देवस्यत्वा.......... हस्ताभ्याम्। परिस्तृणामीति पुरस्तादुदगग्रैः षोडशभिः। ॐ भूर्भुवःसुवरोंपरिस्तृणामि इति दक्षिणतः प्रागग्रैः सप्तदशभिः ॐ उद्वयन्तम.......... रुत्तमम् परिस्तृणामीति पश्चादुदगग्रैरष्टादशभिः। ॐ अग्नआयाहि वीतये गृणानोहव्यदातये निहोता सत्सिवर्हिषि। परिस्तृणामीत्युत्तरतः प्रागग्रैः सप्तदशभिः। (इति परिस्तीर्य्य ) दक्षिणान्दर्भान्पूर्वपश्चिमपरिस्तरणयोरुपरि कुर्य्यात्।

उत्तराग्रस्तयोरधः ॥ पात्रासादनार्थमग्रेरुत्तरतः प्रागारभ्य पश्चादपवर्गं दक्षिणतआरभ्योदगपवर्गं त्रिस्सन्धमग्रैर्मूलं संछाद्य संस्तृणाति । दक्षिणेनाग्निं ब्रह्मासनार्थं प्रागग्रान् सप्तदशदर्भान् निदधाति । ॐ भूर्भुवःसुवरोंब्रह्मन् ब्रह्मासि नमस्तेब्रह्मन् ब्रह्मणेनमः इत्यथोत्तरतः प्रणीतासादनार्थं दर्भद्वयं निदधाति । ॐ वरुणोसि धृतव्रतोवारुणमसि इति । अथात्मासनार्थं प्रागग्रं दर्भद्वयं निधायास्तीर्णेषु दर्भेषु द्वन्द्वमधोविलानि पात्राणि सादयति । आज्यस्थालीं स्रुवं दर्वीं प्रणीताप्रणयनं चरुस्थालीं प्रोक्षणीं इध्माबर्हिरिध्मप्रवृश्चनानि स्फ्यं मेक्षणं स्रुचंचेति सादयित्वापञ्चभिर्दर्भैः प्रच्छाद्य प्रादेशमात्रे समे अप्रच्छिन्नाग्रे अनखच्छिन्ने कुशद्वयात्मके पवित्रे कृत्वाद्भिरनुमृज्य प्रोक्षणीपात्रमुत्तानं कृत्वा तस्मिन्नुदगग्रे पवित्रे निधायाद्भिः पूरयित्वा हस्तयोरङ्गुष्ठानामिकाभ्यामुदगग्रे गृहीत्वा विच्छिद्य विच्छिद्य त्रिरुत्पूयोत्तानेन पाणिना ताभिरेवाद्भिरपस्त्रिः प्रोक्ष्य पात्राण्युत्तानानि कृत्वा विस्रस्येध्मत्रिः सर्वाभिः प्रोक्ष्य उदक्स्थितं ब्रह्माणमस्मिन्कर्म्मणि ब्रह्माणं त्वामहं वृणे । ततः स्वदक्षिणपाणिना तस्य दक्षिणपाणिं स्पृष्ट्वा वरयित्वा वृतोस्मीत्युक्ते तं गन्धादिभिरभ्यर्च्यर्याथ ब्रह्माप्राङ्मुखउपविश्य द्विराचम्याग्रेणाग्निं परीत्य दक्षिणतउदङ्मुखस्तिष्ठन् तूष्णीं ब्रह्मसदनमुपस्थायासनतृणेषु दक्षिणभागस्थमेकं तृणमङ्गुष्ठानामिकाभ्यां गृहीत्वा नैर्ऋत्यांदिशि निरस्यापउपस्पृश्य द्यावापृथिवीसमीक्ष्यमाणः उपविशेत् । ब्राह्मणाभावे ब्रह्मासनदर्भेषु प्रागग्रं कूर्चं निधाय ॥ ॐ ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणे नमः । इति ब्रह्मासनमंत्रेणोपस्थाय । अथाग्नेः पश्चात्प्रणीतापात्रं निधाय तस्मिन्नुदगग्रे पवित्रे निधायाद्भिः पूरयित्वा ब्रह्मन्नपः प्रणेष्यामीत्युक्त्वा ॐप्रणयेत्युक्ते तस्मिन् गन्धपुष्पाक्षतान्निधाय दर्भस्थं दर्भसंछन्नं मुखसममुद्धृत्याधिषिंचन् हृत्वोत्तरेणाग्निं दर्भेषु साधयित्वा दर्भद्वयेन प्रच्छाद्याथ पवित्रे आदायाग्नेः पश्चाचरुस्थालीं निधाय तत्र प्रागग्रे पवित्रे निधाय

देवस्यत्वा..................हस्ताभ्याम् सवित्रे जुष्टं निर्वपामीति सकृन्मंत्रेण त्रिस्तूष्णीं चतुर्थं। अथ पवित्रे गृहीत्वा देवस्यत्वा.... हस्ताभ्याम् सवित्रेवोजुष्टम्प्रोक्षामीति" सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य उत्तरतआसाद्य। अथाग्नेः पश्चादाज्यस्थालीं निधाय तस्मिनुदगग्रे पवित्रे निधायाज्यं विलीनमप्यग्नावधिश्रित्य तस्मिन्नाज्यमानीया-ग्नेरुत्तरतः स्थितानङ्गारानग्नेरुदक्परिस्तरणाद्बहिर्निरुह्य तेष्वाज्य-मधिश्रित्याभिद्योतनकुशद्वयेनाभिद्योत्यापउपस्पृश्य। अथ कुश-द्वयेनाज्यं हविश्च त्रिःपर्य्यग्निकृत्वाज्यपात्रं कर्षन्निवोदगुद्वास्याङ्गा-रानग्नौ प्रत्यस्य तत्रस्थमेवाज्यमुदीचीनाग्राभ्यां पवित्राभ्यामङ्गु-ष्ठोपकनिष्ठाभ्यामुत्तानाभ्यां पाणिभ्याम्पुरस्तात्आरभ्य पश्चादा-नीय पुनः पुरस्तादाहरति सएकः पुनराहारः एवं त्रिः कृत्वा पवित्रे उद्धरति। तदेकमुत्पवनमेवं त्रिवारमुत्पूय विस्रस्य पवित्रे अद्भिः सꣳस्पृश्य प्रागग्रे पवित्रे अग्नावनुप्रहरति। अथाग्नेः पश्चा-त्परिस्तरणाद्बहिरात्मनोग्रतोभुवं प्रोक्ष्य तस्मिन्वर्हिस्सन्नहनं प्रागु-दगग्रं सम्प्रसार्य्य तस्मिन्वर्हिस्सꣳस्तीर्य्य। आज्यपात्रं निधाय दक्षिणहस्तेन स्रुवं (दर्वीमेक्षणंच) गृहीत्वा वामेन कुशद्वयमादाय सहैवाग्नौ प्रतप्य दर्भाग्राभ्यां विलं मध्याभ्याम्पृष्ठं मूलाभ्यान्दण्ड-मिति त्रिस्त्रिः सम्मृज्याद्भिः सꣳस्पृश्य पुनर्निष्टप्य प्रोक्ष्य आज्यस्था-ल्याउत्तरतोनिदधाति। एवं दर्वीं स्रुचं च सम्मृज्य तदुत्तरतो-निधाय मेक्षण गृहीत्वाग्राभ्यामग्रं मध्याभ्याम्मध्यं मूलाभ्याम्मूलं च सम्मृज्य चरौ निदधाति। दर्भानद्भिः संस्पृश्याग्नावनुहरति। अथ स्रुवेण चरुमभिघार्य्योदगुद्वास्याग्न्याज्यमध्ये स्थापयन्नाज्य-स्य दक्षिणतोवर्हिषि प्रतिष्ठाप्याभिघारयति अरत्निमात्रान् परिधीन् स्थण्डिलान्नवाङ्गुलमिते देशे परिदधाति। मध्यमपरि-धिरुदगग्रस्तस्योपरिदक्षिणतः प्रागग्रस्तस्याधउत्तरतः प्रागग्रः। द्वे ऊर्द्ध्वंसमिधावाग्नेयैशान्ययोर्निपात्य निधाय प्रागादिप्रदक्षिणमग्निं परिसमूहति। ॐ जुषस्वनस्समिधमग्ने अद्यशोच। वृहद्यजातं धूममृण्वन् उपस्पृशं दिव्यं सानस्तूपैः संरश्मिभिस्ततनस्सूर्यस्य॥

इति स्थण्डिलाद्दशाङ्गुलिमिते देशे परिध्यन्तः प्रदक्षिणमग्निं परिषिञ्चति । "अदितेनुमन्यस्वेति,, दक्षिणतः प्राचीनमनुमतेनुमन्यस्वेति पश्चादुदीचनꣳ सरस्वतेनुमन्यस्वेत्युत्तरतः प्राचीनम् । "देवसवितः प्रसुवेति" प्रागादिसमन्तात्प्रदक्षिणमग्निं परिषिच्य स्थण्डिलादेकादशमितेङ्गुलेदेशे गन्धपुष्पाक्षतैः प्रागाद्यष्टदिक्षु प्रदक्षिणमग्निमलंकरोति ॥ ॐ अग्नयेनमः, जातवेदसेनमः, सहोजसेनमः, अजितप्रभवेनमः, वैश्वानरायनमः, नर्यायसेनमः, पङ्क्तिराधसेनमः, विसर्प्पिणेनमः, इति । यज्ञेश्वरायनमः, गन्धपुष्पाक्षतान्समर्पयामि ॥ अग्निं प्रज्वलितं वन्दे········विश्वतोमुखम् एकं द्वे त्रीणि इत्यादिभिः पञ्चदशसमिधोगणयित्वा एकां समिधं प्रणीतादेशे निधाय रज्जुना स्फ्यꣳ सम्वेष्ट्याग्निमलंकृत्य स्वयमलङ्कृत्य ब्रह्माणमलङ्कृत्येध्माग्रमध्यमूलान्यभिघार्य्य ॥ ॐ चत्वारिश्रृङ्गाइत्याद्यग्निन्ध्यात्वा प्रजापतिं मनसा ध्यायन् स्वाहेति इध्मं हुत्वा"प्रजापतयइदंनमम"इति मनसोत्तरपरिधिसन्धिमारभ्य संततमृजुम् याग्निमध्यपर्य्यन्तं स्रुवेण जुहोति । अथेध्मसंनहनं सङ्गृह्य मध्यमपरिधिमूलादारभ्याग्निपर्य्यन्तं त्रिस्त्रिःसंमार्ष्टि । ततोग्नेः पुरस्तादानीय दक्षिणपरिधिं तथैव सम्मृज्य तथैव प्रत्यानीयोत्तरपरिधिं तथैव सम्मार्ष्टि । तथैवाग्निं त्रिःप्राचीनꣳ संमृज्य पूर्ववत्प्रणीतापात्रे निधाय ॐ "इन्द्रायस्वाहा" इत्यादि

[ इति श्री विद्यावाचस्पति पं० देवीप्रसादशास्त्रिसङ्कलितशतचण्डीयज्ञविधानस्यतृतीयखण्डे वौधायनाग्निस्थापनकुशकण्डिकयोर्विधानं ॥ ]

अथ ऋग्वेदिवह्निस्थापनम् । तत्रपूर्वं कुण्डम्, इषुप्रमाणं स्थण्डिलं वा कृत्वा गोमयेनोपलिप्य समिधा कुशमूलेन वा षड्रेखाः संलिखेत् । तत्राग्निस्थापनपश्चिमदेशे प्रादेशसम्मिताउदगग्राप्रथमा तस्याआद्यन्तदेशे दक्षिणोत्तरान्तर्लग्ने द्वेरेखे प्रागायते मध्ये तिस्रउदगग्राअसंहताइत्येवं षड्रखाउल्लिख्य तासु रेखासु तामुल्लेखन-

समिधं निधाय अद्भिरभ्युदय स्थण्डिलात्तां निरस्य आचम्य कां-स्येन मृन्मयेन वा वह्निमानीय कुण्डात्स्थण्डिलाद्वावहिराग्नेय्यां स्थापयेत् । तत्रस्थ वह्नितोज्वलदिन्धनं गृहीत्वा ॥ ओं क्रव्यादमग्नि-म्प्रहिणोमिदूरं यमराज्यङ्गच्छतुरिप्रवाहः ॥ इत्यनेन नैर्ऋत्यां क्षिपेत् । ततआचम्य ओं भूर्भुवःस्वरित्यात्माभिमुखं वह्निं स्थापयेत् । ओं इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ इत्यनेना-ग्निंप्रज्वाल्य द्वे समिधे अग्नौ तूष्णीं दत्वा मुष्टित्रयसम्मितं वर्हि-र्वक्ष्यमाणलक्षणं सन्नह्य पञ्चदशेध्मदारूणि हस्तप्रमाणानि सङ्गृह्य वह्निं ध्यायेत् । रुद्रतेजस्समुद्भूतं द्विमूर्धानं द्विनासिकम् । षड्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सव्य-भागे त्रिहस्तकम् । स्रुवं स्रुचं च शक्तिं च अक्षमालां च दक्षिणे तोमरं व्यजनं चैव घृतपात्रं तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥ दक्षिणे च चतुर्जिह्वं त्रिजिह्वमुत्तरेमुखे । द्वादश-कोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् ॥ स्वाहास्वधावषट्कारैः अङ्कितं मेषवाहनम् । रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् ॥ ( अमुकं वह्निनामानं वह्निमावाहयाम्यहम् ) इति । ( शतच-ण्ड्यां ( शतमङ्गलनामानं अन्यस्मिन्तदुक्तनामानमग्निमावाहयेत् ) यथा अग्ने त्वं शतमङ्गलनामासीत्युच्चार्य्य । ओं शतमङ्गलनामानं वन्हिमावाहयाम्यहम् । त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते । आगच्छ भगवन्देवयज्ञेऽस्मिन्सन्निधौ भव इत्यावाह्ययथाविभव सम्पूजयेत् इति ।

## ॥ अथ ऋग्वेदिनां कुशकण्डिका ॥

ततो भूमौ पातितदक्षिणजानुः प्रादेशमात्राघृताक्तास्तिस्रः समिधो वन्हौ तूष्णीं क्षिप्त्वा देशकालौ संकीर्त्य अस्मिन्होमकर्म्म-णि तदङ्गान्वाधानमहं करिष्ये इति प्रथमं सामान्यतोभिलप्य तत्र च देवताविशेषपरिग्रहार्थमस्मिन्नन्वाहितेऽग्नौ अग्निं जातवेदसमि-ध्मेन प्रजापतिरिन्द्रं चाघारदेवते आज्येनाग्नीषोमौ चक्षुषी आ-

ज्येन अग्निं पवमानं प्रजापतिञ्चेत्येतान् सूर्यादिवनस्पत्यन्ताः प्रधानदेवतं च चर्वादिद्रव्येण रुद्रं च अनुयाजसन्नहनाभ्यां पशुपतिं चरुशेषेण स्विष्टकृतं हुतशेषेण अग्निमयसंदेवान् विष्णुमग्निं वायुं सूर्य्यंप्रजापतिश्च सर्वाः प्रायश्चित्तदेवताः आज्येन विश्वान् देवान् संस्रावेण साङ्गेन कर्म्मणाहं सर्वान् यक्ष्ये। ( यक्ष्यामीति-वेत्युचार्य ) महाव्याहृतिभिरन्वाधाय ऐशानीमारभ्योत्तरदिशं यावत् त्रिस्तूष्णीं कुशानामुदगग्रं पूर्वाग्रं वा परिस्तरणं प्रोक्षणं च कुर्य्यात्। ततोऽग्नेः पूर्वतआरभ्य दक्षिणादिक्रमेण उत्तरदिशं यावत् सोदकेन पाणिना त्रिःप्रोक्षणरूपं परिसमूहनं कुर्य्यात। ततः पुनरपि तेनैव क्रमेणाग्नेः पर्य्युक्षणं कृत्वा होमीयद्रव्यमपि पर्य्युक्षेत्। ततोऽग्नेरुत्तरदिश्युपविश्य ब्रह्मणोदक्षिणाङ्गुष्ठमासाद्य देशकालावुचार्य्य मत्कर्तव्याङ्गहोमकर्मणि कृताकृतावेक्षणरूपब्रह्म-कर्म्मकरणायामुकगोत्रममुकशर्माणं त्वामहं वृणे॥ इत्यभिलपिते "ॐ वृतोस्मीतिप्रत्युक्ते" तमग्नेः पूर्वेणानीय दक्षिणदिशि पुञ्जी-कृतकुशास्तरणरूपं ब्रह्मासनमुपकल्प्य प्राङ्मुखस्तिष्ठन्॥ ॐ देविषितव्योदतस्तिष्ठान्यस्यसदनेसीद योस्मत्पाकतर इत्युचार्य्य॥ वामहस्तानामिकाङ्गुष्ठाभ्यां दर्भमेकं गृहीत्वा॥ ॐ निरस्तःपरा-वसुरित्यनेनमंत्रेण नैर्ऋत्यां क्षिपेत्॥ ॐ इदमहमर्वाग्वसोः सदने सीदामि॥ इति प्रत्युचार्य्य ब्रह्मणा उपविष्टे आचम्य ब्रह्माण-मुत्तराभिमुखमुपवेशयेत्। ( ब्रह्माणं स्पृष्ट्वा ) ॐ वृहस्पतिर्ब्रह्मा-ब्रह्मसदनआसिष्यते वृहस्पते यज्ञं गोपाय सं यज्ञं पाहि समांपाहि भूर्भुवः स्वः वृहस्पतिं प्रसूतेति मंत्रं जपेत्॥ ततउदगग्रेषु कुशेषु पात्राण्यासादयेत्। ( यथा ) चरुहोमपवित्राच्छादनास्त्रयोदर्भाः द्वेपवित्रे, प्रणीताप्रोक्षण्यौ, आज्यस्थालीचरुस्थाल्यौ, स्रुक्स्रुवौ, इध्मवर्हिषी, सम्मार्जनकुशाः (षट्) उपयमनकुशाः, ( सप्त ) शूर्पः, कृष्णाजिनम्, उदूखलमुशले, आज्यम्, तण्डुलाः, मेक्षणम्, पुष्प-चन्दनादीनि, पूर्णपात्रञ्च,। (आज्यहोमे तु, ) स्रुक्स्रुवचरुस्थाली, कृष्णाजिन, शूर्प, मेक्षणोदूखलमुशलानि, आसादयेत्॥ चर्वस्थि-

तेन वामपाणिनाधःस्थितेन दक्षिणपाणिना इध्मबन्धनींरज्जुं सव्यावृतां त्रिगुणां कृत्वा तया सकृद्वेष्टितामुदगग्रां आत्मनोऽग्रतोवर्हिः समेतां स्थापयेत् । अथ पूर्वासादितकुशपत्रत्रयं गृहीत्वा द्वेपवित्रे प्रादेशमात्रे साग्रे यथास्यात्तथा मूलप्रदेशे छिन्द्यात् । ततः सर्वाणि पात्राणि पवित्राभ्यां क्रमेण उदकमादाय प्रोक्षयेत् । ततः पवित्रे प्रोक्षणीपात्रे निधाय तदुत्तरे प्रणीतापात्रं स्थापयित्वा तत्र जलकुसुमानि प्रक्षिप्य गन्धपुष्पजलपूर्णं सपवित्रं प्रोक्षणीपात्रं वामहस्तोपरिनिधाय दक्षिणेनाच्छाद्य ॥ ॐ ब्रह्मन्नपःप्रणेष्यामि ॥ इति पृष्टोब्रह्मा ॥ ॐ प्रणयेतिब्रूयात् ॥ ( ततःकर्ता ) ॐ भूर्भुवः स्वर्बृहस्पतिं प्रसूत इति जपित्वा ॥ स्वनासिकासमीपं नीत्वा प्रणीताग्न्योर्म्मध्ये निदध्यात् । ततोदर्भैराच्छादयेत् । तदेवपूर्णपात्रमुच्यते । ततः शूर्पेपूर्णपात्रस्थपवित्रोनिधाय, तत्र व्रीहिमुष्टिन्निर्वपति । ॐ ॥ अग्नये त्वा जुष्टं गृह्णामि ॥ इति गृहीत्वा ॐ अग्नयेत्वाजुष्टंनिर्वपामीतिनिरूप्य ॥ ॐ अग्नयेत्वाजुष्टंप्रोक्षामीत्यभ्युक्ष्य तूष्णीं मुष्टिद्वयं निर्वपेत् । एवं क्रमेण ॥ ॐ अग्निषोमाभ्यां वां जुष्टंगृह्णामिइत्यादिनाग्रहणनिर्वपणप्रोक्षणानि कृत्वा प्रत्येकं तूष्णीं मुष्टिद्वयं निर्वपेत् । यत्र चरुहोमस्य कर्तव्यता तत्र तेषामपि प्रत्येकं मुष्टिग्रहणादिकमनेनैव क्रमेण कार्यम् ततःपूर्वाग्रीवोर्द्ध्वलोम्नि कृष्णाजिने उदूखलं निधाय तत्र शूर्पस्थव्रीहीन् प्रक्षिप्य पत्नी स्वयं वा मूशलेनावहन्यात् ततः शूर्पेण निस्तुषान् शुक्लीकृतान् तण्डुलान् त्रिःप्रक्षाल्य तत्र दुग्धं दत्वा चरुस्थाल्यां निःक्षिप्यस्तोकं पचेत् ततः शूर्पस्थपवित्रे आज्यस्थाल्यां निधाय तत्रैवाज्यं आसिच्य अग्नेरुत्तरतोङ्गाराण्यानीय तत्रैवाज्यस्थालीमधिश्रित्य अधिश्रुतं घृतं द्रवीकृत्य तत्र दर्भाग्रद्वयं निःक्षिप्य ज्वलत्तृणमाज्योपरि त्रिर्भ्रामयित्वा अङ्गाराद्भूमिसंस्पर्शेनेनैवाज्यस्थालीमाकर्षेत् । तत आज्यस्थे पवित्रे असंहते साङ्गुष्ठानामिकाभ्यामुत्तानपाणिभ्याङ्गृहीत्वा ॥ ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः ॥ इत्यनेन सकृदुत्पूय द्विस्तूष्णीमुत्पूयकृत्ताज्यो-

त्पवनाभ्यां पवित्राभ्यां घृतम्प्रोक्षयेत्। ततः पवित्रे अनल क्षिप्त्वा प्रागासादितकुशमुष्टिं प्रत्यगास्तीर्य्य तत्राज्यपात्रं निदध्यात्। ततः स्रुवं स्रुचं चाधोमुखं वन्हौ प्रताप्य स्रुचं भूमौ निधाय स्रुवं वामहस्ते धृत्वा सम्माज्र्जनकुशाग्रैः स्रुवमूलमारभ्य विलपर्य्यन्तं सम्मृज्य पुनः प्रताप्य सम्माज्र्जनकुशमूलैर्विलमारभ्याधस्तन्मूलपर्य्यन्तं त्रिःसंमृज्य प्रणीतोदकेन पवित्राभ्यां त्रिःप्रोक्ष्य पुनः प्रताप्य घृतादुत्तरतोवर्हिषि निध्यात्। ततः स्रुचमादाय स्रुववत् संस्कृत्य घृतादुत्तरतोवर्हिषि निदध्यात् ततस्तान् कुशान्सम्प्रोक्ष्य वह्नौ क्षिपेत्। चरुहोमसत्वे तु चरुं घृतेन संमृज्य उत्थाप्याज्यग्न्योर्मध्येन नीत्वाज्यस्य दक्षिणदिशि वर्हिषि निदध्यात्। (ततः कृताञ्जलिः) ॐ विश्वानिनोदुर्गहाजातवेदः सिन्धुं नावादुरितातिपर्षि अग्नेअत्रिवन्नमसागृणानोऽस्माकं वोध्यविता तनूनाम्। ॐ यस्त्वाहृदाकीरिणामन्यमानोऽमर्त्यं मर्त्योजोहवीमि। जातवेदोयशोऽस्मासुधेहि प्रजाभिरग्नेऽमृतत्वमस्याम्। ॐ यस्मै त्वं सुकृतेजातवेदउलोकमग्ने कृणवः स्योनम्। अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं नशतेस्वस्ति॥ इतिमंत्रैर्वह्निमलङ्कृत्योत्थायाज्येनेध्मं मूलतोग्रतश्च संस्पृश्यादाय॥ ॐ अयन्तइध्मआत्माजातवेदस्तेनैधस्व वर्द्धयचास्मान्। प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयास्वाहा इदमग्नये जातवेदसे नममइतीध्ममादाय स्रुवेणाज्यं गृहीत्वा वायवीदिशमारभ्याग्नेयीं यावत् घृतधारां दद्यात्। ततोद्रव्यत्यागसंकल्पं कृत्वा "ॐ प्रजापतये स्वाहा" इदम्प्रजापतयेनममेतिसर्वत्रस्रुवलग्नं हविः शेषं प्रोक्षणीपात्रे स्थापयेत्। ततोनैर्ऋतकोणादारभ्य ईशानकोणपर्य्यन्तं घृतधारां दद्यात "ॐ इन्द्रायस्वाहा" इदमिन्द्राय। (इत्याघारौभाषितौ) ततउपविश्याग्नेर्दक्षिणे पश्चिमान्तात्। पूर्वान्तं यावत् घृतधारां दद्यात् "ॐअग्नये स्वाहा" इदमग्नये नमम (इत्यग्नेर्दक्षिणं लोचनं स्पष्टं भावयेत्) ततोऽग्नेरुत्तरे पश्चिमान्तात् पूर्वान्तं यावत् "ॐ सोमायस्वाहा"

इदं सोमाय नमम। ( इत्यग्नेर्वामलोचनं स्पष्टं भावयेत् ) एतावाघाराज्यभागौ भाषितौ॥ ततः प्रकृतहोमः॥

[ इति श्री विद्यावाचस्पति पं० देवीप्रसादशास्त्रिसङ्कलितशतचण्डीयज्ञविधानस्यतृतीयखण्डे ऋग्वेदिनामग्निस्थापनकुशकण्डिकाप्रकरणं॥ ]

# *अथ सामगानामग्निस्थापनम्*

तत्र कर्ता शुचिराचान्तः कृतनित्यक्रियउभयतोहस्तमितां स्थण्डिलभूमिं कुण्डभूमिम्वा कुशैः केशतुषाद्यपद्रव्यनिरसनेन गोमयेनोपलिप्य उत्तरस्यान्दिश्यभ्युक्षणार्थं कुशकुसुमसहितं जलपात्रं निधाय दक्षिणजानु भूमौ पातयित्वा प्रादेशप्रमाणं सव्याङ्गुष्ठानामिकाभ्यां कुशमवलम्ब्य आवह्निस्थापनं सव्यहस्तं भूमौ निधाय दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीतकुशमूलेन तिस्रोरेखाः कुर्य्यात्। ( यथा ) दीर्घऋजुकुशादिना अङ्गुष्ठमानं विधाय स्थण्डिलस्य दक्षिणभागे सार्धमङ्गुलं त्यक्त्वा द्वादशाङ्गुलाम्पूर्वमुखीं प्रथमां ( रेखेयं ) पृथिवीदेवताका पीतवर्णासीतिपीततया ध्यातां पृथिवीदेवताकां रेखामुल्लिख्य तन्मूलतउत्तरगामिनीमेकविंशत्यङ्गुलां ( रेखेयमग्निदेवताका लोहितवर्णासीतिलोहिततया ध्याताग्नेयीरेखां तथैवोल्लिखेत्। ततः पार्थिवरेखातः सप्ताङ्गुलान्तरे उत्तरस्यां प्रादेशप्रमाणां पूर्वमुखीं ( रेखेयं ) प्राजापत्या कृष्णवर्णासीतिकृष्णतया ध्यातां प्राजापत्यां रेखां लिखेत्। ततः सप्ताङ्गुलान्तरिते उत्तरस्यां प्रादेशप्रमाणां पूर्वमुखीं [ रेखेयम् ) ऐन्द्रीनीलवर्णासीतिनीलतया ध्यातामैन्द्रीरेखां लिखेत् ततस्तावदन्तरितेदेशे उत्तरस्याम्प्रादेशमितां प्राङ्मुखीं [ रेखेयं ] सौम्यापीतवर्णासीतिपीततयाध्यातां सौम्यां रेखामुल्लिखेत्। ततः क्रमेण रेखाभ्यउत्करं गृहीत्वा ऐशान्या-

मरत्निमात्रान्तरितेदेशे "ॐ निरस्तःपरावसु" इत्युक्त्वानिरस्येत् ततः पूर्वस्थापितजलेन रेखाभूभागमभ्युक्ष्य आयसाश्मगोमयमृण्मयादिव्यतिरिक्तास्फुटितनिर्णिक्तस्वर्णताम्रकांस्यादिपात्रेण सन्निधापितयथोक्ताग्ने र्ज्वलदिन्धनं गृहीत्वा क्रव्यादंशपरित्यागाय ज्वलत्तृण निरसनं कुर्य्यात्। ( क्रव्यादमग्निमिति ) अर्द्धर्चेनैव ज्वलत्तृणं नैर्ऋत्यां दिशि क्षिपेत्। ततः पुनरग्निं गृहीत्वा स्थापयेत्। "ॐ भूर्भुवस्स्वरोमित्यनेन,, तृतीयरेखोपरिस्वाभिमुखमग्निं स्थापयेत्। ततः तूष्णीमेव समिधमग्नौ क्षिप्त्वा वामहस्तमुत्तोल्य, अञ्जलिम्बध्वा ॐ इहैवाय ( य० ३५ अ० १६ सू० ) इत्युत्तरार्द्धर्चेनाग्निज्वालाप्रत्यक्षीकरणरूपमुपस्थानं कुर्य्यात्। ततः प्रागुक्तप्रकारेण ध्यात्वा अग्नेत्वममुकनामासीति तत्तत्कर्मानुसारेण नामकर्म कुर्य्यात्। नामविशेषाऽज्ञानेतु॥ ॐ सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः विश्वरूपोमहानग्निः प्रणीतः सर्वकर्मसु॥ इत्यनेन विश्वरूपनाम कृत्वा उपतिष्ठेत। ( इति विष्णुदत्तरघुनन्दनभट्टाचार्य्यप्रभृतयः ) ततोघृताक्तां प्रादेशमितां समिधमग्नौ दत्वा ब्रह्मवरणं वक्ष्यमाणविधिना कुर्य्यात्॥ इति सामगानामग्निस्थापनम्॥

## ॥ अथ कुशकण्डिका ॥

अधीतवेदं दत्तोत्तरासङ्गकमण्डलुसहितं ब्राह्मणं तदभावे कुशनिर्म्मितं ब्राह्मणं वा दक्षिणानामिकाङ्गुष्ठाभ्यां धृत्वा धारासहितमुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृतिदक्षिणावर्त्तेन दक्षिणां दिशं गत्वा वह्नेररत्निमात्रान्तरितेदेशे प्राङ्मुखीं वारिधारां दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य्य पश्चिमाभिमुखोऽनुपविष्टोवामहस्तानामिकाङ्गुष्ठाभ्यामास्तीर्णकुशानामेकं कुशपत्रमादाय॥ ॐ निरस्तःपरावसुरिति नैर्ऋत्यां दिशि प्रक्षिपेत्। ततः अपउपस्पृश्य दक्षिणपादेन सव्यपादमाक्रम्योदङ्मुखआस्तीर्णकुशान् अग्निरभ्युक्ष्य॥ ॐ आवसोः सदने सीद॥ इत्यनेन यजुषा—

कुशमयं ब्रह्माणं कुशोपरि उपवेशयेत् । ब्राह्मणब्रह्मपक्षे तु ब्राह्मणएव तत्र उदङ्मुखीभूय ॥ ॐ सीदामीति ब्रूयात् ॥ कुशोपरि कुशमयं ब्राह्मणं प्राङ्मुखं स्थापयित्वा कुशैराच्छाद्य अद्भिरभ्युक्ष्य कुसुमैरर्च्चयेत् तम् । ब्राह्मणोब्रह्मा तु अयज्ञियां वाचं नियम्य प्राञ्जलिः परमात्मानमनुस्मरन् आकर्मसमाप्तिं तत्र आसीत । सयदि तु अयज्ञियां वाचं वदति तदा इमं मंत्रं पठेत् ॥ ओं इदंविष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुले ॥ ( सा० आर्चि३प्र १ अ ३ दं० ९ ) कुशमयब्रह्मपक्षे तु कर्मकर्तैव तन्मंत्रं जपेत् । ततस्तेनैव परिवृत्यासने प्राङ्मुखउपविशेत् । यदि प्रकृते कर्मणि चरुहोमोस्ति तदास्मिन्नेवसमये साहस्रनामकं वह्निमावाह्याभ्यर्च्यचरुं श्रपयेत् । यथाऽग्नेःपश्चिमायां दिशि प्रागग्रान् कुशानास्तीर्य तदुपरि प्रक्षालितं वारुणमुदूखलं मुशलं । वैणवं च शूर्पं वारुणचमसस्थजलप्रोक्षितं संस्थाप्य व्रीहीन् यवान् वा शूर्पे काश्यपगोत्रे तु चरुस्थाल्यां निधाय ॥ ॐ सवित्रे त्वा जुष्टं निर्वपामिइत्यनेन ततउद्धृत्य उदूखले स्थापयेत् । द्विस्तूष्णीं निदध्यात् । एवं प्रकृतेरन्यादिग्रहाणां मुष्टिग्रहणं कुर्य्यात् । ( ग्रहाणां देवतानां ) ततोदक्षिणहस्तमुपरि कृत्वा मुशलेनावहत्य शूर्पेण स्फोटयेत् । इत्थं वारत्रयं कृत्वा त्रिः प्रक्षालयेत् । चरुस्थाल्यां तूष्णीं उदङ्मुखं पवित्रं निधाय तदुपरि दुग्धं दत्वा स्तोकंस्तोकमुदकं दत्वा तन्मध्ये खदिरपलाशोदुम्बराणामन्यतमजातं प्रादेशमात्रमग्रे उभयतः सार्धाङ्गुष्ठमितचतुष्कोणपुष्करं मेक्षणं दक्षिणावर्तेन भ्रामयित्वा तथा पचेत् । यथा अन्तरुष्मणा सम्यक् पाकोभवेत् । नच गलितं दग्धं वा भवेत् । अथ सम्यक्पाके भूते मध्ये घृतस्रवं दत्वा प्रागादिदिक्चिन्हितं कृत्वा चरुमवतार्य्य अग्नेरुत्तरतः कुशोपरि स्थापयित्वा पुनर्मध्ये घृतस्रवं दद्यात् ततः कर्ता वह्नेरुत्तरतः उदगग्राणि प्राक्संस्थानि बर्हिरिध्माज्यस्रुक्स्रुवकुसुमादिसहितोदकसमिदादीनि द्रव्याण्यासादयेत । ततोऽग्नेः पश्चाद्दक्षिणहस्तोपरिभावेन अधोमुखौ हस्तौ भूमौ निधाय भूमि-

जपं कुर्य्यात् ॥ ॐ इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्। परासपत्नान् बाधस्वान्येषां विन्दते धनम् ॥ इति सकृज्जपेत्। (रात्रौ तु धनमित्यत्र वसु इत्यूहेत ) ततोगृहीतकुशेन दक्षिणहस्तेन उत्तरादिदक्षिणान्तं अग्नेस्तृणनिरसनरूपं परिसमूहनं कुर्य्यात् ॥ ॐ इमंस्तोममर्हते जातवेदसे रथमिवसंमहे मामनीषया। भद्राहिनः प्रमतिरस्य संसद्यग्ने सख्ये मारिषामावयं तव भरामेध्मं कृणवामाहवींषि ते चितयन्तः। पर्वणापर्वणा वयम्। जीवातवे प्रतरांसाधया धियोऽग्ने सख्ये मारिषामावयं तव। शकेम त्वासमिधं साधयाधियस्त्वेदेवाहविरदन्त्याहुतम्। त्वमादित्योआवहतान् ह्यु श्मस्यग्ने सख्ये मारिषामावयं तव ॥ ततः परिसमूहनकुशान् ऐशान्यां क्षिप्त्वा। अग्नेः पूर्वस्यामुत्तरान्तातदक्षिणान्तं यावत् उपमूलमूलानेकपत्रीकृतान् प्रागग्रान् कुशान् अग्रेण मूलमाच्छादयन् त्रिधास्तरेत्। ततोदक्षिणस्यां दिशि पूर्वान्तात् पश्चिमान्तं प्रतीच्यामुत्तरान्तात् दक्षिणान्तम्। उदीच्यां पश्चिमान्तात् पूर्वान्तं च तथैव वारत्रयमास्तरेत्। ततोदशसु दिक्षु "ॐ इन्द्रायनमः" इत्यादिना स्वस्तिकान् दत्वा प्रादेशद्वयप्रमाणां खदिरपलाशोदुम्बराणामन्यतमजातं विंशतिकाष्ठरूपमिध्ममादाय तदुपरि घृतस्रवं दत्वा प्रजापतिं मनसाध्यायन् तूष्णीमग्नौ क्षिपेत्। ततआस्तरणकुशादेव साग्रं कुशपत्रद्वयं गृहीत्वा कुशान्तरेण वेष्टयित्वा पवित्रे सम्पाद्य छेदयेत्। ( ॐ पवित्रेस्थो० ) इति यजुषा प्रादेशप्रमाणं साग्रं कुशद्वयं कुशान्तरेण छित्वा ॥ ॐ विष्णोर्मनसा पूतेस्थ- ॥ इत्यनेन ताम्रादिपात्रे पवित्रमुदगग्रं स्थापयित्वा तत्र होमार्थं घृतं क्षिपेत्। ततस्तत्कुशपत्रद्वयरूपं पवित्रमग्रे दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां मूले च वामहस्ताङ्गुष्ठानामिकाभ्यां गृहीत्वा दक्षिणहस्तोपरिभावेणाधोमुखव्यस्तपाणिः ॥ ॐ देवस्त्वासवितोत्पुनात्वच्छिद्रेण पवित्रेणवसोः सूर्य्यस्य रश्मिभिःस्वाहा ॥ अनेन यजुषा पवित्रमध्येन घृतमादाय सकृत् जुहुयात्। तूष्णीं वारद्वयम्। ततस्तत्पवित्रमद्भिरभ्युद्याग्नौ क्षिपेत्। ततस्तस्याज्यपात्रस्योदकेनानमार्ज-

नमग्नेरुपरिनिधानमुत्तरस्यामवतारणं इत्थं वारत्रयं संस्कुर्य्यात् (इत्याज्यसंस्कारः) ततः खदिरपलाशोदुम्बराणामन्यतमजातमरत्निमात्रं अमिताङ्गुष्ठपर्वमात्रविलमुखं स्रुवमप्याज्यवत्वारत्रयं संस्कुर्य्यात्। ततोदक्षिणं जानुभूमौ पातयित्वा जलाञ्जलीनादाय "ॐ अदितेअनुमन्यस्व" अनेन वह्नेर्दक्षिणस्यां पश्चिमान्तात् पूर्वान्तं यावत् धारयाजलाञ्जलिना सिंचेत् ॐ अनुमतेअनुमन्यस्व। अनेनाग्नेः पश्चात्दक्षिणान्तादुत्तरान्तं यावज्जलाञ्जलिनासिञ्चेत्। "ॐ सरस्वत्यनुमन्यस्व" अनेनाग्नेरुत्तरस्यां पश्चिमान्तात्पूर्वान्तं यावज्जलांजलिना सिंचेत्। ततोजलांजलिं गृहीत्वा संलग्नधारया॥ ॐ देवसवितः प्रसुवयज्ञं प्रसुवयज्ञपतिम्भगाय। दिव्योगन्धर्व्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नःस्वदतु॥ अनेन जलाञ्जलिना होमीयद्रव्यसहितमग्निं दक्षिणावर्तेन वेष्टयेत्। अथ जानूत्थाप्य उपर्य्यधःस्थितदक्षिणवाममुष्टिभ्यां कतिपयास्तरणकुशानादाय। (विरूपाक्षजपं) कुर्य्यात्। (तपश्चेत्यारभ्य श्वासं नियम्य भूर्भुवस्स्वरोमित्यन्तं पठित्वोच्छ्वसेत्) ॐ तपश्च तेजश्च श्रद्धा च ह्रीश्च, सत्यश्च, क्रोधश्च, त्यागश्च, धृतिश्च, धर्मश्च, सत्वंच, वाक्च, मनश्चात्माच, ब्रह्मच, तानि प्रपद्ये तानि मामवन्तु ॐ भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये विरूपाक्षोसि दन्ताञ्जिस्तस्य ते शय्यापर्णे गृहाअन्तरिक्षे विमितं हिरण्मयं तद्देवानां हृदयान्ययस्मये कुंभेन्तः सन्निहितानि तानि बलभृच्चबलसाच रक्षतोऽप्रमणी–अनिमिषतः सत्यं यत्तेद्वादश पुत्रास्तेत्वा संवत्सरेसंवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्य्यमुपयन्ति त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणोवै ब्राह्मणमुपधावत्युपधावामि जपन्तं मामाप्रतिजापीर्जुह्वन्तं मामाप्रतिहौषीः कुर्वन्तं मामाप्रतिकार्षी–स्त्वां प्रतिपद्ये त्वया प्रसूतइदं कर्म्म करिष्यामि तन्मेराध्यता–न्तन्मेसमृध्यतान्तन्मे उपपद्यतां समुद्रोमाविश्वव्यचाः ब्रह्मानुजानातु तुथोमाविश्ववेदाब्रह्मणः पुत्रोनुजानातु श्वात्रोमाप्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे

तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणःपुत्राय नमः ॥ इति जप्त्वा कुशान् प्रागुदीच्यांक्षिपेत्। यदि न काम्य-कर्मार्थं कुशकण्डिका तदा (तपश्चेत्यादिमाभवन्त्वित्यन्तं) न पाठ्यम्। ततोदक्षिणावर्तेनाग्निं परिक्रम्य हस्तस्थितपुष्पाक्षतैः ब्रह्माणं पूजयित्वा तेनैव पथासससमित्कं हस्तमानीय समिधमग्नौ क्षिपेत्। इति ॥

[ इति श्री विद्यावाचस्पति पं० देवीप्रसादशास्त्रिसङ्कलितशतचण्डी-यज्ञविधानस्यतृतीयखण्डे सामगानामग्निस्थाप-नकुशकण्डिकाप्रकरणं ॥ ]

# अथाथर्वणिकानामग्निस्थापनम्

(तत्रादौ बर्हिर्लवनाय शस्त्रादानमंत्रः) ॐ अव्यचसश्च व्यचसश्च विलम्बिष्यामिमायया। ताभ्यामुद्धृत्य वेदमथकर्म्माणि कुर्महे ॥ (अ. १९ का ७ अ ६८ मं० १) इत्यनेन मंत्रेण (दात्रं गृहीत्वा) ॐ ओषधीर्यतुपर्वन्निति बर्हिरुपरि पर्वण्यालुनीयात्। (ततोबर्हि-रिध्मदारूणि सन्नह्य) ॥ ॐ ग्रीष्मस्ते भूमेवर्षाणि शरद्धेमन्तः शिशिरोवसन्तः ऋतवस्तेविहिता हायनीरहोरात्रे पृथिविनोदुहा-ताम् ॥ (अ० १२ का १ अ. ३६ मं.) इत्यनेन भूमिमुपस्थाय प्रादेशमात्रां शमीसमिधं [ विमाय ] ॐ विमिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्पृगेषा। इन्द्रः सोमं पिबतु क्षेमोअस्त्व-ग्निः प्रस्तौतु विमृधोनुदस्व ॥ [ अ० १३ का १ अ० २७ मं ] इत्यनेनाभिमंत्रयेत्। ततस्तया शमीसमिधा वक्ष्यमाणरीत्या परिमाय वेदिं कल्पयेत्। (यथा ] कुण्डात्स्थण्डिलाद्वा प्राच्यां दक्षिणोत्तरयोश्च प्रतिदिशं प्रादेशमितां पश्चिमायां च सार्धप्रादेश-त्रयमितां भूमिमादाय दीर्घचतुरस्रां वेदिं कल्पयेत्। [ साच ] पूर्वपश्चिमयोः प्रादेशपञ्चमितादीर्घा दक्षिणोत्तरयोश्च वितस्तित्रय-

मित विस्तारा । तस्याश्चवहिर्महावेदिं कल्पयेत् । ( साच ) प्राक्-पश्चिमयोः समित् षट्कायता दक्षिणोत्तरयोश्च समिचतुष्कविस्तारा तत्र महावेदिपश्चिमरेखामध्यात् पूर्वतः समित्त्रयमितां प्राची रेखामध्यात् पश्चिमतः समिन्मात्रां दक्षिणरेखामध्यात् उत्तरस्याम् उत्तररेखामध्यतोदक्षिणस्याञ्च तथैव समिन्मात्रां भूमिं त्यक्त्वा कुण्डादिमध्ये समिद्वयमितदीर्घविस्तारां समचतुरस्रामुत्तरवेदिमग्निस्थापनाय कल्पयेत् । ततो महावेद्या ईशानकोणादारभ्य तूष्णीं सर्वतोवालुकया रेखां कुर्य्यात् । ( ततः ) ॐ बृहस्पते परिगृहाण वेदिं सुगावोदेवाः सदनाअकर्मयः अस्यांवर्हिः प्रथतासाध्वन्तर्वर्हिस्तानः पृथिवी देव्या वास्तु ॥ इति वेदिं परिगृह्य त्रीन् वारान् वेदिरेखापरितोऽनुमन्त्रणं कुर्य्यात् । (ततोग्रीष्मस्तेइति प्रागुक्तं पठित्वा ) ॥ ॐ यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु । माते मर्म विमृग्वरि माते हृदयमर्प्पिपम् ॥ ( अ०-१२प्र० १अ० ३५मं० । ) इत्यनेन खनित्वा ॐ यत्तऊनं तत्त आपूरयाति प्रजापतिः प्रथमजाऋतस्य । उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवी प्रसूताः ॥ ( अ० १२प्र० १अ०-६१-६२मंत्रौ । इत्यनेन खनितपूरणाय सम्प्रार्थ्य ॥ ॐ त्वमस्यावपनी जनानामदितिः कामदुघापप्रथाना ॥ ( अ० १२प्र १अ०-६०मं० ) इत्यनेन वालुकाभिस्ताः पूरयित्वा पुनः पूर्वोक्त प्रकारेणाग्निस्थापनार्थमुत्तरवेदिं गृहीत्वा ( बृहस्पते परिगृहाणेत्यादिकं ) पूर्वोक्तं वालुकानिधानान्तं सर्वं विधाय ॥ ॐ असंवाधम्बध्यतोमानवानां यस्या उद्वतः प्रवतः समं वहु । नानावीर्य्याओषधीर्याविभर्ति पृथिवीनः प्रथतां वाध्यतां नः ॥ ( अ १२ का १ अ-२मं । ) इत्यनेन वालुकां समन्ताद्विस्तार्य ॥ ॐ यस्याश्चतस्रः प्रदिशः पृथिव्यायस्यामन्नं कृष्टयः संवभूवुः । याविभर्ति वहुधाप्राणदेजत्तत्सानोभूमिगोष्वप्यन्ये दधातु ॥ ( अ १२ का १अ ४मं ) । इत्यनेन विस्तृताभिर्वालुकाभिर्वेदिं समन्ताच्चतुरस्रां कृत्वा ॥ ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्वाहुभ्यां पूष्णो-

हस्ताभ्यां प्रसूतः प्रशिषा परिगृह्णामि ॥ इत्यनेन हिरण्याद्युल्लेखनसाधनद्रव्यमादाय ॥ ॐ इन्द्रः सीतां निगृह्णातु तां पूषा-अभिरक्षतु । सानः पयस्वति दुहामुत्तरामुत्तरां समम् ॥ ( अ० ३ का १७अ० ४मं० ) ॥ इत्यनेन प्रागग्रां प्रादेशमितां रेखाङ्कृत्वा तस्यां व्रीहियवानारोप्य ॥ ॐ वर्षेण भूमिः पृथिवी वृता वृता सानो दधातु भद्रया प्रिये धामनिधामनि । ( अ० १२ का ४अ० ५१मं ) इत्यर्द्धर्च्चेन जलैः संप्रोक्ष्य ॥ ॐ यस्यामन्नं व्रीहि यवौ यस्या इमाः पञ्चकृष्टयः । भूम्यै पर्जन्यपत्न्यै नमोस्तु वर्षमेदसे । ( अ० १२ का १अ० ४२ मं० )॥ इत्यनेन भूमिं नत्वा यथोक्तवह्निं यथोक्तपात्रेणादाय ( ॐ क्रव्यादम० ) इत्यर्द्धर्च्चेन क्रव्यादांशं परित्यज्य ॥ ॐ त्वामग्नेभृगवोनियन्तामङ्गिरसः सदनं श्रेय एहि ॥ विश्वकर्मा पुरएतुप्रजानन् भद्रम्पन्थामनुते दिशानः ॥ ( इति त्रिभिर्वन्हिं प्रणीय ) ॥ ॐ भद्रोभव श्रेयोभव स्वस्थोभवेति ॥ ( पात्रस्थं व्रीहिं प्रक्षिप्य ) ॥ ॐ विश्वंभरा वसुधानी प्रतिष्ठाहिरण्यवक्षाजगतोनिवेशनी । वैश्वानरं बिभ्रती भूमिरानिमिन्द्रऋषभा द्रविणेनोदधातु । (अ० १२ १अ०-६मं ) ॥ इत्यनेनोत्तरवेद्यां वह्निं प्रतिष्ठाप्य प्रागुक्तप्रकारेणध्यात्वा ( अमुकनामासीतिनामकृत्वा ) सम्पूज्य ॥ ॐ ममाग्नेवर्चोविहवे ष्वस्तु वयन्त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतनाजयेम ॥ ( अ० ५ का ३ क १मं० ) इत्यनेन तिस्रः समिधोहुत्वा तूष्णीं पवित्रे कृत्वा ताभ्यामिध्मस्य त्रिः प्रोक्षणं कुर्य्यात् ॥ इत्यथार्वणिकानामग्निस्थापनम् ॥

## अथ कुशकण्डिका ।

तत्रादौ वह्निं सम्पूज्य ( ॐ ममाग्ने० ) इत्यनेन तिस्र समिधोहुत्वा तूष्णीं पवित्रे कृत्वा ताभ्यामिध्मस्य त्रिः प्रोक्षणं कुर्य्यात् ( तत्र ) ॥ ओं विष्णोर्मनसा पूतेस्थ,, इति प्रथमप्रोक्षणम् । ओं देवस्त्वासवितोत्पुनानत्य विष्णोर्मनसा पूतमसीति द्वितीयम् ॥

छिद्रेण पवित्रेण शतधारेणसुप्वोत्पुनामीति तृतीयम् ततस्तूष्णीं (चतुर्थम्) ततो अग्नयेत्वाजुष्टं प्रति प्रोक्षामि ॥ इतीध्मंसमादाय ॥ ओं अग्निर्भूम्यामोषधीष्वग्निमापोविभ्रत्यग्निरश्मिषु अग्निरन्तः पुरुषेषु गोषु अश्वेषु अग्नयः । अग्निर्दिवआतपत्यग्नेर्देवस्योर्वन्तरिक्षम् । अग्निं मर्ता सइन्धते हव्यवाहं घृतप्रियम् । अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं माकृणोतु । भूम्यां देवेभ्यो ददति यज्ञं हव्यमरं कृतम् । भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्याः । सानोभूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु ॥ ( अ० १२ का १ अ० १९, २०, २१, २२ मंत्राः ) एतैश्चतुर्भिः ॥ ॐ एतमिध्मं समाहितं जुषाणोऽग्ने प्रतिहर्य होमैः । तस्मिन्विदेम सुमतिं स्वस्तिप्रजाचक्षुः पशून् समिद्धे जात वेदसि ब्रह्मणाअस्मेधारयन्तमग्ने युनज्मित्वा ब्रह्मणा दैवेन दीदि ह्यस्मभ्यं द्रविणेहभद्रं प्रेमं वोचोहविर्द्धादेवतासु । इति ब्राह्मणेनच इध्मं जुहुयात् । (ततः) ॐ त्वं भूमित्यैष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे । त्वां पवित्रमृषयोभरन्तस्त्वं पुनीहि दुरितान्यस्मत् ॥ ( अ० १९ का ४ अ ३३क ३ म ) अनेन वर्हिः प्रोक्ष्य ॥ ऋषीणां प्रस्तरोसि नमोस्तुदेवाय प्रस्तराय ॥ [ इत्यनेन ब्रह्मासनं निधाय ॥ अनेन कर्मणायजमानोयजते तत्र भूपते भुवनपते भुवांपते महतो भूतस्यपते ब्रह्माणं त्वा वृणीमहे ॥ [ इतिकर्तावरणमंत्रं जपेत् । ] ततो ब्रह्मा ओं भूपतिरहं भुवनपतिरहं भुवाम्पतिरहं महतोभूतस्यपतिस्तदहं मनसे प्रब्रवीमि मनोवाचे वा गायत्र्यै गायत्री उष्णिहे उष्णिक् अनुष्टुभेऽनुष्टप् बृहत्यै बृहती पंक्त्यै पंक्तिः त्रिष्टुभे त्रिष्टुप् जगत्यै जगती प्रजापतये प्रजापतिर्विश्वेभ्योदेवेभ्यः ॐ भूर्भुवः स्वर्जनरोम् [ इतिजपेत् ] ततो ब्रह्मा [ स्वासनमीक्षेत ] ॥ ॐ दैविशिव्यो दक्षास्तिष्ठान्यस्य सदने सीदामि योस्मात्पाकतरः ॥ इति । [ अथासनाद्दक्षिणस्यां दिशि ] ॐ निरस्तः परावसुः सह पाप्मना निरस्तः सोऽस्तु योस्मान्द्वेष्टि यञ्चवयन्द्विष्मः ॥ [ इत्यनेन तृणं निरस्येत् ] ततः [ आसन-

मालभ्य ] ॐ इदमहमर्वाग्वसोः सदनेसीदाम्यैतस्य सदनेसीदामीत्यस्यसदनेसीदामीत्यस्य सदनेसीदामि पूर्तस्य सदनेसीदामि मामृषतेववर्हिः स्वासंस्थत्वाध्यासादेव मूण्यम्रदमनभिशोकमिति जपेत् ततः ॐ विमृग्वरीं पृथिवीमावदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्। ऊर्ज्जं पुष्टं विभ्रतीमन्नभागं घृतं त्वाभिनिषीदेमभूमे। (अ० १२ का० १ अ० २९ मं०) इत्यनेनासने उपविशेत्। (ततो ब्रह्मा) ॐ बृहस्पतिर्ब्रह्मा ब्रह्मसदनआशिष्यते बृहस्पते यज्ञं गोपाय इति॥ (ब्रह्मजपंकुर्य्यात्।) ततः॥ ॐ उद्धत उतिवतः शकेयं पातं द्यावापृथिव्यौ॥ इति (द्यावापृथिव्यौ समीक्षेत) ततः (कर्ता) देवस्यत्वेतिपरिगृह्णामीत्यन्तं (पठेत्) ब्रह्मा तु॥ परिस्तृणीहि परिधेहि वेदिमाजानिमौषीरनुपाशयानाम्। होतृषदनं हरितं हिरण्मयं निष्कामयते यजमानस्य लोक॥ इति (जपेत्) ततः (कर्ता)॥ देवस्यत्वा प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् प्रसूतः प्रशिषा परिस्तृणामि॥ (इत्यनेन) आग्नेयमारभ्य त्रिभिस्त्रिभिर्दर्भैरुदगग्रैः प्रागास्तृतदर्भाच्छादितोत्तरदर्भमूलैः उदकसंस्थैस्त्रिः परिस्तृणीयात्। एवं नैर्ऋत्यमारभ्य प्रागग्रैः पूर्वास्तृत दर्भाधःक्रमेणाग्नेयपर्यन्तम् तथैव नैर्ऋतादारभ्य वायव्यपर्यन्तं वायव्यादारभ्यैशानपर्यन्तं प्रागग्रैस्तथैव परिस्तृणीयात्। (अत्राधः क्रमेणास्तरणे आग्नेयपरिस्थितस्यदक्षिणास्तृतदर्भाग्रस्य ईशानस्थितोत्तरास्तृतदर्भाग्रस्यचोत्तराधरभावानियमः इतिवोध्यम्।) ॐ हविषा त्वा जुष्टं प्रोक्षामि॥ इत्यनेनास्तीर्णं [कुश प्रोक्षणम्] अथ कर्तासने दर्भासनमास्तीर्य॥ अहो दैविषव्योदत्त॥ इत्यादिवीक्षणान्तं सर्वं ब्रह्मवत्कुर्यात्। [अत्रैवसमये] निस्तुषान् शुक्लीकृतान् तण्डुलान् त्रिः प्रक्षाल्य तत्र दुग्धं दत्वा चरुस्थाल्यां निक्षिप्य स्तोकं पचेत्। अथ उदकपात्रं गृहीत्वा॥ यथाग्ने ब्रह्मणस्पतिः सत्यधर्मोअदीधरत्। देवस्यत्वा॥ इत्यादिना [उदपात्रं पुरोनिधाय]॥ ॐ इहेतं देवीरमतं वसाना हिरण्यवर्णा अनवद्यरूपाः आपः समुद्रो

वरुणश्च राजा सम्पातभागान् हविषोजुषन्ताम् । इन्द्रप्रशिष्टा-वरुणप्रसूताः आप समुद्रा दिवमुद्वहन्तु इन्द्रप्रसूता वरुण प्रशिष्टा दिवस्पृथिव्याः श्रियमुद्वहन्तु ॥ इति ॥ सपवित्रे उदकपात्रे उदकं क्षिपेत् । ततो विलीनं पूतमाज्यं गृहीत्वाधिश्रृत्य पर्यग्निकृतोदगुद्वास्य पश्चादग्नेरुपसाद्य उदगग्राभ्यां पवित्राभ्यां उत्पुनीयात् ॥ ( इत्याज्यसंस्कारः ) एवं चरुसंस्कारोपि बोध्यः । ततो दर्भैः ॥ स्रुवं निर्माज्र्मीति मंत्रेण ॥ स्रुवं सम्मृज्य ॥ ॐ अनिष्टदारक्षो निष्टप्ता अरातयः प्रत्युष्टंरक्षः प्रत्युष्टाअरातयः ॥ इत्यनेन ( स्रुवं प्रतप्य ) ॥ विष्णोर्हस्तोसि दक्षिणापूर्वादत्ता बृहस्पते तत्वाहं स्रुवमाददे देवानां हव्यवाहनम् । अयं स्रुवोनिदधाति होमान् शताक्षरच्छन्दसाजागतेन सर्वायज्ञस्य समनक्तिविष्टा वार्हस्पत्येनाष्टिः शर्म्मणा दैव्येन ॥ इति ॥ ( स्रुवमभिमन्त्र्य ) ॐ भूः शम्भूत्यैत्वगृह्णे भूतयः इति । संस्कृतमाज्यस्थालीस्थितामाज्यं स्ववामभागे अग्नेः पश्चिमतः स्थापितायामाज्यधानीपात्र्यां स्रुवेण ( प्रथम ग्रहं ) गृह्णीयात् । ॐ भुवः शम्भूत्यैत्वागृह्णेपुष्टय ( इति द्वितीयं ) ॐ स्वः शन्त्वागृह्णेसहस्रपोषाय इति ॥ ( तृतीयम् ) ॐ जनः शन्त्वागृह्णेऽपरिमितपोषाय इति ( चतुर्थम् ) गृह्णीयात् । ततो वक्ष्यमाण होमपरिमितं गृह्णीयात् । ततः आज्य धान्याएव घृतं स्रुवेण गृहीत्वा सर्वत्र जुहुयात् । यथा ॥ अग्नावग्निश्चरति प्रविष्ट ऋषीणाम्पुत्रो अभिशस्तिपाउ । नमस्कारेण-नमसातेजुहोमि मादेवानां मिथुषा कर्मभागम् । स्वाहा ॥ हृदा पूतं मनसा जातवेदोविश्वानिदेव वयुनानि विद्वान् । सप्तास्यानि जातवेदः तेभ्योजुहोमि सजुषस्व हव्यम् स्वाहा ॥ (अ० ४ का ३९ क० ६, १ मं० ) पुरस्ताद्युक्तोवहजातवेदोऽग्नेविद्धि क्रियमाणं यथेदम् । त्वंभिषग्भेषजस्यासि कर्ता त्वयागामश्वं पुरुषं सनेम ( अ० ५का २९ क० १ मं ) स्वाहा । यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि । इमं यज्ञं वितत विश्व कर्मणा देवायन्तु सुमनस्य मानाः ॥ ( अ० २का० ३५क ५ मं० स्वाहा )

इत्येतैः पुरस्ताद्धोमान् हुत्वा ॥ ॐ वृषणे बृहस्पते स्वर्विदे शुक्लेह-यामि त्विषी मते । मनः स्थिरान् बलवतः कृणोतु ज्योग्युनोजीवा तवेददात्यग्नये स्वाहा ॥ ॐ त्वं सोममभ्येत्योजसा त्वं दिव्यो-वृचत्ता अस्मभ्यं पथो अमुख्यः । अभिनोगोत्रं विदुषइव नेशेच्छा नोवाचमुशतीं जिगाय सोमाय स्वाहा ॥ ( इत्याज्यभागौ ) ततोऽभ्युत्तानाख्याः सप्तदशाहुतीर्हुत्वा प्रणवादिस्वाहान्तैर्वक्ष्यमाण मंत्रैर्ग्रहादिभ्यःएकैकाश्चर्वाहुतीर्हुत्वा संकल्प्य अग्निनामकृत्वा वाह्याभ्यर्च्य प्रधानहोमं कुर्य्यात् । इति सर्वसाधारणी कुशकण्डिका ॥

इति आथर्वणिकानां अग्निस्थापनकुशकण्डिकाप्रकरणम् ॥

## ॥ अथाग्निस्थापनं देवीपुराणे ॥

यद्देवादेवहेडनमिति परिसमूहने । मानस्तोकेत्युपलेपनम् । त्वां वृत्रे षिन्द्र-सत्पतिमित्युल्लिख्य । व्रजञ्ज्छेत्युद्धृत्य । देवस्यत्वेत्यभ्युदय । अग्निर्मूर्द्धेति अग्निमुपसमाधाय । समिधाग्निन्दुवस्यत इति समिधो दद्यात् । ( ततः कुशकण्डिका) मयिगृह्णामीत्यग्नेरक्षतीकृत्य । हिरण्यगर्भ इति दक्षिणतो ब्रह्माणमुपवेश्य । आपोहिष्ठेत्युत्तरतः प्रणीतामासाद्य । कयानश्चित्रेति परिस्तरणम् पवित्रे स्थ इति पवित्रछेदनम् । इषेत्वेत्याज्यनिरूपणम् । त्रातारमिति स्रुवप्रतपनम् । निसितोसि प्रक्षत्येति सम्मार्जनम् । प्रत्युष्टेति पुनः प्रतपनं । सवितुर्वइत्युत्पवनं । तदेवाग्नि-रित्यर्चनम् । धूरसीति पर्य्युक्षणम् । एवं लक्षणसंयुक्तं सर्वहोमेषु याज्ञिकं । विधानं विहितं तन्त्रे ब्रह्मणामिततेजसा । इति देवीपुराणोक्तअग्निस्थापनकुशकण्डिके ॥

## ॥ अथ अग्निसंस्कारः कपिलपञ्चरात्रे ॥

कपिल उवाच । वक्ष्ये स्थालीपाकानां कर्म्म । प्रजापते इत्युपविशति । देवस्यत्वेति दर्भानासादयति । एषवःकुरवोदर्भं गृह्णाति । यद्देवादेवहेडनमिति परि-समूहनम् । मानस्तोके इत्युपलिप्य । त्वां वृत्रेत्युल्लिख्य । सदसस्पतिमित्युद्धृत्य । अथोऽन्नस्यकीलालमित्यभ्युक्ष्य । देवस्यत्वेति कुण्डे कुशास्तरणं क्रव्यादमित्यग्निं गृह्णाति । कामोन्मत्तं ततः कृष्णं लक्ष्मीमृतुमतीं स्मरन् । तयोः सङ्गमयोगेन वह्निः संजातसंस्थितः । वैश्वानरोनऽऊतय इत्यग्निं स्थापयति । दक्षिणतोब्रह्मासनं आ-ब्रह्मन्ब्रह्मणइति ब्रह्माणं स्थापयति आपोहिष्ठेत्युत्तरं प्रणीतां स्थापयति । देवस्यत्वे-ति परिस्तरणं कृत्वा । पात्रासादनं पवित्रछेदनानि पवित्रे प्रोक्षणीपात्रमित्यादि । यदि ब्रह्माचलति यदि प्रणीताचलति यदि परिस्तरणं दहति तदा स्वेन २ मन्त्रेण स्थापयेत् । तत्समाहितः । तद्दोषशमनार्थं घृताष्टाहुतीर्जुहुयात् । विष्णोरराटेति-मन्त्रेण । ततो ब्रह्मणान्वारब्धोहोमः । इति । ( आपस्तम्बादिसूत्रप्रतिपादिताग्नि-स्थापनक्रमोग्रन्थविस्तृतिभयान्नप्रदर्शितः )

# अथ तान्त्रिकाग्निस्थापनम्

तत्र प्रथमं मूलेनाचम्य प्राणानायम्य मूलेनैव षडङ्गन्यासं कृत्वा कुण्डे स्थण्डिले वा संस्कार चतुष्टयं कुर्य्यात् ( तद्यथा ) मूलेन कुण्डं स्थण्डिलं वा संवीक्ष्य [ॐ अस्त्राय फडिति] अस्त्रेण-संप्रोक्ष्य तेनैव मंत्रेण कुशत्रयेण संताड्य ( ॐ हूमिति ) वर्म्मणा मुष्टिनासिंच्य स्रुवेण कुशमूलेन वा प्रागग्रा उत्तरोत्तरक्रमेण तिस्रोरेखाः स्थण्डिल प्रमाणाः प्रादेशमात्राः वा ( हृन्मंत्रेण ) कृत्वा तदुपरि उदगग्राः प्राक् २ क्रमेण तिस्रोरेखाः कुर्य्यात् । ततो [ वाग्वीजेन ] प्रोक्ष्य तासु प्रागग्रासु क्रमेण ॥ ॐ मुकुन्दा-यनमः ॐ ईशानायनमः ओं पुरन्धरायनमः ॥ इति गन्धादिभिः सम्पूज्य उदग्रासु ॥ ओं ब्रह्मणेनमः ओं वैवस्वतायनमः ओं इन्द-वेनमः ॥ इति पूजयेत् ।

( मन्त्रमहोदधौ ) कुण्डेवास्थाण्डिले कुर्य्यात्संस्काराणां चतुष्टयम् । मूलेने-क्षणमस्त्रेण प्रोक्षणंताडनंकुशैः । वर्म्मणामुष्टिनासिच्यलिखेद्यन्त्रं तदन्तरे । वह्नि-कोणषडस्राष्टदलभूमन्दिरात्मकम् । इति ॥

## ॥ अथ भूमन्दिरलेखनपक्षभेदाः ॥

भूगृहंनामचतुरस्रम् । तच्चैकरेखात्मकमेकमेवमूले भू पुरमित्येकवचनात् । चतुरस्रे चतुर्द्वारि योगिन्यः सिद्धिदायकाः । इति ज्ञानार्णवे प्रकटाश्चतुरस्रक इति संहितायासंवादाच्च । तेनैक रेखात्मकं प्रतिदिशमेकैकद्वारयुतं भूविम्वमित्येकःपक्षः । कादिमते तु प्रतिदिशं द्विरेखं प्राक्प्रत्यक्चेति द्वारद्वययुतदक्षिणोत्तरतः प्रत्येकं रेखा-त्रयेण स्थानद्वययुतं कोणेषु तिर्यक्सूत्रैश्चतुर्भिर्द्विधाकृतचतुष्पदयुक्तमुक्तम् । सोयं द्वितीयः पक्षः । प्रतिदिशं रेखात्रययुक्तं द्वारसामान्याभाववदिति तृतीयः यामलं-तन्त्रं, कल्पसूत्रं, शिङ्गभूपालीयापद्धतिः, प्रपञ्चसारसंग्रहः, विद्यारण्यपद्धतिः, सौन्दर्य्यलहर्य्यु क्तिश्चास्मिन्नेवपक्षेऽनुकूलाः । तेषु द्वारलेखनानुक्तेः । ( विशुद्धेश्व-रतन्त्रे तु ) प्रत्येकं चतुर्भिर्द्वारैः सहितानि त्रीणि भूगृहाण्युक्तानीति द्वादशद्वारं त्रिरेखं भूगृहमिति चतुर्थः पक्षः । इत्याहुः । शास्त्रे सर्वेपक्षाः सूचिताः । चतुरस्र-

मित्येकवचनादेकरेखापक्षः। चक्रन्यासे रेखात्रयकीर्तनात् त्रिरेखापक्षः इति द्वौपक्षौ सूचितौ। पूजाप्रकरणे। अणिमादिब्राह्मीत्याद्यैरैव पूजनकथनादणिमापश्चिमद्वारे इत्यादिना ब्रह्माणीपूर्वद्वारे इत्यादिना च पश्चिमपूर्वयोरेवद्वारानुवादात्तृतीयरेखास्थमुद्रापूजनस्याकथनाद्द्विरेखापक्षोऽपि सूचितः। वस्तुतस्तु। तन्त्रराजोक्तोद्विद्वारकपक्षएवातिरिक्तः। अन्येषां त्रयाणां परस्परोपसंहारादेकएवपक्षइति द्विकोटिकविकल्पएव युक्तः। त्रिरेखात्मकेऽवयविनि चतुरस्रभूविस्त्वादयोहि धर्म्माव्यासज्यवृत्तयः। तिस्रोरेखास्त्ववयवाएव। अतएव चतुरस्राद्यरेखायै चतुरस्रमध्यरेखायै चतुरस्रान्त्यरेखायै नम इति चक्रन्यासस्थोव्यवहारउपपद्यते। चतुरस्राद्यरेखेत्यर्थस्य स्वरसतोभानात्। कर्म्मधारयाङ्गीकारे प्रथमचतुरस्रायेत्येवव्यवहारापत्तेः। पार्थिवं मण्डलं कुर्य्यात्तृतयं द्वारसंयुतमिति विशुद्धेश्वरवचने मण्डलमित्येकवचनेन त्र्यवयवार्थत्रितयविशेषणेनचावयविन्येवभूगृहत्वसिद्धेश्च। ततश्चतुरस्रे चतुर्द्वारी इत्यादि वचनेषु द्वारे चतुष्ट्वविशेषणानि चतुरस्रइत्याद्येकवचनान्तानि पदान्यवयवावयवन्यभिप्रायेणोपपद्यन्ते। बहुवचनान्तानि क्वचिद् दृश्यमानानि चेदवयवबहुत्वाभिप्रायेण पाशाधिकरणन्यायेनोपपादयितुं शक्यन्तएवेति क्वत्योविरोधः। एतेन द्वारद्वादशविधायकं विशुद्धेश्वरवचनं व्याख्यातम्। नहि तस्मिन्नेवतन्त्रे श्रुतस्य पार्थिवं मण्डलमित्येकवचनस्य द्वारद्वादशकत्वस्य च परस्परविरोधोऽवयवावयविभावाश्रयणमन्तरेण निर्वोढुं शक्यते। अन्यथैकस्यामेवरेखायां द्वादशद्वारापत्तेः। नचतत्केषामपीष्टम्। तस्माद्यत्सुन्दरीमहोदये शङ्करानन्दस्य विजृम्भणं संहिताज्ञानार्णववामकेश्वरादिवाक्यानामेकवचनघटितानां बहुवचनघटितेन विशुद्धेश्वरीयवाक्येन शाखान्तरोपसंहारन्यायेनाग्नेयेचतुर्द्धाकरोतीति वन्नोपसंहारः। तेषां वाक्यानामसंदिग्धत्वेन विशेषानपेक्षितत्वात्।

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भवः॥

इति तन्त्रवार्तिकात्। मुण्डनं चोपवासश्च सर्वतीर्थेष्वयंविधिः इति बहुवचनघटितविधेः प्रयागे वपनं कुर्य्यादित्येकवचनघटितवाक्येनोपसंहाराभावस्य धर्म्मशास्त्रविदाभीष्टत्वाच्च। चतुर्द्धारद्वादशद्वारपदघटितवाक्ययोः परस्परविरुद्धयोरेकवाक्यतायाा ब्रह्मणोऽप्यशक्यत्वाच्चेति। तन्नादर्तव्यम्। उक्तरीत्याविरोधाभावेनोपसंहारसम्भवेऽनिष्टदोषदुष्टविकल्पायोगात्। सर्वतीर्थेष्वितिप्रयागइतिविध्योस्तु नैकवचनबहुवचनकृतोविरोधः। पुनः संस्कारमाचरेत्। संस्कारानाचरेत्पुनरिति-

अथवा कुण्डे स्थण्डिलेवा मध्ये त्रिकोणं तद्बहिः षट्कोणं तद्बहिर्वृत्तं तद्बाह्येऽष्टदलं तद्बाह्ये चतुर्द्वारं चतुरस्रं च भूमन्दिरं लिखित्वा तत्र मध्ये त्रिकोणे [ ओं ह्रीं ओं ] लिखेत् ॥ ओं मण्डूकादिपरतत्वान्तपीठ देवताभ्योनमः । ओं जयादि पीठशक्तिभ्योनमः ॥ [ इति पीठंसम्पूज्य ] यन्त्र मध्ये सुवर्णशकलं निधाय [ओं ह्रीं वागीशीवागीश्वरयोर्योगपीठात्मने नमः] इत्यासनं दत्वा [ ओं आग्नेययोगपीठायनमः ] इति पीठं सम्पूज्य । तत्र ऋतुस्नातां नीलेन्दीवरसन्निभां वागीश्वरेणसंयुक्तां वागीश्वरीमुपचारैः प्रपूजयेत् । पूजयेद्भुवनेश्वरीमिति ( पक्षेतु ) गणेश, शैव, शाक्तेषु, कामोन्मत्तं शिवं तथा ऋतुमतीं देवीं ध्यात्वा लब्धोपचारैः पूजयेदिति । वागीश्वरीवागीश्वरयोः पूजनन्तु शक्तिवीजेन साध्यमंत्रेण च क्रमेण कुर्य्यात । ( ततः )शिवायनमः, शक्त्यैनमः, ॥ इति मन्त्राभ्यामुभौ त्रिस्त्रिश्च सम्पूज्य प्रणमेत् ( प्रणमनमंत्रो यथा ) वागीश्वरीं ऋतुस्नातां समस्ताभरणान्विताम् । वागीश्व-

---

धिध्योरेकवाक्यातायाइष्टत्वात् । तत्र स्थित्वाजपेल्लक्षमित्यस्यैव लक्षत्रयं जप्त्वेति वचनेनोपसंहारस्य सौभाग्यरत्नाकरेऽभिधानाच्च । लक्षमेकमिमं जप्त्वेति क्रमसंहितावचनस्याप्युक्तज्ञानार्णववचनेनोपसंहारोक्तेश्च । अपि तु सर्वपदप्रयागपदोपात्तयावद्विशेषैकविशेषकृतः । अतएव न हिंस्यात्सर्वभूतानीत्यस्य न ब्राह्मणं हन्यादित्यनेनोपसंहार इति प्रपञ्चितं ( मीमांसावादकौतूहले ) । तस्मान्न चतुरस्रपदनिष्ठैकवचनवहुवचनयोश्चतुर्द्वारद्वादशद्वारकत्वविशेषणयोश्च विरोधलेशोऽपि । द्वारसामान्याभावपक्षस्तु द्वारप्रतिषेधपर्य्युदासान्यतरमन्तरेण यामलकल्पसूत्रादौ द्वारानुक्तिमात्रेण कल्प्यमानः साहसमात्रं चतुरस्रपदमात्रघटितयामलादिविधेः सद्वारचतुरस्रविधिना सोष्णीषविधेर्लोहितोष्णीषविधिनैषोपसंहारस्य निरावाधत्वादितियुक्तमुत्पश्यामः । इत्यलम् ॥

( अथ रेखाकरणम् ) शारदाति०

तिस्रस्तिस्रोलिखेद्रेखा ह्यग्राप्रागुदगग्रगाः । अत्र लेखनक्रमः ( सौत्रामणितंत्र ) प्राचीमुदङ्मूर्ध्वं संस्थं दक्षिणारंभमालिखेत् । उदगग्रं पुरः संस्थं पश्चिमारंभ-

रेण संयुक्तां नमाम्यखिलसिद्धये ॥ इति, एवं शिवशक्त्योः पूजनं कुण्डमध्ये कृत्वा तयोः संय्योगाद्योगभस्तं वह्निं विभावयेत् । एवं ( वैष्णवयागे सौरयागेच ) वागीश्वरीवागीश्वरयोः स्थाने लक्ष्मीनारायणौ पूज्यौ ( मन्त्रः ओंह्रीं लक्ष्मीनारायणाभ्यांनमः ) ऋतुमतीं लक्ष्मीं नारायणेनयुक्तां ध्यायेत् तत्संय्योगाज्जातमग्निं च चिन्तयेत् । ( वैष्णवसौरयागेतु ) पीठशक्तयोभिन्नाः स्युस्ताश्च ( यथा ) विभूतिः, उन्नतिः, कान्तिः, सृष्टिः, कीर्तिः, सन्नतिः, तुष्टिः, उत्कृष्टिः, वृद्धिः, ॥ इति ॥ ततः ( सूर्य्यकान्तमणेररणितः श्रौत्रियागारतोवा कांस्यपात्रेणाग्निं ( ॐ फट् ) इति मंत्रेणादाय

---

मालिखेत् ॥ तिस्रस्तिस्रोलिखित्वैवं प्रोक्षयेद्वाग्भवेन च । (शारदायाम् ) प्रागग्राणां स्मृतादेवामुकुन्देशपुरन्दराः । रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥ ( यामले ) मूलेन विलिखेदेताः दर्भस्यैव स्रुवस्यवा । मध्ये तार-पुटां मायां लिखित्वा पोठमर्चयेत् । मण्डूकात्परतत्वान्तं पीठशक्तीर्जया-दिकाः । (पोठशक्तयोमेरुतन्त्रे) स्वाग्रादिप्रादक्षिण्येन तत्पद्मकेशरेषु च । मध्यान्तं पूजयेदेतान् जयां च विजयां तथा ॥ अजिताख्यां चापराजितां नित्यां च विला-सिनीम् । दोग्ध्रीमघोरां च तथा मङ्गलामथ तत्र तु ॥ ह्रीँ सर्वशक्तिकमलासनाय नम उच्चरन् । दत्वा पुष्पांजलिं कुण्डे पूजयेद्भुवनेश्वरीम् ॥ ( आसनं दत्वेति ) वागोशोवागोश्वरयोर्योगपोठात्मने नमः । मायादिकः पीठमन्त्रस्तयोस्तेनासनं दिशेत् । इति यजेत्तौ तारमायाभ्यां गन्धाद्यैरुपचारकैः लक्ष्मीनारायणौत्वर्च्चेद्वैष्णवे होमकर्मणि । (मेरुतंत्रे) पूजयेद्भुवनेश्वरीमित्यधिकृत्य । कामोन्मत्तं शिवं तत्र देवीं ऋतुमतीं तथा । गणेशशैवशाक्तेषु ध्यायन् सम्पूजयेदिति ॥ ( शारदायाम् ) वागीश्वरीं ऋतुस्नातां नोलेन्दीवरसन्निभाम् वागीश्वरेण संयुक्तामुपचारैः प्रपूजये-दिति ॥ ( भुवनेश्वरीवागीश्वर्योर्विकल्पः गणेशविमर्षिण्याम् ) शक्तिवोजेन वागीशं वागोशं साध्यमन्त्रतः । (पूजयेदिति शेषः) (रुद्रयामले तु) ततः शिवाय शक्त्यै च नमोन्तौ कथितौ मनू । आभ्यां त्रिस्त्रिश्च सम्पूज्य प्रणमेन्मनुनाऽमुना ॥ वागीश्वरीं ऋतुस्नातां समस्ताभरणान्विताम् । वागीश्वरेण संयुक्तां नमाम्यखिलसिद्धये ॥ वैष्णवे च तथा सौरे लक्ष्मीमृतुमतीं स्मरेत् । नारायणस्य सय्योगाज्जातमग्निं

कुण्डवाह्ये आग्नेये निधाय ( ॐ हुँ ) इति वर्म्मणा उद्घाट्य ज्व-लितकुशेन ( ओं फट् ) इति नैर्ऋत्यां क्रव्यादांशं परित्यजेत् शेषमग्निं देवांशं परिकल्प्याग्रे स्थापयेत् सूर्य्यकान्तादिसमुद्भूत-स्याग्नेर्यज्ञमण्डपे कुण्डसमीपे नयनं ( शक्तियागे ) विशेषरीत्या भवति ( तद्यथा ) ( शक्तिमण्डपे अरण्यामणितोविप्रगेहाद्वह्निं सद्वस्त्रा कृतशौचा कुमारिका सुवासिनी वा अग्निप्रणयनं कु-र्य्यादिति )

---

विचिन्तयेत् ॥ (अत्र च) विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च सन्नतिः । तुष्टिरु-त्कृष्टिवृद्धीच सम्प्रोक्ता नव शक्तयः ॥ ( इति पीठशक्तयः ) वीजाद्यमासनं दत्वेति वचनात् ॥ श्रीलक्ष्मीनारायणयोर्योगपीठात्मने नमः ॥ ( इति पीठमन्त्रः ) श्रीविद्या-यान्तु (ज्ञानार्णवे) कामेश्वरीं कुण्डमध्ये सकामामृतुसंयुताम् । समावाह्य च सम्पू-ज्य तद्गर्भं वन्हिमावहेत् ॥ (गौतमीये) पाषाणभवमग्निं च यदि वारणिसम्भवम् । श्रोत्रियाणां गेहजं च वनस्थमथवा भवेत् ॥ यदृच्छालाभसम्प्राप्तश्चायोग्योयागक-र्मणि । निरग्निर्ब्राह्मणाल्लब्धोह्यर्धलाभकरोभवेत् ॥ क्षत्राल्लब्धे चतुर्थांशं फलं दद्याद्-हुताशनः । वैश्याच्छूद्राच्चविफलं जायते होमकर्म तत् ॥ ( मेरुतन्त्रे ) अरण्या-मणितोविप्रगेहाद्वह्निं कुमारिका । सुवासिनी वा सद्वस्त्रा कृतशौचा समाहरेत् ॥ इति ॥ दद्यादस्त्रेण पात्रेग्निं कवचेन पिधाय च । जीर्णशरावे कापाले भिन्नपात्रे तथोल्मुके ॥ नाग्निप्रणयनं कुर्य्याद्व्याधिहानिभयावहम् । ( क्रव्यादांशपरित्यागे-विशेषस्तन्त्रान्तरे ) अस्त्रेणाग्निं समाधाय कवचेन पिधाय तु । क्रव्यादांशं तु चास्त्रेण नैर्ऋत्ये संक्षिपेत्प्रिये ॥ देवांशं मूलमन्त्रेण स्थापयेत् पुरतः सुधीः । कूर्चा-स्त्राभ्यां च नैर्ऋत्यां क्रव्यादांशं परित्यजेत् । इत्युड्डीशे (शारदायाम् ) सँस्कुर्यान्तं यथा न्यायं देशिकोवीक्षणादिभिः । औदर्यवैन्दवाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः ॥ योजयेद्वन्हिवीजेन चैतन्यं पावके तदा । ( मेरुतंत्रे ) प्रदीपकलिकाकारं तेज आवाह्य यत्नतः । ऐक्यं जाठरवैन्दववन्हिभ्यां पार्थिवस्य च स्मृत्वाग्निवीजके-नास्य चैतन्यंयोजयेदथ । ( उड्डीशे ) दीपाद्दीपान्तरन्यायात् स्फुरन्तंसर्वतोमुखम् । श्वास-मार्गेण मनुवित् कवचेन ततोर्चयेत् ॥ ( शारदायाम् )

तारेण मन्त्रितं मन्त्री धेनुमुद्राऽमृतीकृतम् । अस्त्रेण रक्षितं पश्चात्तनुत्रेणच गुण्ठितम् ॥ अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः । प्रदक्षिणं तदातार-मन्त्रोच्चारणपूर्वकम् ॥ आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः । शिववीजधिया देव्या योनावेनं विनिःक्षिपेत् ॥ ( मेरुतंत्रेपि ) देव्यायोनौ तत्र जानुस्पृष्टभूमिश्च

ततोमूलमंत्रेणाग्निम्पुरतोधृत्वा तेनैव वीक्ष्य ( ओं फट् ) इत्य-स्त्रेण प्रोक्ष्य तेनैव कुशत्रयेण संताड्य ( ॐ हुँ ) वर्मणा संसिच्य औदर्यवैन्दवाग्निभ्यां भौमस्य वह्निरैक्यं भावयेत् । वैन्दवोभ्रूम-ध्यस्थोवह्निः ॥ ततः ( रँ ) वह्निचैतन्यं कल्पयामि इत्युक्त्वा ( हुँ रँ ) चैतन्यं ते नमः ॥ इतिमंत्रेण पावकचैतन्यं संयोज्य प्रणवेना-ष्टोत्तरशतं दशधा वाऽभिमंत्र्य धेनुमुद्रया ( ॐ वँ ) इतिसुधावी-जेन अमृतीकृत्य ( ओं फट् ) इतिमंत्रेण संरक्ष्य ( हुँ ) इत्यव-गुण्ठ्यगन्धपुष्पादिभिः पूजयेत् । पूजनन्तु [ रं वह्निमूर्त्तयेनमः ] इतिमंत्रेण कुर्य्यात् । ततोवाहुभ्यां वह्निपात्रं समुद्धृत्य कुण्डस्यो-परि प्रादक्षिण्येन त्रिः परिभ्राम्य ॥ शय्यागतां ऋतुस्नातां नीले-न्दीवरधारिणीम् । देवेनभुज्यमानान्तां संस्मरेद्योनिमण्डले ॥ इति ध्यात्वा । जानुस्पृष्टधरातलः प्रणवोच्चारणपूर्वकमात्मनोऽभि-मुखं शिववीजधिया देव्यायोनौ निः क्षिपेत् । [ अत्र शिववीज-

---

देशिकः । शिववीजमिति ध्यात्वा निःक्षिपेदाशुशुक्षणिम् ॥ ( उड्डीशे ) भूमौ च जानुनी कृत्वा कूर्चवीजं च वह्निं च । चैतन्यान्ते नमोन्तः स्यादनेनोत्थापयेच्छु-चिम् ॥ शिववीजधियातस्या योनौवह्निंविनिःक्षिपेत् । ( क्रियासारसमुच्चये ) योना-वेनं विन्यसेत् स्वाभिवक्त्रं पश्चादग्निं मूलमंत्रेण मंत्री । ( शिववीजधियेतिशैव-शाक्तविषयम् । वैष्णवादौतु विष्णवादिवीजधियेतिवोध्यम् । ) रेफार्धेशेन्दुसंयुक्तं गगनंवह्निचैततः । तन्यायहृदयांतोयंनवार्णोऽग्निनिधापने ( हूँवह्निचैतन्यायनमः ) इतिमन्त्रमहादधौ । ( मेरुतंत्रे ) देवदेव्योराचमनं मैथुनान्तधिया चरेत् । ( शारदा-याम् ) पश्चाद्देवस्य देव्याश्च दद्यादाचमनीयकम् । ज्वालयेन्मनुनानेन तमग्निमथ देशिकः ॥ चित्पिङ्गल-हनदहपच-युग्मान्युदीर्य च । सर्वाज्ञाज्ञापय स्वाहा मन्त्रोयं मणुदीरितः ॥ ( रुद्रयामले ) ह्रीँ ह्रीँ ज्वलयुगंदेवि प्रज्वलद्वितयं ततः । हुँ फट् स्वाहेतिमंत्रेण ज्वालयेत्पावकंसुधीः ॥ इति ( तत्र ज्वालिनीमुद्रापि प्रदर्शनीया ) सा च । मणिवन्धयुतौकृत्वा प्रसृताङ्गुलिकौकरौ । कनिष्ठाङ्गुष्ठयुगलेमिलित्वान्तः प्रसारिते । ज्वालिनीनाममुद्रेयंवैश्वानरप्रियङ्करी ॥ ( यामले ) ततउत्थाय विधि-

धिया शैवशाक्तादौ वैष्णवादौ तु विष्णवादिवीजधियेति बोध्य-म् ] ततः"ह्रीँ वागीश्वरीवागीश्वराभ्यांनमः"इति आचमनीयं दत्वा वह्निरूपां देवतां देव्यागर्भधृतां ध्यात्वा गर्भरक्षार्थं दर्भकंकणं दत्वा॥ चित्पिङ्गल हन २ दह २ पच २ सर्वाज्ञाज्ञापय स्वाहा ॥ इतिमंत्रेण ज्वालिनीमुद्रया वह्निं प्रज्वालयेत। [रुद्रयामलेतु] ह्रीँ ह्रीँ ज्वल २ प्रज्वल २ हुँ फट् स्वाहा ॥ इतिमंत्रेणाग्निप्रज्वालनमुक्तम् ॥ [ ज्वालनं तु मुखेन कुशमुष्टिपलाशपत्रादिना वा ॥ ततः कृताञ्जलिः अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ [ इत्यनेन वह्निमुपतिष्ठेत् ] अग्निरमुकनामासि इतिनाम कृत्वा । वैश्वानरजातवेद इहावहलोहिताच्च सर्वकर्म्मा-णि साधय २ स्वाहा इति संपूज्य जपेत् । ततः प्रादेशमात्रां मूलाग्रयोर्घृतसंप्लुतां समिधं वह्नौ तूष्णीं हुत्वा तान्त्रिकपूजा-प्रकरणस्थरीत्या गणेशादिवन्दन, दिग्वन्धन, भूतशुद्धि, प्राणायाम, मातृकान्यास, मूलन्यासान्विधाय स्वदेहे वह्निजिह्वान्यासं कुर्यात् । ( तद्यथा ) स्प्रूँ हिरण्यायै नमः ( लिङ्गे ) ष्प्रूँ गगनायै नमः ( पायौ ) श्प्रूँ रक्तायै नमः ( मूर्ध्नि ) व्प्रूँ कृष्णायै नमः ( वक्त्रे ) ल्प्रूँ सुप्रभायै नमः ( घ्राणे ) प्रूँ वहुरूपायै नमः ( नेत्रे ) य्प्रूँ अतिरिक्तायै नमः ( सर्वाङ्गे ) एताः सात्त्विक्योजिह्वाः सा-

---

रकृत्वा पाणिपुटं सुधीः । अग्निं प्रज्वलितं वन्दे जातवेदंहुताशनम् ॥ सुवर्णवर्ण-ममलं समिद्धं विश्वतोमुखम् । उपतिष्ठेत विधिवत् मनुनाऽनेन पावकम् ॥ ( उड्डीशे ) प्रादेशमात्रां समिधं मूलाग्रघृतसम्प्लुताम् । तूष्णीं वह्नौ समुत्क्षिप्य जिह्वायां देवतां न्यसेत् ॥ ( शारदायाम् ) विन्यसेदात्मनोदेहे मंत्रीजिह्वाहविभुजः । लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः॥ दीपिकानलवायुस्थाः साद्यावर्णाविलोमतः । सेन्दवः सप्तजिह्वानां सप्तानांवीजतांगताः ( स्प्रूँ ष्प्रूँ श्प्रूँ व्प्रूँ ल्प्रूँ प्रूँ य्प्रूँ ) जिह्वास्तास्त्रिविधाः प्रोक्ताः गुणभेदेन कर्मसु । हिरण्या कनका रक्ता कृष्णान्या सुप्रभामता॥ वहुरूपाऽतिरिक्ता च सात्त्विक्यो यागकर्मसु । अत्र सात्त्विक रसनायां वहु-रूपातिरिक्तयोः पौर्वापर्य्यं वीजक्रमानुरोधेन न तु न्यासक्रमानुरोधेन वहुरूपायाः

त्विककर्मसु न्यसनीयाः । इति काम्यादौ तु पद्मरागा, सुवर्णा, भद्रलोहिता, लोहिता, श्वेता, धूमिनी, करालिका, (इतिराजस्यो) जिह्वान्यसनीयाः ( क्रूरकर्म्मणि ) विश्वमूर्तिः स्फुलिङ्गिनी, धूम्रवर्णा, मनोजवा लोहिता कराला, काली, इति ( तामस्योजिह्वाः ) न्यसनीयाः । बीजानि तु पूर्वोक्तान्येव ततस्तान्येवबीजान्यादौ दत्वा तेष्वेव स्थानेषु अमर्त्यपितृगन्धर्वयक्षनागपिशाचराक्षसान् सप्तजिह्वाधिष्ठात्दृन् । देवानपि क्रमेण न्यसेत् ( यथा ) स्म्रूँ अमर्त्यायनमः ( लिङ्गे ) ष्म्रूँ पित्रेनमः ( पायौ ) श्म्रूँ गन्धर्वायनमो ( मूर्ध्नि ) व्म्रूँ यक्षायनमो ( वक्त्रे ) ल्म्रूँ नागायनमो ( घ्राणे ] र्म्रूँ पिशाचायनमो [ नेत्रे ] य्म्रूँ राक्षसायनमः [ सर्वाङ्गे ] ततः ऋष्यादिन्यासं कुर्य्यात् । ॐ अग्निमन्त्रस्य भृगुऋषिर्गायत्री-छन्दः अग्निर्देवता रंबीजं स्वाहा शक्तिः अग्नियजने विनियोगः । भृगवेऋषये नमः शिरसि । गायत्रीछन्दसे नमोमुखे । अग्निदेव-

---

सर्वाङ्गेन्यसनीयत्वात् ॥(तदुक्तंतत्रान्तरे)सलिङ्गगुदमूर्धास्य नासानेत्रेषु च क्रमात् । विन्यसेदतिरिक्तां तां सर्वाङ्गे वहुरूपिणीम् ॥ इति राघवभट्टः ( वस्तुतः ) हिरण्य गगना रक्ता कृष्णा चैव तु सुप्रभा । वहुरूपामहेशानि अतिरिक्तातथैव च ॥ इत्यनन्तरम् । एकैकं विन्न्यसेद्देवि लिङ्गपायुशिरःस्वथ । वक्त्रे घ्राणे तथा नेत्रे सर्वाङ्गे च न्यसेत्ततः ॥ इति ( वीरचूडामणि ) वचनात् । ततः प्रविन्न्यसेज्जिह्वां देहे मंत्री विभावसोः । सलिङ्गगुदमूर्धास्य नासानेत्रेषु च क्रमात् ॥ सर्वाङ्गेषु च जिह्वास्ताः वक्ष्यन्ते त्रिविधात्मिकाः । हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ॥ वहुरूपातिरिक्ता च जिह्वाः सप्तेति सात्विकाः । इति ( मंत्रप्रकाश ) वचनाच्चातिरक्तायाः सर्वाङ्गएव न्यासः साधीयान् । राघवभट्टविलिखितवचनं च यदि प्रमाणं तदा विकल्प एवेति ( सुधार्णवकारः ) ( मेरुतन्त्रेऽपि ) तन्त्रमंत्रप्रकाशिकोक्त एव क्रम उक्तः । ( शारदायामुतु ) मन्त्रमहोदधौ । न्यासेऽर्चनेऽप्युत्क्रमः स्याद्वहुरूपातिरिक्तयोः । नेत्रेतिरिक्तान्यस्तव्यासर्वाङ्गे वहुरूपिका ॥ इति पद्मरागा सुवर्णाऽन्या तृतीयाभद्रलोहिता । लोहितानन्तरंश्वेता धूमिनी च करालिका ॥ राजस्योरसना वह्नेर्विहिताः काम्यकर्मसु । विश्वमूर्तिः स्फुलिङ्गिन्याधूम्रवर्णा मनोजवा ॥ लोहि

तायै नमोहृदये। रँ वीजाय नमो [ गुह्ये ] स्वाहायै शक्तये नमः ( पादयोः ) अग्नियजने विनियोगः ॥ ( इति बद्धाञ्जलिः ) ( ततः करन्यासः ) ॐ सहस्रार्चिषे अङ्गुष्ठाभ्यांनमः। ॐ स्वस्तिपूर्णाय तर्जनीभ्यां स्वाहा। ॐ उत्तिष्ठपुरुषाय मध्यमाभ्यां वषट्। ॐ धूमव्यापिने अनामिकाभ्यां हुँ। ॐ सप्तजिह्वाय कनिष्ठिकाभ्यां वौषट्। ॐ धनुर्धराय करतलकरपृष्ठाभ्यां फट् ॥ ( एवं हृदयादिन्यासं कृत्वा ) मूर्तिन्यासं कुर्य्यात्। ( तद्यथा ) ॐ अग्नये जातवेदसे नमो ( मूर्ध्नि ) ॐ अग्नये सप्तजिह्वाय नमः ( दक्षांशे ) ॐ अग्नये हव्यवाहनाय नमः [ दक्षपार्श्वे ] ॐ अग्नये अश्वोदरजाय नमः [ दक्षकटौ ] ॐ अग्नये वैश्वानराय नमः [ लिङ्गे ] ओं अग्नये कौमारतेजसे नमः 'वामकट्याम्' ओं अग्नये विश्वमुखाय नमः 'वामपार्श्वे' ॐ अग्नये देवमुखाय नमः 'वामांशे' इति

---

तान्या करालाख्याकाला तामस्यईरिताः। एताः सप्तनियुज्यन्ते क्रूरकर्मसु मंत्रिभिः॥ स्वस्वनामसमाभाःस्युर्जिह्वाः कल्याणरेतसः ॥ अमर्त्यपितृगन्धर्वयक्षनागपिशाचकाः ॥ राक्षसाः सप्तजिह्वानामीरिता अधिदेवताः । अधिदेवोक्तिस्तत्रजिह्वास्थाने न्यासार्थं पूजार्थं च। जिह्वासु त्रिदशादीनां तत्तत्कार्यं समाप्तये। जुहुयाद्वाञ्छितां सिद्धिं दद्युस्तादेवताः मताः ॥ इति ( प्रपञ्चसार ) वचनात्तत्तज्जिह्वायां तत्तद्द्रव्येण होमपक्षे होमार्थं चेति सुधार्णवकारः । इति ऋषिश्छन्दोदेवतास्यभृगुर्गायत्रपावकाः। रंवीजंठद्वयंशक्तिर्हवने विनियोजनम् ॥ (शारदायाम्) वह्नेरुक्तमनून्यसेत्तनावुक्तेन वर्त्मना । सहस्रार्चिः स्वस्तिपूर्णउत्तिष्ठपुरुषः पुनः ॥ धूमव्यापी सप्तजिह्वोधनुर्धरइति क्रमात् । षडङ्गमनवः प्रोक्ताः जातिभिः सह सँयुता ॥ मूर्तीरष्टौ ततोन्यस्येत् देशिकोजातवेदसः। मूर्धांशपार्श्वकट्यन्धुकटिपार्श्वाङ्गकेषु च ॥ प्रदक्षिण वशान्न्यसेत् उच्यन्ते तायथाक्रमात्। जातवेदाः सप्तजिह्वोहव्यवाहनसंज्ञकः ॥ अश्वोदरजसंज्ञोन्यः पुनर्वैश्वानराह्वयः। कौमारतेजाः स्याद्विश्वमुखोदेवमुखः स्मृतः ॥ तारागनये पदाद्याः स्युर्नत्यन्ताः वह्निमूर्तयः। आसनं कल्पयित्वाग्नेर्मूर्तिंतस्य विचिन्तयेत् ॥ ( आसनं पीठं तनावितिशेषः ) तत्राधारशक्त्यादिवह्निमण्डलान्तं विन्यस्य केशरेषु मध्ये च पीठशक्तीः। तत्रैव रँ वह्नियोगपीठायनमः ॥ इति पीठं च न्यसेत् ॥ ( तदुक्तं तत्रैव ) स्वमण्डलान्तं प्रयजेत् पीठेशनवशक्तिकम्

मूर्तिन्यासः ॥ 'ततः पीठन्यासं' कुर्य्यात् । 'तद्यथा' आधारशक्त्या-दिवह्निमण्डलान्तमुक्तस्थानेषु विन्यस्य हृत्पद्मस्य पूर्वादिकेशरेषु ओं पीतायैनमः । ॐ श्वेतायैनमः । ॐ अरुणायैनमः । ओं कृष्णायैनमः । ओं धूम्रायैनमः । ओं तीव्रायैनमः । ओं स्फुलिङ्गि-न्यैनमः । ओं रुचिरायैनमः । ओं ज्वालिन्यैनमः । 'मध्ये' इति वह्नेर्नवशक्तीः पीठं विन्यस्य तत्रैव "रँ वह्नेर्योगपीठायनमः" इति पीठन्यासं विधाय वह्निं ध्यायेत् ॥ [ ध्यानं यथा ] इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जपाभम् । हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥ इदं [ शारदो-क्तध्यानम् ध्यानान्तरन्तु अधो द्रष्टव्यम् ॥ इति ध्यात्वा वह्नि-देवात्मकमात्मानं विचिन्त्य मानसैरुपचारैरभ्यर्च्य ॥ रँ आत्मम्-

---

पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥ रुचिरा ज्वालिनी प्रोक्ताः कृशा-नोर्नवशक्तयः । स्ववीजेनासनं दत्वा मूर्तिं मूलेन कल्पयेत्॥इति(अथध्यानम् तत्रैव) इष्टां शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जपाभम् । हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥ ध्यानान्तरमुक्तम् ( रुद्रयामले ) वन्धूक-पुष्पसंकाशं सुतप्तकनकप्रभम् । पद्मसंस्थं यजमानार्थं वदनद्वयशोभितम् ॥ सप्त-च्छन्दोमयं देवं विमानोपरिसंस्थितम् । त्रिधाग्रीवं त्रिपादावजं हव्यकव्यविनाश-कम् ॥ ब्रह्माध्वर्य्यूद्गातृहोतृचतुःश्रृङ्गविराजितम् । पंचपात्रं पाशुपतं कापिलं च महामतम् । बौद्धं वैदिकमित्येतत् षट्पिङ्गलविलोचनम् ॥ वेदार्थं च चतुः श्रोत्रं श्रौतशस्त्रमयध्वनिम् । सपातालजटाबद्ध मौलिकोटिरभास्वरम् ॥ हेमालङ्कारसंयुक्तं हेमकुण्डलमण्डितम् । रक्ताम्भोरुहमध्यस्थं स्वस्तिकासनसंस्थितम् । पृष्ठदेशसमा-लम्बितातीर्यचरणाम्बुजम् ॥ सदा शब्दायमानं च राजमानं स्वतेजसा । शक्तिं वज्रं स्रुकस्रुवौ च चतुर्भिर्दक्षिणबाहुभिः ॥ तोमरं तालवृन्तं च सौवर्णं घृतपात्रकम् । वामैस्त्रिभिर्बाहुभिश्च दधानंरक्तवाससम् ॥ हिरण्या कनका रक्ता कृष्णा दक्षानने स्थिताः । सुप्रभा वातिरिक्ता च बहुरूपा च जिह्विका ॥ इमास्सप्तास्तद्वामवदने नित्यमास्थिताः । एताभिः सप्तजिह्वाभिः उपेतं पाटिताननम् ॥ ( शारदायाम् ) परिषिञ्चेत्ततस्तोयैर्विशुद्ध मेखलोपरि । दर्भैः प्राग्भिर्मध्यस्थमेखलायां परिस्तरेत् ॥

र्त्तये वह्नये नमः ॥ इति मंत्रेण नैवेद्यरहितैर्गन्धादिभिर्वाह्योपचारै-रप्यात्मानं संपूज्य सामान्यार्घजलेन मेखलाः परिषिच्य गर्भ-शून्यैर्दर्भैः परिस्तरणं कुर्य्यात् । ( परिस्तरणं च ) एकमेखलकुण्डे मेखलायाअधस्तात् द्विमेखले कुण्डे द्वितीयमेखलोपरि त्रिमेखल-कुण्डे मध्यमेखलायां कुर्य्यात् ॥ ( तत्क्रमश्च ) दक्षिणोत्तरयोः पूर्वाग्रैः पूर्वपश्चिमयोः उत्तराग्रैर्दर्भैर्मूलभागान् अग्रभागैराच्छदायन् परिस्तरेत् ततः [ प्राचींविहाय ] दक्षिणोत्तरपश्चिमेषु पलाशादिवृ-क्षसंभवान् हस्तमात्रान् सविष्टरान् परिधीन् निःक्षिप्य तेषु प्राद-क्षिण्येन । ॐ ब्रह्मणनमः ॥ ॐ विष्णवेनमः । ॐ रुद्रायनमः ॥

---

( कुलोड्डीशे ) एवं विन्न्यस्य देहःसन् परिस्तरणमाचरेत् । अर्घोदकेन संप्रोक्ष्य मध्यस्थमेखलोपरि ॥ उत्तराग्रं पूर्वदेशे पूर्वाग्रं दक्षिणे ततः । उत्तराग्रं पश्चिमे तु प्रागग्रमुत्तरे तथा ॥ मूलमाच्छादितं कृत्वा त्रिवारन्तु परिस्तरेत् । ( तथा ) मेखलासुच सर्वासु दीपमालां प्रकल्पयेत् । इति ( शारदायाम् ) निःक्षिपेद्दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः । ( कात्यायनः ) परिधीन्परिधत्याद्रान् एकवृक्षीयान् वाहुमात्रान् पालाशवैकण्टककाश्मर्यवैल्वानिति । ( मेरुतन्त्रे ) पलाशकाश्मरी-विल्वविकण्टकसमुद्भवान् । एकवृक्षोद्भवानाद्रान् परिधीन् वाहुमात्रकान् ॥ ( त्रिपु-रासारसमुच्चयेपि ) स्थण्डिले सिकतानां वाह्ये पात्रे न्यसेत्परिधीन् । ( शारदा-याम् ) प्रादक्षिण्येन सम्पूज्याः तेषु ब्रह्मादिमूर्तयः ॥ इति । ( सौत्रामणीतन्त्रे ) पद्मासनान्तः साधारशक्त्यादिमनुभिः क्रमात् ॥ उपर्युपरि सम्पूज्या वह्नेरासन-शक्तयः ॥ पूर्वादिदलमूलेषु मध्ये पूज्याः क्रमेण तु । ( आसनशक्तयः पूर्वोक्तपीठ-शक्तयः । ) अत्रविशेषउक्तो ( मेरुतन्त्रे ) कुण्डमध्येतु षट्कोणगर्भितं स्वर्णकर्णिकाम् नानाकेशरसंयुक्तं चतुर्द्धारसमावृतम् ॥ चिन्तयेदष्टदलकं चतुरस्रत्रयावृतम् । पूजा पीठं तु तद्वह्नेस्तत्र मण्डूककादिकान् ॥ ज्ञानात्मानं योगपीठं सम्पूज्य ···· इति । ( तथाष्टदलेषुपूर्वोक्तपीठशक्तिपूजनमुक्तम् ) सर्वशक्तिकमलासनाय हृद्वह्नदशाक्षरः । समस्तपीठपूजायां वह्नेर्मंत्रउदाहृतः इति ॥ ( शारदायाम् ) ध्यातं वह्निं यजेन्मध्ये गन्धाद्यैर्मनुना मुना । वैश्वानरजातवेदः पदंपश्चादिहावह ॥ लोहिताक्षपदस्यान्ते सर्वकर्माणि साधय । वह्निजायावधिः प्रोक्तो मन्त्रःपावक वल्लभः ॥ मध्येषट्स्वपि-

पूर्वाग्रैः पूर्वपश्चिमयोः उत्तराग्रैर्दर्भैर्मूलभागान् अग्रभागैराच्छाद-यन् परिस्तरेत् । ततः ( प्राचींविहाय ) दक्षिणोत्तरपश्चिमेषु पला-शादिवृक्षसंभवान् हस्तमात्रान् सविष्टरान् परिधीन् निःक्षिप्य तेषु प्रादक्षिण्येन । ओं ब्रह्मणेनमः । ॐ विष्णवेनमः । ॐ रुद्राय-नमः । इति पूजयेत् ॥ ततो ( मेखलासु ) ॐ वामायैनमः । ॐ ज्येष्ठायैनमः । ॐ रौद्र्यै नमः । ॐ अम्बिकायैनमः॥ इति पूर्वादि-प्रादक्षिण्येन पूजयेत् । ततः "रँ वह्नयेआसनंकल्पयामिनमः" इति आसनं दत्वा ( कुण्डमध्ये ) स चतुर्द्वारं चतुरस्रत्रयावृतमष्ट-दलकमलं विचिन्त्य प्राग्लिखितपीठपूजाक्रमेणाधारशक्त्यादिवह्नि-मण्डलान्तं मण्डूकादिज्ञानात्मान्तं वा सम्पूज्य वन्ह्यासनपद्मस्य पूर्वादिदलमूलेषु मध्ये च पूर्वोक्तनवशक्तीरभ्यर्च्य "रँवन्हेर्योग-पीठायनमः" इति "सर्वशक्तिकमलासनायनमः" ( इतिवा ) मंत्रेण पीठं सम्पूज्य मूलमन्त्रान्ते रँवह्नेर्मूर्तिं कल्पयामिनमः इति मूर्तिं परिकल्प्य पुनर्वह्निं ध्यात्वा ॥ ॐ वैश्वानर जातवेद इहा-वह लोहिताक्ष सर्वकर्माणि साधय स्वाहा ॥ भगवन्नग्ने इहाग-

---

कोणेषु जिह्वाज्वालारुचोयजेत् । ( अत्रषट्सुकोणेषुमध्येच यजेदित्यन्वयः ) कोणेषु ( ईशानादिक्रमः ) इत्युक्तम् ॥ ( सोमशम्भौ ) रुद्रेन्द्रवह्निमांसादवरुणानिलगोचरे । हिरण्याद्याः स्थितावह्नेरसनाः षडनुक्रमात् ॥ मध्यतोवहुरूपा तु ………इति । ( वायवीयसंहितायाम् ) हिरण्या प्रागुदग्जिह्वा कनका पूर्वतःस्थिता । रक्ताग्नेयी नैर्ऋती च कृष्णान्या सुप्रभामता ॥ अतिरिक्ता मरुज्जिह्वा स्वनामस्वगुणप्रभा । त्रिशिखामध्यमाजिह्वा वहुरूपासमाह्वया ॥ तस्थुष्येका दक्षिणतोज्वलन्ती वामतः परा । स्ववीजानन्तरं वाच्या………इति । ( गणेश्वरविमर्षिण्यामपि ) कोणषट्के च मध्ये च जिह्वाः सम्पूजयेत्ततः । हिरण्या तप्तहेमाभा शूलपाणेर्दिशः स्थिता ॥ वैदूर्यवर्णा गगना प्राच्या दिशि व्यवस्थिता । तरुणादित्यसंकाशा रक्ताजिह्वाग्नि-दिक्स्थिता ॥ कृष्णानीलाब्जसंकाशा नैर्ऋत्यां दिशिसंस्थिता । सुप्रभापद्मरागाभा वारुण्यां दिशिसँस्थिता ॥ अतिरिक्ता च कौसुम्भवर्णा वायव्यसंस्थिता । वहुरूपा यथार्थाभा दक्षिणोत्तरसँस्थिता ॥ एता ज्वालारुचातीता वराभयकराअपि ।

च्छागच्छ इत्यावाहयेत् ॥ आद्यन्तयोर्मूलमंत्रोच्चारणं च पूर्वोक्त-प्रमाणसिद्धम् । ( ततः ) रँ आवाहितोभव, संस्थापितोभव, इत्यादिक्रमेणावाहनादिरुद्राः प्रदर्श्य प्राणप्रतिष्ठां कुर्य्यात् ॥ तद् यथा ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः सोऽहं रँ वह्नेः प्राणाइह २ स्थिताः । एवं जीव इह २ स्थितः । ( एवम् ) सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणाः इहागत्य सुखं चिरन्तिष्ठन्तु स्वाहा । एवं प्राणप्रतिष्ठां विधाय ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इदं ( पाद्यं ) वह्नये नमः इत्यादिक्रमेण पाद्यार्घाचमन, स्नान, गन्ध, पुष्प, धूपदीपनैवेद्यताम्बूलानि निवेद्य श्रीपादुकां पूजयामि नमः ॥ इति पुष्पाञ्जलिना वारत्रयमभ्यर्च्य । आवरणार्चनं कुर्य्यात् । तद्यथा षट्कोणेषु मध्ये च ईशानादिक्रमेण हिरण्यादिसप्तजिह्वाः पूजयेत् ( यथा ) स्प्रूँ हिरण्यायै नमः । ( ईशे ) घ्प्रूँ गगनायैनमः ( प्राचि ) श्प्रूँ रक्तायैनमः ( वह्नौ ) व्प्रूँ कृष्णायैनमः ( नैर्ऋत्य ) ल्प्रूँ सुप्रभायैनमः ( पश्चिमे ) प्रूँ वहुरूपायैनमः ( वायव्ये ) घ्प्रूँ अतिरिक्तायैनमो ( मध्ये ) इति प्रथमावरणम् । [ वैष्णवेतु ] प्रभा, दीप्तिः, प्रकाशा, मरीचिस्ता-

---

( त्रिपुरासारसमुच्चयेऽपि ) सुतप्तचामीकरचारुवर्णा स्थिताहिरण्यादिशिशूलपाणेः । वैदूर्यवर्णाकनकाभिधाना या सा निषण्णा दिशिवासवस्य ॥ या रक्तातरुणदिवाकराभवर्णा साजिह्वा हरितिसुसंस्थिताकृशानोः । या कृष्णा विकसितनीलनीरजाभा सारक्तः परिवृतदिग्विभागलग्ना ॥ पद्मरागसदृशप्रभोज्वला सुप्रभावरुणादिश्यवस्थिता । या महारजतपुष्पसन्निभा गन्धवाहदिशि सातिरक्तिका ॥ यथार्थसंज्ञा-वहुरूपिका सा जिह्वोत्तरेदक्षिणातः स्थिता सा । होमे विशेषउक्तो ( गणेशविव षि-ण्याम् ) पयांसि च हिरण्यायां गगनायां चरुं घृतम् । सिद्धार्थं वहुरूपायां रक्तायां तु यवास्तथा ॥ कृष्णायां तु हुनेलाजाः सुप्रभायान्तु सक्तुभिः । तिलांश्चैवातिरिक्तायां कनकायांतु सर्वदा ॥ सर्वद्रव्याणि जुहुयात् साधकः सर्वकर्मसु । तंत्रान्तरे । फलन्तु कामभेदेन क्रमादासां समुदीर्यते । वश्याकर्षणयोरासां गगनास्तम्भने-

पिनी, कराला, लेलिहाना, चेति सप्तजिह्वाः [ उक्तदिक्षु ] तैरेव-बीजैः पुरस्कृत्य पूजयेत् । ततः केशरेष्वङ्गदेवताः पूजयेत् । [यथा] ॐ सहस्रार्चिषे हृदयायनमः [ आग्नेये ] ओं स्वस्तिपूर्णाय शिरसे स्वाहा [ ईशाने ] ओं उत्तिष्ठपुरुषाय शिखायै वषट् ( नैर्ऋत्ये ) ओं धूमव्यापिने कवचाय हुँ ( वायव्ये ) ओं सप्तजिह्वाय नेत्र-त्रयाय वौषट् ( मध्ये ) ( वैष्णवादौतु ) नेत्राभ्यामिति ज्ञेयम् । ( चतुर्दिक्षु धनुर्धराधास्त्रायफट् । इति सम्पूजयेत् इतिद्वितीया-वरणम् । ततः ( पूर्वादिदलेषु ) ॐ अग्नये जातवेदसे नमः ॐ अग्नये सप्तजिह्वाय नमः । ओं अग्नये हव्यवाहनायनमः । ओं अग्नये अश्वोदरजाय नमः ओं अग्नये वैश्वानराय नमः । ओं अग्नये कौमारतेजसे नमः ॐ अग्नये विश्वमुखाय नमः । ओं अग्नये देवमुखाय नमः । एवं अग्नये अष्टमूर्तीः पूजयेत् पूर्वादिदलेषु ॥ इति तृतीयावरणम् । ततः मेखलाश्रितदर्भेषु पूर्वादिक्रमेणेन्द्रादीन् लोकपालान् पूजयेत् इति चतुर्थावरणम् ॥ ततस्तद्बहिः वज्रादीनायुधान् पूजयेत् । ❀इति पञ्चमावरणम्❀ [ ततः ] ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा ॥ साङ्गाय सायुधाय सवाहनाय सालंकाराय सपरिवाराय वह्नये श्रीपादुकां पूजयामि नमः इति वह्निपादुकां पूजयेत् ॥ इति वह्निस्थापनम् ॥

---

मता ॥ विद्वेषमोहयोः रक्ता कृष्णामारणकर्मसु । सुप्रभा शान्तिके पुष्टौ सुरक्तो-च्चाटनेमता ॥ एकैकवहुरूपातु सर्वकामफलप्रदा । ( मेरुतन्त्रे ) यथा कार्यं तथा जिह्वा दृश्यतेचेत्स्वदिग्गता । ज्वालारूपा तथा सिद्धिर्विपरीते विपर्ययः ॥ ( वैष्ण-वेतुजिह्वान्तराण्युक्तानितत्रैव ) प्रभादीप्तिः प्रकाशाच मरीचिस्तापनी तथा । कराला लेलिहा चेति जिह्वा वैष्णवकर्मणि ॥ ईशप्राग्वह्निनैर्ऋत्यपश्चाद्वायव्यमध्यतः । संस्थिता सकला जिह्वा वराभयलसत्करा ॥ ( शारदायाम् ) केशरेषूक्तमार्गेण पूजयेदङ्गदेवताः । दलेषु पूजयेन्मूर्तिं शक्तिस्वस्तिकधारिणीम् ॥ लोकपालांस्ततो [illegible]दर्भोपरिकार्या ) दिक्षु पूजयेदुक्तलक्षणात् ॥ ( अत्र लोकपालपूजा [illegible]

## ॥ अथ तान्त्रिककुशकण्डिका, पात्रासादनं च ॥

स्ववामभागे प्रागग्रान् दर्भानास्तीर्य तदुपर्यस्त्रमन्त्रितजलेन प्रक्षालितानि युग्मरूपाणि स्रुक्स्रुवप्रोक्षणीप्रणीताज्यस्थाली, चरुस्थाल्यादिपात्राण्यधोमुखीकृत्य विन्यसेत् [ यद्यपि पूजोपयुक्त-प्रोक्षणीपात्रस्य स्वदक्षिणेस्थापनमुक्तं ( तथाऽपि ) होमोपयुक्तं तत्प्रणीतादिपात्रवद्वामएव स्थापनीयम् ॥ स्रुक्स्रुवयोरेव दक्षिणेऽभिधानादिति [ श्री विद्यापद्धतौ स्रुक्स्रुवावपि पूर्वं वाम-एवासाद्य संस्कारोत्तरं दक्षिणे स्थाप्यौ इति ] ततस्तानि पात्राणि

---

तदुक्तं ( तंत्रान्तरे ) कोणे षट्के च मध्ये च जिह्वाभिः केशरेष्वपि । अङ्गमंत्रैस्ततो वाह्ये त्वष्टाभिर्मूर्तिभिः क्रमात् । मेखलाश्रितदर्भेषु दिक्पतीन् पूर्वतोयजेत् ॥ तदा-युधानि तद्वाह्ये चैवंस्युरङ्गदेवताः ॥ इति ॥ केशरेष्वंगपूजास्यादलेष्वष्ट सुमूर्तयः मातरोष्टौदलान्तेषुभैरवाः स्युस्तदग्रतः धरापुरेतुशक्राद्यावज्राद्यायुधसंयुताः । एव-मावरणैर्युक्तंसप्तभिः पावकंयजेदितिमंत्रमहादधौ । असिताङ्गोरुश्चण्डः क्रोधउन्मत्त-संज्ञकः । कपालीभीषणश्चापि संहारश्चाष्टभैरवाः ।

## अथ पात्रासादनम् ।

( तत्वसारसंहितायाम् ) पात्राण्यासाद्य विधिवद्वद्वुशश्चापि मंत्रवित् । तान्य-वेक्ष्य पवित्रेण चोत्तानानि विधाय च ॥ पुनः प्रक्षालयेत्पात्रं परिपूर्यशुभाम्बुना । दत्वाऽक्षतान् पवित्रं च तदुत्पूर्य निधापयेत् ॥ दिश्युत्तरस्यां तत्पात्रं प्रणीतेत्युच्य-ते बुधैः । ततः किञ्चित्प्रणीताम्बु प्रोक्षण्यादाय तज्जलैः ॥ यज्ञसाधनसं-भारं प्रोक्ष येन्मूलमंत्रतः ॥ ततो ब्रह्माणमावाह्याभ्यर्चयेन्मूलमन्त्रतः । ( अन्यत्रापि ) वामेचास्तीर्य दर्भान् वलरिपुहरिदग्राँस्तदूर्ध्वं निधाय-पात्राणि द्वन्द्वशोऽधोवदनमथ तथोत्तानवक्त्राणि कृत्वा । हृन्मंत्रेणाभिपूर्यान्य-तममथजलैर्मन्त्रपूतैरथैभिरभ्युक्ष्यान्यैश्च कूर्चैः सकलमपि हृदा सम्यगं हव्यजातम् ( तन्त्रान्तरे । ) कुण्डस्योत्तरतः स्थाप्या प्रणीतावारिपूरिता । प्रणीतापात्रतः सर्वं स्थाप्याः पात्रगणाक्रमात् ॥ आज्यस्थाली चरुस्थाली गव्यक्षीरसमन्विता । स्रुक्स्रुवौ च घृतं गव्यं तण्डुलाः कुशमूलकाः । पलाशाः समिधस्तिलाः पूर्णपात्र-

पवित्रेणोत्तानानि विधाय पुनः प्रक्षाल्य सामान्यर्घजलेन सम्प्रोक्ष्य [नमः]इति हृन्मन्त्रेण शुद्धजलं गृहीत्वा तन्मंत्रमेवोच्चरन् प्रोक्षणी-पात्रमापूर्य आधारपात्रजलेषु क्रमेण विम्बत्रयमभ्यर्चयेत्। ततः ॐ गङ्गेचयमुनेचैव ॥ इत्यादिना शङ्खमुद्रया सूर्यमण्डलात् तीर्थमा-वाह्य अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य प्रणवेन गन्धपुष्पाक्षतपवि-त्राणि निःक्षिप्य कूर्चं निधाय प्रणवेनाष्टधाभिमंत्र्य धेनुमुद्रा-म्प्रदर्श्य प्रणीतापात्रमपि शुद्धजलेनापूर्य गन्धपुष्पाक्षतपवित्राणि निःक्षिपेत् । ततः प्रणीतापात्रस्थं किञ्चिज्जलं प्रोक्षणीपात्रे निः क्षिप्य तज्जलेन हृन्मनुना मूलमंत्रेण च यागद्रव्याणि प्रोक्षयेत् । इति पात्रासादनम् ॥ ततोब्रह्मावरणम् । ( यथा ) ब्राह्मणं कुण्ड-

---

मतः परम् ॥ ( मेरुतंत्रे ) स्वगृह्योक्तविधानेन वायुदेशाच्च पूर्वतः । स्रुक्स्रुवौ च प्रणीता च प्रोक्षणीपात्रयुग्मकम् ॥ आज्यस्थालीं च परिधीनिध्मं च कुशमुष्टयः । अधोमुखानिपात्राणि होमद्रव्यं वलिन्तथा ॥ गन्धपुष्पाक्षतादीनि सर्वाण्यासादये-दथ । तान्यभ्युक्ष्य पवित्रेण चोत्तानानि निधाय च ॥ प्रोक्षणीपात्र युगलं परिपूर्य शुभाम्बुना । (तन्त्रान्तरे) स्ववामभागे प्रागग्रान दर्भानास्तीर्यचोपरि । यथावित्तानु-सारेण सौवर्णादीनिकर्मणि ॥ अधोमुखानि पात्राणि द्वन्द्वरूपाणि विन्न्यसेत् । उत्तानि कृत्यपात्राणिं जलाद्यैः संप्रपूरयेत् ॥ ( यामले ) वह्नेरुत्तरतः स्वस्यवामे देशिकसत्तमः दर्भानास्तीर्य पूर्वाग्रान् पात्राण्यासादयेदथ ॥ ( स्वस्येतिपूर्वाभिमुख-स्येति वेदितव्यम् । ) ( त्रिपुरासारसमुच्चयेपि ) ततोवामभागे परिस्तीर्य दर्भान् पुलोमात्मजावल्लभाशागताग्रान् । तदूर्ध्वंन्यसेद्द्वन्द्वरूपेणपात्राण्यथोऽधोगता-स्यानि सर्वाणि धीमान् ॥ अथोत्तानानि तेष्वेषु पात्रेषु पात्र जलैरेकमापूर्य तीर्थानि तत्र । सुसंचिन्त्य तैः प्रोक्षयेत् कूर्चदर्भैर्ह्र दासव्यभागस्थितं द्रव्यजातम् ॥ ( पात्रे ष्वपिविशेषस्तत्रैव ) सौवर्णान्यपि राजतान्यपि तथा पात्राणि शैल्वानि वा मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह । शैल्वक्षद्रुमशिग्रुभूरुहकृता न्येतानि विद्वेषिणोच्चाटोत्सादनमारणादिषु भृशं शस्तानि पात्राण्यपि ॥ [ शैल्वं ताम्रम् । शिग्रुर्वंहुवारकः । अक्षद्रुमोविभीतकद्रुमः । शिग्रुःशोभाञ्जनः । ] इति पात्रासादन विधिः । वृणुयाद्ब्राह्मणं शान्त देवतामंत्र[illegible]तम् । कुण्डस्यदक्षिणे

दक्षिणभागे कुशासने उपवेश्य ॐ अद्येत्यादि अमुकगोत्रोऽमुक-शर्मा देवोवा अमुकदेवतायज्ञकर्माङ्गभूतेऽस्मिन्होमकर्म्मणि अमुक-गोत्रममुकशर्माणं भवन्तं ब्रह्माणं अहं वृणे । ( दीक्षायागेतु ) तद्देवतामंत्रदीक्षितमेव ब्रह्मत्वेन वृणु यात् इति ( ततः वृतोऽस्मि ) इति प्रतिवचनम् । ( अथवा ) कुशवटुमेव ब्रह्मस्थाने निवेशये-द्वरयेच्चेति । ततः ॐ नमोब्रह्मणे इति मंत्रेण गन्धादिभिः वासोऽ-लङ्कारादिभिश्च ब्रह्माणं पूजयेत् ॥ ततः स्रुक्स्रुवौ संस्कुर्य्यात् । ( यथा ) ऊर्ध्वमुखौ स्रुक्स्रुवौ हस्ताभ्यां गृहीत्वाऽधोमुखौ विधाय वारत्रयमग्नौप्रताप्य वामहस्तेन तौ धृत्वा दक्षिणहस्तेन दर्भानादाय तैर्दर्भैस्तयोरग्रमूलमध्यानि शोधयेत् ॥ शोधनक्रमश्चअग्रेणाग्रं मूलेन मूलं मध्येन मध्यमिति । ततः सामान्यार्घप्रोक्षणीजलाभ्यां सम्प्रोक्ष्य

---

भागे वेशयेत् तं कुशासने ॥ अमुकामुकगोत्रोहममुकामुकगोत्रिणम् । दीक्षाङ्गभूत-होमेस्मिन् ब्रह्माणं त्वां वृणे इति ॥ [ देवतामंत्रदीक्षितम् यस्यादेवतायादीक्षाविधि-र्भवेत्तस्यामंत्रेण दीक्षितम् इति दीक्षाङ्गभूतहोमेस्मिन् इति दीक्षा प्रकरणे एव जानीयात् ( अन्यत्रतु ) यज्ञाङ्गभूतहोमेस्मिन्निति दीक्षाङ्गभूतेत्युपलक्षणम् । ( वस्तुतस्तु ) दीक्षायागादितरयागे देवता मंत्रदीक्षितम् इति अनावश्यकम् याद्द-शोयागस्तद्विधिज्ञोब्रह्मेति तात्पर्यार्थः ॥ तथादीक्षाशब्दोप्युपलक्षण एव । ] तार-हृत्पूर्वकोङेन्तोब्रह्मामंत्रोऽस्यपूजने । इतिमन्त्रमहादधौ । ( शारदायाम् ) पश्चा-दादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ । त्रिशः प्रतापयेद्वह्नौ दर्भानादाय देशिकः तदग्रमूलमध्यानि शोधयेत्तैर्यथाक्रमम् । गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ । पुनः प्रताप्य तौ मन्त्री दर्भानग्नौविनिक्षिपेत् ॥ आत्मनो दक्षिणेभागे स्थापयेत्तौ कुशास्तरे । ( मेरुतन्त्रे ) कुशाग्रैश्च तयोरग्रं मध्यं मध्यैश्च मार्जयेत् । मूलं मूलैस्त्रि-धाचैवं मार्जयित्वा प्रतापयेत् ॥ धृत्वा तौ वामहस्तेन प्रोक्षयेत्प्रोक्षणी जलैः । दक्षिणेन कराग्रेण पुनः सन्तापयेच्च तौ ॥ कुशान् क्षिप्त्वा ततो वह्नौ स्वदक्षे तौ कुशास्तरे । संस्थाप्य स्रुकस्रुवौ पश्चाद् घृतसंस्कारमाचरेत् ॥ इति ॥ ( शारदा-याम् ) आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा । तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः ॥ ( तन्त्रान्तरे ) गव्यमाज्यं समादाय मूलेनैवाभिमन्त्रितम् । स्वकां

पुनर्वह्नौ प्रताप्य दर्भानग्नौ प्रक्षिपेत् ततः स्वदक्षिणेकुशानास्तीर्य तदुपरि तौ स्थापयेत् ॥ तत आज्यं सँस्कुर्य्यात् ॥ ( तद्यथा ) आज्यस्थालीमादायास्त्रमन्त्रितजलेन सम्प्रोक्ष्य तस्यामाज्यं निधाय मूलमंत्रेण वीक्ष्य ( अस्त्रायफट् ) इति सम्प्रोक्ष्य तेनैव मंत्रेण दर्भैः सन्ताड्य हुँ इत्यर्घजलेनाभ्युक्षणं कुर्यात् ॥ इति संस्कारचतुष्टयं कृत्वा कुण्डादङ्गारानुद्धृत्य वायुकोणे सँस्थाप्य तेष्वङ्गारेषु ( नमः ) इति मन्त्रेणआज्यस्थाल्यां स्थापयेत् इदं तापनम् । ततोदर्भयुगलं प्रज्वाल्याज्ये निःक्षिप्य दग्धशेषम् ( नमः ) इति मंत्रेण वन्हौ निःक्षिपेत् इदं पवित्रीकरणम् । पुनर्ज्वलितेन दर्भयुगलेन हुँ इति मन्त्रमुच्चरन् घृतं नीराज्य अग्नौ निःक्षिपेत् । "इत्यभिद्योतनम्" । ततः प्रज्वलितदर्भमुष्टिं गृहीत्वा ( अस्त्रायफट् ) इतिमंत्रमुच्चरन् प्रदर्श्याग्नौ प्रक्षिपेत् "इत्युद्योतनम्" तस्मादङ्गारादाज्यस्थालीमानीयात्मसंमुखे संस्थाप्य तानङ्गारानग्नौ प्रक्षि-

---

ब्रह्ममयीं मूर्तिं संचिन्त्याग्नौ प्रतापयेत् ॥ गव्यमित्युत्तमकल्पमभिप्रेत्योक्तम् । तदुक्तं ( पिङ्गलामते ) उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवम् । अधमं छागलीजातं तस्माद्गव्यंप्रशस्यते ॥ इति । ( वायवीयसंहितायाम् ) न्यस्य मंत्रं घृते मुद्रां दर्शयेद्धेनुसंज्ञकाम् । ( शारदायाम् ) निरुह्य वायवेङ्गारान् ह्रदातेषु निवेदयेत् । इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः ॥ संदीप्य दर्भयुगलमाज्ये क्षिप्त्वाऽनलेक्षिपेत् । गुरुर्हृदयमंत्रेण पवित्रीकरणन्त्विदम् ॥ दीप्तेन दर्भयुग्मेन नीराज्याज्यंसवर्म्मणा । अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् ॥ घृतेप्रज्वलितान् दर्भान् प्रदर्श्याणुना गुरुः । जातवेदसितान्यस्येदुद्योतनमिदं स्मृतम् ॥ गृहीत्वा घृतमङ्गारान् प्रयोज्याग्नौ जलं स्पृशेत् । अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौप्रादेशसम्मितौ ॥ धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनन्त्विदम् । तद्वद्धृदयमंत्रेण कुशाभ्यामात्मसंमुखम् ॥ घृते सम्प्लवनं कुर्यात् संस्काराः षडुदीरिता । अङ्गुष्ठोपकनिष्ठाभ्यामिति हस्तद्वयस्येति शेषः । उत्पुनीयादिति अग्निसंमुखमिति शेषः । ] तदुक्तं ( शैवागमे ) प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः । धृताभ्यां संमुखं वह्नेः अस्त्रेणोत्प्लवमाचरेत् ॥ (शारदायाम्) प्रादेशमात्रं सद्ग्रन्थिदर्भयुग्मं घृतान्तरे । निःदिप्यनामौ द्वौ कृत्वा पत्तौ शुक्ल-

प्याङ्गारस्थानमार्जनं कृत्वा जलं स्पृशेत् । तत उत्तानहस्तयोरङ्गुष्ठोपकनिष्ठाभ्यां प्रादेशमात्रं पवित्रं पृथक् पृथक् धृत्वा अस्त्राय फट् इति मन्त्रमुच्चरन् वह्नेः सम्मुखमुत्प्लुनीयात् ॥ ततः पवित्रं स्थानान्तरे संस्थाप्य पुनस्तेनैव प्रकारेण दर्भद्वयं गृहीत्वा तेन दर्भयुग्मेन,(नमः) इति मन्त्रमुच्चरन् आत्मसम्मुखं घृतं सम्प्लाव्य पूर्वस्थापितपवित्रद्वयमेतत्पवित्रयुग्मं च वह्नौ क्षिपेत् ॥ इत्युत्प्लवनसम्प्लवने' उभयमपि प्लावनमेव ततः प्रादेशमात्रं सग्रन्थिदर्भयुगलमाज्यस्थाल्यां घृतमध्ये निःक्षिप्याज्यदक्षिणभागं शुक्लपक्षमाज्यवामभागं कृष्णपक्षं विचिन्त्य वामे इडां दक्षिणे पिङ्गलां मध्ये सुषुम्णां ध्यात्वा होमं कुर्य्यात् । यथा स्रुवेण ( नमः ) इति मन्त्रमुच्चरन्दक्षिणभागाद् घृतमादाय ॐ अग्नये स्वाहा अग्नये इदंनमम ॥ इत्यग्नेर्दक्षिणलोचनेजुहुयात् । सम्पातमाज्यं तत्रैव दक्षिणभागे निः क्षिपेत् । पुनः ( नमः ) इतिवामभागाद् घृतमानीय ॥ ॐ सोमाय स्वाहा सोमायेदं नमम ॥ इति वामलोचने जुहुयात । सम्पातमाज्यं तत्रैव वामभागे स्थापयेत् । पुन-

---

तरौ स्मरेत् ॥ वामे नाडीमिडां भागेदक्षिणे पिङ्गलां पुनः । सुषुम्णां मध्यतोध्यात्वा कुर्य्याद्धोमं यथाविधि ॥ ( शारदायाम् ) मध्यादाज्यं समादाय वह्नेर्भालविलोचने जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना ॥ हृन्मंत्रेण स्रुवेणाज्यं भागादादाय दक्षिणात् । जुहुयादग्नयेस्विष्टकृते स्वाहेति तन्मुखे ॥ हेतिं संपादयेद्भागेष्वाज्यस्याथाहुतिक्रमात् । इत्यग्निनेत्रवक्त्राणां कुर्य्यादुद्योतनं गुरुः । ( संपादयेद्भागेष्विति ) यस्माद्भागादाज्यं गृहीत्वा हुतं तद्भागे हुतशेषं क्षिपेदित्यर्थः । तदुक्तम् ( शैवागमे ) स्वाहेत्यग्नौ हेतिशेषभागमाज्यं क्षिपेत् क्रमात् । इति ( शारदायान्तु– स्वाहा इति हुत्वा हा इति हुत शेषं क्षिपेदिति उक्तम् तत्रापि स्वा इति हुत्वा हा इति हुत शेषं संपादयेदिति प्रतिभाति । (इति पुरश्चर्य्यार्णवे) (शारदायाम्) सताराभिर्व्याहृतिभिराज्येन जुहुयात्पुनः । (अत्र) ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वःस्वाहा । ॐ भूर्भुवः स्वः स्वाहेति व्यस्तसमस्ताभिः पंचाहुतयः पंचभिर्मनुभिर्हुनेदिति नारायणीयतन्त्रे । (उड्डीश) देव्याव्याहृतिहोमं च ताराद्येन चतुर्हुनेत । भूरग्नये पृथिव्यै च

रेवं मध्यभागात् घृतमादाय ॥ ॐ अग्नीषोमाभ्यां स्वाहा अग्नीषोमाभ्यामिदं नमम॥ इति वह्नेर्ललाटे नेत्रे हुत्वा संपातमाज्यं पूर्ववन्मध्यभागे क्षिपेत् । ( वैष्णवादौतु ) ललाटनेत्राहुतिं न कुर्य्यात् । ( तत्रापि ) श्रीनृसिंहचरणाराधनोपयुक्तहोमे तु कुर्य्यादेव ॥ नेत्रत्रयोद्भासमानं परमात्मानमच्युतम् । श्रीनृसिंहमहं वन्दे देवदेवं वृषाकपिम् ॥ ( इत्युक्तत्वात् ) तत्रापि प्रज्ज्वलद्वह्निनेत्राभ्यां दहन्निवजगत्त्रयम् इत्यादिद्विनेत्रध्यानपक्षे तु नेत्राहुतिर्न कार्या । ( इत्युपलक्षणं ) सर्वेषु प्रयोगेषुध्यानवशादेव नेत्राहुतिरिति निष्कर्षः । ॥ पुनः ( नमः ) इति दक्षिणभागादाज्यमादाय ॥ ॐ अग्नये स्विष्टकृते स्वाहा अग्नये स्विष्टकृते इदं नमम ॥ इति वह्नेर्वक्त्रे जुहुयात् । ततः प्रणवयुक्ताभिर्व्यस्तसमस्ताभिर्व्याहृतिभिः पञ्चाहुतीर्दद्यात् । तद्यथा ॥ ॐ स्वाहा, भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, ॐ भूर्भुवः स्वः स्वाहा ॥ इति हुत्वा ॥ ॐ वैश्वानर जातवेदसे इहावहलोहिताक्ष सर्वकर्म्माणि साधय स्वाहा ॥ इत्यग्निमंत्रेणाहुतित्रयं दत्वा वह्नेर्गर्भाधानादिषोडशसंस्कारान् कुर्य्यात् ॥ ( यथा ) ॐ अग्नेर्गर्भाधानं सम्पादयामि स्वाहा । इत्यष्टाहुतीर्जुहुयात् । एवमग्रेपि । ॐ अग्नेःपुंसवनं सम्पादयामि स्वाहा ॥ ८ ॥ ओं अग्नेः सीमन्तोन्नयनं सम्पादयामि

---

महते वह्निवल्लभा ॥ भुवः पादाद्वायवे च अन्तरिक्षाय शब्दतः । अग्न्यादित्यचन्द्र-मसोऽङ्गेन्ता नक्षत्र इत्यपि ॥ भ्वसन्तश्चैव दिग्भ्यश्च महते वह्निवल्लभा । ( मेरौ ) गर्भाधानं पुंसवनं सीमन्तोन्नयनं चरेत् । जातं वागीश्वरी गर्भात् प्राग्वद्ध्यायेद्धुताशनम् । जातकर्म ततः कृत्वा नालच्छेदं समाचरेत् ॥ सूतकं शोधयित्वाऽथ कुर्य्यान्नामयथाविधि । तृप्तयेयस्यदेवस्यास्त्यग्निस्तन्नामपूर्वकं ॥ चौलोपनयनं वह्नेर्महानाम्नीव्रतं तथा । महाव्रतं चोपनिषद्व्रतं गोदानमेव च ॥ समावर्तनमुद्वाहः शाक्तेर्वाग्भवपूर्वकाः । ( तथा ) प्रणवं पूर्वमुच्चार्य कर्मनामसमुद्धरेत् । संपादयामि स्वाहेति सर्वकर्मस्वयं विधिः ॥ ( शारदायाम् ) शुभेषु स्युर्विवाहान्ताः क्रियास्ताः सर्वकर्मसु । मरणान्ताः समुद्दिष्टाः वह्नेरागमवेदिभिः ॥ ( उड्डीशे ) जातकर्म समा-

स्वाहा ॥८॥ ओं अग्नेः जातकर्म संपादयामि स्वाहा ॥८॥ इति जातकर्माहुतीर्हुत्वा ओं अग्नेर्नालच्छेदं संपादयामि फट् स्वाहा। इति मूलाग्रयोः घृतसम्प्लुताः पञ्चसमिधोजुहुयात् ।, ततः। ओं वह्नेः सूतकं शोधयामि स्वाहा ॥ इत्येकाहुतिं दत्वा स्वेष्टदेवता-नाम्नावह्नेत्वममुकनामासि इतिनामकृत्वा वह्नीष्टदेवतयोरैक्यं विचिन्त्य ॐ अग्नेर्नामकरणं संपादयायि स्वाहा ॥ इति पूर्ववदष्टा-हुतीर्जुहुयादिति। ओं अग्नेत्वं शिवनामासि। अग्ने त्वं वरदनामा-सि। त्वं विश्वरूपनामासि। इत्यादिनामसंस्कारं प्रयोगोक्तं कुर्यात् ( शतचण्डीप्रयोगे ) त्वं शतमंगलनामासि ( श्रीविद्या-प्रयोगेतु ) त्वं कामाग्निनामाऽसि। इति नाम कुर्य्यात्। इत्यादि ततः। ॐ अग्नेः निष्क्रमणं संपादयामि स्वाहा। एवमग्नेरन्नप्रा-शनम्, चूडाकरणम्, अग्नेरुपनयनम्, महानाम्न्यव्रतम्, महाव्रतम्, उपनिषद्व्रतम्, गोदानव्रतम्, समावर्तनम्, विवाहम्, इति सर्वत्र ॐ अग्नेरादौ सम्पादयामीतिपश्चात्ततः स्वाहेत्युक्त्वा सर्वत्राष्टा-हुतीर्जुहुयात्। ततः मूलाग्रयोर्घृतसम्प्लुतां समिधमादाय। ओं ह्रीं वागीशवागीश्वरीभ्यां स्वाहा। इति त्रिवारं जुहुयात्। ( त-तोग्नेः ) पितरौ वागीश्वरौ पूर्ववत् पञ्चोपचारैः संपूज्य प्रणम्य स्वहृदये ( उद्वासयेत ) ततोवह्नेः सप्तसु जिह्वासु तन्मंत्रैरेकैका-

---

ध्याथ श्रमापनोदनाय च। प्रादेशमात्रां समिधं मूलाग्रघृतसम्प्लुताम् ॥ ॐ कामे-श्वरकामेशीभ्यां स्वाहेति त्रिर्विनिःक्षिपेत्। वह्नेश्च पितरौमंत्री स्वदेहे विनियोज-येत् ॥ इष्टदेवस्यनाम्नातु वह्नेर्नाम समाचरेत्। कामेश्वरकामेश्वरीभ्यामिति श्री विद्यायाम् ( अन्यत्रतु ) वागीश्वरवागीश्वरीभ्यामितिज्ञेयम्। ( पूर्णयागे ) आज्या-हुत्यष्टकं हुत्वा नामकर्मसमाचरेत्। देशिकस्त्वमुकोसीति मूलमंत्रेण कल्पयेदिति ॥ ( वायवीयसंहितायाम् ) जातं ध्यात्वैवमाकारं जातकर्म समाचरेत्। नालापनयनं कृत्वा ततः संशोध्य सूतकम् ॥ शिवाग्निरितिनामास्य कृत्वाहुतिपुरः सरम्। पित्रोर्विसर्जनं कृत्वा चूडोपनयनादिकम् ॥ अथोद्वाहावसानं च कृत्वा सँस्कार-मस्य तु। नालापनयनप्रकारस्तु ( शैवागमे ) वह्नेरिहास्त्रमंत्रेण ततोनालापनुत्तये।

माहुतिं दद्यात् ( यथा ) स्प्रूँ हिरण्यायै स्वाहा । ष्प्रूँ गगनायै स्वाहा । श्प्रूँ रक्तायै स्वाहा । व्प्रूँ कृष्णायै स्वाहा ।। ल्प्रूँ सुप्रभायै स्वाहा । र्प्रूँ बहुरूपायै स्वाहा । य्प्रूँ अतिरिक्तायै स्वाहा । इति सप्तजिह्वामन्त्रेण जुहुयात् । ( ततोऽङ्गमंत्रैर्जुहुयात) तद्यथा ॐ सहस्रार्चिषे हृदयाय नमः स्वाहा ( एवं क्रमेण जुहुयात् । ) ॐ स्वस्तिपूर्णाय शिरसे स्वाहा । ॐ उत्तिष्ठपुरुषाय शिखायै वषट् स्वाहा । ॐ धूमव्यापिने कवचाय हुँ स्वाहा । ॐ सप्तजिह्वाय नेत्र त्रयाय वौषट्स्वाहा । ( वैष्णवादौतु ) नेत्राभ्यामितिज्ञेयम् ॥ ॐ धनुर्धरायास्त्राय फट् स्वाहा । ततो वह्नेर्मूर्तिमंत्रैर्जुहुयात् । (तद्यथा ) ॐ अग्नये जातवेदसे स्वाहा ॐ अग्नये सप्तजिह्वाय स्वाहा । ओंअग्नये हव्यवाहनाय स्वाहा । ॐ अग्नये अश्वोदरजाय स्वाहा । ॐ अग्नये वैश्वनराय स्वाहा । ॐ अग्नये कौमारतेजसे स्वाहा ; ॐ अग्नये विश्वमुखाय स्वाहा । ओं अग्नये देवमुखाय स्वाहा ॥ इति हुत्वा ( तदनन्तरम् ) ॐ इन्द्रायस्वाहा । ॐ अग्नये स्वाहा । ॐ यमाय स्वाहा । ॐ वरुणाय स्वाहा । ॐ नैर्ऋतये स्वाहा । ॐ वायवे स्वाहा । ओं कुवेराय स्वाहा । ओं ईशानाय स्वाहा । ओं ब्रह्मणे स्वाहा । ओं अनन्ताय स्वाहा । ओं वज्राय

---

समिधः पञ्च जुहुयात् प्रान्ते मूलेघृतप्लुताः ॥ इति । ( वायवीयसंहितायाम् ) ताः पालाश्यः परावाऽपि याज्ञीयाद्वादशाङ्गुलाः । अवक्राः न स्वयंशुष्काः सत्वचोनिर्व्रणाः समाः ॥ दशाङ्गुला वा विहिताः कनिष्ठाङ्गुलिसंमिताः । प्रादेशमात्रावाऽलाभे होतव्याः सकला अपि । इति । ( मेरुतंत्रे ) सवीजरसना नाम्ना चैकैकमाहुतिं हुनेत् । ततश्चाङ्गानि जुहुयात् वह्नेर्मूर्त्यष्टकं तथा ॥ इन्द्रादिलोकपालांश्च आयुधानि ततः परम् । मंत्रेणोंकारपूर्वेण स्वाहान्तेनविचक्षणः ॥ स्वाहावसाने जुहुयाद्ध्यायन् वै मंत्रदेवताम् । स्वाहान्तमंत्रे तु स्वाहान्तरं न देयम् तदुक्तं (मन्त्रप्रकाशे) नमोन्ते न नमोदद्याद्द्विठान्ते द्विठमेव च । पूजायामाहुतौ चापि सर्वत्रायं विधिः शिवे ॥ [ द्विठः स्वाहा । अत्र ठकारेण लिपिसाम्याद्विन्दुरुच्यते । विन्दुद्वयं विसर्गः । सच शक्तिरूपस्तेन द्विठशब्दनाग्निशक्तिः स्वाहोच्यतइति राघव भट्टः ।

स्वाहा । ओं शक्तये स्वाहा । ओं दण्डाय स्वाहा । ओं खड्गाय स्वाहा । ओं पाशायं स्वाहा । ओं अङ्कुशाय स्वाहा । ओं गदायै स्वाहा । ओं त्रिशूलाय स्वाहा । ॐ पद्माय स्वाहा । ॐ चक्राय स्वाहा । इति हुत्वा । ततः स्रुवेण चतुर्वारमाज्यमादाय स्रुचि निधाय स्रुवेण पिधाय शृङ्गाग्रे पुष्पाणि दत्वोत्तिष्ठेत् । ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा वौषट् इति वौषडन्तेनाग्निमंत्रेण जुहुयात् । ततोमहागणपतिमंत्रेण दशधाविभक्तेन दशाहुतीर्जुहुयात् । ( तद्यथा ) ओं स्वाहा । ओं श्रीँ स्वाहा । ओं श्रीँ ह्रीँ स्वाहा । ओं श्रीँ ह्रीँ क्लीँ स्वाहा । ओं श्रीँ ह्रीँ क्लीँ ग्लौँ स्वाहा । ओं श्रीँ ह्रीँ क्लीँ ग्लौँ गँ स्वाहा । ओं श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये स्वाहा । ओं श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतये वरवरद स्वाहा । ओं श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतयेवरवरदसर्वजनं मे स्वाहा । ओं श्री ह्रीँ क्लीँ ग्लौ गं गणपतयेवरवरदसर्वजनं मे वशमानय स्वाहा ॥ इति हुत्वा पुनस्तेनैव समस्तेन मंत्रेण चतुर्वारं जुहुयादिति । इति सर्वसाधारणोग्निमुखविधिः ॥

## ॥ चण्डीयागे विशेषविधिः ॥

यागे ब्राह्म्यादि पीठशक्तीनां असिताङ्गाद्यष्टभैरवाणां प्रत्येकमेकैकामाहुतिं दत्वा ततः स्रुवेण चतुर्वारमाज्यमादाय स्रुचि निधाय स्रुवेण पिधाय शृङ्गाग्रे पुष्पाणि च दत्वोतिष्ठेत् ( तथा ) ओं वैश्वानरजातवेद ॥ इत्यग्निमंत्रेण वौषडन्तेनाग्नौ जुहुयात् ।

---

वस्तुतोद्धिठहृति पारिभाषिकी संज्ञेति साम्प्रदायिकाः ॥ ] ( मेरुतन्त्रे ) चतुर्वारं स्रुवेणाज्यं गृहीत्वा स्रुचि निःक्षिपेत् । तेनैवतां पिधायाग्नौ हुनेत् तिष्ठन् गुरुः स्वयम् ॥ वौषडन्तेन वह्नेस्तु मनुना संवदेत्ततः । जिह्वायां मध्य सँस्थायां मन्त्री ज्वालावली तनौ ॥ ताराद्यैर्दशभिर्भेदैः पूर्वं पूर्वं समन्वितैः । मनुना गाणपत्येन हुनेत्पूर्वं दशाहुतीः ॥ जुहुयाच्चचतुर्वारं समस्तेनैवतेन तु ।

( ब्राह्म्याद्यष्टशक्तयस्तु ) ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा, महालक्ष्मीरित्येताः शक्तयः आसां होमश्च चतुर्थ्यन्तेन द्विठान्तेन कुर्य्यात् ( एवमसिताङ्गादिभैरवाः ) यथा असिताङ्गभैरवः रुरुभैरवः । चण्डभैरवः क्रोधभैरवः उन्मत्तभैरवः, कपालिभैरवः । भीषणभैरवः । संहारभैरवः, इति, एतेषामपि होमः चतुर्थ्यन्तेन द्विठान्तेन कृत्वा ततोविघ्नेश्वरस्य महागणपतेः पूर्वोक्तमंत्रेण प्रकारेण च हवनं कुर्य्यात् अत्रप्रणवस्थाने ( ह्रीँ वीजमेव ) चिन्तयेदिति विशेषः ( यथा ) ह्रीँ स्वाहा । ह्रीँ श्रीँ ह्रीँ स्वाहा । ह्रीँ श्रीँ ह्रीँ क्लीँ स्वाहा इत्यादि । ततो वह्नौ मण्डूकादि सर्वमङ्गलायै नमइत्यन्तं देवतापीठं गन्धादिभिः सम्पूज्य त्रिखण्डमुद्रया पुष्पाण्यादाय, खड्गंचक्रेत्यादिश्लोकत्रयेणेष्टदेवीमग्नौ आवाह्यावाहनादिदशमुद्राः प्रदर्श्य, अग्निदेवतयोरैक्यं विभाव्य वह्निरूपस्येष्टदेवस्य मुखे पञ्चविंशतिघृताहुतीर्जुहुयात् मूलेन तेन वह्निदेवतयोर्मुखैकीकरणं सम्पद्यते ततोवह्निदेवतयोर्नाडीसन्धानसिद्ध्यर्थं मूलेनैकादशाज्याहुतीर्जुहुयात्तेन तयोर्नाडीसन्धानं सम्पद्यते । ततः । इष्टस्यावरणदेवतानां प्रत्येकमेकैकामाज्याहुतिं जुहुयात् । ( यथा ) ऐँ हृदयशक्त्यै नमः स्वाहा । ह्रीँ शिरश्शक्त्यै नमः स्वाहा । क्लीँ शिखाशक्त्यै नमः स्वाहा । चामुण्डाकवचशक्त्यै० विच्चे नेत्रशक्त्यै० । ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे अस्त्रशक्त्यै० ॥ ( ततः ) ऐँ गुरुभ्योनमः ऐँ परमगुरुभ्योनमः । ऐँ परात्परगुरुभ्योनमः ऐँ परमेष्ठिगुरुभ्यो नमः । स्वरया सहविधात्रे नमः स्वाहा । श्रियासह विष्णवे नमः०

(मेरुतन्त्रे) सम्पूज्य देवतापीठं वह्नौ सम्यक् ततोगुरुः । अग्निरूपधरां तत्र पूजयेदिष्टदेवताम् ॥ आज्येन चाग्निमनुना पंचविंशतिसंख्यकम् । हुनेन्मंत्रीचाग्निमुखे वक्त्रैकीकरणं भवेत् ॥ आत्माग्निदेवतानां च चिन्तयन्नैक्यमात्मवित् । एकादशाथ मूलेन हुनेदाज्येनचाहुतीः ॥ नाडीसन्धानमेतद्धिप्रोक्तं देशिकसत्तमैः । अङ्गप्रभृत्यावृतीनामेकैकामाहुतिं हुनेत् ॥

उमयासह शिवायनमः० । क्षौँ सिंहाय नमः स्वाहा । हुँ नमो महिषाय० । ऐँ नन्दजायै स्वाहा । ह्रीँ रक्तदन्तिकायैः० । क्लीँ शाकंभर्य्यैं० । दुँ दुर्गायै० । हुँ भीमायै० । ह्रीँ भ्रामर्यै । ऐँ ब्राह्म्यै० । ह्रीँ माहेश्वर्य्यै० । क्लीँ कौमार्य्यै० । ह्रीँ वैष्णव्यै० । हूँ वाराह्यै० । क्षौँ नारसिंह्यै० । लँ ऐन्द्र्यै० स्फ्रैँ चामुण्डायै० । ह्रीँ महालक्ष्म्यै० विँ विष्णुमायायै स्वाहा । चेँ चेतनायै० । वुँ बुद्ध्यै० । निं निद्रायै० क्षुँ क्षुधायै० । छाँ छायायै० । शँ शक्त्यै० । तृँ तृष्णायै । क्षाँक्षान्त्यै० । जाँजात्यै । लँलज्जायै । शाँ-शान्त्यै० । श्रँश्रद्धायै० । कां कान्त्यै । लँ लक्ष्म्यै० । धृँ धृत्यै । वृँ वृत्यै० । श्रुँ श्रुत्यै । स्मृँ स्मृत्यै । दँ दयायै० । तुँ तुष्ट्यै० पुँ पुष्ट्यै० । मां मातृभ्यो० । भ्रांभ्रान्त्यै० । गङ्गणपतये नमः । क्षँक्षेत्रपालाय । वँ वटुकाय । याँ योगिनीभ्यो० । लँ इन्द्राय० । रँअग्नये । यँ यमाय० । क्षँ निर्ऋतये० । वं वरुणाय० । य वायवे० । सँ सोमाय० । ईँ ईशानाय । ब्र ब्रह्मणे० । ह्रीँ अनन्ताय० । वँ वज्रायनमः० । शँशक्तये० । दँ दण्डाय । खँ खड्गाय० । पँपाशाय० । अं अंकुशायनमः । गं गदायै नमः । त्रिं त्रिशूलाय० । पँ पद्माय० । चँ चक्राय नमः । (इत्यावरणदेवताहोमः) पुनर्मूले-नदशाहुतीः ) ततः वज्रहस्तायै स्वाहा । गजारूढायै० । कादम्बरी-देव्यै० । शक्तिहव्यै । अजवाहनायै० । उल्कादेव्यै । दण्डहस्ता-यै० । महिषारूढायै० । कालीदेव्यै । खड्गहस्तायै० । शववाहनायै० रक्ताक्षिदेव्यै० । पाशहस्तायै० । मकरवाहनायै० । श्वेताक्षिदेव्यै० । अङ्कुशहस्तायै० । मृगवाहनायै० । हरिताक्षिदेव्यै० । गदाहस्तायै० । सिंहारूढायै । यक्षिणीदेव्यै० । शूलहस्तायै० । वृषभ-वाहनायै० । करालीदेव्यै० । पद्महस्तायै० । हँसवाहनायै० । सुर-ज्येष्ठायै० । चक्रहस्तायै० । सर्पवाहनायै० । सर्पराक्षिदेव्यै० । इति । ततो बलिदेवताहोमः ॥ एह्येहि देवीपुत्र वटुकनाथ कपिलजटा-भासुर त्रिनेत्र ज्वालामुखसर्वविघ्नान्नाशय सर्वोपचार सहित-होमं गृह्ण २ नमः ऊर्द्ध्वं ब्रह्माण्डतोवा दिविगगनतले भूतले

निस्थलेवा। पाताले वा तले वा सलिलपवनयोर्यत्रकुत्रस्थितोवा। क्षेत्रे पीठोपपीठादिषु च कृतपदाधूपदीपादिकेन प्रीतादेव्यः सदानः शुभवलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥ १ ॥ यां योगिनीभ्योहोमं गृह्ण २ नमः। क्षाँ क्षीँ क्षुँ क्षैँ क्षौँ क्षः क्षेत्रपालाय होमं गृह्ण २ नमः। गाँ गीँ गुँ गैँ गौँ गः गणपतये वरवरदसर्वजनं मे वशमानय होमं गृह्ण २ नमः स्वाहा ॥ ह्रीँ सर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहुं फट् नमः स्वाहा ॥ ५ ॥ इति वलिदेवतानां होमः। ततोमूलमंत्रेण नवाहुतीर्हुत्वा त्यागसंकल्पं कुर्य्यात्। ततोहोमः कार्यः ॥ इतितांत्रिककुशकण्डिका।

इति श्रीभाष्याचार्य्य पं० हरनामदत्तात्मजविद्यावाचस्पति पं० देवीप्रसादविरचितशतचण्डीयज्ञविधानस्य तृतीयखण्डे तान्त्रिकाग्निस्थापनकुशकण्डिकयोर्विधानम्।

# अथ कुशकण्डिकापरिशिष्टविषयाः

कथं कुशकण्डिकेतिनाम कुशैः कंण्डिकेत्रेति विग्रहात्कुशकण्डिकेतिवहवः। याज्ञिकास्तु प्रायः कुशकण्डिकैव कथयन्तीति दर्शनात् "कुशकडिका" पदमेव साधु। परं भवदेवेन स्वकीयपद्धतौ कुशण्डिकाशब्दोव्यवहृतः। (यथा) कुशं डीयते प्राप्नोति यस्यां सा कुशण्डिकेति। यद्यप्यनेन कुशण्डिकाशब्दस्य साधुत्वं दर्शितम्परन्तु सर्वत्र कुशकण्डिकाशब्दस्यैव व्यवहृत्या भवदेवकृतकुशण्डिकाशब्दस्य प्रयोगोल्पव्यापकः। (अथ च कीदृशेऽग्नौ होतव्यमिति सन्देहोनिरस्यते) योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः। मन्दाग्नि चामयावी च दरिद्रश्चैव जायते ॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कथंचन आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं पराम् ॥ इतिछन्दोगपरिशिष्टे। होममुद्रालक्षणम् (कुशकण्डिकाभाष्ये) पंचमुद्राविजानीयाद्धोमद्रव्यग्रहे मयूरी कुक्कुटी हंसी सूकरी च मृगी तथा। क्रियते हवनं विप्रैर्मयूरीं तां बुधः ॥ न्युब्जेन पाणिनाद्रव्यं तर्जनीरहितेनयत्। हवनं क्रियते ताभिः विदुर्बुधाः ॥ अङ्गुष्ठरहिताः सर्वाअङ्गुल्योत्तानलक्षिताः। जारणे कुक्कुटी सा प्रकीर्तिता ॥ फलपुष्पवती ज्ञेया मुद्राश्रेष्ठा विखण्डिनी। जारणे मारणे कार्ये कुक्कुटी तु प्रकीर्तिता ॥ वश्योच्चाटन पूर्वाणां कर्मणां शूकरीमता।

शान्तिके पौष्टिके कार्ये मृगीहंसीतथोत्तमा ॥ विकनिष्ठा भवेद्धंसी मुकुलाभा च सूकरी । मध्यमानामिकाङ्गुष्ठैर्मृगीचैवोपलक्षिता ॥ इति ( चरुप्रमाणम् महार्णवे) तिलास्तु द्विगुणाः प्रोक्ताः यवेभ्यश्चैव सर्वदा । अन्ये सौगन्धिकाः स्निग्धाः गुग्गुलादियवैः समाः ॥ ( त्रिकारिकायाम् ) आयुःक्षयं यवाधिक्ये यवसाम्ये धनक्षयः । सर्वकामसमृद्ध्यर्थं तिलाधिक्यं सदैवहि ॥ ( द्रव्यविशेषेणफलविशेषः ऋग्विधाने) श्रद्दधानोऽनुसूयुश्च नित्यं वेदपरायणः । तिलैः परिचरन्नग्निं तण्डुलैश्च सुतोभवेत्॥ अन्नाद्यैः व्रीहिभिः कार्यं यवैश्चाक्षय्यमश्नुते । (द्रव्यभेदेनाहुतिप्रमाणभेदः सिद्धान्तशेखरे ) कर्षप्रमाणमाज्यं स्या न्मधुक्षीरंचतत्समम् । तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ॥ कर्षमात्राणि भक्ष्याणि लाजामुष्टिसमामताः । अन्नं ग्रासमयं ग्राह्यं शाकं ग्रासार्धमात्रकम् ॥ मूलानां तत्त्रिभागं स्यात् कन्दानामष्टमांशकम् । इक्षुपर्व प्रमाणं स्यात् अङ्गुलिद्वितयं तथा ॥ प्रादेशमात्राः समिधो व्रीहीणामञ्जलीसमाः । तिलशक्तुकणादीनां मृगीमुद्राप्रमाणतः ॥ पत्रपुष्पफलानान्तु स्वमानाहुतिरिष्यते । चन्द्रश्रीखण्डकस्तूरीकुङ्कुमागुरुकर्दमाः ॥ हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः आहुतीनामिदं मानं कथितं वेदवेदिभिः ॥ इति ( हवनीयद्रव्यस्यद्रवत्वकठिनत्वभेदेनहोमसाधनभेदः स्मृत्यर्थसारे ) द्रवत्स्रुवेण होतव्यं पाणिना कठिनं हविः । अङ्गुल्यग्रैर्नहोतव्यं न कृत्वाङ्गुलिभेदनम् ॥ अङ्गुल्युत्तरपार्श्वेन होतव्यमिति च स्मृतिः । न मुक्तकेशो जुहुयात् नातिपातित जानुकः ॥ उत्तानेनैव हस्तेनाङ्गुष्ठाग्रेण पीडितम् । संहताङ्गुलिपाणिस्तु वाग्यतोजुहुयाद्धविः ॥ (अग्निलक्षणम्आपस्तम्बे) अङ्गाराभवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदेति । प्रजापतिस्तर्ह्यग्निः । तस्मिन्यस्यतथाविधे जुहुति । प्रजापतिरेवास्याग्निहोत्रं हुतं भवति । शरोङ्गाराअध्यूहते । ब्रह्मतर्ह्यग्निः । तस्मिन्यस्यतथाविधेजुहुति । ब्रह्मन्नेवास्याग्निहोत्रं हुतं भवति ॥

## अथ कुशादिलक्षणं तत्प्रशंसाच

( गोभिलीये ) कुशमूले स्थितोब्रह्मा कुशमध्ये जनार्दनः । कुशाग्रे शंकरं विद्यात्त्रयोदेवाव्यवस्थिताः ॥ ( वशिष्ठोपि ) कुशस्तु रौद्रोविज्ञेयः काशं ब्राह्मं तथा स्मृतम् । आर्षं दौर्वं समाख्यातं विश्वामित्रं तु वैष्णवम् ॥ ( कुशाभावे द्रव्यान्तराणि स्मृत्यर्थसारे ) वर्हिः काशमयं ग्राह्यं न लभ्यन्ते कुशायदि । दारूशीरमुचध्यांश्च वालमुञ्जाद्युनेत्वः ॥ सुगन्धयोर्जुनादारुदूर्वाक्षोरद्भमाअपि । यद्वा सर्वतृणेभ्योपि ग्राह्यं वर्हिर्यथेप्सितम् ॥ शुष्कमूलं कृष्णमूलं दुर्गन्धितृणवर्जितम् ।

इति। ( कर्माङ्गभूताः कुशाः कर्मप्रदीपे ) हरितायज्ञियादर्भाः पीतकाः पाकयज्ञियाः। समूलाः पितृदैवत्याः कल्माषाः वैश्वदैविकाः ॥ ( दर्भलक्षणमाह हारितः ) अच्छिन्नाग्रान्पवित्रांश्च समूलान्कोमलाम् शुभान्। पितृदेवजपार्थं तु समान्दद्यात्कुशान्बुधः ॥ ( पवित्रग्रहणफलम् छन्दोगपरिशिष्टे ) जपहोमहराह्येते असुरादिव्यरूपिणः। पवित्रकृतहस्तस्य विद्रवन्ति दिशोदश ॥ ( तथा च गोभिलः। ) वज्रो यथासुरेन्द्रस्य शूलोहस्ते हरस्य च ॥ चक्रायुधं यथा विष्णोरेवं विप्रकरे कुशः। ( शातातपस्तु ) सव्यापसव्ये कुर्वीत सपवित्रकरोबुधः। ( अत्रिरपि ) उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके। धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥ ( ब्रह्मग्रन्थिलक्षणम् गारुडे ) अस्त्यन्योवैष्णवोमार्गोब्रह्ममार्ग विनिर्मितः। सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥ तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवेदिभिः। इति [ पवित्रकर्तुरभिमुखप्रदेशोब्रह्ममार्गः। ] अन्यत्र च। अङ्गुष्ठं घर्षयेदूर्ध्वं तर्ज्जन्यान्तु पुनः पुनः। ज्ञानमुद्रामधः कृत्वा कूर्च्चैतद्ग्रन्थिरिष्यते ॥ ( पवित्रेदर्भसंख्या ) सप्तभिः कुशपिञ्जूलैः कुर्याद्ब्रह्मपवित्रकम्। चतुर्भिः क्षत्रियस्यैव त्रिभिः कार्यन्तथाविशः ॥ द्वाभ्यां शूद्रस्य विहितं आन्तराणान्तथैवच। ( मार्कण्डेयः )त्रिभिस्तु शान्तिकं कार्यं पौष्टिकं पञ्चभिस्तथा॥ चतुर्भिरभिचाराख्यं कुर्वन्कुर्यात्पवित्रकम्। ( इति पृथक् पृथक् वचनदर्शनात् सम्भवासम्भवाभ्यां विकल्पः ) ( हेम पवित्रप्रशंसा हेमाद्रौ ) अन्यानि च पवित्राणि कुशदूर्वात्मकानि च। हेमात्मकपवित्रस्य एकां नार्हन्ति वै कलाम् ॥ ( कर्मान्ते ग्रंथिमोचनम्। ) धृतं पवित्रं कर्मान्ते ग्रन्थिमुक्त्वा तु तत्त्यजेत्। पवित्रकरण क्रमादनन्तरम्। कूर्च करण प्रकारः ( प्रयोग पारिजाते ) आख्यातोऽनन्तरं वच्मि कूर्च्चस्य करणक्रमम्। नवभिः सप्तभिर्दर्भैः पंचभिः क्रमशः कृतः॥कूर्च्चः श्रेष्ठोमध्यमश्चकनीयान्सइतीरितः। तद्ग्रन्थियर्द्धं यङ्गुला ज्ञेया तदूर्ध्वंचतुरङ्गुलम्॥ षोडशाङ्गुलमायाममधस्ताच्च नियोजयेत्। पवित्रे प्राग्यथा प्रोक्ता ग्रन्थिस्तेन क्रमेणतु॥ग्रन्थि दद्याद्द्विजःकूर्च्चे तद्विधिःस्यात्पवित्रवत्। आसने देवतादीनामपि च स्नानवारिणि ॥ पञ्चगव्यप्रयोगे द्विजः कूर्च्चं प्रयोजयेत्। अमृतेषु च गव्येषु पञ्चसु स्नानकर्मणि॥पुण्याहकुंभतोयेषु द्विजःकूर्च्चं प्रयोजयेत्। प्रागग्रमुदगग्रं वा स्थापयेत्कूर्च्चमासने ॥ ऋष्यर्थं देवतार्थं च पित्र्यर्थं दक्षिणाग्रकम्। इति संग्रहादिग्रन्थेषु कुशोत्पाटानादीनि विधानानि अन्यान्यपि कुशविषयकानि प्रमाणानि च बहून्युक्तानि अत्र विस्तारभयान्न तेषामुल्लेख इत्यलम्। यद्यप्यत्राग्निस्थापनकुशकण्डिकामेदानानाशाखीयाः प्रदर्शितास्तथापि स्वस्वशाखीय

एवपत्नोग्राह्योनान्यशाखीयः यजमानस्य गुर्वादयश्चेद्यज्ञकर्तारस्तदातैरपि यजमानशाखया एवाग्निस्थापनादि कर्मकुर्य्युर्यतोयज्ञफलभाग्यजमानएव न हि ते उक्तंच (छन्दोगपरिशिष्टे।) स्वकीयशाखामुत्सृज्य परशाखाश्रयंतु यः। कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्॥ वह्वल्पं वा स्वगृह्योक्तं यस्य कर्मप्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतोभवेत्॥ (अन्यच्च।) ऊनो वा अतिरिक्तो वा यः स्वशाखोक्तमाचरेत्। तेन सन्तनुयाद्यज्ञं न कुर्य्यात्पारतन्त्रिकम्॥ यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्। अप्रमाणमृषिं कृत्वा सोन्धेतमसि मज्जति॥ (अग्निस्थापनं यजमानशाखयेतिशान्तिसारे) एतेन कुण्डाभावे यत्र स्थण्डिलादिके होमोभवेत्तत्र स्थण्डिलादिकमपि स्वशाखोक्तविधिनैव भवति स्वस्वशाखीयान्यायतनत्वात्। आचार्योपि समशाखीय एव इति पूर्वमेवप्रदर्शितः।

## अथ होमप्रशंसा

नाग्निहोत्रात्परोधर्मो नाग्निहोत्रात्परन्तपः। नाग्निहोत्रात्परं श्रेयोनाग्निहोत्रात्परं यशः॥ नाग्निहोत्रात्परासिद्धिर्नाग्निहोत्रात्परागतिः। नाग्निहोत्रात्परं स्नानं नाग्निहोत्रात्परं व्रतम्॥ आद्याव्याहृतयस्तिस्रः स्वधास्वाहानमोवषट्। यस्यैते वेश्मनिसदा ब्रह्मलोकः सएवतु॥ इति वहुकर्तृकहोमे प्रत्याहुतित्यागाशक्तौ होमारंभएव सर्वदेवताश्चतुर्थ्यन्तेनोद्दिश्य सर्वाणि द्रव्याणि त्यजेदिति हेमाद्र्यादयः।

इतिश्री भाष्याचार्यसूनुसङ्कलितशतचण्डीयज्ञविधानस्य-
तृतीयखण्डेकुशकण्डिकापरिशिष्टविषयाः।

**इति अग्निस्थापनकुशकण्डिकयोर्विधानम्।**

# ॥ अथ हवनप्रकरणम् ॥

तत्र प्रतिदेवताकहोमसंख्याष्टोत्तरशतसमां तदर्धोन्मितामष्टाविंशतिसंख्यकां वा स्वशक्तिमपेक्ष्य कुर्य्यात् हवनद्रव्याणि तु चर्वादीनि पूर्वोक्तानि गृह्णीयात्। ततः पुरस्तात् गणपतिमुद्दिश्य गणानान्त्वेतिमंत्रेण अन्ते गणपतयेनमः स्वाहेति ( पठनीयोमंत्रः) अथवा स्वानुष्ठित तांत्रिकमंत्रेण वा परन्तु मण्डपदेवताकहोमे वैदिकाराधनप्राधान्ये मण्डपे स्थापितदेवतानामाहुतिर्वैदिकमंत्रैरेवेति ( सर्वत्र दर्शनात् ) मन्त्रोच्चारणाशक्तौ तु प्रणवपुरस्सरचतुर्थ्यन्तदेवतानामतोवा होमः कार्यः इति। अनन्तरं गौर्यादिषोडशमातृकाहोमः। अत्र तु केषांचिन्मते प्रथमं ग्रहहोमस्ततोमातृकाहोमः इति परन्तु नास्यप्रयोगस्ययोगः कुत्रापि दृश्यते तेन मातृकाहोमं कृत्वा तदनन्तरं सपरिवारदेवताग्रहहोमःकार्य्यः(इति मान्यानाम्पंथाः ) शर्म्मास्यवधूतमित्याद्यावाहनमंत्रैर्वक्ष्यमाणमंत्रैर्वा प्रत्येकं जुहुयात्।

## ❁ अथ गौर्यादिहोमः ❁

गणानान्त्वा० गर्भधऽ. स्वाहा ॥ इदं गणपतयेनमम। ओं आयङ्गौः पृश्निरक्रमीदशदन्मातरम्पुरः पितरं च प्रयन्त्स्वः स्वाहा ॥ इदंगौर्यैः। ( एवंसर्वत्रत्यागः ) ओं हिरण्यरूपाऽउषसोविरोक-

त्याग इति द्रव्यंदेवता त्यागइतिकात्यायनसूत्रम्। व्रीहियवादिद्रव्यम्। देवताशब्दस्तुचोदनालक्षणः। नहिजात्याकाचिद्देवतास्तीति। वैदिकेव्यवहारेतद्धितेन द्रव्यं प्रतिदेवतात्वं गम्यते। चतुर्थ्यन्तेनवा। तस्यद्रव्यस्य देवतां प्रतियाउत्सर्गक्रियासत्यागः इति ( शर्मास्यवधूतमित्याद्यावाहनमन्त्राः ) प्रथमखण्डस्य पञ्चाशत संख्यके पृष्ठे ( ५० ) द्रष्टव्याः ॥

ऽउभाविन्द्राऽउदिथः सूर्य्य श्च । आरोहतंवरुणमित्रागर्तन्ततश्चक्षाथा-मदितिन्दितिश्चमित्रोसिव्वरुणोसिस्वाहा ॥ ( इदंपद्मायैनमम ॥ ) ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे । उपोपेन्नुमघवन्भूय-ऽइन्नुतेदानन्देवस्यपृच्यतऽआदित्येभ्यस्त्वास्वाहा ॥ ( इदंशच्यैन-मम ॥ ओं मेधाम्मेव्वरुणोददातु मेधामग्निःप्रजापतिः । मेधामिन्द्र-श्चवायुश्चमेधान्धाताददातुमेस्वाहा ( इदंमेधायै० ) ओं तत्सवितु-र्व्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात्स्वाहा ॥ ( इदंसा-वित्र्यै ) ओं विज्यन्धनुःकपर्द्दिनोविशल्योव्वाणवाँ२ उत । अने-शन्नस्ययाइषवऽआभुरस्यनिषङ्गधिःस्वाहा ॥ ( इदं विजयायै ) ओंयाते रुद्र शिवातनूरघोरापापकाशिनी । तयानस्तन्वा शन्त-मया गिरिशन्ताभिचाकशीहि स्वाहा । ( इदंजयायै ) ओं देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳬं रातिरभिनोनिवर्त्तताम् ॥ देवानाᳬं सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्रतिरन्तु जीवसे स्वाहा॥(इदंदेवसेनायै) ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः । पिता-महेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यःस्वधायिभ्यः स्वधानमः अक्षन्पितरोमीमदन्तपितरोऽतीतृपन्तपितरः पितरः शुन्धद्ध्वᳬं स्वा हा॥(इदंस्वधायै०) ॐ स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात्स्वाहा॥ द्यावा पृथिवीभ्या- स्वाहा व्वातादारभे स्वाहा ॥ (इदंस्वाहायै० ) ओं आपोऽअस्मान्मातरः शुन्धयन्तु घृतेननोघृतप्वः पुनन्तु । विश्वᳬं हिरिप्प्रम्प्रवहन्तीदेवीरुदिदाभ्यः शुचिरापूतऽएमि । दी-क्षातपसोस्तनूरसि तान्त्वाशिवा- सग्माम्परिदधे भद्रम्वर्णम्पुष्यन् स्वाहा ॥ ( इदंमातृ० ) ॐ भवतन्नः समनसौ सचेतसावरे-पसौ । मायज्ञᳬं हिᳬं सिष्टम्मायज्ञपतिञ्जातवेदसौ शिवौ भव-तमद्यनः स्वाहा ॥ ( इदंलोकमातृभ्यः ) ओं यत्प्रज्ञानमुतचेतो-धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु । यस्मान्नऽऋते किञ्चनकर्मक्रि-यते तन्मे मनः शिवसङ्कल्पमस्तु स्वाहा ॥ ( ओं इदंधृत्यै ) ओं तत्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्ते यजमानोहविर्भिः । अहेडमानोव्वरुणेहबोद्ध्युरुशᳬंसमानऽआयुः प्रमोषीः स्वाहा ॥

( इदंपुष्ट्यै० ) ॐ बृहस्पते परिदीयारथेन रक्षोहामित्राँ२ अपबा-धमानः प्रभञ्जन्त्सेनाः प्रमृणोयुधाजयन्नस्माकमेद्ध्यवितारथानाᳲ स्वाहा ॥ ( इदं तुष्ट्यै ) ओं प्राणाय स्वाहापानाय स्वाहा व्या-नाय स्वाहा । अम्बेऽअम्बिकेऽअम्बालिके नमानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ् काम्पीलवासिनीᳲस्वाहा ॥ ( इदमा-त्मनःकुलदेव्यै० ) [ इति ] गौर्य्यादिषोडशमातृप्रीतये यत्कृतं तद्भगवतीप्रसादात्परिपूर्णमस्तु । अनेन होमेन श्रीगणपतिसहित गौर्य्यादिषोडशमातरः सुप्रीताः सत्योवरदाभवन्तु ॥ [ वसोर्धा-राहोमः ] ओं वसोः पवित्रमसि शतधारं वसोः पवित्रमसि-सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधा-रेण सुप्वा कामधुक्षः स्वाहा । ( इदंवसोर्धाराभ्यः ]

## ❀ अथ नवग्रहहोमः ❀

तत्राग्निं सम्पूज्य ततोग्रहहोमं कुर्य्यात् यथादधिक्षीरघृता-क्तचरुशाकल्यसहितार्कादिसमिधः सूर्य्यादिभ्यस्तत्तन्मंत्रान्ते जु-हुयात् । ओं गणानान्त्वा गणपतिᳲ हवामहे प्रियाणान्त्वा प्रिय-पतिᳲहवामहे निधीनान्त्वा निधिपतिᳲहवामहे वसोमम । आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधᳲ स्वाहा । [ इदंगण-पतयेनमम ] इति सर्वत्र । ( ततोर्केण ) ओं आकृष्णेन रजसा वर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो-याति भुवनानि पश्यन्त्स्वाहा ॥ ( इदंसूर्य्याय० ) ( पालाशैश्च० ) ओं इमन्देवाऽअसपत्नᳲ सुवध्वम्महते क्षत्रायमहते ज्ज्यैष्ठ्याय-महते जानराज्ज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्र-मस्यै विशएषवोमीराजासोमोस्माकम्ब्राह्मणानाᳲ राजा स्वाहा ॥ इदंचन्द्रमसे । ( खादिरेण ) ॐ अग्निर्म्मूर्द्धादिवः ककुत्पतिः पृ-थिव्याऽअयम् । अपाᳲरेताᳲसि जिन्वति स्वाहा ॥ इदंभौमाय । ( आपामार्गेण ) ओं उद्बुध्यस्वाग्ने प्रतिजागृहीत्वमिष्टापूर्तेसᳲ-सृजेथामयञ्च । अस्मिन्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवा यजमा-

नश्च सीदत स्वाहा ॥ इदंबुधाय० । [ आश्वत्थेन ] ओं बृहस्पते-ऽअतियदर्य्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽ-ऋतप्रजाततदस्मासु द्रविणन्धेहि चित्रꣳ स्वाहा ( इदंगुरवे ) ( शुक्रस्यौदुम्बरेण ) ओं अन्नात्परिस्रुतोरसम्ब्रह्मणव्यपिवत्क्षत्र-म्पयः सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियम्विपानꣳ शुक्रमन्ध-सऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु स्वाहा ॥ इदंशुक्राय ॥ ( शनै-श्चरस्यशम्या ) ओं शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये ॥ शंय्योरभिस्रवन्तुनः स्वाहा ॥ इदं शनैश्चराय । ( राहोर्दूर्वया । ) ओं कयानश्चित्रऽआभुवदूती सदावृधः सखा । कया शचिष्ठया वृता स्वाहा ॥ इदंराहवे । ( केतोर्दर्भैः ] ओं केतुं कृण्वन्नकेतवे

---

जपेहोमे मखेश्राद्धेऽभिषेकेपितृकर्म्मणि । हस्तस्वरं न कुर्वीत सन्ध्यादौ देवपूजने । उपस्थाने जपे होमे मार्जने यज्ञकर्मणि । कण्ठस्वरं प्रकुर्वीत हस्तस्वर-विवर्जितम् । ( श्रौतोल्लासेऽपि ) उपस्थाने जपे होमे दोहे च यज्ञकर्म्मणि । हस्त-स्वरं न कुर्वीत शेषास्तु स्वरसंयुताः । अभिषेकपूजनहोमादिषु हस्तस्य व्यापृत-त्वान्न हस्तेन स्वरप्रदर्शनम् । शान्त्यादिपाठे सूक्तपाठेचमन्त्राः सस्वराएवपठनीयाः। मन्त्रसमधीतस्वरबाधे प्रमाणाभावात् ॥ शान्तिसारे ( मार्कण्डेयः ) सम्पूजयेत्ततो-वह्निं दद्याच्चैवाहुतिः क्रमात् ( हेमाद्रौ देवीपुराणे च ) गणाधिपतये देया प्रथमातु वराहुतिः । अन्यथा विफलं कर्म भवतीह न संशयः॥समिद्दैर्घ्यविषयकत्वमेव वरत्व मुक्तप्रमाणद्विगुणप्रमाणत्वमर्द्धाधिकप्रमाणत्वं वा द्वैगुण्यमर्धाधिकत्वं वा विनास्पष्ट वचनमेकदासमिद्द्वयाभ्याधाने दोषश्रवणात् । इतिसंस्काररत्नमालायाम् । अर्का दीनां समिधः ) अर्कः पलाशः खदिरः अपामार्गोऽथपिप्पलः । उदुम्बरः शमीदूर्वाः कुशाश्च समिधस्त्विमाः॥ एकैकस्याष्टशतकमष्टाविंशति वा पुनः । होतव्या मधुसर्पि-र्भ्यां दध्ना चैव समन्विताः ॥ (वासिष्ठे तु) हुनेदाज्याक्तसमिद्इति ( भविष्ये ) प्रण-वादिभिश्च तल्लिङ्गैः स्वाहाकारान्त योजितैः । जुहुयात्सर्वदेवानां वेद्यां चैवोपक-ल्पितान् ॥ संख्याविशेषः ( पारिजाते ) अष्टोत्तर सहस्रं तु शतमष्टाधिकं तथा । अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् ॥ ( उक्तग्रहसमिधामलाभे कर्तव्यताशा-स्त्रान्तरतः ) अलाभेऽत्र प्रकर्तव्याः सर्वाः पालाशवृक्षजाः । याः ओषधीरितिमंत्रेण समिधश्च समाहरेत् ॥ मंत्राणां स्वरशुद्धेनाशुद्ध पाठेन वा पुनः । पूजाहीनविधानेन

पेशोमर्य्याऽअपेशसे । समुषद्भिरजायथाः ॥ इदं केतवे । ततोहस्तेन जलमादाय अनेन समिधाहोमेन सूर्य्यादयोग्रहाः प्रीयन्तां नमम । इत्युत्सृजेत् । [ इतिग्रहाणां होमः ]

## ॥ अथाधिदेवताहोमः ॥

पलाशसमिधा॥ ओं त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् । उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीय माऽमृतात् स्वाहा ॥ [ इदमीश्वराय ] चरुणा शाकल्येन वा ॥ ओं श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण स्वाहा [ इदमुमायै ] ओं यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् । श्येनस्य पक्षाहरिणस्यबाहू उपस्तुत्यम्महिजातन्तेऽअर्व्वन्त्स्वाहा ॥ [इदंस्कन्दाय] ओंविष्णोरराटमसि व्विष्णोःश्नप्त्रेस्थोव्विष्णोः स्यूरसि व्विष्णोर्द्ध्रुवोसि । वैष्णवमसि व्विष्णवे त्वा स्वाहा । [इदंविष्णवे]ओं ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेन आवः । सबुध्न्याउपमाऽअस्यव्विष्ठाः सतश्चयोनिमसतश्चव्विवः स्वाहा ॥ [ इदंब्रह्मणे ] ओं सयोषाऽइन्द्रसगणोमरुद्भिः सोमंपिब वृत्रहा शूरविद्वान् । जहिशत्रू १ँ रपमृधोनुदस्वाथाभयङ्कृणुहि व्विश्वतोनः स्वाहा ॥ [ इदमिन्द्राय ॥ ] ओं यमायत्वाङ्गिरस्वते पितृमते स्वाहा ॥

---

ग्रहाः स्युरपमानिताः ॥ एकस्यैकैव होतव्या समिद्धिघृतसंप्लुता । घृतस्य कार्षिकोहोमः क्षीरस्य मधुनस्तथा ॥ शुक्तिमात्राहुतिर्दध्नः पयसः पायसस्य च । पथ्यानां सर्वभक्ष्याणां लाजानाम्मुष्टिसम्मिता ॥ ( लक्षहोमपद्धतौतु ) अधिदेवतानामपि पालाशेन तत्तन्मंत्रैर्जुहुयात् इति (समिल्लक्षणं कर्मप्रदीपे) नाङ्गुष्ठादधिका कार्या समित्स्थूलतरा भवेत् । नवियुक्तत्वचा चैव न सकीटा न पाटिता ॥ प्रादेशमात्रानधिका न तथास्याद्द्विशाखिका॥ न सपर्णा समित्कार्या होमकर्म सुजानता । ( अधिदेवतादिहोमा हेमाद्रौ ) चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात् ।

स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे स्वाहा ॥ ( इदंयमाय ) *उदकोपस्पर्शः* ॥ ओं कार्षिरसि समुद्रस्यत्वाक्षित्याऽउन्नयामि। समापोऽअद्भिरग्मतसमोषधीभिरोषधीः स्वाहा ॥ (इदंकालाय०) *उदकोपस्पर्शः* ओं चित्रावसो स्वस्तिते पारमशीय स्वाहा ॥ (इदं चित्रगुप्ताय ) हस्तेजलमादायानेन होमेन ईश्वराद्यधिदेवताः प्रीयन्तां नमम ॥ ( इतिजलमुत्सृजेत् ) ओं यथावाणप्रहाराणां कवचं वारणं भवेत्। तद्वद्दैवोपघातानां शान्तिर्भवतु वारणम् ॥ इतियजमानमूर्द्धाभिषेकः समयानुरोधात्।

## ॥ अथ प्रत्यधिदेवताहोमः ॥

ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवाँ २ आसादयादिह स्वाहा ॥ ( इदमग्नये० ) ओं अपोऽअद्यान्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वानग्नऽआगमन्तम्मासꣳ. सृजवर्चसा प्रजया च धनेन च स्वाहा ॥ इदमद्भ्यः ॥ ओं स्योनापृथिविनो भवानृक्षरानिवेशिनी। यच्छानः शर्म्मसप्रथाः स्वाहा ॥ ( इदंपृथिव्यै ) ओं इदंविष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳसुरे स्वाहा ॥ ( इदंविष्णवे ) ओं त्रातारमिन्द्रमवितारमिन्द्रꣳ

---

तत्तन्मंत्रैश्च होतव्याः क्रमात्तदधिदेवताः ॥ ( पारिजाते गृह्यपरिशिष्टे च ) प्रधानदशांशेन पार्श्वदेवयोरिति। ( शान्तिसारे ) केवलग्रहमखे तु अधिदेवतानामप्यनित्यम्। याज्ञवल्क्यादिभिरनुक्तेः ॥ (उदकोपस्पर्श इति) यमोरुद्रश्चपितरः कालोमृत्युश्च पंचमः। पञ्चक्रूरास्तु यज्ञस्य होमेतच्छान्तिमाचरेत् ॥ तत्क्रूरताघातपूर्वं शान्तिमाङ्गल्य सिद्धये। दच्च हस्ताङ्गुलीःपञ्च स्रुवं त्यक्त्वा सम्मार्जयेत् ॥ ( विधिरग्निपुराणे) अम्भोजमुकुलाकारं दक्षहस्तं निमज्जयेत्। प्रणीताप्सु सुशान्त्यर्थं मनुः स्वायंभुवोऽब्रवीत् ॥ ( प्रणीताद्भिः संहताङ्गुलिक्षालयेदिति शेषः। ) छित्राश्चैवाधिदैवत्याः पञ्चानां चैव पंचधा ॥ ( इतिवसिष्ठः ) छित्रा छेतिस्रोवेत्यर्थः। पञ्चानां गणेशादीनां पंचधा एकैकः पंच पंचेति केचित्। ( अथेन्द्रादिहोमः पारिजाते ) इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः प्रपूजयेत् ॥ तत्तन्मंत्रैर्जपं कुर्यात्ततोहोमं समाचरेत्

ह्वेह्वे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति-नो मघवाधात्विन्द्रः स्वाहा ॥ ( इदमिन्द्राय० ) ॐ अदित्यैरास्ना-सीन्द्राण्याऽउष्णीषः पूषासि घर्म्मायदीष्व स्वाहा ॥ ( इदमिन्द्रा-ण्यै० ) ॐ प्रजापतेनत्वदेतान्न्यन्योव्विश्वारूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तुव्वयꣳ स्याम पतयोरयीणाꣳ स्वाहा ॥ ( इदंप्रजापतये ) ओं नमोस्तु सर्प्पेभ्योयेके च पृथिवीमनु । येऽ-अन्तरिक्षे ये दिवि तेभ्यस्सर्प्पेभ्योनमः स्वाहा ॥ ( इदंसर्प्पेभ्यः ) ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनआवः । सबु-ध्न्याउपमा अस्यव्विष्ठाः सतश्च योनिमसतश्चव्विवः स्वाहा ॥ ( इदंब्रह्मणे ) अनेनहोमेनअग्न्यादिप्रत्यधिदेवताः प्रीयन्ताम् नम-मइतिजलमुत्सृजेत् ॥ यथावाणप्रहाराणामिति च पठेत् ॥

## ॥ अथ विनायकादिपंचलोकपालानांहोमः ॥

ओं गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वानिधिपतिꣳ हवामहे व्वसोमम । आहमजानि-गर्ब्भधमात्वमजासि गर्ब्भधꣳ स्वाहा ॥ (इदंगणपतये०) ॐ अम्बेऽअम्बि-केऽम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकः सुभद्रिकाङ् काम्पील-वासिनीꣳ स्वाहा ॥ (इदंदुर्गायै०) ओं आनोनियुद्भिः शतनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदानः स्वाहा ॥ ( इदंवायवे ) ॐ घृतङ्-घृतपावानः पिवतवसाम्वसापावानः पिवतान्तरिक्षस्य हविरसि-स्वाहा । ( दिशः प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ [ इदमाकाशाय० ] ओं यावाङ्कशामधुमत्यश्विना सूनृतावती । तयायज्ञम्मिमिक्षताꣳ स्वाहा [ इदमश्विभ्याम्० ] अनेनहोमेन-पञ्चलोकपालाःप्रीयन्ताम्नमम ॥ [ इतिजलमुत्सृजेत् ] यथावा-णप्रहाराणामित्यनेनयजमानमूर्द्धिनअभिषेकश्चेति ॥

## ❀ अथ दशदिक्पालहोमः ❀

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्। ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥ (इदमिन्द्राय०) ओं त्वन्नोऽअग्ने तवदेवपायुभिर्म्मघोनोरक्षतन्वश्च वन्द्य। त्रातातोकस्य तनये गवामस्यनिमेषꣳ रक्षमाणस्तवव्रते स्वाहा ॥ (इदमग्नये) ॥ ओं यमायत्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे स्वाहा ॥ (इदंयमाय०) (अत्रोदकोपस्पर्शः) ओं असुन्न्वन्तमयजमानमिच्छस्ते नस्येत्यामन्विहितस्क्करस्य। अन्न्यमस्मदिच्छसातऽइत्यानमोदेवि निर्ऋते तुभ्यमस्तु स्वाहा ॥ (इदंनिर्ऋतये०) ओं तत्त्वायामिब्ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोव्वरुणेहवोद्ध्युरुशꣳ समानआयुः प्रमोषीः स्वाहा ॥ (इदंवरुणाय०) ओं आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहियज्ञम् ॥ व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पातस्वस्तिभिः सदानः स्वाहा (इदंवायवे) ओं व्वयꣳ सोमव्रते तवमनस्तनूषुविभ्रतः। प्रजावन्तः सचेमहि स्वाहा ॥ (इदंकुवेराय०) ओं तमीशानञ्जगतस्तस्थुषस्पतिंधियञ्जिन्न्वमवसे हूमहे व्वयम्। पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये स्वाहा ॥ (इदमीशानाय०) ॐ अस्मेरुद्रामेहनापर्व्वतासोवृत्रहत्ये भरहूतौ सजोषाः। यःशꣳसते स्तुवते धायिपज्रइन्द्रज्ज्येष्ठाऽअस्मान्अवन्तुदेवाः स्वाहा ॥ (इदंब्रह्मणे) ओं स्योनापृथिविनोभवानृक्षरानिवेशनी। यच्छानः शर्म्मसप्रथाः स्वाहा ॥ (इदमनन्ताय०) अनेनहोमेनइ-

अत्र विनियोगोन प्रयोक्तव्यइति कृष्णभट्टीये यथा नचस्मरेदृषिच्छन्दौ श्राद्धे वैतानिके मखे। अग्निहोत्रेवैश्वदेवे विवाहादिविधौ तथा॥ होमकालेन दृश्यन्ते प्रायच्छन्दर्षिदेवताः। (अन्यत्र) शान्तिकादिषु कार्येषु मंत्रपाठजपादिषु। होमे नैव प्रकर्त्तव्याः कदाचिद्दिदेवताः॥ तथा च आश्वलायनः ऋषिदैवतछन्दांसि प्रणवं

न्द्रादयोदिक्पालदेवताः प्रीयन्तां नमम [ इतिजलमुत्सृजेत् ] ततः यथाबाणप्रहाराणा नित्यादिनायजमानमूर्ध्निअभिषेकः । [ इतिदिक्पालहोमः ]

## ॥ सर्वतोभद्रमण्डलदेवताहोमः ॥

तत्र सर्वतोभद्रमण्डलस्थापितदेवताभ्यः प्रणवादिस्वाहान्तैस्तत्तन्नामभिः । अथवा प्रथमखण्डोक्तसर्वतोभद्रमण्डलदेवतापूजनवैदिक* मंत्रैर्वा प्रत्येकं समित्तिलादिनिर्मितचर्वाज्यैर्जुहुयादिति ॥ अत्र स्वस्वनामक्रमेण होमः वैदिकमंत्राणाम्पूर्वोल्लेखत्वादत्रपुनर्लेखनप्रयोजनानावश्यकत्वात् । वैदिकमंत्राश्चेत्तदा तेषामन्ते स्वाहा योजनं देवतासमर्पणं चाधिकंकार्य्यमिति । पुनः समग्रमंत्रलेखनेनात्र ग्रन्थविस्तृतिरेव न तस्माल्लाभाधिक्यं किंयदपीति ॥ नाममंत्रैर्होमोयथा ओं ब्रह्मणे स्वाहा इदंब्रह्मणेनमम [ एवंसर्वत्रनममान्तेन चतुर्थ्यन्तेनदेवनाम्नात्यागः ] ओं सोमाय स्वाहा ओं ईशानाय स्वाहा ओं इन्द्राय स्वाहा ओं अग्नये स्वाहा ओं यमाय स्वाहा ओं निर्ऋतये स्वाहा ओं वरुणाय स्वाहा ओं वायवे स्वाहा ओं अष्टवसुभ्यः स्वाहा ओं एकादशरुद्रेभ्यः स्वाहा ओं द्वादशादित्येभ्यः स्वाहा ओं अश्विभ्यां स्वाहा ओं विश्वेभ्योदेवेभ्यः सपितृकेभ्यः स्वाहा ओं सप्तऋषिभ्यः स्वाहा ओं भूतनागेभ्यः स्वाहा ओं गन्धर्वाप्सरोभ्यः स्वाहा ओं स्कन्दाय स्वाहा

---

ब्रह्मयज्ञके । मन्त्रादौ नोच्चरेच्छ्राद्धे यागकालेपि चैव हि ॥ ( स्मृतिमहार्णवे ) अन्वाधाने ऋषिच्छन्दौ यजुषां नैव कारयेत् । ( सर्वानुक्रमसूत्रे ) यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते द्रष्टारोऋषयः स्मर्त्तारः परमेष्ठ्यादयोदेवताः ॥ मन्त्रान्तरभूता अग्न्यादिकाः हविर्भाजः स्तुतिभाजोवेति ॥ सर्वतोभद्रपीठे मूलमंत्रेण जुहुयादिति वचनाभावान्नमूलमंत्रेण होमः । किन्तुप्रणवादिचतुर्थ्यन्तं स्वाहाशब्दसमन्वितम् । स्यात्पीठदेवताहोमे मन्त्रोनामैव कीर्तितः ॥ इति प्रकाशकारोक्तेर्नमःशब्दरहितेनैव होमः इति ( मूलमन्त्रस्वरूप पुराणे )

ओं ऋषभाय स्वाहा ओं शूलमहाकालाभ्यां स्वाहा ॐ दक्षादित्य-सप्तगणेभ्यः स्वाहा ॐ दुर्गायै स्वाहा ॐ विष्णवे स्वाहा ओं स्वधायै स्वाहा ॐ मृत्युरोगेभ्यः स्वाहा ॐ गणपतये स्वाहा ॐ अद्भ्यः स्वाहा ॐ मरुद्भ्यः स्वाहा ॐ पृथिव्यै स्वाहा ॐ सप्तसागरेभ्यः स्वाहा ओं गंगादिसप्तसरिद्भ्यः स्वाहा ओं मेरवे स्वाहा ओं गदायै स्वाहा ओं त्रिशूलाय स्वाहा ओं वज्राय स्वाहा ओं शक्तये स्वाहा ॐ दण्डाय स्वाहा ॐ खड्गाय स्वाहा ॐ पाशाय स्वाहा ॐ अङ्कुशाय स्वाहा ॐ गौतमाय स्वाहा ॐ भरद्वाजाय स्वाहा ॐ विश्वामित्राय स्वाहा ओं कश्यपाय स्वाहा ओं जमदग्नये स्वा० ओं वसिष्ठाय स्वा० ओं अत्रये स्वा० ओं अरुन्धत्यै स्वा० ओं अम्बिकाय्यै स्वा० ओं ब्राह्मर्यै स्वा० ओं माहेश्वर्य्यै स्वा० ओं कौमार्य्यै स्वा० ओं वैष्णव्यै स्वा० ओं वाराह्यै स्वा० ओं इन्द्राण्यै स्वा० ओं चामुण्डायै स्वा० ।

## ❀ अथ वास्तुदेवताहोमः ❀

वास्तुदेवताभ्योऽपि प्रणवादिस्वाहान्तैः तत्तन्नामभिः । ( अथवा ) प्रथमखण्डीयपूजाप्रकरणोक्तवैदिकमंत्रैर्वा प्रत्येकं समित्तिलपायसाज्यैर्जुहुयात् । ( तेचमंत्राः प्रथमखण्डस्थत्रिनवति संख्यके पृष्ठे ( ९३ ) द्रष्टव्याः ) तद्यथा ओं शिखिने स्वा० इदंशिखिनेनमम ( एवं सर्वत्र त्यागः ) ओं पर्जन्याय स्वा० ओं जयन्ताय स्वा० ओं इन्द्राय स्वा० ओं सूर्य्याय स्वा० ओं सत्याय स्वा० ओं भृशाय स्वा० ओं आकाशाय स्वा० ओं वायवे स्वा० ओं पूष्णे स्वा० ओं

---

प्रणवादि चतुर्थ्यन्तं नमोन्तं चैव सत्तम । देवतायाः स्वकं नाम मूलमंत्रः प्रकीर्तितः ॥ यत्र मूलमन्त्रेण जुहुयादिति वचनम् विशेषविहितमन्त्राभावश्चतत्रायं मूलमन्त्रः परन्तु तेन कृते होमे नमः शब्दोत्तरं स्वाहाकारोभवति ।

वितथाय स्वा० ओं गृहत्तताय स्वा० क्वचित् (गृहरत्तकइतिपाठः) ओं यमाय स्वा० ओं गन्धर्वाय स्वा० ओं भृङ्गराजाय स्वा० ओं मृगाय स्वा० ओं पितृभ्यः स्वा० ओं दौवारिकाय स्वा० ओं सुग्रीवाय स्वा० ओं पुष्पदन्ताय स्वा० ओं वरुणाय स्वा० ओं असुराय स्वा० ओं शेषाय स्वा० ओं पापाय स्वा० ओं रोगाय स्वा० ओं सर्पाय ( नागायवा ) स्वा० ओं मुख्याय स्वा० ओं भल्लाटाय स्वा० ओं सोमाय स्वा० ओं सर्प्पाय स्वा० ओं अदितये स्वा० ओं दितये स्वाहा ओं अद्भ्यः स्वाहा ओं सावित्राय स्वाहा ओं जयाय स्वाहा ॐ रुद्राय स्वाहा ओं अर्य्यम्णे स्वाहा ओं सवित्रे स्वाहा ओं विवस्वते स्वाहा ओं विबुधाधिपाय स्वा० ओं मित्राय स्वाहा ओं राजयक्ष्मणे स्वाहा ओं पृथ्वीधराय स्वाहा ओं आपवत्साय स्वाहा ओं ब्रह्मणे स्वाहा ओं चरक्यै स्वाहा ओं विदार्य्यै स्वाहा ओं पूतनायै स्वाहा ओं पापराक्षस्यै स्वाहा ( अन्यतन्त्रेपिलिपिच्छकापिपाठः ) ओं स्कन्दाय स्वाहा ओं अर्य्यम्णे स्वाहा ओं जृंभकाय स्वाहा ओं पिलिपिच्छाय स्वाहा ओं इन्द्राय स्वाहा ओं अग्नये स्वाहा ओं यमाय स्वाहा ओं निर्ऋतये स्वाहा ओं वरुणाय स्वाहा ओं वायवे स्वाहा ओं कुवेराय स्वाहा ओं ईशानाय स्वाहा ओं ब्रह्मणे स्वाहा ओं अनन्ताय स्वाहा ओं उग्रसेनाय स्वाहा ओं डामराय स्वाहा ओं महाकालाय स्वाहा ओं अश्विभ्यां स्वाहा ओं दुर्गायै स्वाहा इति हुत्वा हस्तेजलमादाय कृतेनानेन होमेन वास्तुदेवताः प्रीयन्तामिति स्वाभिमुखे ताम्रादिपात्रे उत्सृजेत् ॥

## अथ योगिनीहोमः

ओं जयायै स्वाहा ( इदंजयायैनमम ( एवं सर्वत्र त्यागः ) ओं विजयायै स्वाहा ओं अजितायै स्वाहा ओं अपराजितायै स्वाहा ओं क्षेमकर्य्यै स्वाहा ओं लक्ष्म्यै स्वाहा ओं वैष्णव्यै स्वाहा ओं

पार्वत्यै स्वाहा ओं दिव्यायै स्वाहा ओं महाशब्दायै स्वाहा ओं सिद्ध्यै स्वाहा ओं माहेश्वर्य्यै स्वाहा ओं प्रेताक्ष्यै स्वाहा ओं दाहिन्यै स्वाहा ओं काल्यै स्वाहा ओं कालरात्र्यै स्वाहा ओं निशाकर्य्यै स्वाहा ओं हुङ्कार्य्यै स्वाहा ओं वैतालिकायै स्वाहा ओं ह्रीँ कार्य्यै स्वाहा ओंभूतडामरायै स्वाहा ओंऊर्द्ध्वकेश्यै स्वाहा ओं विरूपाक्ष्यै स्वाहा ओं शुष्काङ्ग्यै स्वाहा ओं नरभोजिन्यै स्वाहा ओं फेत्कार्यै स्वाहा ओं वीरभद्रायै स्वाहा ओं धूम्राक्ष्यै स्वाहा ओं कलहप्रियायै स्वा० ओं राक्षस्यै स्वाहा ओं घोररक्ताक्ष्यै स्वाहा ओं विशालाक्ष्यै स्वाहा ओं वीरायै स्वाहा ओं भयङ्कर्य्यै स्वाहा ओं कुमार्य्यै स्वाहा ओं चण्ड्यै स्वाहा ओं वाराह्यै स्वाहा ओं मुण्डधारिण्यै स्वाहा ओं भैरव्यै स्वाहा ओं वज्रधारिण्यै स्वाहा ओंक्रोधायै स्वाहा ओं दुर्मुखायै स्वाहा ओं प्रेतवाहिन्यै स्वाहा ओं कर्कायै स्वाहा ओं दीर्घलम्बोष्ठ्यै स्वाहा ओं मालिन्यै स्वाहा ओं योगिन्यै स्वाहा ओं कालाग्निमोहिन्यै स्वाहा ओं मोहिन्यै स्वाहा ओं चक्रायै स्वाहा ओं कुण्डलिन्यै स्वाहा ओं वालुकायै स्वाहा ओं कौवेर्य्यै स्वाहा ओं यमदूत्यै स्वाहा ओं करालिन्यै स्वाहा ओं कौशिकायै स्वाहा ओं यक्षिण्यै स्वाहा ओं भक्षिण्यै स्वाहा ओं कौमार्य्यै स्वाहा ओं मन्त्रवाहिन्यै स्वाहा ओं विशालायै स्वाहा ओं कार्मुक्यै स्वाहा ओं व्याघ्र्यै स्वाहा ओं महाराक्षस्यै स्वाहा ओं प्रेतभक्षिण्यै स्वाहा ओं धूर्जट्यै स्वाहा ओं विकटायै स्वाहा ओं घोररूपायै स्वाहा ओं कपालिकायै स्वाहा ओं निष्कलायै स्वाहा ओं अमलायै स्वाहा ओं सिद्धिप्रदायै स्वाहा अनेन हवनेन योगिन्यः प्रीयन्तामिति जलमुत्सृजेत्।

## ❀ अथ क्षेत्रपालहोमः ❀

ओं अजराय स्वाहा ( इदमजरायनमम ( एवंसर्वत्रत्यागः ) ओं आपकुंभाय स्वाहा ओं इन्द्रस्तुतये स्वाहा ओं इडाचाराय स्वाहा ओं उक्तसंज्ञाय स्वाहा ओं उष्मादाय स्वाहा ओं

ऋषिसूदनाय स्वा० ओं मुक्ताय स्वा० ओं लुप्तकेशाय स्वा० ओं लुप्तकाय स्वा० ओं एकदंष्ट्राय स्वाहा ओं ऐरावताय स्वा० ओं ओघबंधवे स्वा० ओं औषधीशाय स्वा० ओं अंजनाय स्वा० ओं अस्त्रवाराय स्वा० ओं कवलाय स्वा० ओं खरुखानलाय स्वा० ओं गासुख्याय स्वा० ओं घंटादाय स्वाहा ओं ङमनसे स्वा० ओं चण्डवारणाय स्वाहा ओ छटाटोपाय स्वाहा ओं जटलाय स्वा० ओं झंगीवाय स्वा० ओं ञश्वराय स्वा० ओं टंकपाणये स्वाहा ओं ठानवन्धवे स्वा० ओं डामराय स्वा० ओं ढकारवाय स्वा० ओं णवार्णवाय स्वा० ॐ तडिद्दहाय स्वा० ॐ थिराय स्वा० ॐ दन्तुराय स्वा० ॐ धनदाय स्वा० ओं नक्तिक्तान्ताय स्वा० ॐ प्रचण्डकाय स्वा० ॐ फट्काराय स्वा० ओं ओं बीरसंघाय स्वा० ओं भृङ्गाय स्वा० ओं मेघभासुराय स्वा० ॐ युगान्ताय स्वा० ओं रौद्यवाय स्वा० ॐ लम्वोष्ठाय स्वाहा ॐ वासवाय स्वा० ओं शूकनन्दाय स्वा० ॐ षडालाय स्वा० ॐ सुनाम्ने स्वा० ॐ हंवुकाय स्वा० एभिर्हुत्वा तदन्ते अनेन होमेन क्षेत्रपालाः प्रीयन्तामिति वदन् जलमुत्सृजेत् ॥

## ॥ अथाष्टवसूनांहोमः ॥

ॐ ध्रुवाय स्वा० ( इदंध्रुवायनमम ( एवं सर्वत्र ) ओं धराय स्वा० ओं सोमाय स्वा० ओं आपवत्साय स्वा० ओं अनिलाय स्वाहा ओं नलाय स्वा० ओं प्रत्यूषाय स्वाहा ओं प्रभासाय स्वाहा । ( इत्यष्टवसुहोमः ) अनेन वसवः प्रीयन्तामित्युक्त्वा जलमुत्सृजेत् ॥

## ॥ अथद्वादशादित्यहोमः ॥

ओं धात्रेनमः ( इदंधात्रे० ( एवं सर्वत्र ) ओं अर्य्यम्णेनमः ओं मित्रायनमः ओं रुद्रायनमः ओं वरुणायनमः ओं सूर्यानमः

यनमः ओं भगाय स्वाहा ओं विवस्वते स्वाहा ओं पूष्णे स्वाहा ओं सवित्रे स्वाहा ओं त्वष्ट्रे स्वाहा ओं विष्णवे स्वाहा अनेन होमेन द्वादशादित्याः प्रीयन्तामिति पूर्ववत् ( इतिद्वादशादित्य-होमः ॥

## ॥ अथैकादशरुद्रहोमः ॥

ओं वीरभद्राय स्वाहा ओं शंभवे स्वाहा ओं गिरीशाय स्वा० ओं अजैकपदे स्वाहा ओं अहिर्बुध्नाय स्वाहा ओं पिनाकिने स्वा० ओं अपराजिताय स्वाहा ओं भुवनाधीश्वराय स्वाहा ओं कपालिने स्वाहा ओं स्थाणवे स्वाहा ओं भगाय स्वाहा अनेन होमेन रुद्राः प्रीयन्तामिति पूर्ववत् । ( इत्येकादशरुद्रहोमः )

## अथ मरुतः सप्तगणानांहोमः

ओं आवहाय स्वाहा ओं प्रवहाय स्वाहा ओं उद्वहाय स्वाहा ओं वहाय स्वाहा ओं विवहाय स्वाहा ओं परावहाय स्वाहा ओं परिवहाय स्वाहा अनेन होमेन मरुतः सप्तगणाः प्रीयन्ताम् इतिपूर्ववत् ॥

## ॥ अथ षड्विनायकानांहोमः ॥

ओं मोदाय स्वाहा ओं प्रमोदाय स्वाहा ओं सुमुखाय स्वाहा ओं दुर्मुखाय स्वाहा ओं अविघ्नाय स्वाहा ओं विघ्नकर्त्रे स्वाहा अनेन होमेन षड्विनायकाः प्रीयन्ताम् इतिपूर्ववत् ॥ ( ततः ) ओं ब्रह्मणे स्वाहा ओं विष्णवे स्वाहा ओं रुद्राय स्वाहा ओं गण-पतये स्वाहा ओं लक्ष्म्यै स्वाहा ओं सरस्वत्यै स्वाहा ओं क्षेत्रपा-लाय स्वाहा ओं वास्तुपुरुषाय स्वाहा ओं जातवेदसे स्वाहा ओं विश्वकर्मणे स्वाहा ओं भूतग्रामाय स्वाहा अनेन होमेनोक्ताः देवताः प्रीयन्तामिति पूर्ववत् ॥ ( ततः प्रधानदेवताहोमः कार्यः ) इति ।

श्रीचण्डीयागे प्रथमं पुस्तकं सम्पूज्य कवचार्गलाकीलकानि पठित्वा रात्रिसूक्तं च पठित्वा नवार्णन्यासं विधायाष्टोत्तरशतनवार्णमंत्रेण तिलाज्यपायसमिश्रद्रव्येण हुत्वा प्रथमचरित्रोक्तन्यासान् कृत्वा "ओं नमश्चण्डिकायै" इति देवीं नमन् मार्कण्डेय-उवाचेत्यारभ्य सप्तशतमंत्रैः सप्तशतसंख्याकहोमं समापयेत्। (मध्ये चरित्रसमाप्तौ) अग्रिमचरित्रस्य ध्यानादिकं कृत्वा तत्तच्चरित्रहोममारभेत्। (अध्यायसमाप्तौ तु) सर्वत्र पत्रपुष्पफलसहितैः प्रत्यध्यायोक्तद्रव्यैः नवार्णयुतनमोदेव्यै महादेव्यै शिवायै सततं नमः नमः प्रकृत्यै भद्रायै नियताः प्रणतास्म तां स्वाहेति वदन् महाहुतिं समर्प्पयेत जलोत्सर्ज्जनं च। चरित्रत्रयेषु यत्रयत्राध्याये विशेषद्रव्येण होमोविहितस्तत्र तत्र तैरेवद्रव्यैः होमः कार्य्यः (चण्डीयागेविशेषविधिः सप्तति पृष्ठे (७०) अवलोकनीयः

यथा प्रथमाध्यायान्ते। पूजितं ताम्बूलद्वयसहितं कपित्थफलं। द्वितीयाध्यायान्ते। सघृतंनारिकेलफलं। तृतीयान्ते। सघृतमधुपुष्पाणि। चतुर्थान्ते। सघृतं पूंगोफलं। पंचमान्ते। सघृतं बीजपूरफलं। षष्ठान्ते। सघृतं नारिकेलफलं। सप्तमान्ते सघृतं कूष्माण्डफलखण्डं। अष्टमान्ते। सघृतं इक्षुदण्डखण्डं। नवमान्ते। सघृतं कूष्माण्डखण्डमिक्षुदण्डंच। दशमान्ते। सघृतंमातुलिंगफलं। एकादशान्ते। सघृतंदाडिमीफलं। द्वादशान्ते। सघृतंविल्वफलं। त्रयोदशान्ते सघृतंकदलीफलं।

---

चण्डीयागे तु प्रधानहोमात्पूर्वमेव ब्रह्मादि देवतानां चतुःषष्टियोगिनीनां भैरवाणां च पीठदेवतानामावरणदेवतानां चैकैकाज्याहुतिं हुत्वा अनन्तरं सप्तशत्याजपदशांशहोमः कार्यः ॥ चण्डीयागादन्यत्र प्रधानदेवताहोमानन्तरमपि ब्रह्मादिदेवतानां होमोभवति पक्षान्तरे तत्रापि नवग्रहहोमस्तु प्रधानात् पूर्वमेव।

होमव्यवस्था (डामरतन्त्रे) पायसंसर्पिषायुक्तं तिलैः शुक्लैर्विमिश्रितम्। होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तमः॥ रुद्राध्याये यथाहोमो मंत्रेणैकेन साध्यते। तथा स्तोत्रं जपेद्धोमं श्लोकेनैकेन साधयेत्॥

यद्वा सप्तशतीजाप्ये होममंत्रोनवाक्षरः। (कृत्यरत्नावल्यां देवीपुराणे च) पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः। इति(मंत्रश्च)जयन्ती मङ्गलाकाली भद्रकाली कपा-

लिनी। दुर्गात्तमाशिवाधात्री स्वाहास्वधानमोस्तुते॥अनेनैव तु मंत्रेण जप होमादि-कारयेत्।(इतिदेवीपुराणात्) दुर्गाभक्तितरंगिण्यामप्येवमेवोक्तम्। (केचित्तु) मार्कण्डेयपुराणान्तरगत सप्तशतीस्तवेन प्रतिश्लोकं स्वाहान्तेन तिलपायसेन होमं कुर्वन्ति प्रतिश्लोकन्तु जुहुयात्पायसं तिलसर्पिषा (इतिरहस्यग्रन्थवचनात्) पुरश्चरणकार्येतु विल्वपत्रयुतैस्तिलै रितिवचनात् विल्वपत्रयुतैस्तिलैर्होमः कार्यः (इतिस्मार्ताः) यत्तु निर्णयसिन्धौ मानाभावादिति स्मार्तमतं दूषितं तत्तुच्छम् पूर्वोक्तवचनस्य मानत्वात्॥ यदिचैतद्वचनस्य नवरात्रसंवन्धिहोमाङ्गत्वेन विल्वपत्रयुततिलविधायकत्वे मानाभावइत्यभिप्रायस्तर्हि भावानवबोधः॥ नवरात्रसम्बन्धिकाम्यपुरश्चरणाङ्गहोमाभिप्रायेण तथाभिधानात्। तिथितत्त्वे नवरात्रप्रकरणे कालिकापुराणे च पुरश्चरणकार्येषु विल्वपत्रयुतैस्तिलैः साक्षतैः सघृतैर्वापि शिवामुद्दिश्य यत्नतः॥ जुहुयादनलं वृद्धं संस्कृतं कार्यवृद्धये इति (रुद्रयामले) प्रधानद्रव्यमित्याहुः पायसान्नं तिलास्तथा। किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैस्तथा॥ यवैर्वाश्रीफलैर्दिव्यैर्नानाविधफलैस्तथा। रक्तचन्दनमिश्रैश्च गुग्गुलैश्च मनोहरैः॥ प्रतिश्लोकं च जुहुयात् सर्वद्रव्याणि च क्रमात्। नवाक्षरेण वा हुत्वा नमो देव्याइतीतिच॥

(मन्त्रमहोदधौ) पायसान्नैस्त्रिमध्वाक्तैर्द्राक्षारंभाफलैरपि। मातुलुंगैरिक्षुदण्डैर्नारिकेलैः पुरस्तिलैः। जातिफलैराम्रफलैरन्यैर्मधुरवस्तुभिः। सप्तशत्या दशावृत्या प्रतिश्लोकेन वै हुनेत्। (अन्यत्र) शर्करां पायसं दूर्वां स्तिलाज्ञ्ह्युक्तान्यन्नानपि-चण्डीपाठस्य होमे तु प्रतिश्लोके दशांशतः।

सम्पुटितहोमे हरगौरीतन्त्रीया मन्त्रसंख्या॥ मन्त्रपुटं वीजपुटं दुर्गास्तोत्रं पठेत्सदा। मन्त्रवीजपुटा दुर्गा कामना सिद्धिदा सदा। होमकाले सदामन्त्रं दुर्गामंत्रं पृथक् हुनेत्। कामनावीजसंयोगोदुर्गामन्त्रेण संहुनेत्। दुर्गास्तवनमन्त्राणां संख्यासप्तशतं भवेत्। कामनामन्त्रसंख्या च शतं चैव चतुर्दश। मध्ये मन्त्रान् सप्तशतं होमकाले तु योजयेत्॥ पाठे मन्त्रपुटं वाच्यं होममन्त्राः पृथक् २। होम संख्या च मन्त्राणां शतं वै चैकविंशतिः। पाठे वीजपुटं वाच्यं होमेवीज पुटं हुनेत् तन्त्रान्तरे (कवचाहुतिनिषेधः) चण्डीस्तवे प्रतिश्लोकमेकाहुतिरिहेष्यते रक्षाकवचगैर्मन्त्रैर्होमं तत्रनकारयेत्। मौर्ख्यात्कवचगैर्मन्त्रैः प्रतिश्लोकं जुहोतिय। स्याद्देहपतनंतस्य नरकं प्रतिपद्यते। अंधकाख्योमहादैत्योदुर्गाहोमपरायणः। कवचाहुतिजा-

पाठसमाप्तौ खड्गिनीशूलिनीघोरेत्यादिन्यासान् कृत्वा नवार्णमंत्रेणाष्टोत्तरशताहुतीर्दत्वानन्तरं देवीसूक्तं रहस्यत्रयं च पठेत्। अत्र नवार्णमंत्रस्य जपान्तरं चेत्तदा तद्दशांशहोमोपि सम्पादनीयः ततोयवतिलसमिद्भिः पुनर्मूलमंत्रेण होमंकृत्वा व्याहृतिहोमः कार्यः। इतिप्रधानदेवताहोमः । चण्डीयागे ब्राह्म्यादिआवरणशक्तीनां

( होमं कृत्वा नामभिः स्रुवेणाज्यं पायसं च जुहुयात्। ) यथा कादम्बर्यैस्वाहा उल्कायै० करालयै० रक्ताक्ष्यै० श्वेतकौवेर्यै० हरितायै० यक्षिण्यै० कङ्काल्यै० सुरश्रियायै० सर्वराज्यै० ब्राह्मयै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० ऐन्द्र्यै० नारसिंह्यै० चामुण्डायै० धात्रे० विधात्रे० शंखनिधये० पद्मनिधये० द्वारश्रियै० वास्तुपुरुषाय० ऐरावताय० पुण्डरीकाय० वामनाय० कुमुदाय० अंजनाय० पुष्पदन्ताय० सार्वभौमाय० सुप्रतीकाय० दमनकाय० गुग्गुलाय० कुरंटकाय० ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय०। ( नवग्रहाणां दिक्पालानां च नामभिः ) असितांगभैरवाय० रुरुभैरवाय० चण्डभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० ततः पूर्वोक्त आधारशक्त्यादिपीठदेवताभ्य आवरणदेवताभ्यश्च हुत्वा स्विष्टकृतं हुत्वा ) ओं ह्रीं ब्राह्मी माहेश्वरीवैष्णवीनारसिंह्यै ह्रीं चामुण्डायै विच्चे स्विष्ट कृते स्वाहेति स्विष्टकृतं हुत्वाज्यं जुहुयात् ओं ह्रीं नन्दायै विच्चेस्वाहा। ॐ ह्रीं रक्तदन्तिकायै० विच्चे०। ॐ ह्रीं शाकम्भर्य्यैविच्चे० ॐ ह्रीं दुर्गायै विच्चे० ॐ ह्रीं भीमायै विच्चे० भ्रामर्यै० कालिकायै० शिवदूत्यै० प्रजापतये० इति हुत्वा वलिंदद्यादिति ( कमलाकरकृतशतचण्डीपद्धतौ ) महाजागरणोपेतं होमं स्यात्पञ्चमेऽहनि । इत्यादि शान्तिसारोक्तः पाठविधिर्होमविधिश्च अन्यत्र द्रष्टव्यः ।

---

त्पापान्महेशेन निपातितः इति। शूलेनेत्यादि चतुर्मंत्रैः तथा कवचादित्रयेण होमं न कारयेदितिसिद्धम्।

( कार्यपरत्वेन नवार्णदुर्गापाठेवा पल्लवनिर्णयः हरगौरीतन्त्रे ) ततः सप्तशतीं चैव रहस्यं पल्लवं तथा। चण्डीपाठे तथा होमे क्रमउक्तोमनीषिभिः। मन्त्राणां पल्लवोवासो मन्त्राणां प्रणवः शिरः। शिरः पल्लव संयुक्तो मन्त्रः कामदुघोभवेत्। वशयाकर्षणहोमेषु स्वान्तः सिद्धिदायकः। वौषट्पल्लवसंयुक्तो मन्त्रपुष्ट्यादि

अष्टभैरवाणां जयादिपीठशक्तीनां होमं सम्पाद्य ।

ततोग्रहादिविश्वकर्मान्तदेवेभ्यः पुनर्होमः कर्त्तव्यः ॥ अयं सर्वोपिग्रहादिहोमोप्रत्यहमावर्तनीयः ॥ तदन्ते अग्निपूजनम् । स्थापितदेवतानामुत्तरपूजनं च ॥ यथा ओं अद्येत्यादिदेशकालौ-संकीर्त्य नामगोत्रादिकमुच्चार्य मम यजमानस्य वा कृतस्य शत-चण्डीप्रयोगाङ्गहवनकर्म्मणः ( अमुकप्रयोगाङ्गहवनकर्मणोवा ) साङ्गतासिद्ध्यर्थं स्थापितदेवतानाममुकनामाग्नेश्चोत्तरपूजनं करिष्ये (इतिसंकल्प्य) ओं अग्नेनय सुपथारायेअस्मान्विश्वानिदेवव्वयुना-नि विद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्ते नमउक्तिं विधेम । ॥ अग्नयेनमः ॥ इतिगन्धादिपंचोपचारैः अग्निं सम्पूज्य स्थापित-देवतानामपि गन्धादिपंचोपचारैः पूजनं कुर्य्यात् । ततः अनया पूजया अग्निः स्थापितदेवताश्च प्रीयन्तामिति प्रार्थयेत् ॥ ततोहुत-शेषहविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्य्यात् ॥ अनेकदिनसाध्यहोमे तु पर्य्युषितदोषपरिहारार्थं हविश्शेषं स्विष्ट-कृदर्थं घृतमध्ये स्थापयेत् ॥ नष्टे दुष्टे वा हविषि आज्येनैव स्वि-ष्टकृद्धोमः॥ओं अग्नयेस्विष्टकृते स्वाहा (इदमग्नयेस्विष्टकृते) ततोघृतेन नवाहुतीर्जुहुयात् । ओं भूः स्वाहा ( इदमग्नये ) ओं भुवः स्वाहा ( इतिवायवे ) ओं स्वः स्वाहा ( इदंसूर्याय ) ओं भूर्भुवः स्वः स्वाहा ( इदमग्निवायुसूर्येभ्यः ) ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठोव्वह्नितमः शोशुचानो-

---

साधकः । हुंकारपल्लवोपेतो मारणे ब्राह्मणंविना यन्त्रभञ्जनकार्येषु सद्घोरभया-शने । वषडन्तः प्रकल्प्यस्तु ग्रहवाधाविनाशकः । उच्चाटनेतुसंप्रोक्तोमन्त्रः फट्पल्ल-वान्वितः । नमोन्तः शान्तिकेपुष्टौ प्रणीपाते च कीर्तितः । (मनुमते) वषड्वश्येफडु-च्चाटेहुँस्तम्भेखेचमारणे॥ स्वाहातुष्ट्यै ठःठः पुष्ट्यै नमः सर्वार्थसाधने । तन्त्रान्तरे । वषड्वश्येफडुच्चाटेहुँद्वेषेखे च मारणे । ठःस्तम्भेवौषडाकर्षेनमः संपत्तिहेतवे । स्वाहा पुष्टिस्तथातुष्टिरित्येतेमन्त्रपल्लवाः इति ।

विश्वाद्वेषा ँ्सि प्रमुमुग्ध्यस्मत्स्वाहा ॥ (इदमग्निवरुणाभ्यांनमम) ओं सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ । अवयद्वनोव्वरुणठं रराणोवीहिमृडीकठं सुहवोनऽएधि स्वाहा ॥ (इदमग्नीवरुणाभ्याम्) ओं अयाश्चाग्नेस्यनभिशस्ति याश्च सत्यमित्वमयाऽअसि । अयानोयज्ञं वहास्ययानोधेहिभेषज ँ् स्वाहा (इदमग्नये०) ओं येतेशतं वरुणये सहस्रं यज्ञियाः पाशावितत्तामहान्तः । तेभिर्न्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्क्काः स्वाहा ( इदंव्वरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्क्केभ्यश्च० ) ओं उदुत्तमम्व्वरुणपाशमस्मदवाधमम्विमद्ध्यम ँ् श्रथाय अथा व्वयमादित्यव्रते तवानागसोऽदितयेस्याम स्वाहा ॥ ( इदंवरुणायादित्यायादितये० ) ओं प्रजापतये स्वाहा ( इदं प्रजापतये० ) एवं सर्वदोषशान्त्यर्थं [ अष्टोत्तरशतमघोरेण ] हुत्वा स्विष्टकृतं हुत्वा सर्वप्रायश्चित्तहोमं विधाय पूर्वादिदिक्षु इन्द्रादिभ्योवलिं दद्यात् ( केचिदत्रोत्तराङ्गपूजांकुर्वन्ति )

---

( पाराशरः ) आघारावाज्यभागौ च महाव्याहृतयस्तथा । सर्वप्रायश्चित्तसंज्ञाः पंचैवाहुतयस्तथा ॥ प्राजापत्यं स्विष्टिकृतोऽग्नेर्होमश्च सर्वतः । होमकर्मण्याहुतीनां चतुर्दशकमीरितम् । प्रायश्चित्तविशेषस्य यत्रनोक्तोविधिर्भवेत् । होतव्याज्याहुतिस्तत्र भूर्भुवः स्वरितीति च ॥ सर्वोत्कृष्टं प्रायश्चित्तं ( स्मृतिचन्द्रिकायाम् ) प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषुयत् । स्मरणादेवतद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ एतत्प्रायश्चित्तहोम ब्रह्मैव कुर्य्यात् जुहोतिजपतीति प्रायश्चिते ब्रह्माणम् इति सूत्रात् ॥ ब्रह्माभावे यजमानएवैतान् जुहुयात् ( इति प्रयोगपारिजाते ) ॥ ( नवाहुतिरिति कारिकायाम् । ) आज्येन व्याहृतीर्हुत्वा भूर्भुर्स्वः स्वरिति क्रमात् । पंचवारुणकं तद्वदन्ते चैव प्रजापतिः ॥ ( महाव्याहृतीराह पराशरः ) संतपायासृजद्ब्रह्मा सप्त व्याहृतिः पुरा । भूर्भुवस्वर्महर्जनस्तपः सत्यं तथै वच ॥ आद्यास्तिस्त्रोमहाप्रोक्ताः स्रुवस्तु प्रतियोजयेत् ( शङ्खस्तु ) भूर्भुवः स्वर्महोजनस्तपः सत्यमिति महाव्याहृतय इत्याह । बोधायनेन तु भूरग्नयेचेति मन्त्र चतुष्टयं महाव्याहृतयइत्युक्तम् ॥ इति ।

# ॥ इन्द्रादिदशदिक्पालेभ्योबलिदानविधिः ॥

पूर्वे त्रातारमिन्द्रमवितारमिन्द्रमितीन्द्रं ( ध्यात्वा ) इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भोइन्द्र दिशं रक्ष बलिं भक्ष यजमानस्य आयुष्कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव । इति ( पूर्वदिशि ) बलिंसमर्प्पयेत् ( आग्नेय्याम् ) त्वन्नोअग्नेव्वरुणस्येति ( अग्निंध्यात्वा ) अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भोअग्ने दिशं रक्षेत्यादि पूर्ववदुच्चरन्नाग्नेय्यां ( बलिमुत्सृजेत् ( दक्षिणस्याम् ) यमायत्वा मखायत्वेति यमं ( ध्यात्वा ) यमाय सांगाय सपरिवाराय सबलायुधाय सशक्तिकायैतं दधिमाषभक्तबलिं ( समर्प्पयामि ) भो यम दिशं रक्षेत्यादिपूर्ववदभिधायदक्षिणस्याम् बलिमुत्सृजेत् । ( नैर्ॠत्याम् ) असुन्वन्तमयजमानेत्यादिना निर्ॠतिं [ ध्यात्वा ] निर्ॠतये साङ्गाय सपरिवाराय सबलवाहनाय सशक्तिकायैतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भोनिर्ॠते दिशंरक्षेत्यादिपूर्ववत् । [ पश्चिमस्याम् ] ओं तत्त्वायामीतिमंत्रेण वरुणं [ ध्यात्वा ] वरुणाय साङ्गायेत्यादि कथित्वा भोवरुणदिशंरक्षेत्यादिपठन् पश्चिमे ( बलिमुत्सृजेत ) [ वायव्याम् ] ओं आनोनियुद्भिरितिमंत्रेण वायुं ध्यात्वा । वायवे साङ्गायेति पठित्वा दिशंरक्षेत्यादि सर्वम्प्रपठन् वायौ ( बलिमुद्धरेत् ] [ उत्तरस्यां ] ॐ वय-सोमव्रते इति मंत्रेण कुवेरं ध्यात्वा कुवेराय सांगायेत्युक्त्वा भोकुवेर दिशंरक्षेत्यादिसर्वम्पूर्ववदुच्चरन् उत्तरस्यां [ बलिंक्षिपेत् ॥ ] [ ईशान्याम् ] तमीशानमितिमंत्रेणेशानं ध्यात्वा ईशानायेतिसर्वं भोईशानेतिसर्वमुच्चरन् [ एशान्याम्बलिंसमर्पयेत् ] [ ईशानपूर्वयोर्मध्ये आकाशदेवं ब्रह्माणं ब्रह्मयज्ञानमितिमन्त्रेण ध्यात्वा ब्रह्मणे सांगायेत्यादि भोब्रह्मन्नि-

त्यादि च सर्वंपठित्वोक्तदिशि ब्रह्माणं [ वलिमर्प्पयेत् ] निर्ऋ-तिपश्चिमयोर्म्मध्ये पातालदेवमनन्तं स्योनापृथिवीतिमंत्रेण ध्यात्वा अनन्ताय सांगायेति भोअनन्तेत्यादिचसर्वंपूर्ववत्पठित्वाऽन-न्ताय पाताललोकपालाय ( वलिंदद्यात ) इति ( दिक्पालवलिः) अथग्रहवलिः ] ओं ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्रायमतिम् । तेषांविशिप्रियाणां व्वोहमिषमूर्ज्जं समग्रभमुपयामगृहीतोसी-न्द्रायत्वा जुष्टङ् गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम्॥ ग्रहेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सवलवाहनेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतं सदीपं दधिभक्तमाषवलिं समर्प्पयामि । भोग्रहाः दिशंर-क्षत वलिंभक्षत अस्य यजमानस्य आयुष्कर्त्तारः क्षेमकर्त्तारः शान्तिकर्त्तारः पुष्टिकर्त्तारस्तुष्टिकर्त्तारः वरदाभवत ( इति ) ग्रहवलिः । ( अथमातृकावलिः ) भोमातरः दिशंरक्षत वलिं-भक्षत इत्यादिपठित्वा ( मातृकाभ्योवलिमर्पयेत् ) ततः एकस्मि-न्पात्रे दधिमाषभक्तसिन्दूरकज्जलदीपद्रव्यहरिद्राकुंकुमपताकायुतं वलिं कृत्वा, (देशकालौसंकीर्त्य) कृतस्यकर्म्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालवलिमहं करिष्ये (इतिसंकल्प्य) ॐ नहिस्पशमविदन्न्यन्य-मस्माद्वैश्वानरात्पुरऽएतारमग्नेः । एमेनमवृधन्नमृताऽअमर्त्यंव्वैश्वा-नरङ्क्षेत्रजित्यायदेवाः । ॐ क्षेत्रपालायनमः । इति गन्धादिभिःक्षे-त्रपालं सम्पूज्य ॐ क्षेत्रपालाय शाकिनी डाकिनी भूतप्रेतवेतालादि सहितायसशक्तिकाय सवाहनाय इमं सदीपं माषभक्तादिवलिं स-मर्पयामि भो क्षेत्रपाल! दिशंरक्ष वलिंभक्ष मम यजमानस्य आयु ष्कर्ता क्षेमकर्ता यशस्कर्ता शान्तिपुष्टितुष्टिकर्ता वरदोभवेति ( वलिमर्पयित्वा ) ततः द्यौः शान्तिरितिमंत्रं पठेत् अनन्तरं वलि-मनवेक्षमाणोदुर्ब्राह्मणेन वलिं ग्राहयित्वा चतुष्पथे ( स्थापयेत ) ततो यजमानस्तस्य पृष्टदेशतोगत्वा जलं क्षिपेत् । (तत्रमंत्रः) ॐ हिंकाराय स्वाहा हिंकृताय स्वाहा क्रंदतेस्वाहा अवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहा घ्राताय स्वाहा निविष्टाय स्वाहा ह्युपविष्टाय स्वा॰सन्दिताय स्वाहा वल्गते स्वाहा सीनाय स्वाहा

शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृंभमाणाय स्वाहा विचृताय स्वाहा सठँ हानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा इति क्षेत्रपालबलिः ( अथ भूतबलिः ) शूर्पमध्ये पिष्टमय दीप माषान्न दध्योदनहरिद्रासिन्दूरकज्जलगन्धरक्तपुष्पाणि संस्थाप्य चत्वरे गत्वा ॥ भूतेभ्यो नमः ॥ इति भूतं सम्पूज्य ॥ ॐ भूतायत्वा नारातये स्वरभिविख्ये षन्दृठँ हन्तान्दुर्य्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्याऽउपस्थेग्ने हव्यठ रक्ष ॥ इति मंत्र पठित्वा । शूर्पे स्थापयेत [ प्रार्थयेच्च ] ॐ बलिं गृह्णन्तु ते देवा आदित्यावसवस्तथा । मरुतश्चाश्विनौ-रुद्राः सुपर्णाः पन्नगाः ग्रहाः ॥ जृंभकाः सिद्धगन्धर्वामालाविद्या धरानगाः । असुरायातुधानाश्च पिशाचा डाकिनीगणाः ॥ शक्तयो यक्षवैतालाः ये च विघ्ननायकाः ] जगतां शान्तिकर्तारः क्रमाद्या श्चैव मातरः ॥ माविघ्नं मा च रोगोनासन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ते सर्वेतृप्तिमायान्तु रक्षां कुर्वन्तु मेध्वरे । देवताभ्यः पितृभ्यश्च भूतेभ्यः सहजन्तुभिः एतत्स्थानाधिवासिभ्यः प्रयच्छामि बलिं नमः त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वन्तु तानि मे । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएव च । एते ममाध्वरे रक्षां कुर्वन्तु प्रमुदान्विताः ॥ एतेभ्योभूतेभ्योगन्धादिकं वः स्वाहा ॥ ( इतिभूतबलिः)

# अथ पूर्णाहुतिविधानम्

तत्र प्रथमं सांकल्पिकद्रव्यं जलाक्षतेच दक्षेपाणौ गृहीत्वा ( देशकालादीन् संकीर्त्य ) कृतस्य कर्म्मणः साङ्गतासिद्ध्यर्थं वसोर्धारासमन्वितं पूर्णाहुतिमहं करिष्ये ( इतिसंकल्प्य ) चतुर्गृही-

हीतमाज्यं द्वादशगृहीतम्वा वस्त्रनारिकेलपूगीफलपुष्पचन्दनमाल्यादियुतं तदुपरि निधाय पूर्णाहुतिं यजमानेनसहान्वारब्धआचार्य्योजुहुयात् । ( तत्र पठनीयामंत्राः ) ओं समुद्रादूर्म्मिर्म्मधुमाँ २ उदारदुपाᳬशुना सममृतत्वमानट् । घृतस्य गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १ ॥ व्वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञे धारयामा मनोभिः । उपब्ब्रह्माश्रृणवच्छस्य मानश्चतुः शृङ्गोवमीद्गौरऽएतत् ॥ २ ॥ चत्वारिश्शृङ्गात्रयोअस्यपादा द्वेशीर्षे सप्तहस्तासोऽअस्य । त्रिधाबद्धोवृषभोरोरवीति महादेवोमर्त्याँ २ आविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासो घृतमन्वविन्दन् । इन्द्रऽएकꣳ सूर्य्यएकञ्जजानव्वेनादेकꣳ स्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणानावचक्षे घृतस्यधाराऽअभिचाकशीमि हिरण्ययोव्वेतसोमध्यऽआसाम्॥५॥

---

( पूर्णाहुतिरिति ) विधाने पूर्णे सत्याहुतिर्या सा पूर्णाहुतिः । ( यद्वा ) पूर्ण ईश्वरस्तस्मै याहुतिः सापूर्णाहुतिरिति । (चतुर्गृहीतमाज्यमिति) अग्न्यदाज्यं समानीयाधिश्रिते स्रुक्स्रुवावुभौ । तौ प्रतप्य च संमार्गकुशैः सम्मृज्य सिञ्चयेत् ॥ पुनः प्रताप्य याम्यायां निदध्यात् स्रुक्स्रुवौचतौ । आज्यमुद्वास्य चोत्पूयावेक्ष्याप द्रव्यनिष्कृतिः ॥ चतुर्गृहीतमाज्यं तद्गृहीत्वा स्रुचि मध्यतः । वस्त्रताम्बूलपूगादि फलपुष्पसमन्वितम् ॥ अधोमुखस्रुवच्छन्नं गन्धाक्षतसमन्वितम् । पूर्वंदक्षिणहस्तेन पश्चाद्वामेनपाणिना ॥ अग्रमध्यममध्यस्थं मूलमध्यममध्यतः । पाणिद्वयेन होतव्यं पाणिरेकोनिरर्थकः ॥ गृहीत्वाऽथस्रुवं कर्ता शङ्खसन्निभमुद्रया । वामस्तनान्तमानीय नाभिमूलात्स्रुवं ततः ॥ सप्ततेत्यनुवाकान्ते मखेसूक्तान्विशेषतः । श्रावयेत्सूक्तमाग्नेयं१ वैष्णवं२ रौद्र३ मैन्द वम्४ ॥ महावैश्वानरं५ चापि चमकानिद नतः पठेत् ।

( १— समास्त्वेति नवर्चमाग्नेयम् । २— विष्णोर्नुकं वीर्याणीतिषडर्चं वैष्णवम् । ३— नमस्तेतिषोडशर्चंरौद्रं । ४— आप्यायस्वेतिषडर्चमैन्दवम् । ५—महावैश्वानरं…… । वाजश्चमे इत्यारभ्यसप्तविंशत्यर्चं चमकम् ॥ एतानि सूक्तानि अग्रे द्रष्टव्यानि )

सम्यक्स्रवन्ति सरितोनधेनाऽअन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्म्मयोघृतस्य मृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिन्धोरिवप्राध्वने शूघनासोव्वातप्रमियः पतयन्ति यह्वाः घृतस्य धारा-अरुषोन व्वाजीकाष्ठाभिन्दन्नूर्मिभिः पिन्वमानः ॥ ७ ॥ अभिप्रवन्त समने वयोषाः कल्याण्यः स्मयमानासोऽग्निम् । घृतस्यधारा समिधोनसन्तताजुषाणोहर्य्यति जातवेदाः ॥ ८ ॥ कन्याइववहतुमेतवाऽउअञ्ज्यञ्जानाऽअभिचाकशीमि । यत्र सोमः सूयते यत्र यज्ञोघृतस्य धाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षत सुष्टुतिङ्गव्व्य माजिमस्मासुभद्राद्रविणानि धत्त । इमं यज्ञं नयत देवतानोघृतस्य-धारा मधुमत्पवन्ते ॥ १० ॥ धामन्ते व्विश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि । अपामनीके समिथेयऽआभृतस्तमश्याममधुमन्तन्तऽउर्म्मिम् ॥ ११ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या व्वैश्वानरमृतआजातमग्निम् । कविᳬ सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ १ ॥ पुनस्त्वादित्यारुद्राव्वसवः समिन्धताम्पुन-

( शौनकः ) अन्ते पूर्णाहुतिं हुत्वा समुद्रादूर्मिसूक्ततः । सततमाज्यधारां तां पूर्णाहुतिमथाचरेत् ॥ ( ग्रहकल्पवल्ल्याम् ) शुक्रज्योत्यनुवाकेन घृतेनाच्छिन्नधारया । होमान्ते सर्वकल्याणि देया पूर्णाहुतिः सदा ॥ ( प्रयागपारिजातेपूर्णाहुतिविधिः । ) आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम् । तथा चान्याहुतिः कार्या सापूर्णाहुतिरिष्यते ॥ स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः । ( इति कर्तव्यतामाह संग्रहकारोऽपि । ) एवं यथोदितं शक्त्या हुत्वापूर्णाहुतिं चरेत् ॥ घृतेनापूर्य्य स्रुग्गर्भमूर्ध्ववक्त्रस्रुचि स्रुवम् । निधायाधोमुखं न्यसेत्स्रुवाग्ने कुसुमाक्षताः ॥ पश्चाद्वामपुरोदक्षकराभ्यां शंखमुद्रया । गृहीत्वा स्रुक्स्रुवौ मंत्री स्रुवाग्ने न्यस्तलोचनः ॥ ऋजुकायः प्रसन्नात्मा समपादः समुत्थितः । स्थिरधीर्जुहुयादग्नौ यत्र प्रमितधारया ॥ पूर्णाहुतिरियं प्रोक्ता सर्वकर्मप्रपूरणी ।

## पौराणकर्मंदर्पणीयपूर्णाहुतिविधानम् ।

शक्रादयइतिआरभ्य तच्छृणुष्वमयाख्यातं यथावत्कथयामिते इत्यन्तं द्विचत्वारिंशन्मन्त्रान्पठित्वा तत नमोदेव्यै इति मन्त्रान्तेस्वाहाकारेण पूर्णाहुतिं दत्वा

ब्रह्माणोवसुनीथयज्ञैः घृतेनत्वन्तन्न्वम्वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ १३ ॥ चितिञ्जुहोमि मनसा घृतेन यथादेवाऽइहागमन्वीतिहोत्राऽऋतावृधः । पत्ये व्विश्वस्य भूमनो जुहोमि व्विश्वकर्म्मणे व्विश्वाहादाभ्यठं हविः ॥ १४ ॥ पूर्णादर्व्वि परापत सुपूर्णा पुनरापत वस्नेवव्विक्रीणा वहाइषमूर्ज्जठं शतक्रतो-स्वाहा ॥ १५ ॥ ( इति स्वाहाकारेणाग्नौक्षिपेत् इदमग्नये वैश्वान-राय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च नमम ( इतिपठित्वा ) पुनः आग्नेयं, वैष्णवम्, रौद्रम्, ऐन्दवम्, महावै-श्वानरम्, चमकंच पठेत्, ( ततः ) ओं सप्ततेऽअग्ने समिधः सप्तजिह्वाः सप्तर्षयः सप्तधाम प्रियाणि । सप्तहोत्राः सप्तधात्वा

नमः इति मन्त्रमुच्चार्य इदमग्नये अमुकंनाम्ने वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च नममेतित्यागं कृत्वा वसोर्द्धारांजुहुयात् तत्रमन्त्राः देवाऊचुः नमोदेव्यै इत्यारभ्य सर्वापदोभक्तिविनम्रमूर्तिभिरित्यन्तं पठित्वापुनर्नमोदेव्यै इति पूर्णंपठित्वा असितगिरिसमंस्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनीपत्र-मूर्वी लिखित यदिगृहीत्वा शारदासर्वकालं तदपि तवगुणानामीशपारं नयाति ) नमः इति इतिपूर्णाहुतिप्रकारः सुवसुगमउक्तः । ततः अग्न्यायतनस्य ईशान्याः स्रुवेणविभूतिंगृहीत्वा । श्रद्धांमेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियंवलम् । तेज आयु-ष्यमारोग्यं देहिमेहव्यवाहन ॥ यथाशस्त्रप्रहाराणां कवचं भवतिवारणम् एवं दैवोपघातानां शान्तिर्भवति वारणम् । इति मन्त्रद्वयमुक्त्वा ललाटे ग्रीवायां दक्षांसे वामांसे हृदि एषुस्थानेषुभस्मधारणंकारयति ततो हस्तेजलं गृहीत्वा आघारावादि पूर्णाहुतिपर्य्यन्तं यद्यत् द्रव्यंयावत् यावत्संख्याकं यस्यै यस्यै देवतायै यावत्योयावत्यआहुतयस्तास्तादेवताः प्रीयन्तामिति समर्प्पयति ततः संस्रवप्राशनंकरोति । पवित्राभ्यांमार्जनंकरोति ततः अग्नौ पवित्रप्रतिपत्ति-रिति ततोब्रह्मणेपूर्णपात्रदानम् । संकल्पस्तुप्रयोगानुसारः अन्तेप्रतिगृह्यताम् प्रति-गृह्णामीतिब्रह्मणः प्रतिवचनम् । ततः प्रणीताविमोकः । ततः यत्तेकेशेषु इतिमंत्रेण विमोकोदकं यजमानमूर्द्धनि अभिषिंचेत् । यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च-मूर्द्धनि ललाटेकर्णयोरक्ष्णोरापोनिघ्नन्तुतेसदा इति ॥ अमृताभिषेकोस्तु इति-पूर्णाहुतिविधानम् ।

यजन्ति सप्तयोनी रापृणस्व घृतेन स्वाहा । शुक्रज्ज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्योतिष्माँश्च शुक्रश्च ऋतपाश्चात्य॑ꣳहाः ॥ १७ । ८० ॥ ईदृङ्चान्यादृङ्च सदृङ्च प्रतिसदृङ्च मितश्च संमितश्च सभराः ॥ ८१ ॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ताच विधर्त्ताच विधारयः ॥ ८२ ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्चदूरेऽअमित्रश्च गणः ॥ ८३ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षासः प्रतिसदृक्षासऽ एतन । मितासश्च सम्मितासोनोअद्यसभरसोमरुतोयज्ञे स्मिन् ॥ ८४ ॥ स्वतवाँश्च प्रघासीच सान्तपनश्च गृहमेधीच । क्रीडीच शाकीचोज्जेषी ॥ ८५ ॥ इन्द्रन्दैव्वीर्व्विशोमरुतोनुवत्र्मानोभवन् । एवमिमं यजमानन्दैवीश्च व्विशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६ ॥ इमꣳस्तनमूर्जस्वन्तं धयापाम्प्रपीनमग्ने सरिरस्य मध्ये । उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे घृतमस्य योनिर्घृ तेश्रितोघृतम्वस्य धाम । अनुष्वधमावहमादयस्व स्वाहाकृतं वृषभव्वक्षि हव्यम् ॥ ८८ ॥ उग्रश्च भोमश्च ध्वान्तश्च धुनिश्च सासह्वाँश्चाभियुग्वाचव्विक्षिपः स्वाहा ॥ पुनस्त्वादित्यारुद्रा० ॥ वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारं । देवस्त्वा सविता पुनातुव्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ सहैवयज्ञ उवाचनग्नतायाविभेमीतिकातेनग्नःतेत्यभितएवपरिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणंति वितृष्णाया वै विभेमीति काते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमन्नेतृप्येयमिति तस्मात्सꣳरिते यज्ञे ब्राह्मणे तर्पयति तं वै ब्रूयाद्यज्ञमेवैनं तर्पयति ॥ यत्कर्मणोत्यरीरिचं यद्वान्यूनमिहाकरम् । अग्निष्टुत्स्विष्टकृद्विद्वान्त्स्विष्टꣳसुहुत करोतु स्वाहा ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलं । तेज आयुष्यमारोग्यं देहि मे हव्यवाहन ॥ इति पूर्णाहुतिविधानम् । ततस्त्र्यायुषकरणम् । त्र्यायुषंजमदग्नेरितिललाटे । कश्यपस्यत्र्यायुषमितिग्रीवायाम् । यद्देवेषुत्र्यायुषमितिबाहुमूले । तन्नोऽअस्तुत्र्यायुषमितिहृदि ॥ ततः

संस्रवप्राशनम् ॥ आचमनं । पवित्राभ्यां मार्जनम् । अग्नौपवित्र-
प्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ तद्यथा हस्तेजलाक्षतादिकं
गृहीत्वा देशकालादीन् संकीर्त्य ओं अद्यकृतैतत् अमुकहोमकर्म्म-
णि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थं इदं पूर्णपात्रं प्रजापति-
दैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं

---

त्र्यायुषकरणमिति । ऐशान्यामाहरेद्भस्म स्रुचाचाथस्रुवेण वा । अङ्कनंकार-
येत्तेन शिरः कंठांसकेषुच ॥ त्र्यायुषमित्येतैश्चतुर्भिर्मन्त्रपादकैः । ( इतिशान्तिरत्ने )
अनामिकागृहीतेन भस्मनाललाटे ग्रीवायां दक्षिणांसे हृदयेप्रतिपादंत्र्यायुषाणि
कुरुते ॥ त्र्यायुषकरणं सूत्रकारैरनुक्तमपि प्रसिद्धत्वात् शिष्टाचारपरम्पराचरितत्वा-
त्क्रियते ॥ इतिहरिहरः ॥ वस्तुतः समिधादानविषयएवैषविचारः ॥ जुहुयादिति
( प्राचीनहोमपद्धतौ ) पूर्णाहुतिमथोहुत्वा वर्हिर्होमादिकंचरेत् । तथाच सूत्रम्
वर्हिर्हुत्वाप्राश्नाति । परिस्तरणवर्हिर्हस्तेनैवहुत्वा पात्रान्तरस्थापितहोमशेषद्रव्यं
भक्षयति । प्राशनस्यप्राप्तत्वात् । वर्हिर्होमोत्तरकालविधानार्थं ग्रहणम् । शेषरक्षणं
भक्षणं च श्रौतसूत्रे उक्तमस्ति । पाकयज्ञेष्ववत्तस्यासर्वहोमोहुत्वा शेषप्राशनम् ।
अस्यार्थः- पाकशब्देनच स्मार्तहोमाउच्यन्ते तत्र च होमार्थं यदवत्तं गृहीतं तस्य
असर्वहोमः कर्त्तव्यः । स्रुवादिभिर्यद्गृहीतं तद्धुत्वा किंचित्परिशेष्य पात्रान्तरे
स्थापनमित्यर्थः । सर्वहोमान् हुत्वापात्रान्तरस्थापितसर्वशेषाणां प्राशनम् । वर्हि-
र्होमश्चात्रैववचनान्नान्यकर्मसु । वर्हिर्होमेप्रजापतिर्देवता अनिरुक्तत्वात् । तथा च
मन्त्र-लिङ्गम् । अनिरुक्तोवैप्रजापतिः । आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्र-
स्यदेवतायांश्च प्रजापतिरितिस्थितिः ॥ ( इति छन्दोगपरिशिष्टे कात्यायनोक्तेश्च )
वर्हिर्होमश्चविधान सामर्थ्यादग्न्याधानएव भवति नान्येषुकर्मस्विति(हरिहरः) ।
वर्हिर्होमश्चात्र विधानसामर्थ्यान्नान्यत्रेति(जयरामः) ॥ कर्काचार्योपि वर्हिर्होमश्चा-
ग्न्याधानएवेति । ततो ब्राह्मणभोजनमितिसूत्रे तत इतिपदादेवज्ञायते मध्येमार्ज्जनं
पवित्रप्रतिपत्तिः, प्रणीताविमोकः दक्षिणादानं च कृत्वा ब्राह्मणभोजनम् । (इति गदा
धराचार्यः) न्युब्जीकुर्य्यादिति पूर्णाहुतिंहुत्वा प्रणीतानिनयादीनि । इति ।
ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता । कर्मान्तेऽनुच्यमानायां पूर्ण-
पात्रादिकाभवेत् ॥ नामकरणादिषु सूत्रोक्ता गौर्देया अन्यत्र पूर्णपात्रमिति । पूर्ण-
पात्रलक्षणं ( सुदर्शनभाष्ये ) अष्टमुष्टिभवेत् किंचित् किञ्चिच्चत्वारिपुष्कलम् ।

सम्प्रददे ॥ ओं स्वस्तीतिप्रतिवचनम् ॥ ततोब्रह्मग्रन्थिविमोकः ॥ ततः पात्रेण जलमादायाग्नेरुपरि भ्रामयित्वा तज्जलेन यजमानशि-

पुष्कलानितु चत्वारि पूर्णपात्रं प्रचक्षते ॥ इति अन्यत्र अष्टमुष्टिभवेत्किंचित् किञ्चिदष्टौतुपुष्कलम्। पुष्कलैरष्टभिश्चैकः पूर्णपात्रउदीरितः ॥ ( कारिकायाम् ) अकृतेपूर्णपात्रे च छिद्रयज्ञः प्रजायते। पूर्णपात्रे च सम्पूर्णे सर्वंसम्पूर्णताभवेत् ॥ ( आगमसारसंग्रहे ) द्वात्रिंशत्पलताम्रेण निर्मितं ताम्रपात्रकम्। तण्डुलेन समापूर्य सहिरण्यं सदक्षिणम् ॥ कर्तावृताय दद्यात्तत्पूर्णपात्रं विदुर्बुधाः। ( छन्दोगपरिशिष्टे ) यावतान्नेन भोक्तुस्तु तृप्तिः पूर्णैवजायते। तद्वरार्थमतः कुर्यात्पूर्णपात्रमितिस्थितिः ॥ यवैर्वाव्रीहिभिः पूर्णंभवेत्तत्पूर्णपात्रकम्। वराभिलषितं द्रव्यं सारभूतंतदुच्यते ॥ गौर्वरिष्ठतमाविप्र वेदेष्वपि निगद्यते। नततोऽन्यद्वरं यस्मात्तस्माद्गौर्वर उच्यते ॥ आसां गवामभावेतु दक्षिणात्वभिधीयते। वरस्तत्रभवेद्दानमपिवाच्छादयेद्गुरुम् ॥ ( ब्रह्मवैवर्ते ) यज्ञोदक्षिणयासार्द्धं पुत्रेणचफलेनच। कर्मिणां फलदाताचेत्येवं वेदविदोविदुः ॥ कृत्वा कर्म च तस्यैव तूर्णंदद्याच्चदक्षिणाम्। तत्कर्मफलमाप्नोति वेदैरुक्तमिदंमुने ॥ मुहूर्तेसमतीतेतु भवेच्छतगुणा च सा। त्रिरात्रेतद्दशगुणा सप्ताहे द्विगुणाततः ॥ मासे लक्षगुणाप्रोक्ता ब्राह्मणानांच वर्द्धते। सम्वत्सरे व्यतीतेतु सात्रिकोटि गुणाभवेत् ॥ (नकेवलं ब्रह्मदक्षिणाकिन्तु सर्वदक्षिणापरकमेतद्वचनम्।

ब्रह्मणे दक्षिणाविशेषमाह ( कारिकाकारः ) यन्मुख्यं स्वगृहेद्रव्यं होमकर्त्रेददातिहि। (हेमाद्रौमहाभारते च) वेदोपनिषदेचैव सर्वकर्मसुदक्षिणा। सर्वक्रतुषुचोद्दिष्टा भूमिर्गावोऽथकांचनम् ॥ तत्र श्रुतिस्तुपरमासुवर्णंदक्षिणाइति। रजतदक्षिणानिषेधोक्ता ( वैद्यनाथेन ) शिवनेत्रोद्भवंयस्मात् तस्मात्तत्पितृवल्लभम्। अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितम् ॥ तथाशतपथब्राह्मणे। यदश्वीयता तद्रजतꣳ हिरण्यमभवत् तस्मात्तद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हियोवर्हिषिददातिपुराऽस्य संवत्सराद्गृहेरुदन्तितस्माद्बर्हिषिनदेयम्(वर्हिषिदैविकेकर्मणि इतिप्रयोगपारिजाते) अथ प्रसङ्गाद्ब्रह्मलक्षणम्। यन्निकृष्टमधीयानंब्राह्मणं योव्यतिक्रमेत्। यद्ददातितमुल्लङ्घ्यस्तस्यस्तेयेनलिप्यते ॥ यस्यत्वेकगृहेमूर्खोदूरेचार्य्यगुणान्वितः। गुणान्विताय दातव्यं नास्तिमूर्खव्यतिक्रमः ॥ ब्राह्मणातिक्रमे विप्रे नास्तिवेदविवर्ज्जिते। ज्वलन्तमग्निमुत्सृज्य नहिभस्मनिहूयते ॥ ब्रह्मलक्षणम् ( प्रयोगचिन्तामणौव्यासः )

रसि कुशैरभिषेकं कुर्य्यात् । ओं सुमित्रियानऽआपओषधयस्सन्तु शान्तिरस्तु । पुष्टिरस्तु । यच्छ्रेयस्तदस्तु । यत्पापंतत्प्रणश्यतु । द्विपदेभ्यश्चतुष्पदेभ्यः शान्तिर्भवतु । ततः ॥ ओं दुर्म्मित्रियास्तस्मै-सन्तुयोऽस्मान्द्वेष्टियञ्चवयंद्विष्मः ॥ इतिमन्त्रेण प्रणीतान्युब्जीकरणम् । ततः आस्तीर्णक्रमेण वर्हिरुत्थाप्याज्येनाभिघार्य ॥ ॐ देवागातुविदोगातुंवित्वागातुमित । मनसस्पतऽइमन्देवयज्ञठं स्वाहा व्वातेधाः स्वाहा ॥ इति जुहुयात् ॥ होमान्ते इष्टदेवतर्पणं कार्य्यम् । तर्प्पणदशांशेन आत्मानमभिषिञ्चामि नमः । इति अभिषेकः कार्य्यः ॥ ततः कुमारिकावटुकादीन् वस्त्रालंकरणाद्यै-

---

धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् । स्वशाखाढ्यमनालस्यं विप्रं कर्तारमीप्सितमिति ॥

वर्हिर्होमात् प्राक्संस्रवप्राशनविधानं वर्हिर्होमेऽरुचिप्रदर्शयति ।

होमाशक्तौ जपं कुर्याद्धोमसंख्या चतुर्गुणं । चतुः षड्ष्टगुणितं विप्रादेरिति केचन । ( तर्पणमिति ) होमाद्दशांशतः कुर्यात्तर्पणं देवतामुखे । आत्मनो हृदयाम्भोजे परिवार गणैः सह । देवीं ध्यात्वा ततस्तोये देवीपीठं प्रपूजयेत् । तत्रावाह्य यथाशास्त्रं तज्जलैरुपचारकैः । सम्पूज्य तर्पयेद्देवं सजलाञ्जलिभिः पृथक् । मूलान्ते प्रणवं चोक्त्वा तन्मन्त्रं देवनाम च । तर्पयामि नमश्चेति तर्पणे मनुरीरितः आधारात् पीठपर्यन्तं तथावरणदेवताः । संतर्प्य संहरेद्देवं विज्ञाप्य च प्रणम्य च । तर्पणस्य दशांशेन मार्जनं कथितं किल । तदिष्टदेवतारूपं ध्यात्वात्मानं प्रपूज्य च । नमोन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधां । द्वितीयान्तमहं ब्रूयादभिषिञ्चाम्यनेन तु तोयैरङ्गुलिना शुद्धैरभिषिञ्चेच्च मूर्द्धनि । प्रतिमायां कुशैर्वाद्भिः क्रमादावाह्य सेचयेत् । मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् । ( इति वीरसर्वस्वे )

(विशुद्धेश्वरतन्त्रे) तर्पणं चन्दनं तोयैस्तीर्थतोयैरथवापुनः । गुरूपदिष्टमार्गेण मधुनावाथतर्पयेत् ।(तन्त्रान्तरे)तीर्थतोयेन दुग्धेनसर्पिषा मधुनापिच । गन्धोदकेन वा कुर्यात्सर्वत्र साधकोत्तमः । मूलान्ते नामोच्चार्य तर्पयामिततः परम् । स्वाहान्तं तर्पये-न्मन्त्रों यथासंख्या विधानतः । तर्पणं च प्रकुर्वीत द्वितीयान्तमथोच्चरन् ॥ मूलविद्यां समुच्चार्य तदन्ते देवताभिधाम् तदन्ते चाभिषिञ्चामि नमोन्ते चाभिषेचनम् । इत्युच्चार्य मूर्ध्निदेशे चिन्तयित्वास्वमन्त्रकम्अधिकांस्त्रीयसंख्यांविधायतदनन्तरम् । तत्रसंचिन्तयेद्देवीं सांगावरणदेवताम् । दिवेयोसंयथासंख्यंगणान् सिंचेत्सकृत्सकृत् ।

स्सम्यक्परितोष्य सुसँस्कृतैः नानाविधैः पक्कान्नैः भोजयेत दक्षिणाद्यं चार्प्पयेत् । ( अत्रैवचण्डिकायै वलिदानमपिसंप्रदायात् ॥ ) ततोदेव्यानीराजनं कुर्य्यात् स्तुतिपाठः पुष्पांजलिं च दद्यात् । ततोमण्डपे श्वेतयवांकुरोद्गमश्चेत्तदा कात्ययनोक्तै विधानैः तमपि प्रपूजयेत् यथा श्वेतं यवांकुरं दृष्ट्वा पूर्णाहुतेः पूर्वेद्युः येन त्वं खानयेद्ब्रह्मा येन त्वं खानयेद्धरिः । तेन त्वां खानयिष्यामि सर्वसिद्धिकरोभव,इति मन्त्रेण पूगीफलाक्षतैः सताम्बूलैः सहिरण्यैरामन्त्रयेत् आमन्त्रितस्य श्वेतयवांकुरस्य द्वितीयेदिवसे पुष्पाञ्जल्यवसाने पुष्पचन्दनधूपदीपनैवेद्यदक्षिणादिभिः पूजयेत् ततः क्षणं ध्यायेत् तत्र प्रार्थना । त्वं माया च विभूतिस्त्वं शक्तिस्त्वं प्रकृतिः परा । त्वामर्चये प्रयत्नेन सर्वसिद्धिकरोभव ॥ इति सम्प्रार्थ्य यँ नमः श्वेतयवाङ्कुराय यँ ह्राँ ह्रीँ ह्रूँ ह्रः सँ जूँ स्वाहा इति मंत्रेण स्वर्णशलाकया खनित्वा समूलमुद्धरेत् । ततस्तं स्वर्णपुटके निधाय स्वदक्षिणे भुजे धारयेत् हृदि वा धारयेत् इति यवाङ्कुरविधानम् ॥

अथश्वेतयवाङ्कुरपूजाविधिः ( कात्यायनीयतंत्रे ) शिवउवाच यवाङ्कुरं प्रवक्ष्यामि श्वेतं सिद्धिकरं परम् । एतेन विधिनादेवि ग्रहीतव्यं महास्तुतौ ॥ आश्विनस्यसितेपक्षे अष्टमीनवमी दिने । तथैव चैत्रमासे वै गन्धपुष्पैः सदीपकैः ॥ श्वेतं यवाङ्कुरं गौरि पूर्वेद्युरभिमंन्त्रयेत् । मन्त्रः— येनत्वं खानयेद्ब्रह्मा येनत्वंखानयेद्धरिः । तेनत्वां खानयिष्यामि सर्वसिद्धिकरोभव ॥ द्वितीये दिवसे । पुष्पं धूपं च दीपं च नैवेद्यं च सदक्षिणम् । अग्रे कृत्वातु संध्यायेन्महाश्वेतं यवाङ्कुरम् ॥ तमर्चयेद्विधानेन वित्तशाठ्यविवर्जितः । त्वं माया च विभूतिस्त्वं शक्तिस्त्वं प्रकृतिः परा ॥ त्वामर्च्चयेत्प्रयत्नेन सर्वसिद्धिकरोभव ॥ इति प्रार्थ्य ततः यँ नमः श्वेतयवाङ्कुराय यँ ह्राँ ह्रीँ ह्रूँ ह्रः सं जूँ स्वाहा इति मंत्रेण समुद्धरेत् इति ॥ यवाङ्कुरंसमुद्धृत्य सुवर्णस्यशलाकया । संस्थाप्य स्वर्णमध्येतु धारयेद्दक्षिणे भुजे ॥ हृदिवाधारयेद्धीमान् गृहेलक्ष्मीस्थिराभवेत् । रिपुक्षयोभवेत्तस्य नरोगः प्रभवन्तिहि ॥ अष्टगन्धेन सम्पूज्य अष्टमीनवमी दिने । राजद्वारेसमान्यः स्यात् सदा लक्ष्मीः स्थिराभवेत् ॥ इति )

## ॥ अथ श्रेयोदानम् ॥

आचार्य्यादयोवरणक्रमेण स्वंस्वं श्रेयोदानं कुर्य्युः । प्रथमं यजमान एव हस्ते जलं गृहीत्वा श्रेयोग्रहणप्रतिज्ञां कुर्य्यात् । तद्यथा । यजमानः देशकालौ संकीर्त्य कृतस्य अमुकयज्ञस्य श्रेयोग्रहणमहं करिष्ये । ततः आचार्य्यः देशकालौ सङ्कीर्त्य कृतस्यामुकयज्ञस्य श्रेयोदानं करिष्ये इति सङ्कल्प्य । यजमानहस्ते वचः प्रतिवचनपूर्वकं प्रथमं जलादिकं पुण्याहवाचनपरिपाट्याक्षिपेत् । यथा शिवाः आपः सन्तु ( आचार्य्यः ) सन्तुशिवाआपः ( यजमानः ) एवं पुष्पाणि पान्तु सौमनस्यमस्तु । अस्तु सौमनस्यम् । अक्षताः पान्तु अरिष्टं चास्तु । अस्तु चारिष्टम् । यत्पापं रोगोऽशुभमकल्याणं तद्दूरे प्रतिहतमस्तु । अस्तु तद्दूरेप्रतिहतम् । एवं कृत्वा । हस्ते साक्षतजलं पूगीफलं च गृहीत्वा देशकालौ सङ्कीर्त्य नामगोत्राद्युच्चारणं कृत्वा भवन्नियोगेन मयाऽस्मिन्यज्ञे आचार्य्यत्वं सम्पादितं तदुत्पन्नं यच्छ्रेयस्तदमुना साक्षतजलपूगीफलेन तुभ्यमहं सम्प्रददे । तेन श्रेयसा श्रेयस्वान्भव । भवामीति यजमानः । ब्रह्मादयोऽपि सर्वे पृथक् २ कुर्य्युः । सर्वेषां श्रेयोदानं आचार्य्यद्वारैव तस्य मुख्यत्वादितिपक्षे । ब्रह्मादयोऋत्विजोजापकाः पाठकाश्च आचार्य्यद्वारैवश्रेयः सम्पादनं कुर्य्युः । तदायं समष्टिसङ्कल्पः । देशकालौ सङ्कीर्त्य । भवन्नियोगेन अस्मिन्यज्ञे मया यत्कृतं आचार्य्यत्वं ब्रह्मणा च यद्ब्रह्मत्वं सम्पादितं तथैभि-

---

शय्यादिदानफलम् ॥ यस्मादशून्यशयनं केशवस्य शिवस्य च । शय्याममाप्यशून्यास्तुदत्ता जन्मनिजन्मनि ॥ इतिशय्या । यथारत्नेषुसर्वेषु सर्वेदेवाः प्रतिष्ठिताः ॥ तथाशान्ति प्रयच्छन्तु रत्नदानेन मे सुराः ॥ इतिरत्नम् । यतोभूमिप्रदानस्य कलां नार्हन्तिषोडशीम् । दानान्यन्यानि मे शान्तिभूमिदानाद्भवेदिह ॥ इतिभूमिः । हिरण्यगर्भसंभूतं सौवर्णं पीततेजसम् । तस्यदानेन देवेश सर्वदोषान्निवारय ॥ इतिहिरण्यम् । यज्ञसाधनभूता या विश्वस्याघौघनाशिनी । विश्वरूपधरोदेवप्रीयता-

ब्राह्मणैः यत्कृतं पाठजपादिकं तेभ्योयदुत्पन्नं श्रेयस्तदमुना साक्ष-तेन जलेन पूगीफलेन च तुभ्यमहं सम्प्रददे । तेन श्रेयसा त्वं श्रेयस्वान्भव । भवामीति यजमानः । इति श्रेयोदानम् ( तच्च-निर्मूलम् यच्चक्रियते तत्तु यजमानप्रतारणमात्रमेव इति पौराणकर्म-दर्पणकारः ) ततोयजमानः आचार्य्यादीन् गन्धाक्षतैः पूजयेत् । आचार्य्यादयोऽपि यजमानस्य तिलकं रक्षाबन्धनं च कुर्य्युः । ततो-दानानि दद्यात् । प्रथममाचार्य्यादिभ्यः कृतस्य कर्मणः परिपूर्ण फलाप्तये शास्त्रविहितां दक्षिणां दद्यात् । ( सर्वेभ्योगोदानं दद्यात्) आचार्य्यायअन्येभ्यश्च शय्यां रत्नानि, भूमिं, श्वेताश्वं, नीलमणिं छत्रं, चामरं, तिलपात्रं, कांस्यपात्रं, दासं, दासीश्च वित्तानुसारेण दद्यात् । दानद्रव्यस्य दैवतपूर्वकं फलद्योतनपूर्वकं ( द्रव्यफलद्यो-तिकाः कारिकाः अग्रे संकल्पसंग्रहप्रकरणे द्रष्टव्याः ) संकल्पं पृथक् २ कुर्यात् । तद्यथा । देशकालौ सङ्कीर्त्य । एतद्धेनुलोमस-म्मितवत्सरावच्छिन्नस्वर्गवासकामः इमांधेनुं सौवर्णशृङ्गीं रौप्य-खुरांताम्रपृष्ठां कांस्योपदोहामादर्शललाटां घण्टाग्रीवां चामरपु-च्छां गन्धाद्यर्चितां पयस्विनीं वासोयुगाच्छादितां रुद्रदैवतां अमुकगोत्राय अमुकनाम्ने विप्राय अहं सम्प्रददे । इति गोदान-संकल्पः । कपिले सर्वभूतानां पूजनीयासि रोहिणी । तीर्थदेव-मयी यस्मादतः शान्तिं प्रयच्छ मे । इति प्रार्थयेत् । (शय्यादान०) देशकालौ सङ्कीर्त्य-अत्यन्तसुखित्वभवनकामः षष्टिवर्षसहस्रा-वच्छिन्नस्वर्गलोकमहितत्वतदुत्तरविपुलजन्मकामः इमां शय्यां अ-र्चितां सोपकरणामुत्तानाङ्गिरोदैवताम् अमुकगोत्रोत्पन्नायामुक-शाखाध्यायिने ब्राह्मणाय अहं सम्प्रददे । ( अश्वदान० ) देशकालौ

---

मनयागवा ॥ तिलाः काश्यपसम्भूतास्तिलाः पापहराःस्मृताः । तिलपात्रप्रदानेन सर्वदोषाणिनश्यतु ॥ सर्वेषां संकल्पस्तु विस्तृतिभयान्नोद्धृतः समये मतिमद्भिर्यो जनीयः इति ।

सङ्कीर्त्य । शक्रलोकाधिकरणकदशयुगशक्रवद्धासतदुत्तरमर्त्यलोकीयसमृद्धिमद्राजत्वभवनकामः इममश्वं यमदैवतं अमुकशर्म्मणे विप्रायाहं सम्प्रददे । इति । महार्णवसमुत्पन्न उच्चैःश्रव सुपुत्रक । मया त्वं विप्रमुख्याय दत्तोऽद्य सुखीभव । ( पीठदान० ) देशकालौसङ्कीर्त्य । कृतस्य सिद्ध्यर्थमिदं गणपतिपीठं ग्रहपीठं च सर्वोपस्करसहितं कलशमूर्तिसहितं गन्धपुष्पाद्यर्च्चितं आचार्य्याय तुभ्यमहं सम्प्रददे । एतद्दानप्रतिष्ठासिद्ध्यर्थं दक्षिणां तुभ्यमहं सम्प्रददे । ( मण्डपदान० ) देशकालौ सङ्कीर्त्य । इदं सपीठं सप्रतिमं सकलशं सोपस्करमण्डपसहितं आचार्य्याय तुभ्यमहं सम्प्रददे । इति । दानानन्तरं । आचार्य्यपूजनं कृत्वा प्रार्थना कार्य्या । भगवन् सर्वधर्म्मज्ञ सर्वशास्त्रपरायण । सर्वशास्त्रार्थतत्वज्ञ सर्वधर्म्मविशारद । अनादिजन्मसांताने ह्यप्रमेये भवार्णवे । अद्य मे ह्युत्तमं जन्म अद्य मे सफलं धनम् । आचार्य्य त्वं महाभाग सर्वदोषविनाशक । दानस्यास्यप्रभावेण सर्वदोषाच्च पाहि माम् । ज्ञानतोऽज्ञानतोवापि यद्यन्न्यूनं कृतं मया । तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादात्त्वमस्व मे । इति । ततः कांस्यपात्रस्थाज्यावलोकनं मन्त्रेण कुर्य्यात् । ओं रूपेणवोरूपमभ्यागान्तुथेवोविश्ववेदाविभजतु । ऋतस्यपथाप्रेतचन्द्रदक्षिणाविश्वः पश्यव्यन्तरिक्षं यतस्वसदस्यैः ॥ इत्याज्ये मुखमवलोक्य । आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् । आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः । इत्युच्चार्य्य संकल्पः कार्य्यः । देशकालौ सङ्कीर्त्य । ममायुरारोग्यप्राप्तये इदं छायापात्रं सर्वोपस्करसहितं गन्धपुष्पाद्यर्च्चितं सदक्षिणाकममुकगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे । ( अन्ये ग्रहकलशोदकदानप्रयोगास्त्वग्रे संकल्पसंग्रहे वक्ष्यामः ) ततो ग्रहकलशोदकमेकस्मिन्पात्रे एकीकृत्य दूर्वापञ्चपलशप्रधानकलशादीनामुदकमेकस्मिन्पात्रे एकीकृत्य दूर्वापञ्चपउदङ्मुखास्तिष्ठन्तः ऋत्विजश्च प्राङ्मुखमुपविष्टम् सपत्नीकं यजमानं अभिषिञ्चेयुः । ( अभिषेके पत्नी वामतः ) तत्र श्लोकाः । सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्व-

राः वासुदेवोजगन्नाथस्तथा संकर्षणोविभुः। प्रद्युम्नश्चानिरुद्धश्चभ-वन्तु विजयाय ते। आखण्डलोऽग्निर्भगवान् यमोवैनिर्ऋतिस्तथा। वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणासहिताः सर्वे दिक्पालाः पान्तु ते सदा। कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धाक्रि-यामतिः। बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिश्च मातरः। एता-स्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमाभौमो-बुधजीवसितार्कजाः। ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः। देवदानवगन्धर्व्वायक्षराक्षसपन्नगाः। ऋषयोमनवोगावोदेवमातर एव च। देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः। आदित्याव-सवोरुद्राविश्वेदेवामरुद्गणाः। सरितः सागराशैलास्तीर्थानि जल-दानदाः। अभिषिञ्चन्तु ते सर्वे सर्वकामार्थसिद्धये। अमृताभिषेको-ऽस्तु॥ ( विस्तृताभिषेकप्रयोगस्त्वग्रे अभिषेकप्रकरणे ) अव-लोकनीयः ) अभिषेकानन्तरं सर्वौषधीरनुलिप्य शुद्धोदकेन स्ना-त्वा ( अथवाकापिलं स्नानं कृत्वा ) वस्त्रपरित्यागः कार्य्यः। वस्त्राणि कस्मैचिद्दद्यात्। इत्यभिषेकः। ततः शुक्लमाल्याम्बर-धरोधृतमङ्गलतिलकः सपत्नीकोयजमानः स्वासने उपविश्य आ-चम्य कृतस्य कर्म्मणः साङ्गतासिद्ध्यर्थं यथासंख्याकान् ब्राह्मणान् सुवासिनीर्बटुकान् कुमारिकाः यथान्नेन यथाकाले वाहं भोज-यिष्ये। तेन श्रीकर्म्माङ्गदेवताः प्रीयन्ताम्। ततोभूयसीसंकल्पः। देशकालौ सङ्कीर्त्य। कृतस्य कर्म्मणः न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्योब्राह्मणेभ्यो यथाशक्तिपरिमितां भूयसीं दक्षि-णां दास्ये। इति॥

## अथाशीर्वादश्लोकाः

यावल्लीचीतरङ्गान्वहति सुरनदी जान्हवी पुण्यतोया यावच्चा-काशमार्गे तपति दिनकरश्चन्द्रमाः खेटयुक्तः। यावद्वज्रेन्द्रनीलस्फ-टिकमणिशिला वर्तते मेरुश्रृङ्गे तावत्त्वं पुत्रपौत्रस्वजनपरिवृतो जीव देवीप्रसादात्। शतंजीवी भव त्वं भोः शतंजीवतु ते वधूः।

शतंजीवतु ते पुत्रः शतं पौत्रस्तु जीवतु ॥ जीव्यात्प्रपौत्रश्च शतं जीवतु भ्रातृसन्ततिः। वाजीनां ते शतं गेहे रथानां करिणां तथा ॥ शतं गवां प्रदानं ते द्विजेभ्यश्च निरन्तरम्। शतस्य भूयास्तीर्थानां कर्ता क्रतुशतस्य च ॥ स्थिराः लक्ष्मीः प्रतिदिनं शतं ब्राह्मणभोजनम्। भूयात्तेनिर्मिला भक्तिः हरिशंकरपादयोः ॥ यावद्भागीरथीगङ्गा यावद्देवोमहेश्वरः। यावद्वेदाः प्रवर्तन्ते तावत्त्वं विजयी भव ॥ स्वस्तिस्तु याविनाशाख्या पुण्यकल्याणवृद्धिदा। विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तुनः॥ नारदाद्याऋषिगणाः ये चान्ये च तपोधनाः। भवन्तु यजमानस्य आशीर्वादपरायणाः ॥ आदित्यावसवोरुद्राः विश्वेदेवामरुद्गणाः। लोकपालाः प्रयच्छन्तु मंगलानि श्रियं यशः ॥ मंत्रार्थाः सफला सन्तुः पूर्णाः सन्तु मनोरथाः। शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयोस्तुवः ॥ वहुधान्य धनं पुत्रपशुलाभं शतसंवत्सरं दीर्घमायुः। आराध्यदेवताः प्रसन्नाः सन्तु। इत्याशीर्वादः।

## अथ देवताविसर्जनम्।

यजमानः हस्तौ संयोज्य प्रार्थनापूर्वकं। यान्तु देवगणाः सर्वे स्वशक्त्या पूजिता मया। इष्टकामस्य सिद्ध्यर्थं पुनरागमनाय च ॥ ॐ उत्तिष्ठब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तुमरुतः सुदानवऽ इन्द्रप्राशूर्भवासचा ॥ २ ॥ उमान्तिके गणपतिर्ब्रह्माण्डे ब्रह्म गच्छतु। वैकुण्ठे भगवान्विष्णुः कैलासे च महेश्वरः ॥ ३ ॥

कृताञ्जलिः पठेत् पश्चाद्विसर्जनमनूनिमान्। विसर्जनमन्त्रास्तु विधिहीनमित्यारभ्य-वरान् वहूनित्यन्तम्। एतान् मन्त्रान् समुच्चार्य चरलग्ने नवांशके। प्रतिमां पत्रिकां वापि चालयेत् पूजकः शनैः॥ निर्म्माल्येन ततोदेव्याः पूजयेत्कलशोपरि। निर्माल्यवासिनीं देवीं ॐन्तां नमः पदेनहि ॥ प्रदर्श्य योनिमुद्रां च ऐशान्यां दिशि निःक्षिपेत्। निर्माल्यं भगवत्यास्तच्चण्डेश्वर्यै नमोवदन् इति। केचिच्च। लक्ष्मीगणेशयोर्विसर्जनंनकुर्वन्ति तत्राचारएव। नहि पद्धतिकाराणामीदृशीमीमांसेति।

लक्ष्मीर्विष्णुसमीपे च कलशश्चैव सागरे । पन्नगायान्तु पाताले काश्मीरे च सरस्वती ॥ ४ ॥ स्वात्मपीठेषु योगिन्यः क्षेत्रपालोमहाबलः । वेदाश्च ब्रह्मणः पार्श्वे मातरोमातृमण्डले ॥ ५ ॥ रविः कलिङ्गं यमुनां च चन्द्रमाः भौमोह्यवन्तीं शशिजश्च कौशलान् । सिंधुं गुरुर्भोजकटं भृगुश्च मन्दः सुराष्ट्रं पवनं च राहुः । केतुर्गिरिं शक्रमुखाश्च देवाः स्वां स्वां पुरीं यांतु यथा क्रमेण ॥ ब्रह्मोर्द्ध्वतां नागपतिस्त्वधस्तात् यामामगस्त्योध्रुवउत्तरां च । सप्तर्षयोराशिभयोगपक्षगंधर्वयक्षोगिरयोनदाश्च ॥ स्थानानि गच्छन्तु यथा समायुर्ग्रहाशीश्च सन्तानसुखं प्रदद्युः ॥ ओं आवाहितादेवताः स्वस्वस्थानं गच्छत ततोमहादेव्याविसर्जनम् शक्तिसङ्गमोक्तम् । श्रीजगदम्बिकायै रक्तपुष्पाञ्जलिगृहीत्वाधोलिखितान् मनून् वदन् विसर्ज्जनं कुर्य्यात् यथा विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि । शक्नुवन्ति न ते पूजां कर्त्तुं ब्रह्मादयः सुराः ॥ अहं किम्वा करिष्यामि मृत्युधर्मानरोल्पधीः । न जानेऽहं ते स्वरूपं न शरीरं न वा गुणान् ॥ एकामेव हि जानामि भक्तिं त्वचरणाब्जयोः । तां भक्तिं हृदि संभाव्य शारघर्चां प्रगृह्य च ॥ गच्छ देवि निजस्थानं मह्यं दत्वा वरान् बहून् । इति पठित्वा मूर्तीं शनैः संचालयेत् । ततोदेव्याः निर्माल्येन कलशोपरि"ॐ निर्माल्यवासिन्यै देव्यैनमः"इति मंत्रेण पूजयेत् । ततोयोनिमुद्राम्प्रदर्श्य शेषनिर्माल्यं"ओं चण्डेश्वर्य्यैनमः" इति वदन्ऐशान्यां दिशि निःक्षिपेत । विसर्जनानन्तरं प्रार्थनाकार्या महिषघ्नि महामाये चामुण्डेमुण्डमालिनी । द्रव्यमारोग्यविजयं देहिदेवि नमः सदा । भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि । देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्षसां सदा सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते । रूपंदेहि यशोदेहि भगं भगवतीदेहिमे । पुत्रान्देहि धनं देहि सर्वान्कामान्प्रदेहिमे । अथाग्निविसर्जनम् । गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयोदेवास्तत्र गच्छ हुताशन ॥

इति मंत्रेणाग्निं विसर्जयेत् ततः ॥ ॐ यज्ञंगच्छयज्ञपतिंगच्छस्वां-योनिंगच्छ स्वाहा ॥ एषतेयज्ञोयज्ञपते सहसूक्तवाकः सववीरस्तं जुषस्वस्वाहा ॥ भगवान् यज्ञ स्वस्थानं गच्छ । इति एवं देवान्वि-सृज्य यज्ञोपकरणादिकं ऋत्विग्भ्योदद्यात् । आचार्याय वा दद्या-दित्याचारात् ततः आचार्यादीन् संपूज्य करौ सम्पुटीकृत्य मया यत् कृत्यं शतचण्डीविधानाख्यं यज्ञं तत्कालहीनं भक्तिहीनं श्रद्धा-हीनं द्रव्यहीनं भवतां ब्राह्मणानां वचनात् श्रीसूर्याधरवाहित-देवप्रसादात् च सर्वथा परिपूर्णमस्त्विति भवन्तोब्रुवन्तु अस्तु परिपूर्णमिति ब्राह्मणाः ब्रूयुः । ततः आचार्यः यजमानललाटे अक्षतकुंकुमकेशरैः तिलकं दद्यात् ततः सर्वे ॥ ॐ स्वस्तिनऽइन्द्रो-वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमि स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ ओं श्रीवर्चस्यमायुष्यमारोग्य-माविधात्पवमानम्महीयते धान्यंधनंपशुंवहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ २ ॥ पुनस्त्वादित्यारुद्रावसवः समीन्धन्ताम्पुनर्ब्रा-ह्मणोवसुनीथयज्ञैः । घृतेनत्वन्तन्ववर्द्धयस्वसत्याः सन्तुयजमान-स्यकामाः ॥ ३ ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ ४ ॥ इति मंत्रैः आ-शिष ब्रूयुरिति । एवमाशीर्वचनं गृहीत्वा सपत्नीकोयजमानः कुटुम्वजनैः परिवृतः जगदम्बिकां स्मरन् गृहं गच्छेत् तैः साकं भुञ्जेत इति ॥

## ॥ अथ पूर्णाहुतिमन्त्राः ॥

समुद्रादूर्मिरित्यादयोमन्त्राः अष्टनवतिः ९८ पृष्ठे द्रष्टव्याः

विष्णोर्न्नुकंवीर्य्याणिप्प्रवोचंय्यः पार्त्थिवानिव्विममेरजाᳪसि । योऽअस्कभायदुत्तरᳬसधस्थंव्विचक्रमाणस्त्रेधोरुगायोव्विष्णवेत्वा॥ दिवोवाव्विष्णऽउतवा पृथिव्या महोवाव्विष्णऽउरोरन्तरिक्षात् । उभाहिहस्ताव्वसुना पृणस्वाप्प्रयच्छ दक्षिणादोतसव्याद्विष्णवेत्वा ॥ प्रतद्विष्णुस्तवतेव्वीर्य्येण मृगोन भीमः कुचरोगिरिष्ठाः । यस्योरुषुत्रिषु व्विक्रमणेष्वधिक्षियन्ति भुवनानि व्विश्वा ॥ विष्णोरराटमसि विष्णोःश्नप्त्रेस्थोव्विष्णोः स्यूरसिव्विष्णोर्द्ध्रुवोसि । व्वैष्णवमसि विष्णवे त्वा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्व्वाहुभ्याम्पूष्णोहस्ताभ्याम् । आददेनार्य्यसीदमहᳬरक्षसाङ्ग्रीवाऽअपिकृन्तामि । बृहन्नसि बृहद्रवाबृहतीमिन्द्रायव्वाचं वद ॥ इदम्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाᳬसुरे ॥ इतिवैष्णवं ॥ रौद्रं नमस्तेति षोडशर्चं । इमारुद्रायतवसे कपर्दिने ॥ इत्यादिअध्यायसमाप्तिपर्य्यन्तम् ॥ इति रौद्रं । आप्पायस्वसमेतुते व्विश्वतः सोमवृष्ण्यम् । भवाव्वाजस्य सङ्गथे सन्तेपयाᳪसिसमुयन्तु व्वाजाःसंवृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृतायसोमदिविश्रवाᳪस्युत्तमा निधिष्व ॥ आप्यायस्वमदिन्तमसोमव्विश्वेभिरᳬशुभिः । भवानःसप्प्रथस्तमः सखा वृधे ॥ आषाढं य्युत्सु पृतनासुपप्प्रिᳪस्वर्षामप्सां वृजनस्य गोपाम् भरेषुजाᳪसुक्षितᳬ सुश्रवसञ्जयन्तन्त्वामनुमदेमसोम ॥ सोमोधेनुᳬसोमोऽअर्व्वन्तमाशुᳬसोमोव्वीरङ्कर्म्मण्यन्ददाति सादन्यंव्विदत्थ्यᳬसभेयम्पितृश्रवणं योददाशदस्मै ॥ त्वमिमाऽओषधीः सोमव्विश्वास्त्वमपोऽअजनयस्त्वङ्गाः । त्वमाततन्थोर्व्वन्तरिक्षन्त्वज्ज्योतिषाव्वितमोव्ववर्थ ॥ देवेननो मनसा देवसोमरायोभागᳬसहसाव्वन्नभियुदध्य । मात्वातनदीशिषेव्वीर्य्यस्योभयेभ्यःप्प्रचिकित्सागविष्टौ । आते वत्सोमनोयमत्परमाच्चि

त्सधस्थात् । अग्नेत्वाङ्कामयागिरा ॥ तुभ्यन्ताऽअङ्गिरस्तमव्विश्वा– सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ अग्निःप्रियेषु धामसु कामोभूतस्य भव्व्यस्य सम्राडेकोव्विराजति ॥ इतिसोमसूक्तम् ॥ अथ जातवेदसं ॥ समास्त्वाऽग्नऽऋतवोव्वर्द्धयन्तु संव्वत्सराऽऋ- षयोयानि सत्या । सन्दिव्व्येन दीदिहि रोचनेनव्विश्वाऽआभा- हिप्प्रदिशश्चतस्रः ॥ सञ्चेद्ध्यस्वाग्नेप्प्रचवोधयैनमुच्चतिष्ठ महते सौभगाय । माचरिषदुपसत्ताते ऽअग्नेव्व्रह्माणस्तेयशसः सन्तुमा- न्ये ॥ त्वामग्ने वृणते व्व्राह्मणाऽइमे शिवोऽअग्नेसंव्वरणे भवानः । सपत्नहानोऽअभिमातिजिच्चस्वेगयेजागृह्यप्प्रयुच्छन् ॥ इहैवाग्ने- ऽअधिधारयारयिम्मात्वा निक्रन्पूर्वचितोनिकारिणः क्षत्रमग्नेसूय- ममस्तुतुभ्यमुपसत्ताव्वर्द्धतान्ते अनिष्टृतः ॥ क्षत्रेणाग्नेस्वायुः सꣳ- रभस्वमित्रेणाग्ने मित्रधेये यतस्व । सजातानाम्मद्ध्यमस्थाऽएधि राज्ञामग्नेव्विहव्व्योदीदिहिह ॥ अतिनिहोऽअतिस्रिधोत्यचिति– मत्यरातिमग्ने । विश्वाह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवी– राꣳरयिन्दाः ॥ अनाधृष्ष्यो जातवेदाऽअनिष्टृतोविराडग्ने क्षत्र- भृद्दीदिहीह । व्विश्वाऽआशाःप्प्रमुञ्चन्मानुषीर्भियःशिवेभिरद्यपरि- पाहिनोव्वृधे ॥ वृहस्पतेसवितर्व्वोधयैनꣳ सꣳशितश्चित्सन्तराꣳ सꣳशिशाधि । व्वर्द्धयैदम्महतेसौभगायव्विश्वऽएनमनुमदन्तुदे– वाः ॥ अमुत्रभूयादधयद्यमस्यवृहस्पतेऽअभिशस्तेरमुञ्चः । प्रत्यौ– हतामश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिः ॥ व्वाज– श्चमे १ प्राणश्चमे २ ओजश्चमे ३ ज्यैष्ठ्यश्चमे ४ सत्यश्चमे ५ ऋतश्चमे ६ यन्ताचमे ७ शश्चमे ८ ऊर्क्चमे ९ रयिश्चमे १० व्वित्त– श्चमे ११ व्व्रीहयश्चमे १२ अश्माच १३ अग्निश्च १४ व्वसुच १५ अग्निश्च १६ मित्रश्च १७ पृथिवीच १८ अꣳशुश्च १९ आग्रयणश्च २० स्रुचश्च २१ अग्निश्च २२ व्व्रतश्च २३ । एकाच २४ चतस्रश्च २५ त्र्यविश्च २६ पष्ठवाट्च २७ इति मूर्द्धानन्दिवोऽअरतिम्पृथि- व्व्याव्वैश्वानरमृतऽआजातमग्निम् । कविँ सम्राजमतिथिञ्जनानामा– सन्नापात्रञ्जनयन्तदेवाः । व्वसोः पवित्रं० ... ... धुवः ।

# शुद्धाशुद्धपत्रम्

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| म | मं | ४ | २ |
| र्नाय | नीय | ,, | ७ |
| रु | र | ,, | १६ |
| ङ | ङ् | ५ | ६ |
| रुए | रुणा | ११ | ३ |
| न्न | त्र | ,, | १२ |
| स्रवौ | स्रुवौ | १७ | १० |
| च्छ्र | च्छे | ,, | २३ |
| लाक | काल | १९ | २ |
| पति | पवि | २३ | ४ |
| तङ | त्यङ् | २५ | ३ |
| त | त् | ,, | २४ |
| ईशा | ऐशा | २८ | ८ |
| ङ्क | ङ्कु | २९ | २० |
| त्युत्तु | त्युत्त | ३१ | ३ |
| भव | भवैः | ३२ | २० |
| देव | दैव | ३३ | २ |
| ङ्क | ङ्कु | ३४ | २६ |
| ल | ले | ३५ | १ |
| ज्यग्न्यो | ज्याग्न्यो | ,, | १० |
| त्तिणा | त्तिण | ३७ | २६ |
| त्र | ब्रू | ३८ | २ |
| य्य | र्य्यं | ४० | २२ |
| ग्नि | ग्निः | ४१ | २० |
| ध्य | ध्म | ४३ | २५ |
| क | क् | ४५ | १६ |
| वानि | वान्नि | ,, | २१ |
| पुरु | पुरु | ४६ | २५ |
| रंत् | रेत् | ४७ | २५ |
| न्ध | न्द | ४८ | १० |
| गीशं | गीर्शी | ५१ | २३ |
| र्यान्तं | र्यान्तं | ५२ | २१ |

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| न्मस | न्यस | ५५ | ५ |
| ता | ताः | ५६ | २१ |
| वजं | व्रजं | ५७ | १७ |
| ञ्चे | ञ्चे | ,, | २७ |
| द्वद | द्वाद | ५८ | २४ |
| च्या | च्यां | ५९ | २४ |
| नेला | नेल्ला | ६० | २५ |
| दर्षि | मर्षि | ,, | २३ |
| णात् | णान् | ६१ | २७ |
| रुश्च | रुरुश्च | ६२ | १३ |
| णभि | णाभि | ,, | २२ |
| णा | णाः | ,, | २५ |
| वपु | यपु | ६३ | १ |
| न्यर्घ | न्यार्घ | ,, | ,, |
| पृधा | पृथा | ,, | ६ |
| द्रुम | द्रुमः | ,, | |
| न | न् | ,, | १५ |
| हाद | होद | ६४ | १८ |
| ल्यां | ल्यीं | ६५ | ७ |
| भिव्या | भिर्व्या | ६६ | २४ |
| ङ्गीश | ङ्गीशे | ,, | २७ |
| त | त् | ,, | ,, |
| नाम | न्नाम | ६७ | २३ |
| ह्री | ह्रीँ | ६८ | १६ |
| कडि | कण्डि | ७३ | १५ |
| गन्थि | ग्रन्थि | ७५ | २३ |
| गेद्धि | गेचद्धि | ,, | २४ |
| स्यश्च | स्यश्च | ७८ | १ |
| तंन्तं | तंन्त | ,, | ,, |
| द्यु | द्युु | ,, | २८ |
| म | मं | ,, | २५ |
| ध्वस्वा | ध्यस्वा | ७९ | २६ |
| णव्य | णाव्य | ८० | ४ |

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| मिड् | मिधइ | ,, | २३ |
| योषा | जोषा | ८१ | १६ |
| स्वन | स्वान | ८२ | १२ |
| च्छ | श्छ | ८४ | २५ |
| नंले | नलैं | ८५ | ९ |
| पूष्ण | पूष्णे | ८६ | २२ |
| मः | म | ९१ | २४ |
| कायः | कार्यः | ९३ | ४ |
| ह्मये | ह्मयै | ,, | ८ |
| मन्त्र | मन्त्रः | ,, | २७ |
| द्धोम् | द्धोमः | ९४ | १६ |
| दिज्ञ | दिज्ञु | ९५ | १३ |
| निक्र | निक्रं | ९७ | १ |
| गन्र्धा | गन्धर्वा | ९८ | १६ |
| महा | महो | ९९ | ८ |
| सोऽ | सोऽग्र | १०० | ५ |
| त्यके | त्येके | ,, | १६ |
| खित | खति | १०१ | १५ |
| त | तं | १०२ | २४ |
| लाला | लला | ,, | २७ |
| न्ति | न्तिं | १०७ | २३ |
| व | वः | ,, | २६ |
| र्मिला | र्मला | १११ | ५ |
| घर्चा | धर्चा | ११२ | १७ |
| त | त् | ,, | ३ |
| सव | सर्व | ११३ | २ |
| कृत्यं | कृतं | ,, | ६ |
| धर | धावा | ,, | ७ |
| नेमि | नेमिः | ,, | ११ |
| वाह्म | ब्रह्मा | ,, | १४ |
| षवू | षोब्रू | ,, | १८ |
| ञ्जत | ञ्जीत | ,, | २० |
| यैद | यैन | ११५ | १८ |

कुत्र २ यन्त्र गत्या रकारोकारौभिन्नौ सीसकमयदोषात् । कुत्रचिन्मुद्राकरप्रमादाद् व्यत्ययेन गतवन्तौ तौ विचार्य्य पठनीयौ । वर्त्तमानेऽपि बहुत्र भ्रमप्रमादद्दृष्ट्यादिदोषा श्चावशिष्टा दोषा अपि विविच्य विपश्चिद्भिः पठनीयाः ।

# * अथाभिषेकः *

तत्र यजमानं प्राङ्मुखमुपवेश्य स्वयमाचार्य्यः । उदङ्मुखस्तिष्ठन् कलशोदकं पात्रे समादाय अंकुरितसप्तधान्यदूर्वाकुशाम्रादिपञ्चपल्लवैः चतुर्वेदोद्गतैरभिषेकमन्त्रैः स्थापितदेवतासूक्तैः पौराणिकैश्चापिमन्त्रैरभिषेकं कुर्य्यात् ॥ ( अभिषेके पत्नीवामतउपविशेत् ॥ तत्र मन्त्राः ॥ ओं आपोहिष्ठामयोभुवस्तान ऽऊर्ज्जेदधातन। महेरणाय चक्षसे ॥१॥ योवः शिवतमोरसस्तस्य भाजयतेहनः। उशतीरिव मातरः ॥२॥ तस्माऽअरङ्गमामवोयस्यक्षयाय जिन्नवथ । आपोजनयथाचनः ॥ ३ ॥ ओं आपो ऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वᳪ हिरिप्रम् प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत ऽएमि ॥ दीक्षातपसोस्तनूरसि तान्त्वा शिवाᳪ᳭सग्मारूपरिदधे भद्रम्वर्णम्पुष्यन् ॥ ४ ॥ इदमापः प्रवहतावद्यञ्चमलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम् ॥ आपोमातस्मादेनसः पवमानश्च मुञ्चतु ॥ ५ ॥ स्तोकानामिन्दुम्प्रतिशूर ऽइन्द्रो वृषायमाणो वृषभस्तुराषाट् । घृतप्रुषाः मनसा मोदमानाः स्वाहा देवा ऽअमृतामादयन्ताम् ॥ ६ ॥ आयात्विन्द्रोऽवस ऽउपन ऽइहस्तुतः सधमादस्तु शूरः ॥ वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न्नक्षत्रमभिभूति पुष्यात् ॥ ७ ॥ आनऽ इन्द्रो दूरादान ऽआसादभिष्टिकृदवसे या सदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रवाहुः सङ्गे समत्सुतुर्व्वणिः पृतन्यून् ॥८॥ आनऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनो ऽवसेराधसे च । तिष्ठातिवज्री मघवाविरप्शी

# शुद्धाशुद्धपत्रम्

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| म | मं | ४ | २ |
| नयि | नीय | ,, | ७ |
| रु | र | ,, | १६ |
| ङ | ङ् | ५ | ६ |
| रुण | रुणा | ११ | ३ |
| न्न | न्न | ,, | १२ |
| सुवों | सुवौं | १७ | १० |
| च्छ | च्छे | ,, | २३ |
| लाक | काल | १९ | २ |
| पति | पवि | २३ | ४ |
| त्ङ | त्यङ् | २५ | ३ |
| त | त् | ,, | २४ |
| ईशा | ऐशा | २८ | ८ |
| ङ्ग | ङ्गु | २९ | २० |
| त्युत्तु | त्युत्त | ३१ | ३ |
| भव | भवैः | ३२ | २० |
| देव | दैव | ३३ | २ |
| ङ्ग | ङ्गु | ३४ | २६ |
| ल | ले | ३५ | १ |
| ज्यग्न्यो | ज्याग्न्यो | ,, | १० |
| क्षिण | क्षिणा | ३७ | २६ |
| व्र | व्रू | ३८ | २ |
| य्य | र्य्यं | ४० | २२ |
| ग्नि | ग्निः | ४१ | २० |
| ध्य | ध्म | ४३ | २५ |
| क | क् | ४५ | १६ |
| वानि | वान्ति | ,, | २१ |
| पुरु | पुरु | ४६ | २५ |
| रंत् | रेत् | ४७ | २५ |
| न्ध | न्द | ४८ | १० |
| गीशं | गीर्शी | ५१ | २३ |
| र्यान्तं | र्यात्तं | ५२ | २१ |
| न्मस | न्यस | ५५ | ५ |
| ता | ताः | ५६ | २१ |
| वजं | व्रजं | ५७ | १७ |
| ञचे | ञ्चे | ,, | २७ |
| द्वद | द्वाद | ५८ | २४ |
| च्या | च्यां | ५९ | २४ |
| नेला | नेल्ला | ६० | २५ |
| दर्षि | मर्षि | ,, | २३ |
| णात् | णान् | ६१ | २७ |
| रुश्च | रुरुश्च | ६२ | १३ |
| णभि | णाभि | ,, | २२ |
| णा | णाः | ,, | २५ |
| वषु | यपु | ६३ | १ |
| न्यर्घ | न्यार्घ | ,, | ,, |
| पृथा | पृथा | ,, | ६ |
| द्रम | द्रुमः | ,, | |
| न | न् | ,, | १५ |
| हाद | होद | ६४ | १८ |
| ल्यां | र्लीं | ६५ | ७ |
| भिव्या | भिर्व्या | ६६ | २४ |
| ड्डीश | ड्डीशे | ,, | २७ |
| त | त् | ,, | ,, |
| नाम | न्नाम | ६७ | २३ |
| ह्री | ह्रीँ | ६८ | १६ |
| कडि | कण्डि | ७३ | १५ |
| गन्थि | ग्रन्थि | ७५ | २३ |
| गेद्धि | गेचद्धि | ,, | २४ |
| य्यश्च | र्य्यश्च | ७८ | १ |
| र्तन्ते | र्तन्त | ,, | ,, |
| द्धय | द्धयु | ,, | २८ |
| म | मं | ,, | २५ |
| ध्वस्वा | ध्यस्वा | ७९ | २६ |
| णव्य | णाव्य | ८० | ४ |
| मिद्द | मिधद्द | ,, | २३ |
| योषा | जोषा | ८१ | १६ |
| स्वन | स्वान | ८२ | १२ |
| च्छ | श्छ | ८४ | २५ |
| नैले | नलै | ८५ | ९ |
| पूष्ण | पूष्णे | ८६ | २२ |
| मः | म | ९१ | २४ |
| कायः | कार्यः | ९३ | ४ |
| ह्ये | ह्यै | ,, | ८ |
| मन्त्र | मन्त्रः | ,, | २७ |
| द्धोम् | द्धोमः | ९४ | १६ |
| दित्त | दित्तु | ९५ | १३ |
| निक्ष्र | निक्ष्रं | ९७ | १ |
| गन्र्धा | गन्धर्वा | ९८ | १६ |
| महा | महो | ९९ | ८ |
| सोऽ | सोऽस्र | १०० | ५ |
| त्यके | त्येके | ,, | १६ |
| खित | खति | १०१ | १५ |
| त | तं | १०२ | २४ |
| लाला | लला | ,, | २७ |
| न्ति | न्तिं | १०७ | २३ |
| व | वः | ,, | २६ |
| मिंला | मेंला | १११ | ५ |
| घर्चा | घर्चा | ११२ | १७ |
| त | त् | ,, | ३ |
| सव | सर्वं | ११३ | २ |
| कृत्यं | कृतं | ,, | ६ |
| धर | घावा | ,, | ७ |
| नेमि | नेमिः | ,, | ११ |
| वाह्म | ब्रह्मा | ,, | १४ |
| षवृ | षोवृ | ,, | १८ |
| ञ्चत | ञ्चीत | ,, | २० |
| यैद | यैन | ११५ | १८ |

कुत्र २ यन्त्र गत्या रकारोकारौभिन्नौ सीसकमयदोषात्। कुत्रचिन्मुद्राकरप्रमादाद् व्यत्ययेन गतवन्तौ तौ विचार्य्य पठनीयौ। चेष्यमानेऽपि बहुत्र भ्रमप्रमादहष्ट्यादिदोषा च्चावशिष्टा दोषा अपि विविच्य विपश्चिद्भिः पठनीयाः।

# * अथाभिषेकः *

तत्र यजमानं प्राङ्मुखमुपवेश्य स्वयमाचार्य्यः। उदङ्मुखस्तिष्ठन् कलशोदकं पात्रे समादाय अंकुरितसप्तधान्यदूर्वाकुशाम्रादिपञ्चपल्लवैः चतुर्वेदोद्गतैरभिषेकमन्त्रैः स्थापितदेवतासूक्तैः पौराणिकैश्चापिमन्त्रैरभिषेकं कुर्य्यात्॥ (अभिषेके पत्नीवामतउपविशेत्॥ तत्र मन्त्राः॥ ओं आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन। महेरणाय चक्षसे॥१॥ योवः शिवतमोरसस्तस्य भाजयतेहनः। उशतीरिव मातरः॥२॥ तस्माऽअरङ्गमामवोयस्यक्षयाय जिन्वथ। आपोजनयथाचनः॥३॥ ओं आपो ऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वꣳ हि रिप्रम् प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत ऽएमि॥ दीक्षातपसोस्तनूरसि तान्त्वा शिवाꣳशग्मारुपरिदधे भद्रम्वर्णम्पुष्यन्॥४॥ इदमापः प्रवहतावद्यञ्चमलं च यत्। यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम्॥ आपोमातस्मादेनसः पवमानश्च मुञ्चतु॥५॥ स्तोकानामिन्दुम्प्रतिशूर ऽइन्द्रो वृषायमाणो वृषभस्तुराषाट्। घृतप्रुषाः मनसा मोदमानाः स्वाहा देवा ऽअमृतामादयन्ताम्॥६॥ आयात्विन्द्रोऽवस ऽउपन ऽइहस्तुतः सधमादस्तु शूरः॥ वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न्नक्षत्रमभिभूति पुष्यात्॥७॥ आनऽ इन्द्रो दूरादान ऽआसादभिष्टिकृदवसे यासदुग्रः॥ ओजिष्ठेभिर्नृपतिर्वज्रवाहुः सङ्गे समत्सुतुर्वणिः पृतन्यून्॥८॥ आनऽइन्द्रोहरिभिर्यातवच्छार्वाचीनो ऽवसेराधसे च। तिष्ठातिवज्री मघवाविरप्शी

मन्यद्धमनुनो वाजसातौ ॥ ८ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवाधात्विन्द्रः ॥ १० ॥ इमम्मे वरुणश्रुधी हवमद्याच मृडय । त्वामवस्युराचके ॥११॥ तत्त्वायामि ब्रह्मणा वन्दमानास्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणे हबोद्धयुरुशꣳ समानऽआयुः प्रमोषीः ॥ १२ ॥ सत्वन्नो अग्नेऽवमोभवोतीनेदिष्ठो अस्याऽउषसोव्युष्टौ । अवयक्ष्वनो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवोन ऽएधि ॥ १३ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ १४ ॥ प्रातरग्निम्प्रातरिन्द्रꣳ हवामहे प्रातर्म्मित्रावरुणा प्रातरश्विना । प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातः सोममुत रुद्रꣳ हुवेम ॥ १५ ॥ भगप्रणेतर्भग सत्यराधो भगेमान्धियमुदवा ददन्नः । भगप्रनो जनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तः स्याम ॥१६॥ समुद्रायत्वा वाताय स्वाहा सरितायत्वा वाताय स्वाहा । अनाधृष्यायत्वा वाताय स्वाहा प्रतिधृष्यायत्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा शिमिदाय त्वा वाताय स्वाहा ॥ १९ ॥ आप्यायस्व समेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्य सङ्गथे ॥२०॥ पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः । सरस्वती तु पञ्चधासो देशेऽभवत् सरित् ॥ २१ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ २२ ॥ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूँ१ रनु ॥ २३ ॥ यत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा । ब्रह्मतेन पुनातु मा ॥ २४ ॥ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः

यः पोता स पुनातु मा ॥ २५ ॥ उभाभ्यान्देवसवितः पवित्रेण सवेन च । माम्पुनीहि विश्वतः ॥ २६ ॥ वैश्वदेवीपुनती देव्या गाद्यस्यामिमावह्वयस्तन्न्वोवीतपृष्ठाः । तया मदन्तः सधमादेषु वयथंस्याम पतयोरयीणाम् ॥ २७ ॥ चित्पतिर्म्मा पुनातु वाक्पतिर्म्मा पुनातु देवोमा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ २८ ॥ शिरोमे श्रीर्यशोमुखन्त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽअमृतथंसम्राट्चक्षुर्विराट्श्रोत्रम् ।२९॥ जिह्वा मे भद्रं वाङ्महोमनोमन्युः स्वराड्भामः । मोदाः प्रमोदाऽअङ्गुलीरङ्गानि मित्रम्मे सहः ॥ ३० ॥ बाहू मे बलमिन्द्रियथं हस्तौमे कर्म्मवीर्य्यम् । आत्मा क्षत्रमुरोमम ॥३१॥ पृष्ठीर्म्मे राष्ट्रमुदरथं सौग्रीवाश्च श्रोणी । ऊरू अरत्नी जानुनी विशोमेङ्गानि सर्व्वतः ॥ ३२ ॥ नाभिर्म्मे चित्तं विज्ञानम् पायुर्म्मेऽपचितिर्भसत् । आनन्दनन्दावाण्डौ मे भगः सौभाग्यम्पसः । जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मि विशि राजा प्रतिष्ठितः ॥ ३३ ॥ पयः पृथिव्याम्पय ओषधीषु पयोदिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ॥३४॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् । सरस्वत्यैवाचोयन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३४ ॥ देवस्यत्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३५ ॥ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामी-

न्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ ३६ ॥ कोसि कतमोसि कस्मै त्वा काय त्वा सुश्लोक सुमङ्गल सत्यराजन् ॥३७॥ इमम्माहिँ सीर्द्विपादं पशुठं सहस्राक्षो मेधाय चीयमानः। मयुम्पशुम्मेधमग्ने जुषस्व तेनचिन्न्वानस्तन्न्वो निषीद। मयुन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥३८॥ इमम्माहिठं सीरेकशफम्पशुङ्कनिक्रदम्वाजिनम्वाजिनेषु। गौरमारण्यमनु ते दिशामि तेन चिन्न्वानस्तन्न्वोनिषीद। गौरन्तेशुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ३९ ॥ इमठं साहस्रठं शतधारमुत्सं व्यच्यमानठं सरिरस्य मध्ये। घृतन्दुहानामदितिञ्जनायाग्ने माहिठं सीः परमे व्योमन् गवयमारण्यमनुते दिशामि तेन चिन्न्वानस्तन्न्वोनिषीद गवयन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४० ॥ इममूर्णायुम्वरुणस्य नाभिन्त्वचम्पशूनांद्विपदाञ्चतुष्पदाम्। त्वष्टुः प्रजानाम्प्रथमं जनित्रमग्ने माहिठं सीः परमे व्योमन्। उष्ट्रमारण्यमनु ते दिशामि तेन चिन्न्वानस्तन्न्वोनिषीद। उष्ट्रन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥४१॥ त्वं यविष्ठ दाशुषोनॄँःपाहि शृणुधी गिरः। रक्षा तोकमुतत्मना ॥ ४२ ॥ विश्वानि देवसवितर्दुरितानि परासुव। यद्भद्रन्तन्नऽआसुव ॥४३॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोवृहस्पतिः। सचेतसो विश्वेनो देवा यज्ञम्प्रावन्तुनः शुभे ॥४४॥ अन्नपतेन्नस्य नोदेह्यनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिष ऽऊर्जन्नो धेहि द्विपदे शञ्चतुष्पदे ॥ ४५ ॥ अपोअद्यान्वचारिषठं रसेन समसृक्ष्महि। पयस्व नग्नऽआगमन्तम्मासठं सृजवर्चसा प्रजया च धनेन च ॥ ४६ ॥ एधोस्येधिषीमहि समिदसि तेजोसि तेजोमयिधेहि। समाववर्तिपृथिवी समुषाः समुसूर्य्यः

समुव्विश्वमिदञ्जगत् ॥ व्वैश्वानरज्ज्योतिर्भूयासं विभून्कामान्
व्व्यश्नवै भूः स्वाहा ॥४७॥ अभ्यादधामि समिधमग्ने व्रतपते
त्वयि । व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितोऽअहम् ॥ ४८ ॥
यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह । तं लोकम्पुण्यम्प्रज्ञेषं
यत्र देवाः सहाग्निना ॥४९॥ सन्ते पयाᳬंसि समुयन्तु व्वाजाः
सम्वृष्ण्यान्यभिमातिषाहः । आप्यायमानो ऽअमृताय सोम दिवि
श्रवाᳬंस्युत्तमानि धिष्व ॥ ५० ॥ अप्यायस्व मदिन्तम सोम
व्विश्वेभिरᳬंशुभिः । भवानः सप्रथस्तमः सखा वृधे ॥ ५१ ॥
आते वत्सो मनोयमत्परमाच्चित्सधस्थात् । अग्ने त्वाङ्कामया
गिरा ॥५२॥ तुभ्यन्ताऽअङ्गिरस्तम व्विश्वाः सुक्षितयः पृथक् ।
अग्ने कामाय येमिरे ॥ ५३ ॥ अग्निः प्रियेषु धाम सुकामो
भूतस्य भव्व्यस्य । सम्राडेकोविराजति ॥ ५४ ॥ आनोनियुद्भिः
शतिनीभिरध्वरᳬं सहस्रिणीभिरुपयाहि यज्ञम् । व्वायोऽ-
अस्मिन्त्सवने मादयस्व यूयम्पातस्वस्तिभिः सदानः ॥ ५५ ॥
अभित्यन्देवᳬं सवितारमोण्योः कविक्रतुमर्च्चामि सत्यसवᳬं
रत्नधामभिप्प्रियम्मतिङ्कविम् । ऊर्ध्वायस्यामतिर्भाऽअदि-
द्युतत्सवीमनिहिरण्यपाणिरमिमीत सुक्रतुः कृपास्वः । प्रजा
भ्यस्त्वा प्रजास्त्वा नु प्राणन्तु प्रजास्त्वमनु प्राणिहि ॥५६॥ ब्रह्म-
यज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः सबुध्न्याउप-
माऽअस्यव्विष्ठाः सतश्च योनिमसतश्चव्विवः ॥५७॥ वयᳬं सोम०
॥ ५८ ॥ कयानश्चित्रआभुवदूती सदावृधः सखा कयासचिष्ठया-
वृता ॥ ५९ ॥ ( सुमित्रियानआप० ६० ) पलाशम्भवति तेन
ब्राह्मणोभिषिञ्चति ब्रह्म वैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति
॥ ६१ ॥ सर्वेषां वा एषवेदानाᳬंरसोयत्साम सर्वेषामेवैनमेतद्वे-
दानाᳬंरसेनाभिषिञ्चति ॥ ६२ ॥ यदेव कल्पाज्जुहोति प्राणा-

वैकल्पाऽअमृतमुपवैप्राणाऽ अमृतेनैवैनमेतदभिषिञ्चति ॥ ६३ ॥ दीर्घायुत्वाय बलाय वर्चसे सुप्रजात्वा सहसाऽअथो जीव शरदः शतम् ॥ ६४ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्ति रापः शान्ति रोषधयः शान्तिः । वनस्पतयः शान्ति र्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ ६५ ॥ यतो यतः समीहसे ततोनोऽअभयङ्कुरु । शन्नः कुरुप्रजाभ्योऽभयन्नः पशुभ्यः ॥ ६६ ॥ शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु यच्छ्रेयस्तदस्तु यत्पापं तत्प्रणश्यतु द्विपदेभ्यश्चतुष्पदेभ्यः शान्तिर्भवतु ॥ समुद्र ज्येष्ठा० । आयन्तर्रमिह० । इमाआपः शि० । यद्दे वादेवहेड-नमित्यनुवाकः । पवमानः सुवर्जन इत्यनुवाकः । पौरुषं सूक्तम् । श्रीसूक्तं रौद्रसूक्तम् । गाणपत्यसूक्तम् । ग्रहमन्त्राः । लोकेशमंत्राः । त्र्यम्बकमंत्रः । अघोरमन्त्रः । स्थापितदेवता-सूक्तम् । छन्दोगायवृहदित्यथर्वसाम । अन्यानपिनानाशाखो-द्भवानि सूक्तान्यभिषेके ग्राह्याणि ॥ इति वैदिकाभिषेकः ।

## ॥ अथ पौराणिकाभिषेकः ॥

वैदिक मन्त्रैः प्रथममभिषिंच्य पौराणिकैरभिषिंचेत् तद्यथा—सुरास्त्वामभिषिं-चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्न-श्चानिरुद्धश्च भवन्तुविजयायते । आखण्डलोऽग्निर्भगवान् यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । एते त्वामभिषिंचन्तु दिक्पालाः सपरिच्छदाः ॥ ३ ॥ आदित्यश्चन्द्रमा भौमो बुधोजीवसितार्कजाः । ग्रहास्त्वामभि-षिञ्चन्तु राहुः केतुश्चतर्पिताः ॥ ४ ॥ अथौं कारवषट्कारौ सावित्रोविधयस्त्रयः ॥ ऋचो यजूंषिसामानि छन्दांस्याथर्वणानिच ॥ ५ ॥ चत्वारःसाङ्गवेदाश्च सरहस्याः सविस्तराः । पुराणमितिहासं चाखिलान्युपपुराणकम् ॥ ६ ॥ अङ्गानि चैवोपाङ्गानि समाख्यानानि पान्तु च ॥ पृथिवीवायुराकाशमापोज्योतिश्च पंचकम् ॥ ७ ॥ इन्द्रि-

थाणि मनोबुद्धिस्तथा सत्वंरजस्तमः ॥ व्यानोदानौ समानश्च प्राणापानश्च-पंचमः ॥ ८ ॥ वायव्यः सप्तचैवान्ये यैश्च व्याप्तमिदं जगत् ॥ मरीचिरङ्गिरोऽत्रि-श्च पुलस्त्यः पुलहः क्रतुः ॥ ९ ॥ भृगुर्वसिष्ठोभगवान्पान्तु ते त्वां महर्षयः । स्वाय-म्भुवाद्यामनवश्चतुर्दश दिशोदश ॥ १० ॥ नरनारायणौ देवाअभिषिञ्चन्तुसर्वदा । रुद्राश्चैकादश प्रोक्ता आदित्या द्वादशैवतु ॥ ११ ॥ अष्टौ च वसवश्चैव अश्विनौ मरुतस्तथा । ह्रीः श्रीर्लक्ष्मीः स्वधा मेधा पुष्टिस्तुष्टिः स्मृतिर्धृतिः ॥ १२ ॥ दिति-र्दनुश्चादितिश्च सिंहिकादैत्यमातरः । हिमवान्हेमकूटश्च निषधः श्वेतपर्वतः ॥ १३ ॥ ऋषभः पारियात्रश्च विंध्योवैडूर्य्यपर्वतः । सह्याद्रिश्चमलयः मेरुमन्दरदर्दुराः॥१४॥ क्रौञ्चकैलाशमैनाकाः पान्तु त्वां धरणीधराः । शेषश्च वासुकिश्चैव विशालाक्षश्च तक्षकः ॥ १५ ॥ एलापर्णः शुक्तिकर्णः कम्बलाश्वतरावुभौ । सुमनाश्चोदधिमुख-स्तथाशृङ्गारपिण्डकः ॥ १६ ॥ नागराडुदधिकर्णश्च तथा हारिद्रकोपरः । एते चान्ये च बहवो ये चान्ये नानुकीर्तिताः ॥ १७ ॥ भूधराः सत्यधर्माणः पान्तु त्वां भुजगे-श्वराः । समुद्राः पान्तु चत्वारो गङ्गा च सरिताम्वरा ॥१८॥ सरस्वती चन्द्रभागा शतद्रुर्देविका शिवा । इरावती विपाशाच सरयूर्यमुना तथा ॥ १९ ॥ कल्माषी च रथोष्मा च वाहुदा च हिरण्यदा । प्लक्षा चेक्षुमती चैव भवानी च बृहद्रथा ॥२०॥ ख्याता चर्म्मण्वती चैव सुपुण्या चैव धूसरा । वेणा गोदावरी सीता कावेरी कौंकणावती ॥ २१ ॥ कृष्णावेणी शुक्तिमती तमसा पुष्पवाहिनी । ताम्रपर्णी ज्योति-रथा उत्पलोदुम्बरावती ॥ २२ ॥ नदी वैतरणी पुण्या विदर्भा नर्मदा शुभा । वित-स्ता च तथा भीमरथी चैला महानदी ॥ २३ ॥ कलिङ्गी गोमती पुण्या नदः श्रोणश्च विश्रुतः । क्षिप्रा चर्म्मरवती पुण्या महाशुभ्रवती तथा ॥ २४ ॥ सिन्धुर्वेत्र-वती चैव भोजान्ता वनमालिका । पूर्वभद्रा पराभद्रा ऊर्म्मिला च वरद्रुमा ॥ २५ ॥ ख्याता वैत्रवती चैव तुङ्गभद्राघहारिणी । प्रस्थावती लुण्ठनदी नदी पुण्या सर-स्वती ॥ २६ ॥ चित्रांघ्रिश्चेन्दुमाला च तथा मधुमती नदी । उमा गुरुनदी चैव तापी च विमलोदका ॥ २७ ॥ विमला विमलोदा च मत्तगङ्गा यशस्विनी । एता-श्चान्याश्चवै नद्यो याश्चान्यानानुकीर्तिताः ॥२८॥ लक्ष्मीर्वेदी सती क्षान्तिरनुसूया तथा स्मृतिः । सम्भूतिः सन्ततिश्चैव क्षमाप्रीतिस्तथैव च ॥ २९ ॥ स्वाहा स्वधा च ते राजन् अभिषिञ्चन्तु मातरः । कीर्तिर्लक्ष्मीर्धृतिर्म्मेधा पुष्टिः श्रद्धा क्रियामतिः ॥ ३० ॥ बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिस्सिद्धिश्च पार्थिव । एतास्त्वाम-भिषिञ्चन्तु धर्मपत्न्यः समागताः ॥ ३१ ॥ अरुन्धती वसुर्यामी लम्वा भानुर्मरु-त्वती । संकल्पा च मुहूर्ता च साध्या विश्वा तथैव च ॥ ३२ ॥ धर्मपत्न्योदशान्या स्त्वामभिषिञ्चन्तु पार्थिव । अदितिर्दितिर्दनुस्ताम्रा ह्यरिष्टा नायुषा मुनिः ॥ ३३ ॥ कद्रूः क्रोधवशा प्राची वितता सुरभिस्तथा । एतास्त्वामभिषिञ्चन्तु कश्यपस्य प्रियाः स्त्रियः ॥ ३४ ॥ कृत्तिका रोहणी देवी इला रौद्री तथैव च । पुनर्वसुश्च पुष्यश्च तथाश्लेषा च पार्थिव ॥ ३५ ॥ मघा च फाल्गुनीपूर्वा तथैवोत्तरफाल्गुनी

हस्तश्चित्रा तथा स्वाती विशाखा च तथा नृप ॥ ३६ ॥ अनुराधा तथा ज्येष्ठा मूलं च वसुधाधिप । आषाढ़ा च तथा पूर्वं तथा चान्योत्तराह्वया ॥ ३७ ॥ अभिजिच्च श्रुतिश्चैव धनिष्ठा च तथैव च । तथा शतभिषक्चैव पूर्वाभाद्रपदा तथा ॥ ३८ ॥ उत्तरा रेवती राजन् अश्विनी रोहिणी तथा । एतास्त्वामभिषिञ्चन्तु सोमपत्न्यः समागताः ॥ ३९ ॥ प्रभासश्च प्रयागश्च नैमिषः पुष्करस्तथा । गङ्गातीर्थं कुरुक्षेत्रं श्रीकण्ठं गौतमाश्रमम् ॥ ४० ॥ रामह्रदं विनशनं रामतीर्थं तथैव च । गङ्गाद्वारं कनखलं सोमोवै यत्र चोत्थितः ॥ ४१ ॥ कपालमोचनं तीर्थं जम्बूमार्गं च विश्रुतम् । सुकर्य्याविन्द्धभिख्यं च तथा कनकपिङ्गलम् ॥ ४२ ॥ दशाश्वमेधिकं चैव पुण्याश्रमविभूषितम् । वदरी चैव विख्यातो नरनारायणाश्रमः ॥ ४३ ॥ विख्यातं फल्गुतीर्थं च तीर्थं चेन्द्रवटं तथा । गोकामुखं पुण्यतमं गङ्गासागरमेव च ॥ ४४ ॥ मगधेषु तपोदश्च गङ्गोद्भेदश्च विश्रुतः । तीर्थान्येतानि पुण्यानि सेवितानि महर्षिभिः ॥ ४५ ॥ त्वां पालयन्तु सलिलैः कीर्तिताऽकीर्तितानि वै । सुकरं योगमार्गं च श्वेतद्वीपं तथैव च ॥ ४६ ॥ ब्रह्मतीर्थं रामतीर्थं वाजिमेधदशोपमम् । धारापातसमायुक्तागङ्गाकिल्विषनाशिनी ॥ ४७ ॥ गङ्गा वैकुण्ठकेदारं सूकरोद्भेदनं परम् । तत्पापमोचनं तीर्थं पुनन्त्वेतानि किल्विषात् ॥ ४८ ॥ भवन्ति धर्मार्थकामः यशः प्राप्तिः शमोदमः । अष्टांगयोगोपहरो यमो नियम एव च ॥४९॥ कालोनयः सन्नतिश्च क्रोधो मोहः क्षमा धृतिः । विद्युतोभ्राण्योषध्यः प्रमादोन्मादविग्रहाः ॥ ५० ॥ यक्षाः पिशाचागन्धर्वाः किन्नराः सिद्धचारणाः । नक्तञ्चराः केशरिणो दंष्ट्रिणः प्रियविग्रहाः ॥ ५१ ॥ लम्बोदराश्च बलिनः पिङ्गाक्षाः विश्वरूपिणः । मरुतः सहपर्जन्याः कलात्रुटिलवक्षणाः ॥ ५२ ॥ नक्षत्राणि ग्रहाश्चैव ऋतवः शिशिरादयः । मासाः सौरादयश्चैव पक्षायोगास्तथैव च ॥ ५३ ॥ आमोदश्च प्रमोदश्च प्रहर्षः शोकएव च । मन्युस्तन्यस्तपः सत्यं सिद्धिर्वृद्धिः श्रुतिधृतिः ॥५४॥ रुद्राणी भद्रकाली च भद्रषष्ठी तथारुणा । भासी च कालिका चैव शाण्डिली चेति विश्रुता ॥ ५५ ॥ आर्या कुहूः सिनीवाली भीमा चित्रवतीरतिः । एकानना च कूष्माण्डी देवी कात्यायनी च या ॥ ५६ ॥ लोहित्या घनमित्रा च देवकन्या च या स्मृता । गोनन्दादेवपत्न्यश्च त्वां रक्षन्तु सबान्धवम् ॥ ५७ ॥ नानाभरणचेष्टाश्च नानारूपाङ्कितानना: ॥ नानादेशविहारिण्यो नानाशास्त्रोपशोभिताः ॥ ५८ ॥ मुखमुण्डी विडाली च पूतना गन्धपूतना । शीतवातोत्थवैताली रेवती ग्रहसंज्ञिताः॥५९॥ पितामहमुखोद्भूता रौद्रा रुद्राङ्गसम्भवाः कुमारस्कन्दजाश्चैव ज्वरा वै वैष्णवादयः ॥ ६० ॥ क्रोधनाः क्रोधजाः क्रूराः सुरविग्रहकारिणः । लम्बोदराजघनिनः पिङ्गाक्षा विश्वरूपिणः ॥ ६१ ॥ वामनाः विकटाः कुब्जाः कराला लूनमूर्द्धजाः । सहस्रकलशाश्चान्ये त्वां सिञ्चन्तु शुभाम्बुभिः ॥ ६२ ॥ महागणपतिर्नन्दी महाकालोमहाबलः । ग्रामणीश्चैव गोपालः भृङ्गी रिटिगणेश्वरौ ॥ ६३ ॥ देवश्च वामदेवश्च घण्टाकर्णः करन्धमः । श्वेतमोदकपाली च जृम्भकः शत्रुतापनः ॥ ६४ ॥ मज्जनोन्मज्जनौ चोभौ

सन्तापनवितापनौ। निजघासोघसश्चैव स्थूलकर्णः प्रशोषकः ॥ ६५ ॥ उल्कामाले घनधमोज्वालाजिह्वः प्रतर्दनः। संघट्टनः संकुचनः काष्ठभूतः शिवंकरः ॥ ६६ ॥ कुष्माण्डः कुम्भमूर्द्धा च रोचनोवैकृतोग्रहः। आनिकेतः सुरारिघ्नः शिवश्च शिवएव च ॥ ६७ ॥ क्षेमकः पिशिताशी च सुरारिर्हरिलोचनः। भीमकोग्राहकश्चैव तथैवोग्रामहाग्रहाः ॥ ६८ ॥ उपग्रहोर्पकश्चैव तथास्कन्दग्रहोपरः। चपलो लोमवेतालः तमसः समहाकपिः ॥ ६९ ॥ हृदयोद्वर्त्तनश्चैव कुण्डासिद्धः कणप्रियः। हरिच्छ्मश्रुगरुत्मन्तौ मनोमारुतरंहसः ॥ ७० ॥ पार्वत्यारोषसम्भूताः सहस्राणि शतानि च। शक्तिमन्तः कान्तिमन्तः ब्रह्मण्यः सत्यसंगरः ॥ ७१ ॥ सर्वकामोपहर्तारो हन्तारो द्विषतामृधे। एते गणानाम्पतयः अभिषिञ्चन्तु सर्वदा ॥ ७२ ॥ नारदः पर्वतश्चैव गन्धर्वाप्सरसांगणः। पितरः कारणं कार्य्यमाधयोव्याधयस्तथा ॥७३॥ अगस्त्योगालवोगार्ग्यः शक्तिर्धौम्यः पराशरः। कृष्णात्रेयश्च भगवान् असितोदेवलोनलः ॥ ७४ ॥ बृहस्पतिरुतथ्यश्च मार्कण्डेयः श्रुतश्रवाः। द्वैपायनोविदर्भश्च जैमिनिर्माठरः कठः ॥ ७५ ॥ विश्वामित्रोवसिष्ठश्च लोमशश्च महानृषिः। उत्तुंगश्चैव रैभ्यश्च पौलोमश्च द्वितः त्रितः ॥ ७६ ॥ ऋषिर्वैकालवृत्तीयो मुनिर्म्मेधातिथिस्तथा। सारस्वतोपविक्रीतः कुशिकोगौतमस्तथा ॥ ७७ ॥ सम्वर्तोऋष्यश्रृङ्गश्च स्वस्त्यात्रेयोविभाण्डकः। ऋचीकोजमदग्निश्च तथोर्वस्तपसां निधिः ॥ ७८ ॥ भारद्वाजः स्थूलशिराः कश्यपः पुलहः क्रतुः। बृहदग्निर्हरिच्छ्मश्रुर्विजयः कण्वएव च ॥७९॥ वितण्डीवैदीर्घतपाः वेदश्चाथांशुमान् शिवः। अष्टावक्रोदधीचिश्च श्वेतकेतुस्तथैव च ॥ ८० ॥ उद्दालकः क्षीरपाणिः श्रृङ्गी गौरमुखस्तथा। आग्निवेश्यः शमीकश्च प्रमुचुर्मुमुचुस्तथा ॥ ८१ ॥ एते चान्ये च बहवः ऋषयः संशितव्रताः। मुनयः शमितात्मानो ये चान्ये नानुकीर्तिताः ॥ ८२ ॥ ते त्वां सर्वेभिषिञ्चन्तु सर्वकामार्थसिद्धये। त्रयोऽग्नयस्त्रयोवेदास्त्रैविद्यं कौस्तुभोमणिः ॥ ८३ ॥ उच्चैःश्रवा हयः श्रीमान् वैद्योधन्वन्तरिर्हरिः। अमृतं गौः सुवर्णश्च दधिगौराश्च सर्षपाः ॥ ८४ ॥ शुक्लाः सुमनसः कन्याः श्वेतच्छत्रयवाङ्कताः। दूर्वाहिरण्यगन्धाश्च वालव्यजनमेचच ॥ ८५ ॥ तथाप्रतिहतं चक्रं महोक्षश्चन्दनं विषम्। श्वेतोवृषः करीमलः सिंहव्याघ्रादयोनगाः ॥ ८६ ॥ पृथिवीचोद्धृताल जाः ब्राह्मणाः मधुपायसम्। स्वस्तिकोवर्द्धमानश्च नन्द्यावर्तः प्रियङ्गवः ॥ ८७ ॥ श्रीफलं गोमयं मत्स्याः दुन्दुभिः पटहस्वनः। ऋषिपत्न्यश्च तत्कन्याः श्रीमद्भद्रासनं धनुः ॥ ८८ ॥ रोचनारुचकश्चैव नदीनां सङ्गमोदकम्। पक्षिणश्च सुपर्णाद्याः वज्रमुक्तामणिध्वजाः ॥ ८९ ॥ एतान्यन्यानि सर्वाणि ब्रह्माण्डान्तर्गतानि च ॥ ९० ॥ तानि त्वामभिषिंचन्तु पुण्यतोयैः शुभाप्तये। इतिसर्वसाधारणोभिषेकः ॥

# * अथ तान्त्रिकाभिषेकः *

अभिषेकं ततोदेवि कुर्य्याच्च गुरुमार्गतः। स्वतन्त्रोक्तविधानेन मन्त्रस्योच्चारणैः सह॥ चालयेच्च घटं मन्त्री मन्त्रेणानेन देशिकः। ॐ उत्तिष्ठब्रह्मकलश सेविताशेषसिद्धिद॥ सर्वतीर्थाम्बुपूर्णस्त्वं पूरयस्व मनोरथम्। ईशानेन्द्रस्मरक्षोणो तदन्ते भुवनेश्वरी॥ मन्त्रेणानेन वाद्यानां निर्घोषैश्चालयेद्घटम्। अभिषिंचेद्गुरुः शिष्यं यजमानं पुरोहितः॥ (तथा अभिषेकस्य दक्षिणामूर्तिऋ्र्षिरनुष्टुप्छन्दः शक्तिर्देवतासर्वसिद्धिसंकल्पसिद्धये विनियोगः।) मन्त्राः। ॐ राजराजेश्वरीशक्तिभैरवी कालभैरवी। श्मशानभैरवी देवी त्रिपुरानन्दभैरवी॥ त्रिपुरात्रिपुरादेवी तथा त्रिपुरसुन्दरी। त्रिपुरेशी महादेवी तथा त्रिपुरमालिका॥ नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा। सर्वचक्रेश्वरी देवी तथा नीलसरस्वती॥ सर्वसिद्धिकरी देवी सिद्धगन्धर्वसेविता। उग्रतारा महादेवी तथा दक्षिणकालिका॥ एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा। उग्रदंष्ट्रामहादंष्ट्राशुभदंष्ट्राकपालिनी॥ भीमनेत्रा विशालाक्षी मङ्गला विजया जया। एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्तिर्यशस्विनी। पुष्टिर्मेधा शिवा साध्वी यशः शोभा जया धृतिः॥ श्रीनन्दा च सुनन्दा च नन्दिन्या नन्द पूजिता। एतास्त्वामभिषिंचन्तु मन्त्रपूतेन वारिणा। विजया मङ्गला भद्रा स्मृतिः शान्तिः क्षमा धृतिः। सिद्धिस्तु परमा पुष्टिः श्री ऋद्धिश्च रतिस्तथा॥ दीप्ता कान्तिर्यशोलक्ष्मीरीश्वरीवुद्धिरेव च। शक्तिर्मायावती ब्राह्मी जयन्ती चापराजिता॥ अजिता मानवी श्वेता दितिस्त्वदितिरेव च। माया चैव महामाया मोहिनी क्षोभिणी तथा॥ कमला विमला गौरी लावण्याम्बुधिसुन्दरी। दुर्गाक्रियारुन्धती च घण्टाकर्णा कपालिनी॥ चर्चिका चापरा ज्ञेया तथैव सुरपूजिता। वैवस्वती च कौमारी तथा माहेश्वरी परा॥ वैष्णवी च महालक्ष्मीः कार्तिकी कौशिकी तथा। शिवदूती च चामुण्डा मुण्डमाला विभूषणा॥ एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा। इन्द्रोवह्निर्यमश्चैव नैऋ्र्तोवरुणस्तथा॥ पवनोधनदेशानौ ब्रह्मानन्तोदिगीश्वराः। एतास्त्वा०............ सम्वत्सरश्चायनौ च मासपक्षदिनानि च। तिथयश्चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ रविः सोमः कुजवुधौ गुरुः शुक्रः शनैश्चरः। राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः॥ नक्षत्रं करणं योगोऽमृतसिद्धिस्ततः परम्। दग्धाः पापास्तथाभद्रा योगावराः क्षणास्तथा॥ वारवेला कालवेला दण्डा ऋक्षादयस्तथा। अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा॥ असिताङ्गोरुरुश्चण्डः क्रोधउन्मत्तएव च। कपाली भीषणाख्यश्च संहारश्चाष्टभैरवाः॥ एतास्त्वा०..........। द्राविणी पुत्रिकाश्चैव डाकिनी पुत्रिकास्तथा। शाकिनी पुत्रिकाश्चान्याः काकिनी पुत्रिकाः पराः॥

अभिषेकस्तु श्रेयः सम्पाद्य दानं च ह्यभिषेकोविसर्जनमिति धर्म्मसिन्धुसंस्कारभास्करादिवचनाद्दानात्परं विसर्जनात्पूर्वमेव भवति प्रधानकलशोत्थापनं च विसर्जनात्पूर्वं न भवति तत्र देवसान्निध्यात् अतः प्रधानादिकलशेभ्यः केनोपायेन किंचित्किंचिज्जलं पात्रान्तरे निधायाऽभिषेकं करोतीति

---

शाकिनी पुत्रिका भूयो हाकिनी पुत्रिकास्तथा। ततश्च राकिणी पुत्री देवपुत्री ततः परम् ॥ मातॄणां च तथा पुत्री चोर्ध्वमुख्याः सुतास्तथा। अधोमुख्याः सुताश्चैव ज्वालामुख्याः सुताः पराः ॥ एतास्त्वा०............। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ एतेत्वा०...........। पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश ॥ आत्मा परात्मा ज्ञानात्मा ध्यानात्मा परमात्मनः। आत्मानश्चात्मनश्चैव स्थूलसूक्ष्मौ च ये पराः ॥ एतेत्वा०............। वेदादिवीजं हुंवीजं स्त्रीवीजं तन्निकेतनम् ॥ शक्तिवीजं रमावीजं मायावीजं सुधाकरम्। चिन्तारत्नं महावीजं नारसिंहं च तारकम् ॥ मार्त्तण्डभैरवं दौर्गं वीजं स्त्रीपौरुषोत्तमम्। गाणपत्यं च वाराहं कालीवीजं भयापहम् ॥ एतानि त्वाभिषिञ्चन्तु०.........। गङ्गा गोदावरी रेवा यमुना च सरस्वती ॥ अत्रेयी भारती चैव सरयू गण्डकी तथा। करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी ॥ भोगवती च पाताले स्वर्गे मन्दाकिनी तथा। एतास्त्वा०...........॥ भैरवी भीमरूपा च शोणः सुमुखएव च। सिन्धुश्चैव ह्रदः पुण्यस्तथा पातालसम्भवः ॥ एतेत्वा०.........। यानि कानि च तीर्थानि पुण्यापुण्यतराणि च ॥ तानित्वा० ........। जम्बूद्वीपादयोद्वीपाः सागरालवणादयः ॥ अनन्तास्तरुस्तथानागसर्पा ये तक्षकादयः। एतेत्वा०...........॥ तारश्च वह्निजाया च वषट्कूर्चमतः परम्। वौषट्कारस्तु फट्कारो ह्यभिषिञ्चन्तु सर्वदा ॥ नश्यन्तु प्रेतकूष्माण्डाराक्षसादानवाश्च ये। पिशाचोगुह्यकाभूता अभिषेकेण ताड़िताः ॥ अलक्ष्मीः पापकर्णीञ्च पापानि सुमहान्ति च। नश्यन्तु चाभिषेकेण तारवीजेन ताडिताः ॥ रोगाः शोकाश्च दारिद्र्यं दौर्बल्यं चित्तविक्रियाः। नश्यन्तु चाभिषेकेण वाग्वीजेनैव ताडिताः ॥ लोकानुरागत्यागाश्च दौर्भाग्यमपिदुर्यशः। नश्यन्तु चाभिषेकेण मन्मथेनैव ताडिताः ॥ तेजोह्रासः शक्तिह्रासोबुद्धिह्रासस्तथैव च। नश्यन्तु चाभिषेकेण शक्तिवीजेन ताडिताः ॥ विषाणि च महारोगाः डाकिन्योभीतयस्तथा। घोराभिचाराः क्रूराश्च ग्रहानागास्तथैव च ॥ नश्यन्तु चाभिषेकेण कालीवीजेन ताडिताः। नश्यन्तु विपदःसर्वाः सम्पदःसन्तु सुस्थिराः ॥ अभिषेकेण शाक्तानां पूर्णाः सन्तु मनोरथाः। इति त्रिकात्तरतन्त्रोक्तं तान्त्रिकाभिषेकविधानम् ॥

वैदिकानामभिषेकविधिः सर्वत्र दरीदृश्यतेतान्त्रिके तु विभिन्नः प्रकारः । ( अभिषेकदिनात्पूर्वं अधिवासनपूर्वकं अभिषेकार्थम्पृथक्घटं स्थापयेत् ) तद्यथा यजमानः पूर्वदिने रात्रौ अधिवासनपुरस्सरं वृद्धिश्राद्धं कृत्वा शिवशक्तीः पूजयेत् । तथा स्वर्णालङ्कारभूषणैराचार्य्यं पूजयेत् ततः संकल्प-विधिना आचार्यवरणं च कुर्य्यात् । ततः नातिह्रस्वं नाति-दीर्घं स्वर्णरूप्यादिनिर्म्मितं सुन्दरं मनोहरं घटं विशेषार्घस्य यन्त्रे वा त्रिकोणेविन्यसेन्मन्त्रादिभिः घटस्थापनविधिना स्थापयेच्च । ततः कामबीजेनघटं प्रोक्षयेत् वाग्भवेनताडयेत् । ततः शक्तिबीजेनावलोक्य मायाबीजेन जलैः पूरयेत् ॥ ततोवक्ष्यमाणमन्त्रेण जलपूर्णे घटे आचार्यस्तीर्थान्यावाहयेत् तन्मन्त्रोयथा ओं सर्वे समुद्राः सरितः सरांसि जलदानदाः । ह्रदाः प्रस्रवणाः पुण्याः स्वः पातालमहीगताः ॥ सर्वतीर्थानि पुण्यानि घटे कुर्व्वन्तु सन्निधिम् इति ॥ ततः श्रीबीजं प्रजपन् घटे पल्लवं क्षिपेत् । कूर्चबीजेन तत्र पूगीफलादिकं क्षिपेत् स्त्रीबीजेन घटं स्थिरीकुर्यात् वह्निबीजेन तत्र सिन्दूरं क्षिपेत् । प्रेतबीजेन पुष्पं निःक्षिपेत् । मूलमन्त्रेण प्रणवेन विचक्षणः दूर्वां दद्यात् । ततः “हुंफट् स्वाहेति” मन्त्रेण दर्भेण घटस्य ताडनं कुर्य्यात् । ततस्तं घटं देवीपीठं च विचिन्त्य तत्र देवीमावाह्य षोडशोपचारैः पूजयेत् तत्रायं क्रमः प्रथमं घटे देवीं संस्थाप्य तदनन्तरं यजमानः आचार्य्यं शिष्यश्चेद्गुरुम्पू-जयित्वा ततस्स्वेष्टदेवतां विधिवत्सम्पूज्यपश्चात्साधकानां प्रयोगकर्त्तॄणां च पूजनं कुर्य्यात् इति अनन्तरमत्र कुलजाभ्यः कामजाभ्यः कुमारीभ्यश्चापि पूजनम् विहितं वलिं च ताभ्यः प्रदद्यादिति । ततो गुरूपदेशमार्गतो द्वितीयदिवसे गुरुः

शिष्यस्य आचार्यः सपत्नीकयजमानस्य मूर्द्धनि अभिषेकं कुर्य्यात् ॥ अभिषेकार्थं पूर्वदिनाभिवासनपूजनस्थानाद्वक्ष्यमाण-मन्त्रेण घटं वादित्रनिर्घोषपुरस्सरमानीय ततः अभिषेकयेदिति । मन्त्रो यथा ॐ उत्तिष्ठेत्यादि ॥

( निरुत्तरतन्त्रे ) वैष्णवोगाणपत्यश्च सौरश्चैव कुलेश्वरि । अभिषेकं प्रकुर्वीत शाक्तश्च कुलभूषणः ॥ अभिषेकं चरेद्देवि अधिवासपुरःसरम् । वृद्धिशक्ति ततः कृत्वा शिवशक्तीः प्रपूजयेत् ॥ गुरुं सम्पूज्य विधिवत्स्वर्णालङ्कारभूषणैः । ततः संकल्पविधिना गुरुणा पूजनं चरेत् ॥ शिवशक्तीश्च सम्पूज्य स्थापयेद्घटमुत्तमम् । नातिह्रस्वं नातिदीर्घं स्वर्णरूप्यादिनिर्म्मितम् ॥ विशेषार्घस्य यन्त्रे वा त्रिकोणे वाऽपि विन्यसेत् । कामवीजेन सम्प्रोक्ष्य वाग्भवेन च ताडयेत् ॥ शक्त्या घटं समालोच्य मायया पूरणं जलैः । मन्त्रेणानेन तीर्थानि दैशिकस्तत्र विन्यसेत् ॥ गङ्गायाः सरितः सर्वाः समुद्राश्च सरांसि च । मन्त्रोयथा सर्वे समुद्राः घटे कुर्वन्तुसन्निधिम् ॥ इति ॥ ततः श्रीवीजेन प्रजप्तेन पल्लवं प्रतिपादयेत् । ( पल्लवं पञ्चपल्लवमित्यर्थः ) कूर्चेन फलदानं स्यात्स्त्रीवीजेन स्थिरीकृतिः ॥ सिन्दूरं वह्निवीजेन पुष्पं प्रेतेन, विन्यसेत् । मूलेन प्रणवेनापि दूर्वां दद्यात्विचक्षणः ॥ हुँफट्स्वाहेति मन्त्रेण कुर्य्याद्दर्भेण ताडनम् । विचिन्त्य देवीपीठं च तत्रावाह्य प्रपूजयेत् ॥ अनेनैव विधानेन सर्वकर्मसु सुन्दरि । घटं संस्थापयेद्देवी भक्तेनैव विशेषतः ॥ महापूजां चरेद्धीमान् षोडशोपचारसंयुताम् । गुरूणां च महापूजां शक्तीनां च ततः परम् ॥ तत्पश्चात्साधकानां च क्रमेण परिपूजनम् । कुमारिभ्योवलिं दत्वा कुलजाभ्योविशेषतः ॥ अभिषेकं ततोदेवि कुर्य्याच्चगुरुमार्गतः । स्वतन्त्रोक्त-विधानेन मन्त्रस्योच्चारणैः सह ॥ चालयेच्चघटं मन्त्री मन्त्रेणानेन देशिकः । ॐ उत्तिष्ठ ब्रह्मकलश सेविताशेषसिद्धिद ॥ सर्वतीर्थाम्बुपूर्णस्त्वं पूरयस्व मनोरथम् । ईशानेन्द्रस्मरक्षोणी तदन्ते भुवनेश्वरी ॥ मन्त्रेणानेन वाद्यानां निर्घोषैश्चालयेद्-घटम् । अभिषिंचेद्द् गुरुः शिष्यं यजमानं पुरोहितः ॥

॥ इति तान्त्रिकाभिषेकः ॥

# अथ ऋग्वेदिनामुत्तराङ्गकर्म्म

ओं यदस्यकर्म्मणोऽत्यरीरिचंयद्वान्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतकृते सर्वप्रायश्चित्ताहुतीनां व्यासानां संवर्द्धयित्रे सर्वान्नः कामान् संवर्द्धय स्वाहा। इदमग्नये स्विष्टकृते नमम। प्रागुदग्वा जुहोति। ततः इध्मवन्धनीरज्जुं विश्रस्य स्रुवस्रुचोर्लेपं प्रोञ्च्य॥ ओं रुद्रायस्वाहेति कृत्वा वह्नौ क्षिपेत। एवं परिस्तरणानि तूष्णीं वह्नौ क्षिपेत्। ततः सङ्कल्पपूर्वकं प्रायश्चित्तहोमः॥ ओं अयाश्चाग्नेऽस्यनभिशस्त्ययाश्चसत्वमित्वमयाऽअसि। अयसावयसाकृतोऽयांसं हव्यमोहिषेया नो धेहि भेषजं स्वाहा॥ इदमयसेऽग्नये नमम। ओं अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्तधामभिः स्वाहा॥ इदं देवेभ्योनमम। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा॥ इदं विष्णवेनमम। ओंभूःस्वाहा। इदमग्नये नमम। ओंभुवःस्वाहा। इदं वायवे नमम। ओंस्वःस्वाहा। इदंसूर्य्यायनमम। ओंभूर्भुवःस्वःस्वाहा। इदं प्रजापतये नमम। ओंविश्वेभ्योदेवेभ्यः स्वाहा। इति ससंस्रवं हुत्वा अनाज्ञातमिति द्वाभ्यां जुहुयात्। ओं अनाज्ञातं यदज्ञातं यज्ञस्य क्रियते मिथः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथायथं स्वाहा। इदमग्नये नमम। ओं पुरुषसम्मितोयज्ञोयज्ञः पुरुषसम्मतः। अग्ने तदस्यकल्पयत्वंहिवेत्थयथायथंस्वाहा॥ इदमग्नये नमम। ततः कर्मान्तरितकर्म्मविपर्य्यासकर्म्मविलोपप्रायश्चित्तार्थं त्वन्नोऽग्नेसत्वन्नोऽग्नेइत्येताभ्यां होष्ये इति संकल्प्य जुहुयात्। ओंत्वन्नोऽग्नेवरुणस्यविद्वान्देवस्यहेडोऽवयासिसीष्ठाः। यजिष्ठोव्वन्हितमःशोशुचानोव्विश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा। इदमग्नीवरुणाभ्याम्॥ ओंसत्वन्नोऽअग्नेऽवमोभवोतीनेदिष्ठोऽअस्या-

उषसोव्व्युष्टौ। अवयद्दवनोव्वरुणंरराणोव्वीहिमृडीकंसुहवोनएधि-
स्वाहा ॥ इदमग्नीवरुणाभ्यां नमम। (स्वराक्षरपदवृत्तवर्णलोपप्रा-
यश्चित्तार्थं) ओं यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेडन-
म्। अरावायोनोऽभिदुच्छानयतेतस्मिन्तदेनोवसवोनिधेतनस्वाहा।
इदमग्नये नमम। ततआचार्य्यः प्रागुक्तेन अनाज्ञातमित्यादिनाज्यं
हुत्वा चतस्रोव्याहृतिर्जुहुयात्। ततोऽग्न्यायतनस्यसमन्तात् दशसु
दिक्षु दिक्पालेभ्योमाषभक्तवलिं दद्यात्। भोइन्द्र दिशांरक्ष०....
तुष्टिदोभवेति। पुष्पाक्षतजलानि पूर्वाभिमुखः क्षिपेत्। एवमाग्ने-
य्यादिष्वपि। ततः ग्रहादिभ्योवलिं दद्यात्। ततोद्वितीयेऽन्हि
पुण्याहवाचनानन्तरं ॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रे
हृद्यन्तरायुषि। अपामनीकेसमिथेयआभृतस्तमश्यामधुमन्त-
न्तऽऊर्मिम् स्वाहा ॥ इति पूर्णाहुतिं दद्यात्। ततः पूर्णपात्रं
ब्रह्मणे दद्यात्। ततः पूर्णपात्रं वर्हिषि निधाय ॥ आपोऽस्मान्का-
तरः० ॥ १ ॥ इदमापः० ॥ २ ॥ सुमित्रियानः० ॥ ३ ॥ त्रिभि-
रेतैर्मार्जनं कुर्य्यात् ततः प्रणीतापात्रोदकं वर्हिषि निनयेत्। ततः
परिस्तरणं विसृज्य समूहनपर्य्युक्षणे पूर्ववत् कुर्य्यात्। इति।
ऋग्वेदिनामुत्तराङ्गकर्म्म।

# अथ सामगानामुत्तराङ्गकर्म्म

तत्र प्रथमं पूर्ववत् महाव्याहृतिहोमं कुर्य्यात्। ततः प्रादेश-
मितां समिधं तूष्णीमग्नौ क्षिप्त्वा प्रायश्चित्तहोमं कुर्य्यात् ॥ यथा
देशकालौ संकीर्त्य कृतेऽस्मिन्कर्म्मणि यत्किञ्चिद् अङ्गवैगुण्यं
जातं तद्दोषप्रशमनाय महाव्याहृतिहोमं शाट्यायनहोमं वा करिष्ये।
इति सङ्कल्प्य विधुनामानमग्निमावाह्याभ्यर्च्य पूर्ववत् महाव्या-
हृतिहोमरूपं प्रायश्चित्तहोमं कुर्य्यादिति वहवः। (कौथुमीयास्तु
शाट्यायनहोममपिकुर्य्युरिति भवदेवभट्टः) तद्यथा। पुनरपि
महाव्याहृतिहोमं विधाय तूष्णीं समिधमग्नौ हुत्वा। ओं पाहिनो-

ऽग्नेएनसे स्वाहा। ओं पाहिनोविश्ववेदसे स्वाहा। ओं यज्ञंपाहि विभावसो स्वाहा। ओं सर्व्वंपाहि शतक्रतो स्वाहा॥ ओं पाहि-नोऽग्नएकयापाह्युतद्वितीयया। पाहिगीर्भिस्तिसृभिरूर्ज्जांपतेपाहि-चतसृभिर्वसो॥ पुनरूर्ज्जानिवर्तस्वपुनरग्नइषायुधा। पुनर्न्नः पाह्यं हसः स्वाहा॥ ॐ सहोर्जे निवर्तस्वाग्नेपिनुस्वधारया। विश्वप्स्या विश्वतः परिस्वाहा॥ ओं अज्ञातं यदनाज्ञातं यज्ञस्यक्रियतेमिथः। अग्नेतदस्य कल्पय त्वं वेत्थ यथायथम्॥ ओं प्रजापते न त्व देतान्यन्यो विश्वाजातानि परिता बभूव। यत् कामास्ते जुहुमस्त न्नो अस्तुवयंस्यामपतयोरयीणां स्वाहा॥ पूर्ववत् महाव्याहृति होमः समित् प्रक्षेपश्च। ततो नवभ्योग्रहेभ्य एकैकाहुतीः प्रागुक्तेन मन्त्रेण दद्यात्॥ ओं देवसवितः प्रसुव यज्ञमिति मन्त्रेणोदका-ञ्जलिना दक्षिणावर्तेनाग्निं वेष्टयेत्। "ओं अदितेऽन्वमंस्थाः" अ-नेनाग्नेर्दक्षिणस्यां पश्चिमान्तात् पूर्वान्तं यावज्जलाञ्जलिना सिञ्चेत्। "ॐअनुमतेऽन्वमंस्थाः" अनेनाग्नेः पश्चिमायां दक्षिणान्तादुत्तरान्तं यावत्तथासिञ्चेत्। "ॐ सरस्वत्यन्वमंस्थाः" अनेनाग्ने रुत्तरस्यां पश्चिमान्तात् पूर्वान्तं यावत्तथा सिञ्चेत्। ततः कतिपयास्तरण-कुशानुत्तानहस्तद्वयेनादाय। "ओं अक्तंरिहाणांव्यन्तुवयः" इति त्रिधाजस्तेन यजुषा अग्रमूलमध्यभागाम् क्रमेण घृतेनाभ्यञ्ज्यात् अथ तानद्भिरभ्युद्य। ओं षः पशूनामधिपतीरुद्रस्तन्तिचरोवृषा। पशूनस्माकं माहिंसीरेतदस्तु हुतं तव स्वाहा। अनेनाग्नौ क्षिपेत्। ततोऽग्न्यायतनस्य समन्ताद्दशसु दिक्षु माषभक्तवलिं दद्यात्। ओं इन्द्रायसाङ्गाय वलिर्नमम। भोइन्द्र दिशं० तुष्टिदोभव। एवमाग्नेय्यादिष्वपि। ततोग्रहादिभ्यो वलिं दत्वा वरप्रार्थनं कार्य्यम्। आरोग्यमायुरैश्वर्य्यं धीर्धृतिः सन्ततिर्यशः ओजोवर्चः पशुर्वीर्य्यं ब्रह्म ब्राह्मण्यमेव च। सौभाग्यं कर्म्मसिद्धिश्चज्ञाति-श्रैष्ठ्यं सकर्तृता। सर्वमेतत् सर्वसाक्षिन् द्रविणोदोरिरीहिनः इति। ततः परदिने। स्वस्तिवाचनानन्तरं मृडनामानमग्निमा-वाह्याभ्यर्च्य समुत्थाय पूर्णाहुतिं दद्यात् ओं पूर्णाहोमंयशसेजुहो-

मियोऽस्मैजुहोति वरमस्मैददातिवरंवृणे यशसाभामि लोके स्वाहा ॥ इति पूर्णाहुतिं दद्यात् । ततोपूर्णपात्रं ब्रह्मणे दत्वा प्रदक्षिणमग्निं परिक्रम्य ब्रह्माणं विसृज्य पुनः स्वासनमागत्याग्निं प्रदक्षिणीकृत्य पात्रस्थजलशेषं निरस्य पुनर्जलेनापूर्य्य भूमौ प्रतिष्ठाय वृहद्वामदेव्यं सामगायेत् । ( तच्चसूक्तप्रकरणे द्रष्टव्यम् ) गानाशक्तौ ॥ कयानश्चित्र आभूवदूती सदावृधः सखा । कयांशचिष्ठया वृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदन्धसः । दृढाचिदारुजेवसु ॥ ओं अभीषुणः सखीना मविता जरितॄणाम् । शतम्भवास्यूतये ॥ इत्येताऋचस्त्रिरावर्त्य शान्तिं कुर्य्यात् । ततः स्वस्तिनइन्द्र इत्यादिकमपि पठेत् । ततः एतत् कर्म्माच्छिद्रमस्तु इति ब्रूयात् ॥ इति सामागनामुत्तराङ्गकर्म्म ।

# अथाथर्वणिकानामुत्तराङ्गकर्म्म

द्वारपालैर्जापकैश्च पाठ्यजप्यसूक्तादिषु अधीतेषु होता उत्तराङ्गं कर्म्म कुर्य्यात् । तत्र पूर्णाहुति प्राग्भावीनि सर्वाणि कर्म्माणि तस्मिन्नेवदिने कुर्य्यात् । पूर्णहोमन्तु प्रकृते परदिने स्वस्ति वाचनानन्तरं कुर्य्यादिति विशेषः । तत्प्राग्भावीनि कर्म्माण्युच्यन्ते । तत्र अभ्यतानाख्याः सप्तदशाहुतीर्दद्यात् ॥ ओं सविता प्रसवानामधिपतिसमावतु । अस्मिन्ब्रह्मण्यस्मिन्कर्म्मण्यस्यांपुरोधायामस्यां प्रतिष्ठायामस्यांचित्यामस्यामाकूत्यामस्यामाशिष्यस्यांदेवहूत्यां स्वाहा ॥ १ अग्निर्वनस्पतीनामधिपतिः समावतु । अस्मिन् ब्र० ॥ २ ॥ द्यावापृथिवीदात्रीणामधिपत्नी ते मावताम् । अस्मिन्ब्र० ॥ ३ ॥ वरुणोऽपामधिपतिः समावतु । अस्मिन्ब्र० ॥४॥ मित्रावरुणौ वृष्ट्या अधिपती तौ मावताम् । अस्मिन्ब्रह्म० ॥ ५ ॥ मरुतः पर्वतानामधिपतयस्ते मावन्तु । अस्मिन् ब्र० ॥ ६ ॥ सोमोवीरुधामधिपतिः समावतु । अस्मिन् ब्र० ॥ ७ ॥ वायुरन्तरि-

त्तुषामधिपतिः समावतु । अस्मिन् ब्र० ॥ ९ ॥ चन्द्रमानक्षत्राणा-मधिपतिः समावतु अस्मिन् ब्र० ॥ १० ॥ इन्द्रोदिवोऽधिपतिः समावतु । अस्मिन् ब्र० ॥ ११ ॥ मरुतां पितापशूनामधिपतिः समावतु अस्मिन् ब्र० ॥ १२ ॥ मृत्युः प्रजानामधिपतिः समावतु अस्मिन् ब्रह्म० ॥ १३ ॥ यमः पितॄणामधिपतिः समावतु । अस्मिन् ब्रह्म० ॥ १४ ॥ पितरः परेते मावन्तु । अस्मिन् ब्रह्म० ॥ १५ ॥ तताअवरेते मावन्तु अस्मिन् ब्र० ॥ १६ ॥ ततामहास्ते मावन्तु । अस्मिन् ब्र० ॥ १७ ॥ ततः समृद्धिं जुहुयात् ॥ ओं आकूत्यै स्वाहा । ओं कामाय त्वा स्वाहा । ओं समृधे त्वा स्वाहा । ओं ऋचास्तोमं संवर्द्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि स्वाहा । "इति चतस्रो जुहुयात" ( ततः सन्नतिहोमः ) यथा । ओं पृथिव्यामग्नये समनमन्त्स आर्ध्नोत् । यथा पृथिव्यामग्नयेसमनमन्नेवामह्यं संनमः संनमन्तु ॥ १ ॥ पृथिवी धेनुस्तस्याअग्निर्वत्सः । सामे-ऽग्निनावत्सेनेषमूर्जंकामं दुहाम् । आयुष्प्रथमं प्रजां पोषं रयिं स्वा-हा ॥ २ ॥ अन्तरिक्षेवायवेसमनमन्त्स आर्ध्नोत् । यथान्तरिक्षे वायवेसमनमन्नेवामह्यं संनमः संनमन्तु ॥ ३ ॥ अन्तरिक्षंधेनुस्त-स्यावायुर्वत्सः सामेवायुनावत्सेनेषमूर्जमित्यादि ॥ ४ ॥ दिव्या-दित्यायसमनमन्त्स आर्ध्नोत् । यथादिव्यादित्याय सम० नमन्तु ॥ ५ ॥ द्यौर्धेनुस्तस्या आदित्योवत्सः सामआदित्येन० ॥ ६ ॥ दिक्षुचन्द्राय समनमन्त्स आर्ध्नोत् । यथादिक्षुचन्द्राय सम० नमन्तु ॥ ७ ॥ दिशोधेनवस्तासां चन्द्रोवत्सः तामेचन्द्रेणवत्सेने-षमूर्जमित्यादि ॥ ८ ॥ ( अथोपस्तीर्यहोमः ) ओं प्रजापते नत्व देतान्यन्योविश्वारूपाणि परिभूर्जजान । यत् कामास्ते जुहुमस्त-न्नोअस्तुवयं स्यामपतयोरयीणां स्वाहा । "ततः स्विष्टकृद्धोमः" ॥ सर्वेषां चरूणामुत्तरतोऽवदानेन स्रुवेणाभिघार्य्य । ओं देवाना-मपि पन्थामगन्म यच्छक्रवामतदनु प्रवोढम् ॥ अग्निर्विद्वान्त्स यजात् स इद्धोता सोऽध्वरान्त्स ऋतून् कल्पयति ॥ ओं अग्नये स्विष्ट कृते स्वाहा । "इत्युत्तरार्द्धं" पूर्वार्द्धं तु असंसृष्टं हुत्वा

प्रायश्चित्तहोमं कुर्य्यात् ॥ ओं स्वाहेष्टेभ्यः स्वाहा । ओं वषडनिष्टेभ्यः स्वाहा । ओं भेषजपुष्ट्यै स्वाहा । ओं निष्कृतिदुरिष्ट्यै स्वाहा । ओं देवीभ्यस्तनूभ्यः स्वाहा ॥ ओं अयाश्चाग्नेऽस्यनभिशस्तीश्चसत्यमित्वमयाअसि । अयसामनसाधृतोऽयांसं हव्यमोहिषे अयानो धेहि स्वाहा ॥ ओं भूः स्वाहा । ओं भुवः स्वाहा । ओं स्वः स्वाहा । इति प्रायश्चित्तहोमः । ( अथ स्कन्नहोमः ) ॥ ओं यन्मे स्कन्नं मनसोजातवेदो यद्वास्कन्दद्धविषो यत्र यत्र । उत्प्रिषोविप्रुषः संजुहोमिसत्याः सन्तु यजमानस्य कामाः स्वाहा । ओं पुनर्मैत्विन्द्रियं पुनरात्माद्रविणं ब्राह्मणश्च । पुनरग्नयोधिष्ण्या यथा स्थामकल्पयन्तामिहैव स्वाहा ॥ ( ततोऽस्मृतिहोमः ) ओं यदस्मृति चकृम किंचिदग्नउपारिमचरणे जातवेदः । ततः पाहित्वन्नः प्रचेतः शुभेसखिभ्यो अमृतत्व मस्तुनः । ( अथ संस्थितिहोमः ) ओं यद्द्यत्वाप्रयति यज्ञे अस्मिन् होतश्चिकित्वन्न वृणीमहीह । ध्रुवमयो ध्रुवमुताशविष्ठ प्रविद्वान् यज्ञमुपयाहि सोमम् ॥ समिन्द्रनोमनसानेष गोभिः संसूरिभिर्हरिवन्त्स स्वस्त्या सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमतौ यज्ञियानाम् । ओं यानावहउशतोदेवदेवांस्तान् प्रेरयस्वे अग्नेसधस्थे । जक्षिवांसः पपिवांसो मधून्यस्मै धत्तवसवोवसूनि स्वाहा ॥ ओं सुगावोदेवः सदना अकर्मय आजग्मसवनेमा जुषाणाः । वहमानाः भरमाणाः स्वावसूनिवसुंघर्मंदिवमारोहतानु ॥ ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वांयोनिं गच्छ स्वाहा ॥ ॐ एषते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर्य्यः स्वाहा ॥ ॐ वषड्ढुतेभ्यः वषड्हुतेभ्यः । देवागातुविदोगातुं वित्वा गातुमित ॥ ( अथमानसहोमः ) ॐ मनसस्पत इमं नोदिविदेवेषु यज्ञं स्वाहा । ॐ दिवि स्वाहा । ॐ पृथिव्यै स्वाहा । ॐ अन्तरिक्षाय स्वा० ओं वातेधा स्वाहा । ( ततः आज्यस्थालीघृतमुत्तप्तं चरुश्च गृहीत्वा आज्यधान्यां स्थापयित्वा स्रुवेण गृहीत्वा तूष्णीमेकाहुतिं जुहुयादिति मानसहोमः । ) ततः आस्तरणवर्हिस्त्रिगुणीकृत्य आज्यधानीघृतेन

अभ्यज्य ॥ ओं पृथिव्यैत्वेतिमूलमभ्यञ्ज्यात् ॥ ओं अन्तरिक्षाय त्वेति मध्यम् ॥ ओं दिवेत्यन्तम् एवं त्रिधा कृत्वा ॥ ओं संवर्हिरक्तं हविषाघृतेन समिन्द्रेणवसुना संमरुद्भिः । संदेवैर्विश्वदेवेभिरक्तमिन्द्रंगच्छतुहविः स्वाहा ॥ इति वर्हिर्हुत्वा ॥ ओं संस्रवभागास्थ हविषावृहः प्रस्तरे वर्हिषसपदस्य वा । इमं यज्ञमभिविश्वेगृणन्त स्वाहा । ओं देवानाममृतामादयन्तां स्वाहा। इति संस्रवं जुहुयात् ॥ ( ततो दिक्पालेभ्योवलिः ) ततोद्वितीये ऽहनि पुण्याहवाचनाद्यनन्तरं पूर्णाहुतिं दद्यात् । यदि "कृष्णपक्षे" होमस्तदा ॥ ओं यत्तेदेवा अकृण्वन् भागधेयममावास्ये संवसन्तोमहित्वा । तेनानोयज्ञं पिपृहि विश्ववारे रयिंनो धेहि सुभगेसुवीरम् ॥ "शुक्लपक्षे" चेत्तदा ओं पूर्णापश्चादुतपूर्णापुरस्तान्मध्यतः पौर्णमासीजिगाय । तस्यांदेवैः संवसन्तोमहित्वा नाकस्यपृष्ठे समिषामदेम ॥ ततः स्रुक्स्रुवौ घृतपूर्णौ कृत्वा ॥ ओं समास्त्वाग्न ऋतवोवर्द्धयन्तु संवत्सरा ऋतवोयानिसत्या । सन्दिव्येनदीदिहि रोचनेन विश्वा आभाहिप्रदिशश्चतस्रः ॥ अभ्यर्चत सुष्टु तिं गव्यराजिमस्मासु भद्राद्रविणानिधत्त ॥ शुद्धहस्तौ ब्राह्मणस्य निहत्यैतत् सर्गसुतावापीतं स्वाहा ॥ इति पूर्णाहुतिं दत्वा ॥ ओं देवोऽसि घृताभिसृतः सपत्नक्षयणोदिविसीद । अन्तरिक्षेसीद पृथिव्यां सीदोत्तरोहं भूयासमधरे मत्ससना ॥ इति स्रुवं क्रमेण दिवि अन्तरिक्षे पृथिव्याश्च कृत्वा स्रुवप्राग्दण्डमग्नेरुत्तरतः कृत्वा ॥ ओं विमुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्मृतम् । सदेवानां जनिमानविद्वान् यथा भागं वहतुहव्यमग्निरग्नये स्वाहा ॥ इति समिधं जुहुयात् । ततः ॥ ओं एधोऽस्येधिषीय स्वाहा ॥ समिदसिसमेधिषीय स्वाहा तेजोमयिधेहि स्वाहा । इति मुखं मार्जयेत् ॥ ततो विष्णुक्रमान् क्रमेत् ॥ स ओं विष्णोः क्रमोसि सपत्नहा पृथिवी संशितोऽग्नितेजाः । पृथिवीमनु विक्रमेहं पृथिव्यास्तं निर्भजामो योऽस्मान् द्वेष्टियं वयं दिष्मः समाजीवीत्तं प्राणो जहातु ॥ १ ॥ ओं विष्णोः

